न्यक् पात्राणि निधाय दर्भनिचये वस्त्राद्यपि प्रोक्षणी-
तोयैः प्रोक्ष्य सुसंस्कृतैरथ समुत्तानेषु पात्रेष्वपि ।
कूर्चं न्यस्यतु तारतोऽर्घ्यमपि पाद्याचामकं योजयि-
त्वाभ्यर्च्याभिमृशेत् स्वमूलमनुना मूर्त्याह्वयैर्वाङ्गकैः ॥

विष्णौ माषपयोधिकं स्मृतमिहार्घ्यं पद्मपत्रादिकै-
स्तान्याच्छाद्य गुरुं समूर्तिपममुं संवन्द्य दद्यात् क्रमात् ।
पाद्याचामकमर्घ्यकं स्वमनुतो हृच्छीर्षशैखैस्तु वा
वस्त्रे द्वे कवचाणुनास्त्रमनुना स्वर्णाङ्गुलीयं तथा ॥ ८ ॥

---

पूर्वकं पूर्वाभिमुखानेवोपवेश्य । मनुमहितात्मा भूत्वा गुरुवन्दनादिपूर्वं स्वस्व-मूलमन्त्रस्य सकलीकरणं शङ्खपूरणमात्माराधनं च कृत्वेत्यर्थः । इष्टविघ्नाधि-राजश्च भूत्वा स्वबीजेन गणपतिमूलेन प्रदीपं चाराध्येत्यर्थः । एतान् गुरु-मूर्तिपालान् संवन्द्य तदनुज्ञापुरस्सरं शिवदिशि ईशानकोणेऽर्घ्यपाद्यादिकानि निदध्यात् ॥ ६ ॥

सादनक्रममाह — न्यगिति । दर्भनिचये स्वस्येशभागे स्थण्डि-लमालिप्य दर्भसमूहं विन्यस्य तत्र प्रोक्षणीपात्रेण सह चत्वारि पात्राणि न्यक् अधोमुखं निधाय । वस्त्राद्यपि वस्त्राङ्गुलीयकुण्डलयज्ञसूत्रभूषणादीन्यपि निधाय । सुसंस्कृतैः प्रोक्षणीतोयैः प्रोक्षणीसंस्कारं कृत्वा तज्जलैः प्रोक्ष्य । अथ धारणादिभिश्च संशोध्य । समुत्तानेषु पात्रेष्वपि प्रोक्ष्य तेषु तारतः कूर्चं न्यस्यतु । अर्घ्यं पाद्याचामकमपि पाद्यमाचमनीयं च स्वस्वद्रव्यैर्योजयित्वा स्वमूलमनुना मूर्त्याह्वयैः स्वस्वमूर्तीनां मन्त्रैः । अङ्गकैः स्वार्थ एव कप्रत्ययः । स्वस्वदानकाले वक्ष्यमाणैरङ्गैरेव वाभ्यर्च्य अभिमृशेत् स्पृष्ट्वा जपेत् ॥ ७ ॥

विष्णौ इह वरणे अर्घ्यं माषपयोधिकं स्मृतम् । तानि पात्राणि पद्म-पत्रादिभिराच्छाद्यामुं[2] गुरुं समूर्तिपं मूर्तिपैः सहितं संवन्द्य । पाद्याचामकमर्घ्यकं[3] क्रमात् पाद्याचमनीयार्घ्यक्रमात् । स्वमनुतः गुरुमूर्तिपानां मन्त्रैः । तेभ्यो दद्यात् । हृच्छीर्षशैखैस्तु वा हृदयशिरश्शिखामन्त्रैर्वा । त्विति पाद्यादिना पादशौचादिकं कर्तव्यमिति विशेषद्योतकः । तस्मिन् पक्षे वस्त्रे द्वे द्वे वस्त्रे

---

१. 'वयोधि', २. 'द्याथामुं' ग. पाठः. ३. 'कं पा' क. ख. पाठः.

दत्त्वास्त्रतः कुण्डलयज्ञसूत्र-
भूषास्ततः स्वाणुभिरर्चयित्वा ।
अर्घ्यं च दत्त्वा सहमूर्तिपालं
संभोजयेत् साज्यममुं पयोन्नम् ॥ ९ ॥
भुक्त्वाचान्तेष्वेषु दत्त्वावसानी-
यार्घ्यं तेभ्यो भुक्तसत्कारपूर्वम् ।
आलिप्योर्वीं तान् प्रणम्याभिवाद्य
प्रार्थ्यानेनालम्ब्य पाणौ वृणीत ॥ १० ॥
मया संपूजितैरत्र दक्षिणाभिश्च तोषितैः ।
क्रियतां विष्णुयागो मे प्रार्थयामि प्रसीदत ॥ ११ ॥
स्वस्वदोस्समवलम्बने वद-
न्त्वों तथेति गुरुमूर्तिपालकाः ।

---

कवचाणुना कवचमन्त्रेण । तथा स्वर्णाङ्गुलीयं सुवर्णशलाकादिभिर्बद्धं पवित्रमयमङ्गुलीयकम् । अस्त्रमनुना पञ्चाङ्गस्यावसेयत्वात् ॥ ८ ॥

कुण्डलादीनां को मन्त्र इत्यत्राह — **दत्त्वास्त्रत** इति । कुण्डलयज्ञसूत्रभूषाः स्वर्णमयं कुण्डलयुगं यज्ञसूत्रं चन्दनादि च अस्त्रतो दत्त्वा । ततः स्वाणुभिः स्वस्वमन्त्रैर्जलगन्धपुष्पधूपदीपाक्षतैरर्चयित्वा । पुनरप्यर्घ्यं दत्त्वा सहमूर्तिपालं मूर्तिपालैः सहितममुं गुरुं साज्यं पयोन्नं पायसं संभोजयेत् सम्यग् यथाभिलषितं भोजयेत् ॥ ९ ॥

भुक्त्वा एषु गुरुमूर्तिपेषु आचान्तेषु कृताचमनेषु सत्सु । तेभ्यो भुक्तसत्कारपूर्वं भोजनानन्तरं योग्याः सत्कारास्तांबूलापूपादयः ते पूर्वं यथा भवति तथा । अवसानीयार्घ्यम् अवसानभवमर्घ्यं दत्त्वोच्छिष्टादिकमुद्धृत्य उर्वीं भूमिमालिप्य तान् प्रदक्षणीकृत्य प्रणम्याभिवाद्य प्रसादं प्रार्थ्य । पाणौ दक्षिणकरे दक्षिणकरेणालम्ब्यानेन मन्त्रेण वृणीत ॥ १० ॥

वरणमन्त्रं पठति — **मया संपूजितैरिति** ॥ ११ ॥

ते गुरुमूर्तिपालकाः स्वस्वदोस्समवलम्बने स्वस्वकरग्रहणे 'ओं तथा' इति वदन्तु । प्रथमं गुरोर्वरणं कृत्वा मूर्तिपालानपि पृथक् पृथग् वृणुयात् । तदा तदा स स मूर्तिपः 'ओं तथे'ति वदत्वित्यर्थः । हरिसुम्भविद्विषोः विष्णुदुर्गयोः ।

इत्यभाषि हरिसुम्भविद्विषोः
संग्रहेण वरणक्रियाक्रमः ॥ १२ ॥
पाद्याद्यङ्गानि क्रमात् स्वाभिषेके
वक्ष्ये मूलं स्याद् गुरोर्मूर्तिपानाम् ।
मन्त्राः स्वे स्वे मूर्तिमन्त्राः शिवादि-
ष्विष्टे पाद्यादिक्रमान्न्याससदाने ॥ १३ ॥
शर्वायक्षित्यादिप्रभिन्नात्मवर्णो
ङेनत्यन्तः स्यान्मूर्तिपाणुर्महेशे ।
तेषां नत्यां क्षित्यादिमन्त्रा गुरोस्तु
शैवी गायत्री त्र्यम्बकायेत्यणुर्वा ॥ १४ ॥
शर्वो रुद्रः पशुपतिरथेशानयुक्तौ भवोग्रौ
प्रोक्ताः शर्वादय इति महादेवभीमौ च ते स्युः ।

---

वरणक्रियाक्रमः वरणक्रियाविधिः[1] संग्रहेण संक्षेपेण इति अभाषि उक्तः ॥ १२ ॥

पाद्याद्यङ्गानि पाद्यादीनां द्रव्यभेदान् स्वाभिषेके स्वस्वद्रव्यकलशविधौ। क्रमाद् वक्ष्ये। गुरोः मूलं मन्त्रः स्यात्। मूर्तिपानां स्वे स्वे मूर्तिमन्त्राः वासुदेवादयो मन्त्राः स्युः। शिवादिषु देवेषु पाद्यादिक्रमात् पाद्यार्घ्याचमनीयक्रमात् न्याससदाने न्यासं सादनं प्रदानं च इष्टे भवतः ॥ १३ ॥

महेशे शिवे शर्वायक्षित्यादिप्रभिन्नात्मवर्णः 'शर्वायक्षिति' इत्यादिभिः संभिन्नो युक्त आत्मवर्णः आत्म इति वर्णः। ङेनत्यन्तः। ङे चतुर्थ्येकवचनं तद् नतिः नम इति च अन्त अवसाने यस्य स तथा। 'शर्वाय क्षित्यात्मने नमः' इति द्रष्टव्यः। मूर्तिपाणुः मूर्तिपानामणुः मन्त्रः। तेषां मूर्तिपानां नत्यां नमस्कारे क्षित्यादिमन्त्राः क्षितीत्यादिः यस्य स क्षित्यादिः, क्षित्यादिरादिर्येषां[2] ते क्षित्यादिमन्त्राः। गुरोस्तु नत्यां शैवी गायत्री तन्महेशायेत्याद्या मन्त्राः, त्र्यम्बकायेत्यणुर्वा। त्र्यम्बकायेति मन्त्रः मङ्गलाङ्कुररोपणे वक्ष्यते ॥ १४ ॥

शर्वादीनाह—शर्व इति। अथ शर्वः रुद्रः पशुपतिः ईशानयुक्तौ ईशानसहितौ भवोग्रौ ईशानो भव उग्रश्चेत्यर्थः। महादेवभीमौ महादेवो भी-

---

१. 'याया वि', २. 'दिः क्षित्यादिरा' क. पाठः.

क्षित्यग्न्याख्यौ त्रिपुरजयिनो यज्ञसूर्यौ जलाख्यं
वायुं सोमं समभिदधते व्योम चाप्यष्टमूर्तीः ॥ १५ ॥

क्षितिर्वै धार्यते लोकान् लोकाः क्षितिमयाः स्मृताः ।
सर्वगं क्षितिरूपं ते क्षितिमूर्ते! नमोऽस्तु ते ॥ १६ ॥

अग्निर्वै धार्यते लोकान् लोका अग्निमयाः स्मृताः ।
सर्वगमग्निरूपं ते अग्निमूर्ते! नमोऽस्तु ते ॥ १७ ॥

यज्ञो धारयते लोकान् लोका यज्ञमयाः स्मृताः ।
सर्वगं यज्ञरूपं ते यज्ञमूर्ते! नमोऽस्तु ते ॥ १८ ॥

सूर्यो धारयते लोकान् लोकाः सूर्यमयाः स्मृताः ।
सर्वगं सूर्यरूपं ते सूर्यमूर्ते! नमोऽस्तु ते ॥ १९ ॥

जलं वै धार्यते लोकान् लोका जलमयाः स्मृताः ।
सर्वगं जलरूपं ते जलमूर्ते! नमोऽस्तु ते ॥ २० ॥

वायुर्धारयते लोकान् लोका वायुमयाः स्मृताः ।
सर्वगं वायुरूपं ते वायुमूर्ते! नमोऽस्तु ते ॥ २१ ॥

सोमो धारयते लोकान् लोकाः सोममयाः स्मृताः ।
सर्वगं सोमरूपं ते सोममूर्ते! नमोऽस्तु ते ॥ २२ ॥

व्योम धारयते लोकान् लोका व्योममयाः स्मृताः ।
सर्वगं व्योमरूपं ते व्योममूर्ते! नमोऽस्तु ते ॥ २३ ॥

स्वस्वनाम वरणाणुविष्णुशब्दास्पदेऽत्र सुयुनक्तु युक्तितः ।
वास्तुसंग्रहपुरःसराणुना बाहुलेयविषये वृणीत तान् ॥२४॥

---

मश्च । ते शर्वादयः प्रोक्ताः स्युः । क्षित्यग्न्याख्यौ क्षितिमग्निं च । यज्ञसूर्यौ यज्ञं सूर्यं च । जलाख्यं जलमित्याख्या यस्य स जलाख्यः, तं च । वायुं सोमं व्योम च । त्रिपुरजयिनः शिवस्य । अष्टमूर्तीः अष्टमूर्तिसंज्ञाः । समभिदधते ब्रुवते, बुधा इति शेषः ॥ १५ ॥

नमस्कारमन्त्रान् पठति — क्षितिर्वै धार्यत इत्यादि ॥ १६–२३ ॥

अत्र वरणाणुविष्णुशब्दास्पदे वरणाणोर्वरणमन्त्रस्य 'मया सम्पूजितैरि'-त्यस्य विष्णुशब्दास्पदे विष्णुशब्दस्य स्थाने । स्वस्वनाम शिवादिनाम । युक्तितः

**वास्तुसंग्रहमारभ्य तीर्थस्नानावसानिकम् ।**
**क्रियतां स्कन्दयागो मे प्रार्थयामि प्रसीदत ॥ २५ ॥**

**एवं गुरुं गुरुनियोगकृतो विनीतान्**
**विप्रान् विधानकुशलानपि मूर्तिपालान् ।**
**सर्वेष्वपीह चतुरो द्विगुणान् वृणीत**
**षड्वा तथा स्वहवनाद्यनुसृत्य कर्ता ॥ २६ ॥**

**यियक्षुणाचार्यवरो वृतोऽथ समूर्तिपः कर्म समातनोतु ।**
**प्रतिश्रुतं भूमिपरिग्रहादि तीर्थाभिषेकावधिकं क्रमेण ॥**

---

पद्याविरोधेन । सुयुनक्तु 'क्रियतां शिवयागो मे' इत्यादिप्रकारेण युञ्ज्यादित्यर्थः । बाहुलेयविषये बाहुलेयः स्कन्दः तद्विषये वरणे । तान् गुरुमूर्तिपान् । वास्तुसङ्ग्रहपुरस्सराणुना वास्तुसङ्ग्रहमिति पुरतः सरति गच्छतीति वास्तुसङ्ग्रहपुरस्सरः । 'वास्तुसङ्ग्रहमि'त्यादिना मन्त्रेण वृणीतेत्यर्थः ॥ २४, २५ ॥

वरणकर्मोपसंहरन् मूर्तिपलक्षणमाह — **एवमिति** । कर्ता सर्वेष्वपि देवेषु एवमुक्तेन प्रकारेण गुरुम् । इह मूर्तिपवरणे । गुरुनियोगकृतः गुरोर्नियोगं कुर्वन्तीति गुरुनियोगकृतः, तान् । विनीतान् स्वतः क्षमाशीलान् । विधानकुशलान् कर्मसु विदग्धान् विधिज्ञांश्च । विप्रान् ब्राह्मणानेव मूर्तिपालानपि । चतुरः चतुःसङ्ख्यान् । द्विगुणान्[1] तद्द्विगुणान् अष्टौ वेत्यर्थः । तथा षड्[2] वा द्वादश वा, यथा चतुःसङ्ख्योक्तिः । स्वहवनादि स्वस्वपहोमादिकर्माणि । अनुसृत्य विमृश्य वृणीत ॥ २६ ॥

एवं यजमानस्य कर्माभिधाय गुरोः कर्मोद्दिशति — **यियक्षुणेति** । अथ यियक्षुणा यष्टुमिच्छावता । यजनं नाम भूपरिग्रहादि तीर्थस्नानपर्यन्तं कर्म विवक्ष्यते । यजमानेन वृत आचार्यवर इत्यनेन प्रतिष्ठादिकर्मण्याचार्यश्रेष्ठस्यैवाधिकार इत्युक्तम् । समूर्तिपः मूर्तिपैर्युक्तः । भूमिपरिग्रहादि भूमिपरिग्रहमारभ्य । तीर्थाभिषेकावधिकम् उत्सवान्तगततीर्थस्नानमवधीकृत्य[3] । यत् कर्म स्वेन प्रतिश्रुतं प्रतिज्ञातं, तत् क्रमेण समातनोतु कुर्यात् ॥ २७ ॥

---

१. 'न् अ' ख. पाठः.　२. 'र्मणि वि',　३. 'द्वासान्त' ग. पाठः.

तीर्थान्ते तटिनीतटे जलनिधेस्तीरे सरित्सङ्गमे
शैलाग्रेऽद्रितटे वनोपवनयोरुद्यानदेशे तथा ।
सिद्धाद्यायतनेषु वा गुरुवरो ग्रामे पुरे पत्तने
देशेऽन्यत्र मनोरमे सुरसमिज्यायै क्षितिं कल्पयेत् ॥

प्राचि प्रतीचि च हरौ निजदिश्युमेशे
वायौ निसुम्भजिति तारकजित्युदीच्याम् ।
ग्रामादिकेषु निर्ऋतौ गणपार्यनाम्नो-
र्गृह्णातु भूमिमखिलेष्वपि मध्यतो वा ॥ २९ ॥

गोमर्त्यैः फलपुष्पदुग्धतरुभिश्चाढ्या समा प्राक्प्लवा
स्निग्धा धीररवा प्रदक्षिणजलोपेताशुभीजोद्गमा ।

---

सर्वदेवानां सामान्येन प्रतिष्ठास्थानान्याह — तीर्थान्त इति । तीर्थान्ते तीर्थसमीपे । तटिनीतटे नदीतीरे । जलनिधेस्तीरे, जलनिधिः समुद्रः तस्य तीरे । सरित्सङ्गमे नद्योर्मिथः सङ्गमे नदीसमुद्रसङ्गमे च । शैलाग्रे पर्वतोपरिभागे । अद्रितटे पर्वतस्य पार्श्वप्रदेशे । वनोपवनयोः वने उपवने च । उपवनं ग्रामसमीपस्थारण्यम् । उद्यानदेशे उद्यानं कृत्रिमोपवनम् । वातथाशब्दौ विकल्पद्योतकौ । सिद्धाद्यायतनेषु, सिद्धास्तपआदिभिः कृतकृत्याः, तेषां तादृशानामन्येषां चायतनेष्वाश्रयस्थानेषु । ग्रामे विप्रसमूहस्यावासे । पुरे राजधान्याः समीपे । पत्तने नगराभ्याशे । अन्यत्र मनोरमे च देशे । गुरुवरः सुरसमिज्यायै देवप्रातिष्ठाविधये क्षितिं कल्पयेत् । अत्र पूर्वपूर्वोक्तानि स्थानानि श्रेष्ठानीत्यवगन्तव्यम् ॥ २८ ॥

अथ ग्रामे पुरे पत्तन इत्युक्तेषु ग्रामादिकेषु विष्ण्वादीनां देवानां स्थाननियममाह — **प्राचीति** । हरौ ग्रामादिकेषु प्राचि प्राग्भागे प्रतीचि च प्रत्यग्भागे भूमिं गृह्णातु । उमेशे शिवे निजदिशि ईशभागे । निसुम्भजिति दुर्गायां वायौ वायुभागे । तारकजिति स्कन्दे उदीच्याम् उदग्भागे । गणपार्यनाम्नोः गणपतौ शास्तरि च निर्ऋतौ निर्ऋतिभागे । अखिलेषु विष्ण्वादिसप्तस्वपि मध्यतो वा मध्यभागे वा ॥ २९ ॥

अथ भूमेरुत्तमादित्वमाश्रित्य भेदमाह — **गोमर्त्यैरिति** । गोभिर्मर्त्यैश्चाढ्या आश्रिता । फलपुष्पदुग्धतरुभिः फलवद्भिः पुष्पवद्भिः क्षीरवद्भिश्च वृक्षैराढ्या पूर्णा । समा निम्नोन्नतवर्जिता । प्राक्प्लवा प्राग्भागनिम्ना । स्निग्धा

**संप्रोक्ता बहुपांसुरक्षयजला तुल्या च शीतोष्णयोः**
**श्रेष्ठा भूरधमा समुक्तविपरीता मिश्रिता मध्यमा ॥ ३० ॥**
**वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शूलशूर्पाकृति-**
**मत्स्यानेकपकोलपृष्ठकपिलावक्त्रोपमा मेदिनी ।**
**भस्माङ्गारतुषास्थिकेशकृमिवल्मीकादिभिः संयुता**
**वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिक्स्थापि च ॥**
**विप्रादिक्रमतः कुशेषुवनदूर्वाकाशयुक्ता भुव-**
**स्तुल्यातानवितानसिन्धुररसाऽध्यंशाधिदीर्घा अपि ।**

---

निविडा । धीररवा गम्भीरस्वरा । प्रदक्षिणजलोपेता प्रादक्षिण्येन नद्यादिनोपलक्षिता । आशुबीजोद्गमा बीजावापे शीघ्रमुद्गच्छदङ्कुरा । बहुपांसुः खात्वा तत्पांसुभिरेव पूरिते गर्तातिरिक्तपांसुयुक्ता । अक्षयजला ग्रीष्मेऽपि प्रभूतजलयुक्ता । शीतोष्णयोस्तुल्या शीतकाले चोष्णकाले च तुल्या, शैत्याधिक्येनौष्ण्याधिक्येन च रहिता । एवंभूता भूमिः श्रेष्ठा उत्तमा संप्रोक्ता । समुक्तविपरीता उक्तलक्षणवैपरीत्ययुक्ता अधमा । मिश्रिता मिश्रलक्षणयुक्ता मध्यमा ॥ ३० ॥

अथ भूमेर्वर्जनीयलक्षणान्याह — **वृत्तेति** । वृत्ता स्वत एव वृत्ताकारा । अर्धेन्दुनिभा अर्धचन्द्राकारा । त्रिपञ्चरसकोणा त्रिकोणा पञ्चकोणा षट्कोणा च । शूलशूर्पाकृतिः शूलाकृतियुक्ता शूर्पाकृतियुक्ता च । मत्स्यानेकपकोलपृष्ठकपिलावक्त्रोपमा मीनद्विपवराहाणां पृष्ठसमाना पशुमुखसमाना, च । भस्माङ्गारतुपास्थिकेशकृमिवल्मीकादिभिः संयुता भस्मभिः कृष्णाङ्गारैः (ഭസ്മ ഗാരം-ഗരിക്കട്ട) तुषैः (ഉമി-ഉമി) अस्थिभिः केशैः कृमिभिर्वल्मीकैर्युक्ता[1] । ([3]अत्र पृष्ठसमानपशुमुखसमानरधधार्थ तथाच प्रसिद्धे तर्वा ?) मध्यनता मध्यभागनिम्ना । सगर्भकुहरा अन्तर्भागे बिलयुक्ता । विस्रा दुर्गन्धयुक्ता । विदिक्स्थापि च कोणगतदैर्घ्यविस्तारयुक्ता च । एवंभूता मेदिनी भूमिर्वर्ज्या ॥ ३१ ॥

अथ ब्राह्मणाद्यधिकारिभेदेन भूमेर्लक्षणमाह— **विप्रादीति** । कुशेषुवनदूर्वाकाशयुक्ताः कुशैरिषुवनेन दूर्वाभिः काशैश्च युक्ताः । भुवः भूभागाः । विप्रादिक्रमतः ब्राह्मणक्षत्रियवैश्यशूद्रक्रमेण स्मृताः । तुल्यातानवितानासि-

---

१. 'कूर्मपृ' इति मूलकोशपाठः. २. 'क्ता । तथाच प्रसिद्धेर्वा' ख. पाठः.
३. 'त्र धार्थः ...... द्धेर्वा' ग. पाठः.

**श्वेतापाटलपीतमेचकरुचश्चाज्यासृगन्नासवा-**
**मोदाः स्वादुकषायतिक्तकटुकास्वादान्विताश्च स्मृताः ॥**
**संकीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैर्वाखिलवर्जनीया ।**
**एनामनालक्षितवर्णचिह्नां नक्तं परीक्षेत निमित्ततश्च ॥ ३३ ॥**
**उपलिप्य महीतलेऽवटे घटमामं भृतधान्यकं न्यसेत् ।**
**तदुपर्यपि वर्धमानकं न्यसतु प्राग्वदनो मृदात्मकम् ॥ ३४ ॥**
**कपिलाघृतमात्ममूलतः शतसञ्जसममुत्र सिञ्चतु ।**
**चतसृष्वपि दिक्षु वर्तिकास्तनुयाद् वर्णवशात् सितादिकाः॥**

---

न्धुररसाब्ध्यंशाधिदीर्घाः तुल्यदैर्घ्यविस्तारचतुरश्राः। सिन्धुरा गजाः। सिन्धुरर-साब्धिशब्दैः अष्टषट्चतुःसङ्ख्या लक्षिताः। विस्तारादष्टषट्चतुरंशाधिकं दैर्घ्य-युक्ताः। अपिः समुच्चये। समचतुरश्रादिचतस्रो भुवो विप्रादिक्रमतः स्मृता इत्यर्थः। श्वेतापाटलपीतमेचकरुचश्च धवलरक्तपीतकृष्णवर्णाश्च। विप्रादिक्रमतः आज्यासृगन्नासवामोदाश्च घृतरुधिरहविस्सुरागन्धाश्च। स्वादुकषायतिक्तकटु-कास्वादान्विताश्च। (സ്വാദു=മധുരം. കഷായം=ചവർപ്പ്. കടുകം=എരിച്ചു) एते रसाश्च विप्रादिक्रमतः स्मृता इत्यर्थः ॥ ३२ ॥

वर्णसाङ्कर्ययुक्ता सर्ववर्णैर्वर्जनीयेत्याह — संकीर्णेति। अत्र भूपरी-क्षायाम्। वर्णैः रूपैः। गन्धै रसैः। वाशब्देन कुशादिभिः समचतुरश्रादिसं-स्थानभेदैश्च। संकीर्णरूपा मिश्रिता वसुधा अखिलवर्जनीया सर्ववर्णैस्त्या-ज्या। चिह्नराहित्ये कथमित्यत्राह — एनामिति। अनालक्षितवर्णचिह्नाम् अपरिस्फुटवर्णलक्षणयुक्ताम्। एनां वसुधाम्। नक्तं रात्रौ। निमित्ततः वक्ष्यमा-णनिमित्तेनापि। परीक्षेत परीक्ष्य जानीयात् ॥ ३३ ॥

परीक्षणरीतिमाह — उपलिप्येति। महीतलेऽवटे गर्ते गोमयजले-नोपलिप्य प्राग्वदनो मन्त्री मूलमन्त्रं जपन् मृदात्मकं मृण्मयम् आममपक्वं घटं कलशं न्यसेत्। तदुपरि मृदात्मकं वर्धमानकं शरावं न्यसतु ॥ ३४ ॥

अमुत्र शरावे। आत्ममूलतः स्वस्वमूलमन्त्रेण। शतसंजपं शतवारं संज-पम्। कपिलाघृतम् कपिलवर्णायाः पशोर्घृतं। सिञ्चतु पूरयतु। वर्णवशाद् द्विजादि-

---

१. 'दि', २. 'मेण स्मृ' ग. पाठः.

प्रज्वाल्य दिश्यस्वकमूर्तिभिस्तास्ततः समभ्यर्चयतु क्रमेण ।
देवं निजं वाथ दिवाकरं वा विज्ञापयेच्चैनमनेन मन्त्री ॥

निमित्तं ब्रूहि मे देव! कल्पप्रोक्तं द्विजादिकम् ।
वर्णार्थं तु प्रयुक्तेऽस्मिंस्ततो वर्तिचतुष्टये ॥ ३७ ॥

आच्छाद्य नीतेऽत्र मुहूर्तमात्रे
यस्योज्ज्वलेद् वर्तिरमुष्य सा भूः ।
दीप्तासु सर्वास्वनुवर्णयोग्या
त्याज्या विशीर्णासु समस्तवर्णैः ॥ ३८ ॥

कर्पूरागरुनालिकेरतिलकैर्दर्भैः कदम्बार्जुनै-
र्मालेयैः क्रमुकेक्षुकेतककुशैः कुन्दारविन्दोत्पलैः ।
पूर्वोदक्प्लवशालिनी बहुजला वा या दरीदृश्यते
सेयं शान्तिकरी सुरेशयजने सूक्ता सुपद्मा मही ॥३९॥

---

वर्णक्रमेण । पूर्वादिचतसृषु दिक्ष्वपि सिताादिकाः श्वेतरक्तपीतकृष्णवर्णाः वर्तिकाः वर्तीकृतांस्तन्तून् तनुयात् ॥ ३९ ॥

दिश्यस्वकमूर्तिभिः दि[1]ग्भवाभिः स्वस्वमूर्तिभिः पूजापटले वक्ष्यमाणाभिः । ताः वर्तिकाः । क्रमेण पूर्वादिक्रमेण प्रज्वाल्य । ततः मध्ये निजं देवं, यं देवं स्थापयितुमेतत् करोति, तं देवमित्यर्थः । दिवाकरं सूर्यं वा समभ्यर्चयतु । अथ प्रसन्नपूजानन्तरम् । एनं देवम् । अनेन मन्त्रेण । विज्ञापयेत् प्रार्थयेत् ॥ ३९ ॥

मन्त्रं पठति — निमित्तमित्यादि ॥ ३७ ॥

फलकादिभिराच्छाद्य मुहूर्तमात्रे काले नीते अतीते । अत्र एषु वर्णेषु यस्य वर्तिरुज्ज्वलेद्, अमुष्य वर्णस्य सा भूर्भवति । सर्वासु वर्तिषु दीप्तासु सतीषु अनुवर्णयोग्या सर्ववर्णं प्रति योग्या । विशीर्णासु अनुज्ज्वलितासु समस्तवर्णैस्त्याज्या भवति ॥ ३८ ॥

एवं वर्णवशाद् भूमेर्लक्षणमुक्त्वा कामवशादप्याह — कर्पूरेति । या मही कर्पूरादिभिरुपलक्षिता दरीदृश्यतेऽत्यर्थं दृश्यते, सेयं सुपद्मा नाम ।

---

१. 'दि' ग. पाठः.

तीरं वारिनिधेः श्रिताथ सरितस्तीर्थस्य वा दक्षिणे
व्रीहिक्षेत्रविचित्रिताप्यदिशि यज्ञार्हाङ्घ्रिपैराङ्किता ।
कीर्णा पूर्णफलप्रसूनतरुभिर्योद्यानहृद्यापि वा
भद्रा सा परिगीयते वसुमती प्रीतिप्रदा यज्वनाम् ॥
प्लक्षन्यग्रोधनिम्बार्जुनवकुलकुलस्थासनाशोकनिष्पा-
वाङ्कोलैर्मालतीचम्पकतिलखदिरैः कोद्रवैर्मुद्रिता वा ।
भूमिर्या भूधराधीश्वरशिखरगता पार्श्वसंस्थाथवाद्रेः
पूर्णा सा पुष्टिदात्री सुरनिलयसमाकल्पने स्वल्पतोया ॥

---

सुरेशयजने देवं प्रतिष्ठाप्य यजनात् । शान्तिकरी दुरितरोगानर्थादिशान्ति-करी । सूक्ता आगमेष्वभिहिता । कर्पूरः स एव । (അഗരു=അകിൽ. തിലകം=മൈലെള്ള. കദംബം=കടമ്പ്. അർജ്ജുനം=മരുത്. മാലേയം=ചന്ദനം. കേതകം=കൈത. കുന്ദം=കുരുക്കുത്തിമുല്ല.) पूर्वोदक्प्लवशालिनी पूर्वभाग उदग्भागे च निम्नतया युक्ता । बहुजला वा अक्षयजलयुक्ता वा ॥ ३९ ॥

या पुनरेवंभूता वसुमती भूमिः, सा भद्रा परिगीयते भद्रेत्यागमेषूच्यते । यज्वनां प्रीतिप्रदा इष्टदा । वारिनिधेः समुद्रस्य तीरं श्रिता आश्रिता । अथवा सरितो नद्यास्तीर्थस्य प्रसिद्धस्य तीर्थस्य तीरं श्रिता । दक्षिणे दक्षिणभागे । व्रीहिक्षेत्रविचित्रिता व्रीहिक्षेत्रेण संयुक्ता । आप्यदिशि पश्चिमभागे । यज्ञार्हाङ्घ्रिपैः पलाशादिभिर्यज्ञयोग्यैर्वृक्षैराङ्किता चिह्निता । पूर्णफलप्रसूनतरुभिः फलपुष्पपूर्णैर्वृक्षैः । कीर्णा सङ्कीर्णा । अपि वा उद्यानहृद्या उद्यानवद्हृद्या ॥ ४० ॥

या च पुनरेवंभूता भूमिः सा पूर्णा स्यात् । सुरनिलयसमाकल्पने देवालयनिर्माणे । पुष्टिदात्री धनधान्यप्रदानशीला । प्लक्षन्यग्रोधनिम्बार्जुनवकुलकुलस्थासनाशोकनिष्पावाङ्कोलैः (പ്ലക്ഷം=ഇത്തി. ന്യഗ്രോധം=പേരാൽ നിംബം=വേപ്പ്. അർജ്ജുനം=മരുത്. വകുളം=ഇലഞ്ഞി. കലസ്ഥം=മതിര. അസനം=വേങ്ങ. അശോകം=സ്വയമേവ. നിഷ്പാവം=തുവര. അങ്കോലം=അഴിഞ്ഞിൽ.) एतैर्मुद्रिता अङ्किता वा । मालतीचम्पकतिलखदिरैः (മാലതി=മുല്ല. ചമ്പകം=സ്വയമേവ. തിലം=എള്ള്.

**अर्कैर्वेणुविभीतकैः स्नुहियुतैः श्लेष्मातकैः पीलुभिः**
**संकीर्णा बहुशर्करा च कठिना गर्भान्विता सोषरा ।**
**गृध्रश्येनवराहवायसशिवाशाखामृगैः सन्ततं**
**जुष्टा यष्टुरनिष्टदा निगदिता धूम्रा मही सूरिभिः ॥ ४२॥**

**आचार्योऽथ यथोचितां वसुमतीं लब्ध्वा निशायां समि-**
**ष्टात्माभ्यर्च्य गणेशमस्त्रमनुनाराध्य स्वधित्यादिकम् ।**
**प्राकारावधिकां प्रकल्प्य परितस्तां देवताभ्योणुना**
**मध्येऽष्टासु च भूतकूरहविषा दिक्षु प्रदद्याद् बलिम् ॥**

---

വദിരം=കരിങ്ങാലി.) कोद्रवैर्वा (കോദ്രവം=വരക്) एतैर्वा । भूधराधीश्वरशिखरगता भूधराधीश्वरः पर्वतश्रेष्ठः तस्योर्ध्वभागस्था वा । अथवा अद्रेः पर्वतस्य पार्श्वस्थिता वा । स्वल्पतोया सुतरामल्पं तोयं यत्र सा ॥ ४१ ॥

या तु पुनरेवंभूता मही, सा सूरिभिर्विद्वद्भिः धूम्रा निगदिता उक्ता । यष्टुः यजमानस्यानिष्टदा दुःखदा । अर्कैः सङ्कीर्णा । (അർക്കം=എരിക്ക്.) वेणुविभीतकैः वेणुभिर्विभीतकैश्च । (വേണു=മുള. വിഭീതകം=താന്നി.) स्नुहियुतैः श्लेष्मातकैः (സ്നുഹി=കള്ളി. ശ്ലേഷ്മാതകം=നറുവരി.) पीलुभिः (പീലു=ഉകം.) एतैर्वा । बहुशर्करा च बह्व्यः शर्करा यत्र सा । कठिना कर्कशा । गर्भान्विता गुहायुक्ता । सोषरा ऊषरयुक्ता । गृध्रश्येनवराहवायसशिवाशाखामृगैः (ഗൃധ്രം=കഴുകു. ശ്യേനം=പരുന്ത്. വരാഹം=പന്നി. വായസം=കാക്ക. ശിവാ=കുറുനരി. ശാഖാമൃഗം=കുരങ്ങ്) एभिः सन्ततं सदा जुष्टा सेविता । एवंभूता मही वर्ज्येत्यर्थः ॥ ४२ ॥

एवं भूलक्षणं भूपरीक्षाविधानं चोक्त्वा भूपरिग्रहविधानमाह — आचार्य इति । अथशब्द आरम्भार्थः । अथ आचार्यः यथोचितां यथायोग्याम् । वसुमतीं प्रशस्तां भूमिं लब्ध्वा । निशायां रात्रौ क्वचित् प्रदेश उपविश्य । समिष्टात्मा शङ्खपूरणानन्तरमात्मानमिष्ट्वा । गणेशं गुरुगणेशदीपानभ्यर्च्य अग्रतः स्वस्तिकस्थं स्वधित्यादिकं खड्गपरश्वादिकम् । अस्त्रमनुना स्वस्वास्त्रमन्त्रेण आराध्य । प्राकारावधिकां महामर्यादाप्राकारावसानभूतां तां भूमिं प्रकल्प्य । देवताभ्योणुना 'देवताभ्य' इति मन्त्रेण । मध्ये भूप्रदेशस्य मध्ये । परितोऽष्टासु दिक्षु च । भूतकूरहविषा भूतकूरयुक्तेन हविषा । बलिं प्रदद्यात् ॥ ४३ ॥

देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः ।
एतत्स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः ॥ ४४ ॥

आचम्य सम्यक् सकलीकृतात्मा
कृतात्मरक्षो रचिताञ्जलिः सन् ।
मध्ये स्थितस्तत्स्थितभूतजातं
प्रवासयेतेति[1] निवेदयंस्त्रिः ॥ ४५ ॥

भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।
ते सर्वे व्यपगच्छन्तु स्थानं कुर्यामहं हरेः ॥ ४६ ॥ इति॥
यद्यदर्थमिह गृह्यते मही तत्पदं हरिपदेऽत्र योजयेत् ।
स्कन्दभूतपतिसुम्भजित्सु येयेत्रदेवपदपूर्वतोऽर्थयेत् ॥
ये वसन्ति वने त्वत्र भूताः प्रेताश्च राक्षसाः ।
कूश्माण्डाश्च पिशाचाश्च वेताला ब्रह्मराक्षसाः ॥ ४८ ॥

---

बलिमन्त्रं पठति — देवताभ्य इति ॥ ४४ ॥

अथ आचम्य सकलीकृतात्मा सम्यक् कृतात्मरक्षः कृता आत्मरक्षा येन सः । मध्ये स्थितस्तिष्ठन् । रचिताञ्जलिः सन् भूत्वा । इति वक्ष्यमाण-मन्त्रेण । त्रिः त्रिशः निवेदयन् । तत्स्थितभूतजातं भूतसमूहम् । प्रवासयेत वियोजयेत ॥ ४५ ॥

प्रार्थनामन्त्रं पठति — भूतानीति ॥ ४६ ॥

इह यद्यदर्थं यस्य यस्य देवस्य कृते । मही गृह्यते । अत्र मन्त्रे । हरिपदे हरेरिति पदे । तत्पदं तस्य तस्य देवस्य नाम योजयेत् । स्थानं कुर्यां कपर्दिनः, स्थानं कुर्यां हरीशयोः, स्थानं कुर्यां गणेशितुः इति योजयेदित्यर्थः । स्कन्द-भूतपतिसुम्भजित्सु स्कन्दे शास्तरि दुर्गायां च । क्रमेण येयेत्रदेवपदपूर्वतः येपदपूर्वो येत्रपदपूर्वो देवपदपूर्वश्च येयेत्रदेवपदपूर्वाः, तैस्तैः । अर्थयेत् प्रार्थयेत् ॥ ४७ ॥

प्रार्थनामन्त्रान् पठति — ये वसन्तीत्यादि ॥ ४८—५२ ॥

---

1. 'स्कृतवासभूतप्रवासनायेति निवेदयेत् त्रिः' इति मूलकांशपाठः.

निर्गच्छन्त्वन्यतः शीघ्रमितः क्रूराः सुखं पुनः ।
भवनं कुर्महे त्वत्र गुहस्य परमात्मनः ॥ ४९ ॥

येऽत्राशुभकराः सन्ति भूतवेतालराक्षसाः ।
व्यपगच्छन्तु ते शास्तुः कुर्महे भवनं त्विह ॥ ५० ॥

देवदानवगन्धर्वपिशाचा वापि राक्षसाः ।
न,गाः सर्पास्तथा कीटा येऽत्र तिष्ठन्ति जन्तवः ॥ ५१ ॥

ते सर्वे न्ये च जानन्तु प्रयान्त्वस्माद् यथासुखम् ।
देव्यर्थं प्रतिगृह्णामि सास्माकं क्षम्यतामिति ॥ ५२ ॥

तद्वृक्षगुल्मादिकमिष्टशस्त्रै-
रुच्छिद्य संशोध्य निजास्त्रजापी ।
क्षमां क्षमीकृत्य दिशश्च सम्यग्
ज्ञात्वेष्टयुक्त्या प्रमिमीत चैनाम् ॥ ५३ ॥

पुन्नामैकतरूद्भवान् करमितांस्तत्पादनाहान् दृढान्
शङ्कून् प्राग्वदनोऽस्त्रमन्त्रमहितान् मध्यादिशर्वान्तिमम् ।
कृत्वा कल्पितसालसीम्नि परितः शङ्क्वादिसंवेष्टितं
स्वास्त्रेण प्रविसार्य सूत्रमपि गृह्णातु क्षितिं सर्वतः ॥ ५४ ॥

---

ततो निजास्त्रजापी स्वस्वास्त्रमन्त्रं जपन् । इष्टशस्त्रैः पूजितैः खड्गादिभिः । तद्वृक्षगुल्मादिकं तत्रत्यवृक्षवनगह्वरादिकम् । उच्छिद्य, संशोध्य । क्षमां क्षमीकृत्य समीकृत्य । दिशः सम्यक् शङ्कुस्थापनपूर्वकं ज्ञात्वा । एनां भूमिम् । इष्टयुक्त्या स्वेच्छायोगेन । प्रमिमीत मानं कुर्यात् ॥ ५३ ॥

पुनः सर्वतः सर्वदेवेषु । प्राग्वदनः प्राङ्मुखो भूत्वा । मध्यादिशर्वान्तिमं मध्ये पूर्वाद्यष्टदिक्षु च । पुन्नामैकतरूद्भवान् एकस्मादेव तरोर्वृक्षादुद्भवान् । (പുന്നാമരം=പുന്ന) करमितान् करपरिमितदीर्घान् । तत्पादनाहान् षडङ्गुलपरिधियुक्तान् । अस्त्रमन्त्रमहितान् पूर्वमेवास्त्रमन्त्रेण पूजितान् । दृढान् शङ्कून्

---

१. 'शबरा' ग. पाठः.

**आचार्यो मनुभावितोऽह्नि सुशुभे लग्ने वृषाभ्यां मिथ-**
**स्तुल्याभ्यामसनादिजैर्हलयुगाद्यैर्दर्भमालासितैः ।**
**प्रागास्यो मिहिरार्णतस्त्रिरथवा कृष्ट्वा क्षितिं पञ्चधा**
**मुद्गादीनि समुप्य मूलमनुना सिञ्चेज्जितन्ताणुना ॥ ५५ ॥**

**चक्रेण संरक्ष्य फलान्वितानि**
**गोब्रह्मसात्कृत्य च गा निवास्य ।**
**क्ष्मां साधयेदित्यजिते विधिः स्यात्**
**तदन्यदेवेषु भिदां वदामि ॥ ५६ ॥**

---

स्वास्त्रेण कृत्वा स्थापयित्वा । परितः कल्पितसालसीम्नि कल्पितप्राकारावधौ । सूत्रमपि त्रिगुणितं सूत्रम् । शङ्कुद्विसंवेष्टितं शङ्कौ शङ्कौ द्विद्विसंवेष्टितं यथा भवति तथा । स्वास्त्रेण प्रविसार्य अविच्छिन्नं प्रसार्य । क्षितिं गृह्णातु परिगृह्णीयात् ॥ ५४ ॥

एवं भूमिं परिगृह्यापरस्मिन् मुहूर्ते तस्याः संस्कारं कुर्यादिति वदन् पूर्वं विष्णौ विशेषमाह — **आचार्य** इति । आचार्यः सुशुभेऽह्नि सुशुभे लग्ने राशौ । मनुभावितः सकलीकरणात्माराधनकृद् भूत्वा । असनादिजैः असनवृक्षादिकृतैः । (അസനം=വേങ്ങ) हलयुगाद्यैः हलयुगयष्ट्यादिभिः । (ഹലം=കരിവി. യുഗം=നുകം.) दर्भमालासितैः दर्भपाशेन बद्धैः उपलक्षिताभ्यां मिथः अन्योन्यं तुल्याभ्यां वृषाभ्याम् । प्रागास्यः प्राङ्मुखो भूत्वा । मिहिरार्णतो द्वादशाक्षरं जपन् । त्रिः त्रिधा अथवा पञ्चधा क्षितिं कृष्ट्वा । 'कृषि लेखने' इति धातुः । मुद्गादीनि बीजानि मूलमनुना समुप्य वपनं कृत्वा । जितन्ताणुना सिञ्चेत् ॥ ५५ ॥

**चक्रेण** सुदर्शनमन्त्रेण । संरक्ष्य वृतिं कृत्वा । फलान्वितानि फलिते सति तानि बीजानि । गोब्रह्मसात्कृत्य । 'विभाषा साति कार्त्स्न्ये' (५. ४. ५२) इति सातिप्रत्ययः । गोभ्यो ब्राह्मणेभ्यश्च दत्त्वा । गाश्च निवास्य तत्र गवां निवासं कृत्वा । क्ष्मां साधयेत् । एवं कृते सति क्ष्मा साधिता भवतीत्यर्थः । इत्यजिते विष्णौ विधिः स्यात् । तदन्यदेवेषु भिदां भेदं वदामि ॥ ५६ ॥

**सद्यवामबहुरूपशिवास्यैः कर्षबीजवपनोक्षणरक्षाः ।**
**स्पर्शनं च गिरिशो निजमूलेनाखिलं तदितरेषु विदध्यात् ॥**
**हरीशेऽपि गिरीशोक्तक्रमाद् गुह्याणुभिर्निजैः ।**
**कर्षणादिक्रियाः पञ्च कुर्यान्मूलेन वा गुरुः ॥ ५८ ॥**

**खात्वा क्षितिं तां पुरुषप्रमाणं**
**जलान्तमश्मावधि वा सुलग्ने ।**
**पादोनमापूर्य विशुद्धवेद्यां**
**रात्रौ यजेद् दिश्यथ वास्तुमैश्याम् ॥ ५९ ॥**

**क्षेत्रे रन्ध्रपुटे प्रकल्प्य नवकं मध्येऽस्य बाह्यावृतौ**
**षट्कं दिक्षु विदिक्षु युग्मयुगलं चैकैकशस्तद्बहिः ।**

---

गिरिशे शिवे । सद्यवामबहुरूपशिवास्यैः सद्योजातवामदेवाघोरेशान-तत्पुरुषसूक्तैः । कर्षबीजवपनोक्षणरक्षाः कर्षणं बीजवपनमुक्षणं रक्षणं च । स्पर्शनं च । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनमि'त्यमरः । दानं विदध्यात कुर्यात् । तदितरेषु देवेषु । तदखिलं कर्म । निजमूलेन स्वस्वमूलमन्त्रेण विदध्यात् ॥ ५७ ॥

गुरुः वि[1]शेषेण ज्ञातुं शक्तः । हरीशेऽपि निजैर्गुह्याणुभिः पञ्चतत्त्वैः । गिरीशोक्तक्रमात् शिवोक्तमार्गेण । प्रातिलोम्याच्चतुर्थेन दानमित्यभिप्रायः । कर्षणादिपञ्चक्रियाः कुर्याद्, मूलेन वा सर्वमूलमन्त्रेण वा ॥ ५८ ॥

अथ सुलग्ने शोभने मुहूर्तान्तरे । तां क्षितिं पुरुषप्रमाणं जलान्तमश्मावधि वा खात्वा पादोनं यथा तथा आपूर्य । विशुद्धवेद्यां मार्जनालेपनादिभिः विशुद्धायां वेद्याम् । ऐश्यां दिशि रात्रौ वास्तुं यजेत् ॥ ५९ ॥

रन्ध्रपुटे आयामतो विस्तारतश्च दशभिः सूत्रपातैर्नवपुटं कृत्वा तत्र क्षेत्रे । मध्ये नवकं पदानां नवकं स्वस्तिकत्वेन प्रकल्प्य । अस्य नवकस्य । बाह्यावृतौ दिक्षु पदानां षट्कं, विदिक्षु युग्मयुगलं द्विकद्वयं, तत्राग्निवायुकोणयोः पूर्वापरायतमितरकोणयोर्दक्षिणोत्तरायतं च प्रकल्प्य । तद्बहिरेकैकशश्च पदानि

---

१. 'पं ज्ञा' ग. पाठः.

तस्मिन्नर्पितदर्भके महितपीठे सादिवांवास्तुना
वास्तुं प्राक् पुरुषेण ङेनतिमता वामादिकाङ्गैर्यजेत् ॥६०॥

तत्सन्नमःप्रपुटितं निजनाम ङेन्तं
तारादिकं निजपदाङ्गकमर्कवर्णम् ।
ब्राह्मं मनुं विदुरथ प्रणवप्रणाम-
पूर्वं स्वनाम रसवर्णकमक्षराङ्गम् ॥ ६१ ॥

तत्र वास्तुतनुक्लृप्तविष्टरेऽथार्यकादिवृतमात्मसंभवम् ।
सन्निधाप्य मनुनामुनोदितेनाङ्गषट्कसहितं समर्चयेत् ॥६२॥

---

प्रकल्प्य । अर्पितदर्भके दर्भान् विन्यस्य । तस्मिन् महितपीठे पूजितपीठे । प्राक् प्रथमम् । सादिवांवास्तुना आदिवांवास्तुयुक्तेन । आदिः प्रणवः । ङेनतिमता चतुर्थ्येकवचननमोयुक्तेन । पुरुषेण पुरुष इति पदेन, 'ओं वां वास्तुपुरुषाय नमः' इति मन्त्रेण आवाह्य । वामादिकाङ्गैः वां हृदयाय नमः इत्याद्यङ्गैः सह वास्तुं यजेत् ॥ ६० ॥

ब्राह्मं मनुमुद्धरति — तत्सन्नम इति । तारादिकं प्रणवादिकं तत्सन्नमःप्रपुटितं तत्सन्नम इत्यनेन रुद्धम् । ङेन्तं चतुर्थ्येकवचनान्तम् । निजनाम ब्रह्मेति नाम 'ओं तत्सन्नमो ब्रह्मणे तत्सन्नमः' इति । अर्कवर्णं द्वादशाक्षरं ब्राह्मं मनुं विदुः । निजपदाङ्गकम् अस्य मन्त्रस्य निजपदानि अङ्गानि 'ओं हृदयाय नमः', 'तत्सत् शिरसे स्वाहा' इत्यादि । अथेति पक्षान्तरद्योतकमव्ययम् । प्रणवप्रणामपूर्वम् 'ओं नमः' इत्यादिकम् । स्वनाम ब्रह्मेति नाम । चतुर्थ्यन्तमित्यर्थात् सिद्धं भवति । 'ओं नमो ब्रह्मणे' इति । रसवर्णकं षडक्षरम् अक्षराङ्गम् अस्याक्षरैरङ्गानीत्यर्थः ॥ ६१ ॥

एवं मन्त्रादिकमुक्त्वा ब्रह्मादीनां पूजामाह — तत्रेति । अथ वास्तुपूजानन्तरम् । वास्तुतनुक्लृप्तविष्टरे वास्तुतन्वा क्लृप्ते विष्टरे । आर्यकादिवृतम् आर्यकादिभिः परिवृतम् । आत्मसंभवं ब्रह्माणम् । उदितेन । उक्तेन अमुना मनुना । सन्निधाप्य आवाहनादि कृत्वा अङ्गषट्कसहितं यथा भवति तथार्चयेत् ॥ ६२ ॥

---

१. 'ते' क. ख. पाठः. २. 'न्त्रानुक्त्वा' ग. पाठः.

**आर्यकसावित्राख्यौ सविता सविवस्वदिन्द्रजय इन्द्रः ।**
**मित्रो रुद्रजयाभिधरुद्रमहीधरयुतापवत्सापाः ॥ ६३ ॥**
**प्रागादीशान्तममी क्रमशः स्युरथापपूर्वयजनविधौ ।**
**कोणगतद्वितयानां सक्षेत्राणां क्रमो विपर्येयः ॥ ६४ ॥**
**ईशानः पर्जन्यो जयन्त इन्द्रः ससूर्यसत्यभृशः ।**
**भूयोऽन्तरिक्षवह्नी पूषा वितथो गृहक्षतोऽथ यमः ॥ ६५ ॥**
**गन्धर्वभृङ्गराजौ मृगपितृदौवारिकाः ससुग्रीवाः ।**
**अथ पुष्पदन्तवरुणासुरशोषा रोगवायुनागाश्च ॥ ६६ ॥**
**मुख्यो भल्लाटकसोमार्गलका दित्युदित्युपेताः स्युः ।**
**ईशाद्यैकैकपदे द्वात्रिंशद् देवता बहिः प्रोक्ताः ॥ ६७ ॥**

---

प्रस्तुतमार्यकादिकं पठति — **आर्यकसावित्राख्याविति** । आर्यकसावित्राख्यौ आर्यकः सावित्रश्च आर्यकाय नमः सावित्राय नम[1], सविता सवित्रे नमः इत्यादि । सविवस्वदिन्द्रजयः विवस्वदिन्द्रजयाभ्यां सहितः । इन्द्रः मित्रः । रुद्रजयाभिधरुद्रमहीधरयुतापवत्सापाः रुद्रजयो रुद्रो महीधर आपवत्स आपश्च ॥ ६३ ॥

**अमी** प्रागादीशान्तं क्रमशः स्युः । अथेति पक्षान्तरद्योतको निपातः । आपपूर्वयजनविधौ बहिरारब्धपूजायाम् । कोणगतद्वितयानाम् आपवत्सापादीनां सक्षेत्राणां स्थानैः सहितानाम् क्रमो विपर्येयः व्यत्यसनीयः । अत्र नमोन्ताश्च मन्त्रा ग्राह्याः ॥ ६४ ॥

**ईशानः** पर्जन्यः जयन्तः इन्द्रः । ससूर्यसत्यभृशः सूर्यः सत्यो भृशश्च । भूयः पुनः । अन्तरिक्षवह्नी अन्तरिक्षो वह्निश्च, अग्नये नमः इति । पूषा वितथः गृहक्षतः अथ यमः यमश्च ॥ ६५ ॥

**गन्धर्वभृङ्गराजौ** गन्धर्वो भृङ्गराजश्च मृगपितृदौवारिकाः मृगः पितरो दौवारिकश्च । ससुग्रीवाः सुग्रीवश्च । अथ पुष्पदन्तवरुणासुरशोषाः पुष्पदन्तो वरुणोऽसुरः शोषश्च । रोगवायुनागाः रोगो वायुर्नागश्च ॥ ६६ ॥

**मुख्यः** भल्लाटकसोमार्गलकाः भल्लाटकः सोमोऽर्गलश्च । दित्युदित्युपेताः दितिरुदितिरित्याभ्यां युक्ताः । बहिरीशाद्यैकैकपदे ईशकोणमारभ्य प्रादक्षिण्यक्रमेणैकैकस्मिन् पदे । एता द्वात्रिंशद्देवताः प्रोक्ताः ॥ ६७ ॥

---

1. 'रुद्रको' ख. पाठः.

इति हरिमहिषनिहन्त्र्योरन्तर्बहिरर्चने क्रमोऽन्येषु ।
ईशानादिबहिष्ठापादिधरान्तान्तरान्तरजनिष्ठः ॥ ६८ ॥

शर्वस्कन्दार्यमणौ जम्भकपिलिपिञ्छकौ दिशि बहिः स्युः ।
विदिशि चरकी विदारी पूतनिका पापराक्षसीशाद्यम् ॥

अथ देवासुरगन्धर्वयक्षपितरः सनागराक्षसकाः ।
पूर्वाद्यष्टदिशासु क्रमशः सपिशाचका ग्रहाः सकले ॥

विरिञ्चं द्विपञ्चाशता देवताभि-
र्वृतं चार्चयित्वा यथोक्तक्रमेण ।
अमुष्मै निवेद्याथ तद्देवताभ्य-
स्त्रिपञ्चाशते तत्र दद्याद् बलिं च ॥ ७१ ॥

---

हरिमहिषनिहन्त्र्योरन्तर्बहिश्चार्चने इति क्रमः स्यात् । अन्येषु पञ्चसु । ईशानादिबहिष्ठापादिधरान्तान्तरान्तरजनिष्ठः ईशानादिबहिष्ठ आपादिधरान्तान्तरोऽन्तरजनिष्ठश्च क्रमः स्यात् । ईशानादिद्वात्रिंशद्देवताभिर्बहिष्ठाभिर्युक्तः, आपापवत्सादिधरो महीधरः तदन्तो धरान्तस्ताभिर्द्वादशभिरन्तरे अन्तराले स्थिताभिर्देवताभिश्च युक्तः, अन्तरजनिष्ठः अन्तरस्थितब्रह्मावसितः क्रमः स्यात् ॥ ६८ ॥

अथ सकले बहिः द्वात्रिंशद्देवतानामपि बहिर्दिशि । शर्वस्कन्दार्यमणौ शर्वस्कन्दश्चार्यमा च । जम्भकपिलिपिञ्छकौ जम्भकः पिलिपिञ्छकश्च स्युः । विदिशि ईशाद्यं यथा भवति तथा । चरकी विदारी । पूतनिका इति पूतना । पापराक्षसी च स्युः । पूर्वाद्यष्टदिशासु क्रमशो देवासुरगन्धर्वयक्षपितरः देवा असुरा गन्धर्वा यक्षाः पितरश्च । सनागराक्षसकाः नागा राक्षसाश्च । सपिशाचकाः पिशाचाश्च । ग्रहा इति देवग्रहेभ्यो नम इत्यादिमन्त्रा उक्ताः ॥ ६९, ७० ॥

द्विपञ्चाशता देवताभिर्वृतं विरिञ्चं ब्रह्माणम् । यथोक्तक्रमेणार्चयित्वा पूजयित्वा । अमुष्मै ब्रह्मणे निवेद्य । अथ त्रिपञ्चाशते तद्देवताभ्यस्तत्र बलिं च दद्यात् ॥ ७१ ॥

कुशप्रसूनाक्षतवारिहव्यै-
स्त्रिशः किरेद् वास्तुचतुर्मुखाभ्याम् ।
सकृत् सकृत् तत्परितः परेभ्यो
बहिर्ग्रहेभ्योऽञ्चितपञ्चकूरैः ॥ ७२ ॥

कृत्वा बलिं सलिलमत्र सकृत् सकृच्च
दत्त्वा प्रसन्नयजनं प्रविधाय धातुः ।
तद्वास्तुदैवतकदम्बकृतावलम्बं
प्राकारमध्यमवबुध्य करोतु रक्षाम् ॥ ७३ ॥

गर्ते तत्र विशोधिते विनिहिताधाराश्ममध्यावटे
धान्याद्याहितविष्टरेऽथ निधिकुम्भं ताम्रजं वाश्मजम् ।
मूलेन प्रणिधाय तत्र विधिवद् रत्नादिपूर्णेऽर्णजं
संपूज्याब्जमिहाभिराध्य भुवनेशीमर्थयेतामुना ॥ ७४ ॥

---

कुशप्रसूनाक्षतवारिहव्यैः कुशपुष्पाक्षतजलमिश्रैर्हविर्भिः । वास्तुचतुर्मुखाभ्यां वास्तुपुरुषाय ब्रह्मणे च । त्रिशः बलिं किरेत् । तत्परितः तस्य परितः । परेभ्य आर्यकादिभ्यः ईशानादिभ्यो वा । सकृत् सकृत् एकशः । बहिः शर्वस्कन्दादीनां बहिः । ग्रहेभ्यः देवग्रहादिभ्यः । अञ्चितपञ्चकूरैः पञ्चकूरमिश्रैर्हविर्भिरित्यर्थः ॥ ७२ ॥

बलिं कृत्वा । अत्र देवतासु । सकृत् सकृत् सलिलं च दत्त्वा । धातुः ब्रह्मणः प्रसन्नयजनं प्रविधाय । प्राकारमध्यं महामर्यादान्तर्भागम् । तद्वास्तुदैवतकदम्बकृतावलम्बं पूर्वोक्तवास्तुदेवतानां समूहेन प्राप्ताश्रयम् । अवबुध्य ध्यात्वा रक्षां करोतु ॥ ७३ ॥

निधिकलशादिस्थापनमाह — गर्ते इति । अथ विशोधिते विशेषेण शोधिते तत्र गर्ते । विनिहिताधाराश्ममध्यावटे स्थापिताया आधारशिलाया मध्यस्थे गर्ते । धान्याद्याहितविष्टरे धान्यतण्डुलादिभिः क्लृप्ते पीठे । ताम्रजं ताम्रमयम् । अश्मजं वा शिलानिर्मितं वा निधिकुम्भं निधिकलशम् । मूलेन प्रणिधाय न्यस्य । तत्र पीठे । विधिवत् कलशन्यायेन । रत्नादिपूर्णे रत्नकनकादिभिः पूर्णे निधिकलशे । अर्णजमब्जं ब्रह्मकलशपूजायां वक्ष्यमाण लिपिपङ्कजं सम्पूज्य ।

त्वमेव परमा शक्तिस्त्वमेवासनधारिका ।
सन्तृप्तया त्वया देवि ! स्थातव्यमिह सर्वदा ॥७५॥ इति ।
तद्दक्षिणे दर्भमृदादिशोधितं
निधाय कूर्मं कृतधान्यविष्टरे ।
विशोध्य तं धारणयात्ममन्त्रतः
प्राच्याधिवास्येति घटोपरि न्यसेत् ॥ ७६ ॥
शिलापद्मं कुम्भोपरि सुविनिधायार्णकमलं
समर्च्यास्मिन् भाव्यालयवदुपधायाश्मकमठम् ।
अकूबारायेति प्रणवनमसोरन्तरभुवा-
णुनावाह्यानेन प्रणवविहिताङ्गं यजतु च ॥ ७७ ॥
तदूर्ध्वस्थे पद्मे रजतरचिते सार्णकमले
न्यसेद् रौप्यं कूर्मं प्रयजतु च तेनैव मनुना ।

---

इह लिपिपद्मे भुवनेशीं शक्तिम् । अभिराध्यावाह्य सम्पूज्य । अमुना वक्ष्यमाणेन मन्त्रेण । अर्थयेत प्रार्थयेत् ॥ ७४ ॥

मन्त्रमाह — त्वमेवेत्यादि ॥ ७५ ॥

तद्दक्षिणे कृतधान्यविष्टरे धान्यादिभिर्विरचितपीठे, अर्थात् पूजितपीठे । दर्भमृदादिशोधितं दर्भमृत्त्वग्भिः संघृष्य क्षालितम् । कूर्मं शिलापद्मे शिलाकूर्मं रजतपद्मे रजतकूर्मं स्वर्णपद्मे स्वर्णकूर्मं च निधाय । धारणया शोषणादिभिः तानि विशोध्य । आत्ममन्त्रतः कूर्मस्यं मन्त्रेण प्राच्य सम्पूज्य । वस्त्रेणाच्छाद्याधिवास्य । इति वक्ष्यमाणप्रकारेण । घटोपरि निधिकलशम्योपरि न्यसेत् ॥ ७६ ॥

केन प्रकारेणेत्यत्राह — शिलापद्ममिति । कुम्भोपरि निधिकलशोपरि । शिलापद्मं शिलामयं (पद्मं) सुविनिधाय सुस्थितं यथा भवति तथा विनिधाय । अर्णकमलं लिपिपङ्कजं समर्च्य । अस्मिन् पद्मे । अश्मकमठं शिलाकूर्मम् । भाव्यालयवद्, भविष्यत्प्रासादं यन्मुखं तद्वदित्यर्थः । प्रणवनमसोः अन्तरभुवा मध्यस्थेन 'अकूबाराये'त्यणुना । उपधाय सुस्थितं स्थापयित्वा । अनेन मन्त्रेणावाह्य । प्रणवविहिताङ्गं प्रणवेन कृताङ्गं तं यजतु च ॥ ७७ ॥

तदूर्ध्वस्थे शिलाकूर्मोपरिस्थिते रजतरचिते पद्मे । सार्णकमले पूजितलिपिपङ्कजे । रौप्यं रूप्यमयं कूर्मं तेनैव मनुना न्यसेत् प्रयजतु च । तथा

---

१. 'स्य मणेर्मन्त्रे' क. पाठः.

तथा स्वर्णाम्भोजेऽर्चितलिपिसरोजे कनकजं
निधायेष्ट्वा कूर्मं विधिवदमुना प्रार्थयतु च ॥ ७८ ॥

नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे ।
करिष्यमाणं प्रासादमिह त्वं धर्तुमर्हसि ॥ ७९ ॥

विघ्नेशापचितिं विधाय यमदिग्द्वार्यग्रतः स्वस्तिके
देवं च प्रसमर्च्य शेषहविषा हुत्वा प्रसाद्याथ तम् ।
कूर्मस्योपरि योगनालमुपधायाजन्मभूम्युद्गतं
गर्तं मृत्तिकयाभिपूर्य दृषदा चाकोट्य दार्ढ्यं नयेत् ॥

पूर्णप्रासाददेशे त्रिणयनपदसंप्रीणिताभीष्टवास्तौ .
भाव्येतद्द्वारशाखापदमपि परिकल्प्योत्तरेणाथ चैतत् ।

---

तद्वदेव स्वर्णाम्भोजे सौवर्णे पद्मे निधाय । तत्र अर्चितलिपिसरोजे पूजितलिपिपङ्कजे । कनकजं कनकमयं कूर्मम् । विधिवत् पूर्वविधिना निधाय । इष्ट्वा सम्पूज्य । अमुना वक्ष्यमाणमन्त्रेण । प्रार्थयतु प्रार्थनं कुर्यात् ॥ ७८ ॥

प्रार्थनामन्त्रमाह — नमस्त इत्यादिना ॥ ७९ ॥

अथ यमदिग्द्वारि भविष्यद्दक्षिणद्वारे स्थाने । विघ्नेशापचितिं गणपतिदक्षिणामूर्तिपूजां विधाय । अग्रतः कूर्मस्याग्रतः स्वस्तिके देवं च प्रसमर्च्य निवेद्य । शेषहविषा हुत्वा पूजाङ्गहोमं कृत्वा । तं देवं प्रसाद्य कूर्मस्योपरि । आजन्मभूम्युद्गतम् अजन्मा ब्रह्मा तस्य भूमिः स्थानं, नपुंसकशिलेत्यर्थः, तत्पर्यन्तमुद्गतमूर्ध्वगतं योगनालम् । उपधाय स्थापयित्वा । आजन्मभूम्युद्गतं जन्मभूमिरुपानत्पर्यन्ता भूमिः, तदन्तमिति केचित् । गर्तं मृत्तिकया दृषदा च शिलयाभिपूर्य । आकोट्य अयःकूटेन संताड्य । दार्ढ्यं स्थिरताम् । नयेत् प्रापयेत् ॥ ८० ॥

अथ पूर्णप्रासाददेशे पूर्णप्रासादस्थाने सत्यपरस्मिन् मुहूर्ते रात्रौ । त्रिनयनपदसंप्रीणिताभीष्टवास्तौ ईशभागकृतस्वस्ववास्तुबलौ च सति । भाव्येतद्द्वारशाखापदं भविष्यत्प्रासादद्वारस्य दक्षिणशाखायाः स्थानमपि परिकल्प्य । एतदुत्तरेण तस्योत्तरभागे । उल्लेखादिक्रमेण उल्लेखनमारभ्य क्रमेण । ज्वलनम-

---

१. 'वेशं च स' क. पाठः. २. 'जां गणहो' ख. पाठः.

उल्लेखादिक्रमेण ज्वलनमुपसमाधाय गव्यादिसिक्ता-
स्तद्याम्येऽष्टेष्टकास्तद्यमदिशि कलशं च न्यसेत् क्लृप्तपीठे ॥
धारणाक्रमविशोधितास्ततः स्वाणुतः समभिपूज्य चेष्टकाः ।
प्राच्र्य रत्नजलपूरितं घटं प्रारभेत हवनं विधानतः ॥८२॥
पक्वात् प्राग् भर्गदुर्गास्मरमुरभिदि मूलाक्षरैर्विघ्नराजे
पक्वान्ते द्वादशाख्याभिरिह हरिहरे पञ्चतत्त्वैस्त्रिधाम्नि ।
मूलार्णैस्त्र्यम्बके ब्रह्मभिरपि घृतमाहुत्य भूरादिमन्त्रै-
राज्यं द्रव्याहुतेः प्राङ् मुरभिदि जुहुयादूर्ध्वतश्चेतरेषु ॥८३॥
भूराद्याः पृथगेव लोकपतयश्चाग्निश्च सोमो ग्रहा
नक्षत्राणि ससंप्रदान*ठयुगा भूतानि नागा हरौ ।

ग्निम् । उपसमाधाय स्थापयित्वा । परिधिस्थापनात् प्राक् तद्याम्ये तद्दक्षिणभागे । क्लृप्तपीठे विरचिते पीठे । गव्यादिसिक्ताः पञ्चगव्याष्टगन्धजलैः सिक्ता अष्टेष्टकाः । तद्यमदिशि तासां दक्षिणे कलशं च न्यसेत् ॥ ८१ ॥

ततो धारणाक्रमविशोधिताः शोषणादिभिः शोधिताः इष्टकाः । स्वाणुतः स्वस्थापनमन्त्रतः समभिपूज्य । रत्नजलपूरितं रत्नैर्जलैश्च पूरितम् । घटं कलशं प्राच्र्य । हवनं होमम् । विधानतः परिधिस्थापनादिक्रमेण प्रारभेत ॥ ८२ ॥

भर्गदुर्गास्मरमुरभिदि शिवदुर्गाशङ्करनारायणेषु । पक्वात् पक्वहोमात् । प्राक् पूर्वम् । मूलाक्षरैः मूलमन्त्रस्याक्षरैः 'ओं स्वाहा' 'नं स्वाहा' इत्यादिभिः । विघ्नराजे गणपतौ । पक्वान्ते द्वादशाख्याभिः 'ओं वज्रदन्ताय स्वाहा' इत्याद्यैर्द्वादशनामभिः । हरिहरे शङ्करनारायणे । इह पक्वान्ते पञ्चतत्त्वैः । त्रिधाम्नि विष्णौ । इह मूलार्णैः मूलमन्त्रस्याक्षरैः । त्र्यम्बके शिवे । इह ब्रह्मभिः पञ्चब्रह्ममन्त्रैः घृतहोमः स्यात् । अथ मुरभिदि विष्णौ । द्रव्याहुतेः प्राक् पुरः । भूरादिमन्त्रैः वक्ष्यमाणैराज्यं जुहुयात् । इतरेषु तदन्येषु । ऊर्ध्वतः द्रव्यहोमादूर्ध्वतश्च जुहुयात् ॥ ८३ ॥

भूरादिमन्त्रानाह — भूराद्या इति । हरौ भूराद्याश्चत्वारोऽणवः ।

१. 'नं च मन्त्रावत् ॥' क. पाठः. २. 'वित् ॥' ख. पाठः.

* "ठद्वयं स्वाहा । द्विठमेव चेत्यस्य व्याख्यायां द्विठं विसर्गस्तस्य बिन्दुद्वयात्मकत्वात् । विसर्गशब्देन च लक्षितलक्षणया स्वाहाकारो लक्ष्यते । तत्राहाशब्देनैव वह्नौ त्यागात् आपस्य च विसर्गपर्यायत्वाद् इत्येवं रघुनन्दनादिसम्प्रदायविदः ॥" इति बृहदभिधानम् ।

सर्वाश्चाप्यथ देवतास्तदनु विश्वे चापि देवाः पुन-
र्विष्णुर्व्याहृतयश्च विष्णुपदमूलास्तेऽणवोऽन्येष्वतः ॥ ८४ ॥

गायत्र्या सकलेषु प्रजुहोतु समिद्घृतान्नसर्पींषि ।
पूर्णान्तं साष्टशतं दुर्गायां तानि मूलमन्त्रेण ॥ ८५ ॥

पक्वान्ते नामद्विषट्केन दिक्पैर्भूतैश्चाज्यं बाहुलेये महद्भिः ।
चन्द्रार्काभ्यां कालवह्निग्रहैर्दिङ्नक्षत्रैर्द्रव्यं हुनेन्मूलतोऽन्ते ॥

पक्वान्ते षण्मन्त्रकैराज्यमार्ये
हुत्वा गायत्र्या चतुर्द्रव्यकं च ।
गोप्त्राद्याख्याषड्युजेन्द्रादिन-
क्षत्रान्तैः स्कन्दोक्तैश्च सर्पिर्जुहोतु ॥ ७ ॥

---

अथ लोकपतयः इन्द्राद्याः । पृथगेव 'इन्द्राय स्वाहा' 'अग्नये स्वाहा' इत्याद्याः । अग्निः सोमः ग्रहा नक्षत्राणि भूतानि नागाः सर्वाश्चापि देवताः तदनु विश्वे चापि देवाः पुनर्विष्णुश्च । एते संप्रदानठयुगाः संप्रदानेन चतुर्थ्या ठयुगेन स्वाहाकारेण च युक्ताः । पुनर्व्याहृतयश्च । अत्र 'सर्वाभ्यो देवताभ्य' इत्येक एव मन्त्रः । 'विश्वेभ्यो देवेभ्य' इति च । अतोऽन्येषु देवेषु । विष्णुपदमूलाः विष्णुस्थाने मूलमन्त्राः । तेऽणवो मन्त्राः ॥ ८४ ॥

पुनर्होमशेषमाह — गायत्र्येति । सकलेषु समिद्घृतान्नसर्पींषि चत्वारि द्रव्याणि । गायत्र्या स्वस्वगायत्र्या । साष्टशतम् अष्टसहितशतं पूर्णान्तं प्रजुहोतु । दुर्गायां मूलमन्त्रेण तानि द्रव्याणि प्रजुहोतु ॥ ८५ ॥

बाहुलेये स्कन्दे पक्वान्ते । नामद्विषट्केन नाम्नां द्वादशकेन । दिक्पैरिन्द्राद्यैः । भूतैर्महद्भिः चन्द्रार्काभ्याम् । कालवह्निग्रहैः कालेन वह्निना ग्रहैश्च । दिङ्नक्षत्रैः दिग्भिर्नक्षत्रैश्चाज्यं हुनेत् । एतेषां नाममन्त्रैराज्यं हुनेदित्यर्थः । अन्ते मूलतो द्रव्यं हुनेत् ॥ ८६ ॥

आर्ये पक्वान्ते षण्मन्त्रकैः रेवन्तादिभिः आज्यं हुत्वा गायत्र्या चतुर्द्रव्यकं च हुत्वा । गोप्त्राद्याख्याषड्युजा गोप्त्रादिनामद्वादशकेन । इन्द्रादिनक्षत्रान्तैः स्कन्दोक्तैः स्कन्दस्योक्तैर्मन्त्रैश्च सर्पिर्जुहोतु ॥ ८७ ॥

---

१. गाः प्रसिद्धवत् सं' ख. पाठः. २. 'त्र्या सा' क. ख. पाठः. ३. 'तं पू' ग. पाठः.

स्विष्टकृत्प्रभृतिहोमविरामे प्राप्य सर्पिरपि तासु घटे च ।
तद्द्वयं समधिवास्य निशीति स्थापयेत् तदनु ताः सुविलग्ने ॥

प्रासादद्वारस्य वामेतरस्मिन्
पार्श्वोद्देशे भावितत्पादुकान्तः ।
भूमिं कृत्वा सुस्थिरां शोधयित्वा
मात्वा क्षेत्रं कल्पयेदिष्टकानाम् ॥ ८९ ॥

क्षेत्रे चतुष्पदयुते चतुरश्ररूपे
रेखे लिखेच्छिखिमरुत्पदयोः पुरोग्रे ।
तच्छिष्टकोष्ठयुजि पिप्पलशङ्कुनोद-
गग्रे ध्रुवेण सकलेषु शिवेऽस्त्रतो वा ॥ ९० ॥

---

स्विष्टकृत्प्रभृतिहोमविरामे स्विष्टकृतादिहोमावसाने । सर्पिः संपातमपि । तास्विष्टकासु । घटे कलशे च प्राप्य । तद्द्वयं निशि समधिवास्य तदनु ताः इष्टकाः । सुविलग्ने शोभने मुहूर्ते । इति वक्ष्यमाणविधिना स्थापयेत् ॥ ८८ ॥

प्रासादद्वारस्य वामेतरस्मिन् दक्षिणे पार्श्वोद्देशे द्वारशाखाधोभागे । भावितत्पादुकान्तः भविष्यतः पादुकस्यान्तर्भागे । भूमिं सुस्थिरां कृत्वा । शोधयित्वा मार्जनादिभिः संशोध्य । मात्वा मानं कृत्वा । इष्टकानां क्षेत्रं यथा, तथा कल्पयेत् ॥ ८९ ॥

चतुष्पदयुते चतुरश्ररूपे क्षेत्रे । शिखिमरुत्पदयोः अग्निवायुकोणगतपदयोः । पुरोग्रे प्रागग्रे । तच्छिष्टकोष्ठयुजि तच्छिष्टयोर्निर्ऋतीशकोष्ठयोः द्वये उदगग्रे । पिप्पलशङ्कुना । अश्वत्थवृक्षनिर्मितशङ्कुना । सकलेषु देवेषु । ध्रुवेण प्रणवेन । शिवेऽस्त्रतो वा रेखे लिखेत् । अयं भावः — त्रिकरवर्गभवे प्रासादे चतुरङ्गुलाधिककरमानेन समचतुरश्रं क्षेत्रं कृत्वा 'यद्वार्काहियुगैर्मिताततिविततयुत्सेधवत्योऽङ्गुलैरि'ति कर्मशेषे वक्ष्यमाणरीत्या द्वादशाङ्गुलदीर्घा अष्टाङ्गुलविस्तृताश्चतुरङ्गुलोत्सेधाश्चाष्टेष्टका ईशवाय्वोः पूर्वापरायता इतरयोरन्यथारूपाश्च स्थाप्याः । तथा सति मध्ये चतुरङ्गुलसमविस्तारस्य गर्भपात्रस्य गर्तं भवतीति ॥ ९० ॥

पीठं वर्मसमुक्षितेऽत्र परिपूज्यान्तःस्थितः संस्मरन्
देवं साञ्जलिरीश्वरे गिरिशवारं मूलमष्टावरम् ।
अन्येष्वप्यभिजप्य वह्निचितिमासूद्रास्य चाष्टेष्टका-
श्चिन्वीतोन्नतिनिम्नते परिहरंस्तुल्या यथोपानहा ॥ ९१ ॥

ईशेऽष्टाभिः सद्यजाभिः कलाभि-
र्वह्न्यंशादीशांशनिष्ठं क्रमेण ।
लक्ष्मीशोमाश्रीशयोर्मूलवर्णै-
श्चिन्वीतान्येषु स्वमूलेन चैनाः ॥ ९२ ॥

आवाह्यात्र निजेन मूलमनुना देवं सहाङ्गं यजेदा-
लिप्यामलया मृदा कलशवारापूर्य गर्भावटम् ।
वीक्षेताक्षतसूनमोमिति जपन् क्षिप्त्वा जलावर्तकं
वामावर्तसमुद्भवेऽत्रहुतसंपातं च संपातयेत् ॥ ९३ ॥

---

अथ वर्मसमुक्षिते अत्र स्थले पीठं परिपूज्य । अन्तःस्थितः अन्तर्भागे तिष्ठन् । साञ्जलिरञ्जलियुक्तो देवं संस्मरन् । ईश्वरे शिवे । गिरिशवारम् एकादशवारम्, अन्येष्वष्टावारमपि मूलमभिजप्य । वह्निचितिं वह्निचैतन्यम् । आसु इष्टकासूद्रास्याष्टेष्टकाश्च यथा उपानहा तुल्या भवन्ति तथोन्नतिनिम्नते परिहरन् उन्नतिं निम्नतां च परिहरंश्चिन्वीत ॥ ९१ ॥

एना इष्टकाः । वह्न्यंशादीशांशनिष्ठं वह्न्यंशमारभ्येशांशेऽवसानं यथा भवति तथा क्रमेण । ईशे सद्यजाभिः कलाभिः अष्टभिः सद्योजातकलाभिः । लक्ष्मीशोमाश्रीशयोः विष्णुशङ्करनारायणयोः । मूलवर्णैर्मूलमन्त्रस्याक्षरैः । अन्येषु स्वस्वमूलेन च चिन्वीत ॥ ९२ ॥

अत्र निजेन मूलमनुना देवमावाह्य । सहाङ्गम् अङ्गैः सहितं यजेत् । अमलया मृदा तद्विवरमालिप्य । कलशवारा कलशजलेन । गर्भावटं गर्भस्थानगर्तमापूर्य ओमिति जपन् अक्षतसूनं तत्र जले क्षिप्त्वा जलावर्तं वीक्षेत । वामा-

मनुवरमहितं महास्त्रगुप्तं विभुमभिकल्प्य तथेष्टकाश्चतस्रः।
तदुपरि विनिधाय धान्यमृद्भिर्दृढमवटं परिपूर्य साधु रक्षेत् ॥

ततः समभ्यर्चितवास्तुरत्र शुभेऽह्नि गर्भोचितसाधनानि ।
संभृत्य मन्त्री विनिधाय वह्निं समारभेतोत्तरतोऽग्निकार्यम् ॥

न्यस्य न्यग्बिलमग्निदक्षिणदिशि व्रीह्यादिमन्मण्डले
पात्रं ताम्रमयं पिधानसहितं गव्यादिसंशोधितम् ।
पीठाराधनपूर्वमत्र कृतसंस्कारे समुत्तानिते
कुर्यात् सागरमृद्वृतिं धृतहिरण्येनाग्रदोष्णा सुधीः ॥ ९६ ॥

---

वर्तसमुद्भवे वामगत्यावर्ते जाते सति तत्प्रायश्चित्तार्थम् । अस्त्रहुतसंपातं चास्त्रेणाज्यं हुत्वा तत्संपातं च संपातयेत् ॥ ९३ ॥

मनुवरमहितं महास्त्रगुप्तं मूलमन्त्रपूजितं स्वस्वमहास्त्रेण रक्षितम् । विभुं देवमभिकल्प्य । तथा तदुपरि तासामिष्टकानामुपरि चतस्र इष्टकाश्च । विनिधाय । धान्यमृद्भिर्धान्यैर्मृद्भिश्च । अवटं गर्तं दृढं परिपूर्य । साधु यथावद् रक्षेत् ॥ ९४ ॥

ततः शुभेऽह्नि शुभदिवसे रात्रावत्रापि । समभ्यर्चितवास्तुः सम्यग् वास्तुबलिकृत् । मन्त्री आचार्यः । स्वयं गर्भोचितसाधनानि गर्भाधानयोग्यानि साधनानि संभृत्य तस्य गर्भन्यासस्थानस्योत्तरतो वह्निं विनिधाय । अग्निकार्यं होमकर्म समारभेत ॥ ९५ ॥

अग्निदक्षिणदिशि अग्नेर्दक्षिणभागे । व्रीह्यादिमन्मण्डले व्रीह्यादिभिर्विरचितपीठे मण्डले । ताम्रकृतं ताम्रेण कृतम् । पिधानसहितमुत्तरच्छदेन सहितम् । गव्यादिसंशोधितं गव्याष्टगन्धजलैः क्षालितम् । पात्रं गर्भपात्रम् । न्यग्बिलम् अधोमुखं न्यस्य । पीठाराधनपूर्वं पीठाराधनं पूर्वं यथा भवति तथा । कृतसंस्कारे प्राणायामादिभिः संस्कृते । समुत्तानितं सम्यगुत्तानीकृतेऽत्र । धृतहिरण्येन हिरण्मयपवित्रसहितेन । अग्रदोष्णा कराग्रेण । सागरमृद्वृतिं समुद्रमृत्तिकया वृतिं सीमानं कुर्यात् । सुधीरिति सागरमृदा वृतिकल्पनायां तस्य पात्रस्य भूमण्डलरूपेण ध्यानमुक्तम् ॥ ९६ ॥

कुड्यश्लेषमिह प्रकल्प्य वृतिमादावन्तरालस्थितं
प्रत्यक्प्राक्स्थमवागुदक्स्थमपि रेखाद्वन्द्वमापादयेत् ।
पात्रेऽस्मिन् नवखण्डमण्डितमहीसंस्थानरूपे स्फुर-
द्वर्णाम्भोजचितीति तत्तदुदितद्रव्याणि विन्यस्यतु ॥

मृन्मूलधातुमणिबीजकलोहकॢप्त्या
द्रव्यार्पणं भवति सर्वसुपर्वगर्भे ।
स्कन्देऽथ वाहमणिलोहकधातुबीज-
मृत्कन्दकक्रमतयेत्यपि वा प्रभेशे ॥ ९८ ॥

भूभृत्तीर्थतरङ्गिणीह्रदकुलीरावासवल्मीकभू-
धान्यागारगजोक्षशृङ्गजमृदो दिक्कोणमध्ये न्यसेत् ।

---

इह गर्भपात्रे आदौ वृतिम् । कुड्यश्लेषं[1] कुड्ये श्लिष्टं यथा तथा प्रक-ल्प्य । प्रत्यक्प्राक्स्थं प्राक्प्रत्यग्गतम् । अवागुदक्स्थं दक्षिणोत्तरगतमप्यन्तराल-स्थितं रेखाद्वन्द्वम् । आपादयेत् कुर्यात् । नवखण्डमण्डितमहीसंस्थानरूपे नवभिः खण्डैर्मण्डितायाः पृथिव्याः संस्थानस्वरूपे । स्फुरद्वर्णाम्भोजचिते लिपिपङ्कज-पूजया स्फुरल्लिपिपङ्कजचैतन्ययुक्तेऽस्मिन् पात्रे । तत्तदुदितद्रव्याणि तस्य तस्य देवस्योक्तानि द्रव्याणि । इति वक्ष्यमाणविधिना विन्यस्यतु ॥ ९७ ॥

सर्वसुपर्वगर्भे सर्वेषां सुपर्वणां देवानां गर्भे । मृन्मूलधातुमणिबीजकलो-हकॢप्त्या मृदः मूलानि धातवः मणयो रत्नानि बीजानि लोहानि इति कॢप्त्या द्रव्यार्पणं द्रव्याणामर्पणं भवति । अथ स्कन्दे वाहमणिलोहकधातुबीजमृत्क-न्दकक्रमतया (स्व?) वाहाः स्ववाहनादीनि मणयः लोहानि धा(तूनि? तवः) बी-जानि मृदः कन्दाः इति क्रमतया भवति । प्रभेशेऽपि इति द्रव्यार्पणम् ॥ ९८ ॥

सेनानीतरदेवतासु स्कन्देतरेषु । भूभृत्तीर्थतरङ्गिणीह्रदकुलीरावासव-ल्मीकभूधान्यागारगजोक्षशृङ्गजमृदः भूभृत् पर्वतः तीर्थं प्रसिद्धं तरङ्गिणी नदी कुलीरावासः कर्कटकगुहा वल्मीकभूः वल्मीकभूमिः धान्यागारं खलः गजोक्ष-शृङ्गे गजशृङ्गमुक्षशृङ्गं च तेभ्यो जाता मृदः । दिक्कोणमध्ये पूर्वादिदिक्षु अग्न्या-

---

1. 'श्लेषं य' ख. पाठः.

सेनानीतरदेवतास्वधिदिशं पाथोजनीलोत्पलो-
त्पन्ने कैरवलोहितोत्पलसमुत्पन्ने च मूलान्यपि ॥ ७९ ॥

न्यस्येन्मनोह्वां हरितालमञ्जनं
श्यामं च पुर्वादिदिशिवान्तिमं क्रमात् ।
ससीससौराष्ट्र्यभिधानरोचनं
सगैरिकं पारतमत्र मध्यतः ॥ ८० ॥

वज्रं मौक्तिकवैडूर्यकशङ्खस्फटिकपुष्यकं षट्सु ।
चन्द्रोपलं महानीलं तद्वन्न्यसतु चाब्जरागमपि ॥ ८१ ॥

तथा शालिनीवारकौ कङ्कुमाषौ
कुलस्थं सनिष्पावसंज्ञं तिलं च ।

---

दिकोणेषु मध्ये च न्यसेत् । अधिदिशमिति सप्तम्यर्थेऽव्ययीभावः, दिक्ष्वि-त्यर्थः । तत्पूर्वादीत्यर्थात् । पाथोजनीलोत्पलोत्पन्ने पाथोजं पद्मं नीलोत्पलं कुव-लयं ताभ्यामुत्पन्ने द्वे, कैरवलोहितोत्पलसमुत्पन्ने च कैरवं कुमुदं (ലോഹി-തോല്പലം=ചെങ്ങഴിനീർ) ताभ्याम् उत्पन्ने च द्वे इति चत्वारि मूलान्यपि न्यसेत् ॥ ७९ ॥

अत्र सेनानीतरदेवतासु । पूर्वादिदिशिवान्तिमं क्रमाद् मनोह्वां मनश्शि-लाम् । (മനശ്ശില=മനയോല) हरितालं तदेव। अञ्जनं श्यामं च ते एव। ससीससौराष्ट्र्यभिधानरोचनं सीसेन युक्ते सैराष्ट्र्यभिधानरोचने । (സീസം=ഈയം. സൌരാഷ്ട്രി=തിരുവട്ടപ്പയൻ രോചന=ഗോരോചന.) तत्रैकवद्भावः । सगैरिकं पारतं गैरिकसहितं पारतम् । गैरिकं पारतं चेत्यर्थः । (ഗൈരികം=ചെങ്കൽധാതു. പാരതം=രസം) तत्र मध्यतश्च ॥ ८० ॥

षट्सु स्कन्दरहितेषु षट्सु देवेषु । (വജ്രം=വൈരം.) मौक्तिकवै-डूर्य(क)शङ्खस्फटिकपुष्यकम् (മൌക്തികം=മുത്ത്.) वैडूर्यं तदेव । शङ्ख-स्फटिकपुष्यकाणि च तान्येव । (ചന്ദ്രോപലം=ചന്ദ്രകാന്തം) । महानीलं तदेव । अब्जरागमपि पद्मरागं च । तद्वत् पूर्वादिमध्यान्तेषु न्यसतु ॥ ८१ ॥

साजितेशार्यसुम्भाभिमातौ शङ्करनारायणशास्तृदुर्गासहिते हरौ । तथा क्रमेण । शालिनीवारकौ । (ശാലി=നെല്ല്. നീവാരം=വരിനെല്ല്.) कङ्कुमाषौ (കംകു=കങ്ങ. മാഷം=ഉഴുന്ന്.) कुलस्थं (കുലസ്ഥം=മുതിര.)

समुद्गं ससिद्धार्थकं सन्निदध्या-
द्धरौ साजितेशार्यसुम्भाभिमातौ ॥ ८२ ॥

सुवर्णरजतायसत्रपु निधाय दिक्ष्वन्यतः
सुवर्णमयमर्पयेद् गरुडकूर्मशङ्खारि च ।
शरासनगदाम्बुजं न्यसतु हैममन्तर्हरौ
सुपर्णपदसिंहकान्यपि तु तानि सुम्भद्विषि ॥ ८३ ॥

त्रप्वन्तं हरिवद् विधाय विदिशास्वार्येशनारायणे
न्यस्येच्छूलपरश्वधं दररथाङ्गं चाथ शार्ङ्गीश्वरे ।
खट्वाङ्गार्धविधूक्षतार्क्ष्यकमठाक्षस्रग्गदाब्जं धनु-
र्हैमं शास्तरि हैमतोमरशराम्भोजं च मध्ये न्यसेत् ॥८४॥

---

सनिष्पावसंज्ञम् । (നിഷ്പാവം=തുവര.) तिलं च । (തിലം=എള്ള്.) समुद्गम् । (മുദ്ഗം=ചെറുപയറ.) ससिद्धार्थकम् । (സിദ്ധാൎത്ഥം=കടുക്.) एतानि सन्निदध्यात् स्थापयेत् ॥ ८२ ॥

हरौ दिक्षु सुवर्णरजतायसत्रपु । (സുവൎണ്ണം=പൊന്ന് രജതം=വെള്ളി. അയസം=ഇരിമ്പ. ത്രപു=ചെമ്പ്രാകൊട്ടി.) एतानि निधायान्यतः कोणेषु । सुवर्णमयं सुवर्णकृतम् । गरुडकूर्मशङ्खारि च गरुडं कूर्मं शङ्खं चक्रं च । अन्तः अन्तर्भागे । हैमं हेमकृतम् । शरासनगदाम्बुजं शरासनं धनुः गदामम्बुजं पद्मं च न्यसतु । सुम्भद्विषि दुर्गायामपि । सुपर्णपदसिंहकानि गरुडस्थाने सिंहयुक्तानि तानि न्यसतु ॥ ८३ ॥

आर्येशनारायणे शास्तृशङ्करनारायणे । हरिवत् हराविव । त्रप्वन्तं सुवर्णरजतायसत्रपुपर्यन्तम् । दिक्षु विधाय कृत्वा । विदिशासु कोणेषु । शूलपरश्वधं शूलं कुठारं च । दररथाङ्गं च शङ्खं चक्रं च न्यस्येत् । अथ शार्ङ्गीश्वरे शङ्करनारायणे । हैमं हेमकृतम् । खट्वाङ्गार्धविधूक्षतार्क्ष्यकमठाक्षस्रग्गदाब्जं धनुश्च खट्वाङ्गं तदेव अर्धविधुः अर्धचन्द्रः उक्षा ऋषभः तार्क्ष्यो गरुडः कमठः कूर्मः अक्षस्रग् अक्षमाला गदा सैव अब्जं पद्मं धनुः तदेव एतानि मध्ये न्यसेत् । शास्तरि मध्ये । हैमतोमरशराम्भोजं च हैमानि तोमरशराम्भोजानि । (തോമരം=പീലിക്കണം.) शरं तदेव । अम्भोजं पद्मं विन्यसेत् ॥ ८४ ॥

बीजे तानि न्यसतु नव नीवारकङ्कन्तरोद्य-
च्छ्यामानीशे च्युतचरमराजीनि लोहेऽनुरूप्यम् ।
ताम्रं सायस्त्रपु कमठपाथोजशूलं च हैमं
खट्वाङ्गार्धेन्दुवृषभधनुरन्तः कुठारं च पञ्च ॥ ८५ ॥

बीजानि लोहानि च विघ्नराजे
महेशवन्न्यस्य ततो निदध्यात् ।
चाषस्वदन्ताम्बुरुहाङ्कुशानि
दिशासु मध्येऽत्र गजं च हैमम् ॥ ८६ ॥

शिखिशक्तिताम्रचूडस्वरुकरिणः स्वर्णजान् गुहे न्यस्येत् ।
पूर्वादिमध्यनिष्ठं मध्यादीशान्तमथ नवैतानि ॥ ८७ ॥

---

ईशे बीजात् पूर्वं सर्वं तथा न्यस्य बीजे बीजन्यासे । नीवारकङ्कन्त-रोद्यच्छ्यामानि नीवारकङ्कोरन्तरा मध्ये उद्यदुद्गच्छत् श्यामं येषां तानि तथा । (ശ്യാമം=ചാമ.) च्युतचरमराजीनि च च्युतं चरममवसानीभूतं राजि येषां बीजानां तानि च्युतचरमराजीनि । तानि नव बीजानि तथा न्यसेतु । लोहे लोहन्यासे । अनुरूप्यं रूप्यानन्तरम् । ताम्रं सायस्त्रपु अयसा युक्तं त्रपु । (അയസ്സ്=ഇരിമ്പ്.) त्रपु उक्तम् । हैमं कमठपाथोजशूलं कमठं कूर्मं पाथोजं पद्मं शूलं तदेव । इति दिक्षु न्यस्यान्तः हैमं खट्वाङ्गार्धेन्दुवृषभधनुः कुठारम् । (കഠാരം=വെണ്മഴു.) इति पञ्च न्यसतु ॥ ८५ ॥

विघ्नराजे बीजानि लोहानि च । महेशवत् शिववद् न्यस्य । हैमानि चाषस्वदन्ताम्बुरुहाङ्कुशानि (ചാഷം=എലി.) स्वदन्तं स्वस्य दन्तम् अम्बु-रुहं पद्मम् (അങ്കുശം=തോട്ടി.) एतानि दिशासु निदध्यात् । अत्र मध्ये हैमं गजं च निदध्यात् ॥ ८६ ॥

गुहे पूर्वादिमध्यनिष्ठं पूर्वादिचतुर्दिक्षु मध्ये च । स्वर्णजान् सुवर्णकृ-तान् । शिखिशक्तिताम्रचूडस्वरुकरिणः । (ശിഖി=മയിൽ. ശക്തി=വേൽ. താമ്രചൂഡം=കോഴി. സ്വരു=വജ്രം. കരി=ആന.) अथ मध्यादीशान्तं वारिजरागं पद्मरागम् । (വജ്രം=വൈരം) मौक्तिकवैडूर्यसंज्ञिते (ദ്രമൗക്തി-

वारिजरागं वज्रं मौक्तिकवैडूर्यसंज्ञिते स्फाटिकम् ।
शङ्खं नीलं पुष्यं प्रवालसंज्ञं च विन्यसेत् क्रमशः ॥ ८८ ॥

तद्बाह्ये तपनीयं रजतं ताम्रायसी त्रपु सनागम्[1] ।
पित्तलकांस्ये न्यस्येद् दिक्ष्वष्टास्वन्तरष्ट लोहानि ॥ ८९ ॥

न्यसतु रसं समनोह्वं हरितालाञ्जनकमाक्षिकश्यामम् ।
सौराष्ट्रीं राजावर्तं च तथा गैरिकं च मध्यादि ॥ ९० ॥

सिद्धार्थशालियवगोधूमांस्तिलमाषकौ प्रियङ्गुं च ।
मुद्गं नीवारकमपि तद्वदिह न्यसतु पञ्चमावरणे ॥ ९१ ॥

सागरशैलसरित्तीर्थह्रदकेदारदन्तिखलजाताः ।
मृत्स्ना न्यस्येत् परितो दिक्ष्वष्टास्वष्ट मृत्तिकाश्चान्तः ॥ ९२ ॥

---

കം=മുത്ത്) वैडूर्यं तदेव । स्फटिकं शङ्खं नीलम् । पुष्यं पुष्यरागम् । (പ്രവാളം=പവിഴം) एतानि नव क्रमशो विन्यसेत् ॥ ८७, ८८ ॥

तद्बाह्ये पूर्वाद्यष्टासु दिक्षु (തപനീയം=പൊന്ന്. രജതം=വെള്ളി) ताम्रायसी उक्ते । त्रपु उक्तम् । सनागम् । पित्तलकांस्ये । (പിത്തളം=പിത്തള. കാംസ്യം=വെള്ളോട്) अन्तरुक्तान्यष्ट लोहानि ॥ ८९ ॥

तथा मध्यादीशान्तं रसं तदेव । समनोह्वं हरितालाञ्जनकमाक्षिकश्यामं (മനോഹ്വാ=മനയോല. ഹരിതാലം=അരിതാലം. അഞ്ജനം=അഞ്ജനക്കല്ല്. മാക്ഷികം=മാക്കീരം.) श्यामं तदेव । (സൌരാഷ്ട്രീ=തി-രുവട്ടപ്പയൻ); राजावर्तं तदेव । (ഗൈരികം=ചെങ്കൽധാതു) एतानि न्यसतु ॥ ९० ॥

इह गुहे पञ्चमावरणे सिद्धार्थशालियवगोधूमान् । (ഗോധൂമം=കോ-തമ്പ്) तिलमाषकौ उक्तौ । प्रियङ्गुम् । (പ്രിയംഗു=തിന.) मुद्गं नीवारकमपि उक्ते । तद्वद् धातुवद् न्यसतु ॥ ९१ ॥

परितः पूर्वाद्यष्टासु दिक्षु । सागरशैलसरित्तीर्थह्रदकेदारदन्तिखलजाताः । (സാഗരം=സമുദ്രം. ശൈലം=പർവ്വതം. സരിൽ=നദി.) तीर्थं तदेव ।

---

1. 'गं नागम् । पि' ख. ग. घ. पाठः.

नीलारुणोत्पलपयोरुहकैरवाणां
मूलानि दिक्षु सकलं च निधाय मध्ये ।
प्रोक्ष्यास्त्रतः समवगुण्ठ्य तनुत्रतोऽत्र
तद् द्रव्यजातममृतीकृतमातनोतु ॥ ९३ ॥
गायत्र्या स्मरशासने मुररिपौ सस्वार्णमूलाणुना
शेषेषु द्रविणानि विघ्नगुहयोर्मूलेन च न्यस्यतु ।
ईशे व्योमदशार्णवक्त्रबहुरूपाजान्धुवामेशसू-
क्तोत्पन्नैश्च कलाणुभिर्द्रविणजातानि न्यसेद्वा क्रमात् ॥

---

(ഹ്രദം=കയം. കേദാരം=കണ്ടം. ദന്തി=ആന. വലം=കളം.) एतेभ्यो जाताः । मृत्स्नाः मृत्तिकाः न्यस्येत् । अन्तरुक्ता अष्ट मृत्तिकाश्च न्यस्येत् ॥ ९२ ॥

नीलारुणोत्पलपयोरुहकैरवाणाम् । (നീലോല്പലം=കരിംകുവളം. അരുണോല്പലം=ചെങ്കഴിനീർ. പയോരുഹം=താമര. കൈരവം=ആമ്പൽ.) एतेषां मूलानि दिक्षु, सकलं मूलचतुष्कमपि मध्ये च निधाय। अत्र गृहे । अस्त्रतः प्रोक्ष्य । तनुत्रतः कवचमन्त्रेणावगुण्ठ्याच्छाद्य । तद् द्रव्यजातं द्रव्यसमूहम् । अमृतीकृतं सुरभिमुद्रयामृतीकृतमातनोतु ॥ ९३ ॥

अस्य द्रव्यन्यासस्य मन्त्रमाह — गायत्र्येति । स्मरशासने शिवे । मुररिपौ विष्णौ च । गायत्र्या स्वस्वगायत्र्या द्रविणानि विन्यसतु । शेषेषु सस्वार्णमूलाणुना रत्नाक्षरसहितेन मूलेन । मूलाक्षरैर्मूलेन चेत्यर्थः । विघ्नगुहयोर्मूलेन च । चशब्द एवार्थे । ईशे शिवे । व्योमदशार्णवक्त्रबहुरूपाजान्धुवामेशसू- क्तोत्पन्नैश्च कलाणुभिर्द्रविणजातानि न्यसेद्वा । व्योमदशार्णं व्योमव्यापि दशाक्षरं वक्त्रं तत्पुरुषः । बहुरूपोऽघोरः । अजः सद्योजातः । अन्धुरन्धुस्थानस्थो वामदेवः । वामश्च देवः । ईशं ईशानः । एतेषां सूक्तोत्पन्नैः कलाणुभिः कलामन्त्रैः । तत्र व्योमव्यापिदशार्णस्य नवभिरक्षरैः मृदः, तत्पुरुषकलाभिर्मूलानि, अघोरकलाभिः धातून्, सद्यकलाभी रत्नानि, वामकलाभिर्बीजानि, पुनरपि वामकलाभिः स्वर्णादीनि, ईशकलाभिः खट्वाङ्गादीनीति विभागः । तथा पाशुपते —

“व्योमव्यापिदशार्णैस्तु मृत्पिण्डानि निधापयेत् ।

तद् द्रव्यजातमजिते द्विषडक्षरेण
गव्येन मूलमनुनोक्षतु चेतरेषु ।
अभ्यर्च्य मूलमनुना सकलेऽधिवास्य
पक्वावसानमनले तनुयात् पुरेव ॥ ९५ ॥

अर्कार्णार्णांश्चतुर्थ्या सह दिगधिपनारायणान् बीजयुक्तान्
सर्वान् धातूंश्च लोहां मनुविदथ हुनेत् पर्वतान् वै समुद्रान् ।
सर्वाण्युद्दिश्य तीर्थान्यपि तदनु नदीश्च ह्रदांश्च द्विठान्तान्
पातालान् नागकान् दिग्गजवृषभयुतान् व्याहृतीस्तारकं च ॥

---

भूयः पुरुषकलाभिर्घोरकलाभिस्तथैव सद्याभिः ।
न्यस्त्वा वामकलाभिर्वामकलाभिस्तथेशसंज्ञाभिः ॥"

इति ॥ ९४ ॥

ततस्तत्संस्कारादिकमाह — तद्द्रव्यजातमिति । अजिते विष्णौ । द्विषडक्षरेण द्वादशाक्षरेण, इतरेषु मूलमनुना च तद् द्रव्यजातं गव्येनोक्षतु । सकलेऽपि मूलमनुनाभ्यर्च्याधिवास्य । अनलेऽग्नौ । पुरोक्तवद् इष्टकाहोमवत् पक्वावसानं तनुयात् ॥ ९५ ॥

होममन्त्रानाह — अर्कार्णार्णानिति । मन्त्रप्रयोगकुशलः अर्कार्णार्णान् द्वादशाक्षरमन्त्रस्य वर्णानुद्दिश्योक्त्वा । चतुर्थ्या सह चतुर्थीविभक्त्या सह । द्विठान्तान् स्वाहान्तान् । दिगधिपनारायणान् दिगधिपान् नारायणं च, इन्द्राय स्वाहा इत्यादीन् नारायणाय स्वाहा इति च । बीजयुक्तान् सर्वबीजेभ्यः स्वाहा इति । सर्वान् धातून् सर्वधातुभ्यः स्वाहा इति । लोहानिति । चकारेण सर्वं क्षिप्यते सर्वत्र, सर्वलोहेभ्यः स्वाहा इति । अत्र लोहपदे लोकपदं केषुचिदागमेषु दृश्यते । तत्र सर्वलोकेभ्यः स्वाहा इति मन्त्रः । पर्वतान् सर्वपर्वतेभ्यः स्वाहा इति । वै समुद्रान् सर्वसमुद्रेभ्यः स्वाहा इति । सर्वाणि तीर्थान्युद्दिश्य इति सर्वतीर्थेभ्यः स्वाहा इति । तदनु नदीश्च सर्वनदीभ्यः स्वाहा । ह्रदान् सर्वह्रदेभ्यः स्वाहा । पातालान् सर्वपातालेभ्यः स्वाहा । नागकान् सर्वनागेभ्यः स्वाहा । दिग्गजवृषभयुतान् सर्वदिग्गजेभ्यः स्वाहा, सर्ववृषभेभ्यः स्वाहा इति । व्याहृतीस्तारकं चोद्दिश्य हुनेत् ॥ ९६ ॥

---

१. 'का' ख. पाठः. २. 'त्र' क. पाठः. ३. 'नि', ४. 'दि ना' ख. पाठः

एतैर्मन्त्रैः प्राग् घृतं शार्ङ्गपाणौ हुत्वा गायत्र्या चतुर्द्रव्यहोमम्

कृत्वा संपातैधिते गर्भपात्रे प्रोद्वास्याग्निं मूलमावर्तयेच्च ॥

दुर्गार्ये स्वेष्टकावद् द्रविणहवननिष्ठं सशार्ङ्गीशविघ्ने
कृत्वेन्द्राद्यैश्च नारायणपदविलसत्स्वस्वमूलैर्जुहोतु ।
मूलेनैकादशाज्याहुतिमिह सुविधायाथ लोकेशपूर्वै-
रुक्तैर्मन्त्रैश्च नारायणपदबहुसच्छङ्करैः शङ्करे तु ॥ ९८ ॥

स्वेष्टकोदितवर्त्मनोडुहुतान्तकृज्जुहुयाद् घृतं
हेतिरत्नकलोहधातुकबीजकान्यपि मृत्तिकाः ।
मूलकान्यपि चोद्दिशन्निजनामतोऽथ समिद्घृता-
द्याहुतिं च करोतु तारकसूदने निजमूलतः ॥ ९९ ॥

---

**शार्ङ्गपाणौ** विष्णौ । एतैर्मन्त्रैः प्राक् पूर्वं घृतं हुत्वा । गायत्र्या 'नाराय-णाय विद्महे' इत्याद्यया । चतुर्द्रव्यहोमं समिदाज्यहविराज्यानां होमं कृत्वा । स-म्पातैधिते सम्पातस्पृष्टे । गर्भपात्रेऽग्निं प्रोद्वास्य मूलमावर्तयेच्च जपेत् ॥ ९७ ॥

**सशार्ङ्गीशविघ्ने** दुर्गार्ये शिवनारायणगणपतिदुर्गाशास्तृषु । द्रविणहवन-निष्ठं चतुर्द्रव्यहोमान्तम् । स्वेष्टकावत् स्वस्वेष्टकाहोमवत् कृत्वा । इन्द्राद्यैः 'दिग-धिपे'त्याद्युक्तैः । नारायणपदविलसत्स्वस्वमूलैः नारायणमन्त्रस्थाने स्वस्वमूलेन च जुहोतु । शङ्करे तु इह द्रव्यहोमान्ते । मूलेनैकादशाज्याहुतिं सुविधाय । अथ तदनन्तरं लोकेशपूर्वैरुक्तैर्मन्त्रैः नारायणपदबहुसच्छङ्करैः नारायणपदे बहुव-चनेन सता शङ्करपदेन च 'ओं शंकरेभ्यः स्वाहा' इति मन्त्रेण जुहोतु ॥९८॥

**तारकसूदने** स्कन्दे । स्वेष्टकोदितवर्त्मना स्वेष्टकाहोमोक्तमार्गेण । उडु-हुतान्तकृत् नामद्विषट्केनेत्यादिदिङ्नक्षत्रैरित्यन्तैर्होमकृद् भूत्वा । हेतिरत्नकलो-हधातुकबीजकान्यपि मृत्तिकाः मूलकान्यपि च निजनामतः । उद्दिशन् उच्चरन् 'ओं हेतिभ्यः स्वाहा' 'रत्नेभ्यः स्वाहा' 'लोहेभ्यः स्वाहा' 'धातुभ्यः स्वाहा' 'बीजेभ्यः स्वाहा' 'मृत्तिकाभ्यः स्वाहा' 'मूलेभ्यः स्वाहा' इति मन्त्रानुच्चरन् घृतं जुहुयात् । अथ निजमूलतः समिद्घृताद्याहुतिं चतुर्द्रव्यहोमं च करोतु ॥९९ ॥

शिखिशक्तिपविस्थलस्थिताश्व-
क्षुरिकासीनि गुहोदितानि वार्ये ।
न्यसनेऽत्र निजेष्टकोड्डहोमा-
वसितौ हेतिमुखाहुतिस्तथा स्यात् ॥ १०० ॥

हृत्वेष्टकागर्तगतं मृदाद्यं संशोध्य गव्यादिसमाप्लुतेऽत्र ।
सविष्टरेऽभ्यर्चितयोगपीठे शक्तिं समावाह्य निजां यजेत ॥

प्राज्ञाज्ञातः पिधानोत्तरमखिलजगद्गर्भि तद् गर्भपात्रं
तिष्ठन् कृत्वाञ्जलौ तत्तदणुशतजपं मन्त्रवित् संविधाय ।
गर्भीयन्तीं जगन्मण्डलमखिलमनुध्याय शक्तिं स्वयं त-
द्गर्भाकारेऽत्र गर्ते न्यसतु निशि शनैः स्वोक्तमन्त्रप्रजापी ॥

---

आर्ये न्यसने द्रव्यन्यासे । शिखिशक्तिपविस्थलस्थिताश्वक्षुरिकासीनि मयूरशक्तिवज्रस्थानेषु अश्वक्षुरिकाखड्गानि । गुहोदितानि स्कन्दोक्तानि वा स्युः । अत्रैतत्पक्षे । निजेष्टकोड्डहोमावसितौ स्वस्येष्टकाहोमवन्नक्षत्रहोमान्ते । हेतिमुखाहुतिः हेत्यादीनामाहुतिः । तथा तद्वदेव स्यात् ॥ १०० ॥

एवं होमानन्तरं गर्भन्यासं कुर्यादित्याह — हृत्वेति । इष्टकागर्तगतम् इष्टकानां मध्यस्थगर्तगतं मृद्धान्यादिकं हृत्वा त्यक्त्वा । संशोध्य मार्जनादिकं कृत्वा । गव्यादिसमाप्लुते गव्याष्टगन्धजलादिभिश्चाप्लुते । सविष्टरे विष्टरं निधायात्राभ्यर्चितयोगपीठे निजां शक्तिं समावाह्य यजेत ॥ १०१ ॥

प्राज्ञाज्ञातः प्राज्ञैः विद्वद्भिराज्ञातः, विदुषां ब्राह्मणानां दानं कृत्वा तैः कृतं स्वस्तिकवचनं परिगृह्येत्यर्थः । पिधानोत्तरं पिधानेनोपर्याच्छादितम् । अखिलजगद्गर्भि अखिलजगत् तदन्तर्गतं स्मरन् । तत् प्रस्तुतं गर्भपात्रम् अञ्जलौ कृत्वा तिष्ठन् मन्त्रवित् । तत्तदणुशतजपं तत्तन्मूलमन्त्रमष्टोत्तरशतजपं संविधाय । शक्तिं स्वयं सर्वकारणभूतां स्वयं शक्तिम् । अखिलं जगन्मण्डलं गर्भीयन्तीमात्मनो गर्भत्वेन काङ्क्षमाणाम् अनुध्याय । तद्गर्भाकारे तस्या गर्भाधानस्थाने गर्तेऽत्र । शनैः स्वोक्तमन्त्रप्रजापी स्वस्वोक्तमन्त्रं जपन् निशि निशायामेव न्यसतु ॥ १०२ ॥

---

१. 'दा' इति मूलकोशपाठः.

सर्वभूतधरे ! कान्ते ! इति सर्वत्र तन्मनुः ।
सर्वभूतालये ! भद्रे ! इति स्कन्दप्रभेशयोः ॥ १०३ ॥
सर्वभूतधरे ! कान्ते ! पर्वतस्तनमण्डिते ! ।
समुद्रपरिधाने ! त्वं देवि ! गर्भं समाश्रय ॥ १०४ ॥
सर्वभूतालये ! भद्रे ! सागराम्बरभूषिते ! ।
उत्तुङ्गाद्रिस्तनभरे ! देवि ! गर्भं समाश्रय ॥१०५॥ इति ॥
प्रासादपूरुषतया परिणामिनीह
मूलेन देवमभिवाह्य समर्च्य गर्भे ।
किञ्चिन्निवेद्य परितोष्य सुरक्ष्य तक्ष्णा
प्रासादमारचयतां सहमन्त्रबिम्बम् ॥ १०६ ॥
आलिख्य मण्डलमिहाहितसन्निधानं
मूलेन देवमभिपूज्य चरुं निवेद्य ।

---

स्वोक्तमन्त्रप्रजापीत्यत्र को मन्त्र इत्याकाङ्क्षायामाह — सर्वभूतेत्यादिना । सर्वत्र सर्वदेवेषु सर्वभूतधरे कान्ते इतीति इत्यादीत्यर्थः । तन्मनुः गर्भन्यासमन्त्रः । स्कन्दप्रभेशयोः सर्वभूतालये भद्रे इति । इतीति पूर्ववद् व्याख्येयम् ॥ १०३ ॥

तौ मन्त्रौ पठति — **सर्वभूतधर** इत्यादिना ॥ १०४, १०५ ॥

**प्रासादपूरुषतया** प्रासादपूरुषत्वेन । परिणामिनि परिणाममाधास्यमाने । इह अस्मिन् गर्भे । मूलेन देवमभिवाह्य समर्च्य किञ्चिन्निवेद्य परितोष्य सुरक्ष्य । तक्ष्णा शिल्पिना । सहमन्त्रबिम्बं मन्त्रमूर्त्या प्रतिमया सहितं प्रासादम् । आरचयतां कारयेत् । सहमन्त्रबिम्बमित्यनेन बहुबेरे[2] प्रासादेन सह मन्त्रबिम्बरचना सूचिता ॥ १०६ ॥

एवं प्रासादकरणात् पूर्वगतं क्रियाकलापमुक्त्वा बिम्बरचनात् पूर्वगतं क्रियाकलापमाह — **आलिख्येति** । कस्मिंश्चित् प्रदेशे मण्डलमालिख्य इह आहितसन्निधानं कृतावाहनं देवं मूलेनाभिपूज्य चरुं पायसं हविर्निवेद्य । तद्वा-

---

१. 'वाह्य च' इति मूलकोशपाठः. २. 'बरप्रा' ख. पाठः.

तद्वामतोऽस्त्रमपि तत्सविधे निधाय[1]
शस्त्राणि चास्त्रमनुना प्रयजेत तक्ष्णाम् ॥ १०७ ॥
निवेद्य शिष्टेन पयोन्धसाग्नौ
हुत्वाशयित्वा मुखजान् प्रसाद्य ।
दध्यन्नमश्नातु गुरुः सकर्ता
तत्रार्चनीयः स्थपतिश्च तद्वत् ॥ १०८ ॥
रक्षामङ्गलपूर्वकं शुभनिमित्तर्क्षे शिलार्थं व्रजे-
न्मन्त्री शस्त्रिभिरन्वितः स्थपतिभिः कर्त्रापि चैन्द्र्यादिषु ।
आसाद्याथ शिलाकरं सुमहितात्माणुं त्रिनेत्रादिकं
जप्त्वान्विष्य शिलां निजेष्टमनुबिम्बादिक्षमां कल्पयेत् ॥

---

मतः तस्य मण्डलस्य वामे अस्त्रमपि स्वास्त्रमन्त्रेणापि तथा सम्पूज्य । तत्सविधे पूजितास्त्रस्य समीपे । तक्ष्णां शस्त्राणि आयुधानि निधायास्त्रमनुना च तथा प्रयजेत ॥ १०७ ॥

निवेद्य निवेद्यशिष्टेन पयोन्धसा पायसहविषाग्नौ हुत्वा । मुखजान् ब्राह्मणान् । आशयित्वा भोजयित्वा । तान् दानेन च प्रसाद्य देवस्य प्रसन्नपूजां कृत्वा । सकर्ता कर्त्रा सहितो गुरुः । दध्यन्नं दधिविशिष्टमन्नम् अश्नातु । तत्र कर्मणि स्थपतिः तक्षा च तद्वदर्चनीयः तस्याप्यन्नदानादिना प्रसादं कुर्यादित्यर्थः ॥ १०८ ॥

अथ मन्त्री । शस्त्रिभिः शस्त्रपाणिभिः । स्थपतिभिः शिल्पिभिः । कर्त्राप्यन्वितो युक्तः । रक्षामङ्गलपूर्वकं रक्षां कृत्वा कनिक्रदादिमङ्गलानि जपन् । शुभनिमित्तर्क्षे शुभे निमित्ते शकुनादिके च शुभे मुहूर्ते च । शिलार्थं शिलां ग्रहीतुम् ऐन्द्र्यादिषु पूर्वादिषु दिक्षु । व्रजेद् गच्छेत् । अथ शिलाकरं शिलायाः क्षेत्रमासाद्य । सुमहितात्मा आत्माराधनादिकृत् । शिवे त्रिनेत्रादिकम् अन्येष्वपि स्वस्वयोग्यमणुं जप्त्वा शिलामन्विष्य निजेष्टमनुबिम्बादिक्षमां स्वस्येप्सितानां मन्त्रबिम्बपीठादीनां शक्तां शिलां कल्पयेत् ॥ १०९ ॥

---

१. 'वि' इति मूलकोशपाठः.

त्रिनेत्राय च रुद्राय ध्वजाधिपतये नमः ।
शिलां दर्शय देवेश ! प्रसन्नो मे वृषध्वज ! ॥११०॥ इति ॥

सिद्धाद्र्याकरसंभवा वसुमतीमग्ना स्ववर्णोचिता
स्निग्धा शस्त्रसहा गभीरनिनदा दिश्याहिताग्रा शिला ।
ग्राह्या बिम्बविधौ स्फुलिङ्गबहुलं तस्याः शिरोऽधो मुखं
यत्काष्ठाभिमुखी समुत्थितवती स्थाप्या च तद्दिङ्मुखी ॥

दुष्टोद्देशसमुद्भवान्यपरिशिष्टा दुर्ग्रहाद्याश्रिता
वाताग्न्यर्ककराहतातिविपुला बाला च वृद्धा सती ।
दूरेखाक्षरगर्भमण्डलयुता रूक्षस्वरा जर्जरा
दुःस्पर्शापदिशं निवेशितशिरोदेशा च वर्ज्या शिला ॥

---

त्रिनेत्रमन्त्रं पठति — त्रिनेत्रायेत्यादिना ॥ ११० ॥

शिलालक्षणमाह — सिद्धेति । बिम्बविधौ शिला ग्राह्या । सिद्धाद्र्याकर-संभवा प्रसिद्धपर्वतस्थक्षेत्रे संभवो यस्याः सा । वसुमतीमग्ना भूम्यां तिरोहिता । स्ववर्णोचिता ब्राह्मणादिस्वस्ववर्णस्योचिता शोभनैरकाराद्यक्षरैरुपलक्षिता च । स्निग्धा निविडा न तु कर्कशा । शस्त्रसहा शस्त्रप्रहारक्षमा । गभीरनिनदा गाम्भीर्यवन्नादयुक्ता । दिश्याहिताग्रा दिग्गताग्रभागा च । तस्याः शिलायाः स्फुलिङ्गबहुलं स्फुलिङ्गबाहुल्यं यस्मिन् भागे तच्छिरोऽवगन्तव्यम् । अधो मुखम् अधोभागं मुखमवगन्तव्यम् । समुत्थितवती यत्काष्ठाभिमुखी तस्यामुत्थितायां यस्यां दिशि मुखं भवति तद्दिङ्मुखी स्थाप्या च ॥ १११ ॥

वर्ज्यां शिलामाह — दुष्टोद्देशेति । दुष्टोद्देशसमुद्भवा दुर्देशजाता । अन्यपरिशिष्टा अन्यत्र गृहीताया अवशेषिता । दुर्ग्रहाद्याश्रिता वेतालादिग्रहैराश्रिता । वाताग्न्यर्ककराहता वायुनाग्निनादित्यकरैर्वा तप्ता । अतिविपुला उद्धर्तुमश(क्ता ? क्या) । बाला दुर्बला । वृद्धा सती च जीर्णावयवा च । दूरेखाक्षरगर्भमण्डलयुता शास्त्रेषु निन्दिताभी रेखाभिरक्षरैश्च गर्भैरन्तश्छिद्रैस्तथा निन्दितैर्मण्डलैश्च युता । रूक्षस्वरा परुषस्वरा । जर्जरा शस्त्रे किञ्चिन्मात्रस्पर्शे शीर्णा । दुस्पर्शा परुषा । अपदिशं निवेशितशिरोदेशा च दिग्भ्योऽन्यत्र निवेशितशिरोभागा च शिला वर्ज्या स्यात् ॥ ११२ ॥

गुर्वी धीररवा स्फुलिङ्गबहुला न्यग्रोधबोधिच्छद-
प्रख्या बिम्बविधौ विशालबहुला ग्राह्या शिला पौरुषी।
रम्भापत्रनिभा न चातिबहला स्निग्धस्वरा शीतला
स्त्रैणी पीठविधौ द्विलक्ष्मभिदुरा क्लैबी पदाब्जार्पणे ॥

लब्धायां शुभलक्ष्मलक्षितशिलायां शोधयित्वाञ्जसा
संपाद्य ध्वजपट्टिकादिपरिवीतं मण्डपं मूलतः।
मध्ये दिक्षु दिगीश्वरानपि यजेत् सर्वेष्वथो बीजमु-
ख्यासिभ्यामपि मृत्युजिन्मनुवरेणेशे स्वमूलान्ततः॥

तत्पश्चिमेऽस्त्रमनुनाष्टशताज्यहोमं
कृत्वाप्य सर्पिरधिवास्य च शस्त्रजातम्।

---

तत्र बिम्बविधौ पौरुषी शिला ग्राह्या। सा तु गुर्वी गुरुत्वयुक्ता। धीररवा गम्भीरनादा। स्फुलिङ्गबहुला बहुस्फुलिङ्गयुक्ता। न्यग्रोधबोधिच्छदप्रख्या वटपत्रवद् वा अश्वत्थपत्रवद् वाकारयुक्ता। विशालबहुलातिविस्तारा च। पीठविधौ स्त्रैणी स्त्रीशिला ग्राह्या। सा तु रम्भापत्रनिभा कदलीपत्राकारा। न चातिबहला अतिघनरहिता। स्निग्धस्वरा माधुर्यस्वरयुक्ता। शीतला शैत्ययुक्ता च। पदाब्जार्पणे पीठस्याधोगतनपुंसकशिलार्थम्। क्लैबी नपुंसकलक्षणयुता शिला ग्राह्या। सा तु द्विलक्ष्मभिदुरा पुंसः स्त्रियाश्च लक्षणभेदिता च॥ ११३॥

शिलापरिग्रहमाह — **लब्धायामिति**। शुभलक्ष्मलक्षितशिलायां शुभैर्लक्षणैर्युक्तायां शिलायां लब्धायां सत्यां दर्भमृदादिभिरञ्जसा शोधयित्वा। ध्वजपट्टिकादिपरिवीतं, ध्वजैस्तत्पताकाभिश्च परिवृतं मण्डपं सम्पाद्य सर्वेषु देवेषु मध्ये मूलतो दिक्षु दिगीश्वरानिन्द्रादीनपि यजेत्। अथो ईशे स्वमूलान्ततः स्वमूलयजनानन्तरम्। बीजमुख्यासिभ्यां द्वादशपटले वक्ष्यमाणेन बीजमुख्यमन्त्रेण क्षुरिकया च। मृत्युजिन्मनुवरेण मृत्युञ्जयाभिधानेनापि यजेत्॥ ११४॥

**अथ सर्वेषु तत्पश्चिमे अस्त्रमनुनाष्टशताज्यहोमं कृत्वा संपातसर्पिराप्य संस्पृश्य। शस्त्रजातं शस्त्रसमूहम् अधिवास्य। तद्देवताव्युदसनाय तत्र-**

तद्देवताभ्युदसनाय सभूतकूर-
मों देवताभ्य इति दिक्षु बलिं किरेच्च ॥ ११५ ॥
देवाग्रतो जपतु निश्यधिशय्य दर्भ-
शय्यां नमःसकललोकमनुं त्रिधाम्नि ।
शम्भौ नमःशमितिमन्त्रयुजार्थयित्वा
स्वप्नार्थमों हिलिहिलीतिमनुं जपेच्च ॥ ११६ ॥
नमः सकललोकाय विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ११७ ॥
नमः शम्भो! त्रिनेत्राय रुद्राय वरदाय च ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ११८ ॥
आचक्ष्व देव! देवेश! प्रपन्नोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्याणि हृदयस्थानि यानि वै ॥ ११९ ॥
ओं हिलिहिलि शूलपाणये स्वाहा इति ।
दुःस्वप्नेऽस्त्रशताज्यहोमकृदथ प्रातः समभ्यर्च्य ता-
मुद्बुध्य स्वमनुं जपन् वदनपाद्यङ्गकेष्वङ्कयेत् ।
तक्ष्णा तां सहपीठपाददृषदं प्रोद्धार्य कृत्वा रथे
नीत्वात्रोत्तरकलसशिल्पिनिलयं बिम्बादिकं कारयेत् ॥

---

त्यानां देवतानामपासनार्थम् । सभूतकूरं भूतकूरैः सहितं बलिं दिक्षु ओं देवताभ्य इत्यादिना पूर्वोक्तेन मन्त्रेण । किरेत् विक्षिपेत् ॥ ११५ ॥

पुनर्निशि देवाग्रतः । दर्भशय्यां दर्भमयीं शय्याम् । अधिशय्याश्रित्य । त्रिधाम्नि विष्णौ । नमस्सकललोकमनुं नमः सकललोक इत्यादिमनुं मन्त्रं जपतु । शम्भौ शिवे । नमश्शमितिमन्त्रयुजा नमः शम्भो इत्यादिमन्त्रद्वयेन अर्थयित्वा प्रार्थ्य । स्वप्नार्थं स्वप्नदर्शनार्थम् । ओं हिलि हिलिइत्यादिमनुं जपेच्च । अन्येषु स्वस्वमूलमन्त्रं जपेत्, ततः स्वप्नं पश्येत् ॥ ११६ — ११९ ॥

पुनः प्रातर्यदि दुःस्वप्ने दृष्टे । अस्त्रशताज्यहोमकृद् अस्त्रमन्त्रेणाष्टशतमाज्यं हुत्वा । मूलमन्त्रेण समभ्यर्च्य । तां शिलाम् । वदनपाद्यङ्गकेषु वदनपादादिसर्वाङ्गेषु । उद्बुध्य स्वाग्न इति मनुं जपन् अङ्कयेत् चिह्नं कुर्यात् । पुनस्तक्ष्णा

---

१. 'ष्ट', २. 'ल्प' क. पाठः.

**इति तन्त्रसमुच्चयेऽर्चकोर्वी-**
**ग्रहवास्तिवष्टिनिधीष्टकाक्रियाढ्यः ।**
**सहगर्भशिलाहृतिप्रकारः**
**प्रथमोऽयं पटलः प्रगुम्भितोऽभूत् ॥ १२१ ॥**

इति तन्त्रसमुच्चये

**प्रथमः पटलः ।**

---

सहपीठपादहृषदं पीठशिलापादशिलाभ्यां सहितां तां शिलां प्रोद्धार्य प्रकर्षेणो-द्धरणं कारयित्वा । रथे रथस्थानीये शकटे वा । कृत्वा स्थापयित्वा । अत्र देवा-लयसमीपे । उत्तरकॢप्तशिलिपिनिलयं देवालयस्योत्तरभागे कल्पितं शिल्पिनो गृहं नीत्वा । बिम्बादिकं बिम्बपीठादिकं सर्वं कारयेत् ॥ १२० ॥

अथ ग्रन्थकृत् प्रथमे पटले प्रकाशीकृतानर्थान् स्मारयति — इतीति । एवं तन्त्रसमुच्चये तन्त्रसमुच्चयाख्ये ग्रन्थे । अयं प्रथमः पटलः परिच्छेदविशेषः । प्रगुम्भितः विरचितोऽभूत् । कथंभूतः, अर्चकोर्वीग्रहवास्तिवष्टिनिधीष्टकाक्रि-याढ्यः अर्चक आचार्यः उर्वी भूमिः तयोर्ग्र(हणं ? हः) परिग्रहणं तेन वास्तिव-ष्टिर्वास्तुयागः तेन च निधिः निधिकलशस्थापनं तेन च इष्टकाक्रिया इष्टका-निधानं तेन चाढ्यः परिपूर्णः । सहगर्भशिलाहृतिप्रकारः गर्भस्य गर्भाधानस्य शिलाहृतेः शिलाया आहरणस्य च यौ प्रकारौ ताभ्यां च सहित एष पटलः ॥ १२१ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

**प्रथमः पटलः ।**

---

अथ द्वितीयः पटलः ।

पादोनत्रिकरादिपञ्चदशहस्ताशाङ्गुलान्तोत्तरे-
ष्वष्टाष्टाङ्गुलवृद्धितोऽन्तरभवद्योनिप्रभेदेष्वथ ।
प्रत्यक्प्राग्वदनक्रमेण विहितेष्वल्पेषु वान्येषु वा
प्रासादेषु विशिष्टजातिषु निजेष्टं कारयेत् कारुभिः ॥

---

'प्रासादमारचयतां सहमन्त्रबिम्बम्' इति पूर्वपटलेन प्रस्तुतानां प्रासादादीनां लक्षणं वदन् प्रथमं सामान्येन प्रासादानुद्दिशति — पादोनत्रिकरेति। अथाल्पेष्वन्येषु वा प्रासादेषु निजेष्टं कारुभिः कारयेदिति सम्बन्धः। तत्राल्पप्रासादान् विशिनष्टि पादोनेत्यादिविशेषणैः। अथ गर्भाधानान्ते कर्मणि कृते। पादोनत्रिकरादिपञ्चदशहस्ताशाङ्गुलान्तोत्तरेषु पादोनत्रिकरादीनि पञ्चदशहस्ताशाङ्गुलान्तान्युत्तराणि येषां प्रासादानां ते तथोक्ताः। आशाशब्देन दशसङ्ख्या लक्ष्यते। अष्टाष्टाङ्गुलवृद्धितः पादोनत्रिकरादष्टाष्टाङ्गुलवर्धनेन। अन्तरभवद्योनिप्रभेदेषु अन्तरे मध्ये भवन्तो योनिप्रभेदाश्च येषां ते तथोक्ताः[1]। प्रत्यक्प्राग्वदनक्रमेण विहितेषु क्रमात् पश्चिममुखत्वेन प्राङ्मुखत्वेन च कल्पितेषु। पादोनत्रिकरः प्रासादः प्रत्यग्वदनो ध्वजयोनिश्च, सद्व्यङ्गुलस्त्रिकरः प्राग्वदनो वृषयोनिश्च, सदशाङ्गुलस्त्रिकरः प्रत्यग्वदनो ध्वजयोनिश्च, पादोनचतुष्करः प्राग्वदनो वृषयोनिश्चेत्यादिक्रमेण सदशाङ्गुलः पञ्चदशहस्तः प्रासादः प्रत्यग्वदनो ध्वजयोनिरित्यन्तं[2] विहितेष्वित्यर्थः। अन्येषु विशिष्टजातिषु वा। जातिच्छन्दविकल्पाभाससंज्ञेष्वित्यर्थः। यथा प्रयोगमञ्जर्याम् —

"आरभ्य त्रिकराच्च पञ्चदशकाद्धस्तादधस्तात् क्रमात्
प्रत्येकं प्रवदामि लक्षणमहं संक्षेपतो वेश्मनाम्।

इति। भास्करीये च —

"त्रिचतुःपञ्चहस्तं तु षट्सप्ताष्टनवा दश।
एकादश द्वादश च त्रयोदश चतुर्दश।
पञ्चदशान्तविस्तारमेतेन विधिना विदुः॥"

इति॥ १॥

---

१. 'थोक्तेष्व' क. पाठः, २. 'ध्वरीत्य' ख. पाठः.

ईशादिप्रेतेशपर्यन्तदिक्स्थाः
प्रासादा ग्रामादिकेषु ध्वजोत्थाः ।
गोयोन्युत्थाः शेषदिक्संस्थिताः स्यु-
स्तत्स्थाप्यार्चा चेष्यते तत्सयोनिः ॥ २ ॥

इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते
शेषो योनिरिह व्ययो मुनियुजाथायोऽष्टनिघ्नेऽरुणैः ।

---

उक्तानां प्रासादानां प्रत्यक्प्राग्वदनक्रमेण कल्पनीयत्वे विषयविभाग-माह — ईशादीति । ग्रामादिकेषु ग्रामपुरनगरादिषु । ईशादिप्रेतेशपर्यन्तदि-क्स्थाः ईशकोणमारभ्य यमपर्यन्तदिक्षु स्थिताः प्रासादाः । ध्वजोत्थाः ध्वजयो-निसंभूताः । शेषदिक्संस्थिताः निर्ऋत्यादिसोमान्तदिक्स्थिताः । गोयोन्युत्थाः वृषयोनिसंभूताः स्युः । तत्स्थाप्या तत्र तत्र स्थाप्या । अर्चा प्रतिमा । तत्स-योनिः तत्समानयोनिरिष्यते । प्रासादो ध्वजयोनिश्चेत् प्रतिमापि ध्वजयोनिः, वृषयोनिश्चेद् वृषयोनिरित्यर्थः । तथा पाशुपते —

"ईशपूर्वाग्नियाम्यस्थं पश्चिमाभिमुखं शुभम् ।
उत्तरानिलवारीशराक्षसस्थं पुरोमुखम् ॥"

इति । तथाच मञ्जर्यां —

"लिङ्गध्वजस्थमृषभाश्रितमेव शस्तं
तत्रापि मुख्यमनुरूपतया गृहस्य ।"

इति ॥ २ ॥

कीदृशी योनिरित्याकाङ्क्षायां योन्यादिकमाह—इष्टातानेति । इष्टातानवि-तानमाननिचये इष्टस्य प्रासादादेरातानवितानयोर्दैर्घ्यविस्तारयोर्माननिचये प्रमा-णसमूहे । त्रिघ्ने त्रिभिर्गुणिते । अष्टभिर्भाजिते हृते सति । यः शेषः स योनिरित्युच्य-ते । इहेत्यनेन इष्टातानवितानमाननिचये त्रिघ्ने इत्यनुवादः क्रियते । मुनियुजा चतुर्दशभिर्भाजिते सति शेषो व्यय इत्युच्यते । अथेत्यारम्भभेदे । इष्टातानवि-ताननमाननिचये अष्टनिघ्नेऽष्टभिर्गुणिते । अरुणैर्द्वादशभिर्भाजिते शेष आय इत्यु-

---

१. 'दृ' ख. पाठः

ऋक्षैर्ऋक्षमवाप्तिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता
वारो भूमिधरैर्निधिप्रगुणिते धर्माहृते वा व्ययः ॥ ३ ॥
ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः क्रमेण स्युः ।
प्रागादियोनयोऽष्टौ तेष्वयुजः सम्पदे युजो विपदे ॥ ४ ॥

---

च्यते । इहेति अत्राप्याकृष्यते । इहाष्टनिघ्ने ऋक्षैः सप्तविंशत्या भाजिते शेष ऋक्षं नक्षत्रम् । अत्र त्विति तुशब्दो विशेषद्योतकः । अत्र ऋक्षैर्भाजिते । अवाप्तिः आवृत्तिः फलमिति यावत् । तद् वयो ज्ञेयम् । इहाष्टनिघ्ने त्रिंशता भाजिते शेषस्तिथिरित्युच्यते । इहैव भूमिधरैः सप्तभिर्भाजिते शेषो वारः । व्ययस्य पक्षान्तरमाह — निधीति । इष्टातानवितानमाननिचये निधिप्रगुणिते नवभिर्गुणिते धर्माहृते दशभिर्हृते शेषो वा व्ययः । तथाहुः—

"विस्तारायामराशौ वसुगुणित इनैर्भाजिते शेष आयो
रामघ्ने मन्ववाप्ते व्यय इह वसुभिर्भक्तशेषस्तु योनिः ।
अष्टाभिर्वर्धितेऽस्मिंस्त्रिनवहृतफलं तद्वयः शेष ऋक्षं
पर्यन्ते त्रिंशदाप्ते तिथिर्ऋषिभजिते वार आदित्यपूर्वः ॥"

इति । मयमते च —

"व्यासायामसमूहे वसुनिधिगुणिते दिनेशधर्महृते ।
आयव्ययमपि शिष्टं रामघ्नेऽष्टाहृते योनिः ॥"

इति ॥ ३ ॥

अष्टानां योनीनां नामानि कथयति — ध्वजेति । प्रागादिक्रमेण ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः ध्वजधूमेत्यादिसंज्ञाः । तेषु ध्वजादिषु अयुजः दिग्भवाः सम्पदेऽभ्युदयाय, युजः कोणभवा नाशाय । तथा पाशुपते —

"तत्रैकाद्यष्टपर्यन्ता ध्वजधूमादयः क्रमात् ।
ध्वजो धूमश्च सिंहश्च शुनको वृषभस्तथा ॥
खरश्चैव गजश्चैव वायसो वास्तुयोनयः ।
आदिप्रभृतिचत्वार एकैकान्तरिताः शुभाः ॥
द्वितीयाद्यास्तथैवान्ये चत्वारस्त्वशुभाः स्मृताः ।"

इति ॥ ४ ॥

आयाधिक्यं व्ययतः सम्पाद्यं सर्वथान्यथापत्तिः ।
नक्षत्रादिशुभत्वं ज्योतिःशास्त्रादिभिः सुविज्ञेयम् ॥ ५ ॥
बालत्वं कौमारं यौवनमथ वार्धकं च निधनं च ।
पञ्च वयांस्येष्वन्त्यं नेष्टं शिष्टानि वास्तुनीष्टानि ॥ ६ ॥
धाम्नो व्यासे शक्रीद्वन्द्वभक्ते
मित्रेन्द्रेध्मांशैः समस्तांशतश्च ।
विस्तृत्या संयुक्तया पादुकादि-
स्तूप्यग्रान्तोऽभ्युच्छ्रयः स्याच्चतुर्धा ॥ ७ ॥

---

व्ययतः व्ययात् । आयाधिक्यम् आयस्याधिकत्वम् । सर्वथा सर्वप्रकारेण सम्पाद्यं ग्राह्यम् । अन्यथा चेदापत्तिः नाशः स्यात् । नक्षत्रादिशुभत्वं नक्षत्रतिथ्यादीनां शुभत्वम् ज्योतिःशास्त्रादिभिर्लोकत एव सुविज्ञेयम् । तथा मयमते—

"आयाधिकमथ वसुदं व्ययोऽधिकं सर्वनाशः स्यात्"

इति ॥ ५ ॥

वयांसि कथयति—बालत्वमिति । अथ बालत्वं कौमारं यौवनं वार्धकं निधनं मरणं चेति पञ्च वयांसि । एषु वयस्सु । अन्त्यं मरणमेव नेष्टम् । वास्तुनि शिष्टानीष्टान्येव ॥ ६ ॥

प्रासादस्योन्नतेर्नियममाह—धाम्न इति । धाम्नः प्रासादस्य । व्यासे विस्तारे । शक्रीद्वन्द्वभक्ते अष्टाविंशतिधा कृते सति । मित्रेन्द्रेध्मांशैः मित्रा द्वादश इन्द्राश्चतुर्दश इध्मा एकविंशतिः तत्संख्यैरंशैः । समस्तांशतः समस्तेन च विस्तारेण संयुक्तया विस्तृत्या मानेन प्रासादस्य । पादुकादिस्तूप्यग्रान्तः पादुकमारभ्य स्थूप्यग्रमवधीकृत्य । योऽभ्युच्छ्रय उत्सेधः स चतुर्धा स्यात् । तथा निबन्धने—

"सप्तांशत्र्यधिकोऽध्यर्धः पादोनद्विगुणोऽपि वा ।
द्विगुणो वोच्छ्रयः प्रोक्तो विस्तारात् सर्ववेश्मनाम् ॥"

इति ॥ ७ ॥

---

१. 'तः' क. पाठः　२. 'यमांध',　३. 'न्वितो ध्यर्धः' ख. पाठः.

**गेहे त्रिदोर्वर्गभवे द्विदोर्मितान्**
**स्तम्भांस्ततोऽब्ध्यङ्गुलवर्धितान् क्रमात् ।**
**चतुष्कराद्युत्तरवर्गजेषु तान्**
**करोत्वधिष्ठानमतोऽर्धसंमितम् ॥ ८ ॥**

**अङ्गाद्यैरुदयोत्तरान्तरगतोन्मानं विभज्य क्रमात्**
**संख्यानैः शिवपश्चिमैर्निगदिते स्तम्भोच्छ्रये स्वेच्छया ।**
**अंशं योजयतु क्वचित् त्यजतु वा मासूरके स्वोच्छ्रयं**
**भङ्क्त्वाङ्गादिनवान्तिमैर्विरहयेद् विंशं यथोक्तोच्छ्रयात् ॥**

---

एवं समस्ताया उन्नतेः प्रमाणमुक्त्वा स्तम्भाधिष्ठानयोरुन्नतेर्नियम-माह — **गेह** इति । त्रिदोर्वर्गभवे पादहीनः त्रिकरः सब्ध्यङ्गुलः त्रिकरः सद-शाङ्गुलः त्रिकरश्च त्रिदोर्वर्गः तद्भवे गेहे । द्विदोर्मितान् द्विकरसम्मितान् स्तम्भान् करोतु । चतुष्कराद्युत्तरवर्गजेषु पादोनचतुष्करादिश्चतुष्करवर्गः पा-दोनपञ्चकरादिः पञ्चकरवर्गः एवं षट्करादावप्यूह्यम् । तेषु चतुष्करादिवर्ग-जेषु गेहेषु । क्रमेण ततः द्विकरात् । अब्ध्यङ्गुलवर्धितान् चतुश्चतुरङ्गुलवर्धितान् स्तम्भान् करोतु । अतः स्तम्भाद् अर्धसम्मितमधिष्ठानं करोतु । तथा निब-न्धने —

> "त्रिहस्ते द्विकराः स्तम्भा गोलकद्वयवर्धिताः ।
> हस्ते हस्ते स्थिता गेहादापञ्चदशहस्तकात् ॥"

इति ॥ ८ ॥

'स्तम्भार्धोच्चमधिष्ठानं पादबन्धं प्रतिक्रममि'ति च प्रोक्तयोः स्तम्भा-धिष्ठानयोरौचित्यवशान्न्यूनाधिकत्वमप्याह — **अङ्गाद्यै**रिति । उदयोत्तरगतो-न्मानम्, उदयो भित्तेर्मूलप्रदेशः पादुकस्य मूलप्रदेशो वा, उदयोत्तरयोरन्तरगत-मुन्मानम् । अङ्गाद्यैः षडाद्यैः । शिवपश्चिमैरेकादशान्तिमैः । संख्यानैर्विभज्य पूर्व-निगदिते स्तम्भोच्छ्रये एकमंशं योजयतु क्वचित् पक्षे । क्वचित् पक्षे त्यजतु च । तथैव मासूरके अधिष्ठाने । स्वोच्छ्रयमङ्गादिनवान्तिमैः षडादिनवपर्यन्तैः । संख्यानैः क्रमाद् भङ्क्त्वा यथोक्तोच्छ्रयादेकमंशं विरहयेत् त्यजेद्वा । तथा मयमते —

**भक्ते प्रत्युत्तरान्तर्गतचरणसमुन्मानकेऽष्टाङ्कदिग्भि-**
**स्तेष्वेकांशात्तमूलप्रततितदुरगांशादिहीनाग्रतानान् ।**
**दारुस्तम्भांस्तदर्धे विहिततातिदलाग्न्यब्धिभागोनतानान्**
**कुड्यस्तम्भांश्च कुड्ये रचयतु चरणाग्रप्रतानोऽत्र दण्डः ॥१०॥**

---

"जन्मोत्तरान्तरगतं गृहपादमानं षट्सप्तनागनवपङ्क्तिहरांशमेकम् ।
न्यूनं करोतु गृहसंधृतिपादतोऽथ यद्वाधिकं निखिलसालगतेषु चैवम् ॥
स्तम्भार्धोच्चं वा मसूरोच्चमानं षट्सप्ताष्टाङ्केषु वा भागहीनः ।
वास्त्वाधारोच्चं भवेत् सर्ववास्तुष्वेवं पूर्वं शम्भुना सम्यगुक्तः ॥"

इति ॥ ९ ॥

स्तम्भानां विस्तारमाह — भक्त इति । प्रत्युत्तरान्तर्गतचरणसमुन्मानके, प्रतिरधिष्ठानाग्रे कल्पितोऽवयवः, प्रतेरुत्तरस्य चान्तर्गतः स्तभोच्चो यस्तस्मिन् अष्टाङ्कदिग्भिरष्टभिर्वा नवभिर्वा दशभिर्वा भक्ते । तेष्वंशेषु एकांशात्त-मूलप्रततितदुरगांशादिहीनाग्रतानान् एकांशेनात्ता परिगृहीता मूलप्रततिर्मूल-विस्तृतिः तदुरगांशो मूलविस्तृतेरष्टांशः, आदिशब्देन नवांशो दशांशो वा विवक्षितः, तद्रहिताग्रविस्तारान् दारुस्तम्भांस्तदर्धे करोतु । तथैव कुड्यस्त-म्भान् विहिततातिदलाग्न्यब्धिभागोनतानान् विहितस्य दारुस्तम्भस्य ततेर्वि-स्तारात् दलेनार्धेनाग्निभागेन त्रिभागेनाब्धिभागेन चतुर्भागेन विहीनविस्ता-रान् कुड्ये रचयतु । अत्र दारुस्तम्भे । चरणाग्रप्रतानः स्तम्भाग्रविस्तारो दण्ड इत्युच्यते । तथा मयमते —

"पादोच्चपङ्क्तिनन्दाष्टभागैकं वाङ्घ्रिविस्तरम् ।
दारुस्तम्भगतं ह्येतत् कुड्यपादमथोच्यते ॥
तदर्धं वा त्रिभागोनं चतुर्भागोनमेव वा ।
कुड्यस्तम्भविशालं स्यादेतत् सर्वेषु धामसु ॥
तन्मूलतारमाख्यातं तत्तारं तु तथा भजेत् ।
एकभागविहीनं तु शेषमग्रविशालकम् ॥"

इति । मञ्जर्यां च "स्तम्भाग्रविष्कम्भमुशन्ति दण्डम्" इति ॥ १० ॥

**मासूरोच्चे विभक्ते शिखिविशिखकरैः क्ष्मेक्षणेन्द्वंशतोऽर्धां-**
**शोर्ध्वं पादांशवृद्ध्या द्विगुणितचरमं योजयेद् वोपपीठम् ।**
**दिग्भक्तेंऽशैः शशाङ्कादिभिरिषुचरमैरेकसार्धद्विलोकै-**
**र्दण्डैर्वा निर्गतं चारचयतु विलसत्स्वाङ्गभङ्ग्याभिरामम् ॥**

**इष्टाधिष्ठानोच्छ्रयं संविभज्य**
**सङ्ख्याभिः श्रुत्यादिनन्दान्तिमाभिः ।**

---

अथाधिष्ठानादिप्रासादावयवान् वदन्नधिष्ठानादप्यधोदेशे पक्षान्तरेण कल्पनीयस्योपपीठस्य क्लृप्तिमाह — मासूरोच्च इति । (मासूरोच्चे) अधिष्ठानोच्छ्रये । शिखिविशिखकरैः त्रिभिः पञ्चभिर्द्वाभ्यां वा विभक्ते । क्रमेण क्ष्मेक्षणेन्द्वंशतः एकद्व्येकांशकैः । अर्धांशोर्ध्वम् अर्धांशादुपरि । पादांशवृद्ध्या पादांशवर्धनेन । द्विगुणितचरमं द्विगुणान्तमुपपीठं योजयेद्वा । तस्य निर्गममाह — दिग्भक्त इति । अधिष्ठाने दिग्भक्ते दशधा कृते । शशाङ्कादिभिः एकादिभिः । इषुचरमैः पञ्चपर्यन्तैरंशैर्वा । एकसार्धद्विलोकैः एकेन सार्धैकेन द्वाभ्यां त्रिभिर्वा दण्डैश्चरणाग्रप्रतान इत्युक्तैः निर्गतमधिष्ठानाद् बहिर्गतम् । विलसत्स्वाङ्गभङ्ग्याभिरामं विलसन्त्या स्वाङ्गभङ्ग्या मनोहरं चारचयतु । तथा मयमते —

"आत्ताधिष्ठानतुङ्गाद् द्विगुणमथ समं सार्धमर्धं त्रिपादं
पञ्चांशव्यंशकं वानलसमभजिते व्येकमत्रोपपीठम् ।"

इति । काश्यपीये च —

"स्वाधिष्ठानसमोच्चं वा त्रिपादं वार्धमेव वा ।
पञ्चभागेऽग्निभागं वा सपादं सार्धमेव वा ॥
पादोनद्विगुणं वाथ द्विगुणं वा विशेषतः ।
एवमष्टविधं ख्यातमुपपीठोच्छ्रयं द्विज! ॥
दशधाभज्याधिष्ठानमेकद्वित्रिचतुष्टयम् ।
पञ्चांशं वाथ निष्क्राममधिष्ठानस्य पादुकात् ॥
दण्डं वा सार्धदण्डं वा द्विगुणं वा त्रिदण्डकम् ।
अधिष्ठानाज्जगत्या वा समन्तात् पादबाह्यतः ॥"

इति ॥ ११ ॥

अधिष्ठानात् पृथक्कल्पनीयस्य पद्मनाम्नोऽवयवस्य क्लृप्तिं चाह — इष्टेति । इष्टाधिष्ठानोच्छ्रयम् इष्टस्य कल्पितस्याधिष्ठानस्योच्छ्रयम् । श्रुत्यादि-

कुर्यादेकांशेन तूपान(ड?द)न्ते

पद्मं धामोत्सेधतोऽदोऽधिकं स्यात् ॥ १२ ॥

मासूरे मिहिरद्वयांशिनि ततोंऽशैः पादुकं पावकै-

रष्टाभिर्जगतीं स्वरैः कुमुदकं शेषे दशांशेंऽशकैः ।

त्रिद्व्यग्न्यश्विमितैर्गलं विरचयेत् कम्पान् गलं पट्टिकां

प्रत्युद्यन्मकरास्यकादिरुचिरां सिंहादिभिश्चोज्ज्वलाम् ॥

---

नन्दान्तिमाभिः चतुरादिनवान्तिमाभिः संख्याभिः । संविभज्यांशीकृत्य । तेष्वे-कांशेन उपान(ड?द)न्ते पादुकादधोभागे । पद्मं पद्मदलाकारमवयवं कुर्यात् । अदः एतत्तु । धामोत्सेधतो गृहोच्चादधिकं स्यात् । तथाहुः —

"अधिष्ठानसमुत्सेधाद् वेदांशं दर्शनाष्टकम् ।
नन्दपातालभूतांशमेकांशं पद्ममायतम् ॥
पूर्वभूमिगतं पद्मं प्रासादानां प्रशस्यते ॥"

इति ॥ १२ ॥

अधिष्ठानक्लृप्तिमाह — **मासूर इति** । मासूरे अधिष्ठाने । मिहिरद्वयां-शिनि चतुर्विंशतिधाकृते । तस्मात् । पावकैस्त्रिभिरंशैः । पादुकं पादुकाख्यमवयवं विरचयेत् । अष्टाभिर्जगतीं च । स्वरैः सप्तभिः कुमुदकं च । शेषे दशांशे शेषैः षड्भिरंशैर्दशांशीकृते सति । त्रिद्व्यग्न्यश्विमितैः त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यां चां-शकैः । क्रमेण गलं कम्पान् पुनर्गलं पट्टिकां च विरचयेत् । तत्र प्रत्युद्यन्मकरा-स्यकादिरुचिरां प्रतेरुद्यद्भिर्मकरास्यादिभिर्मनोहरां, सिंहादिभिश्चोज्ज्वलां च वि-रचयेत् । तथा काश्यपीये —

"अधिष्ठानोत्सेधमत्र चतुर्विंशतिभागतः ।
त्र्यंशं पादुकं विद्यादष्टांशं जगती भवेत् ॥
कुमुदं सप्तभिः कुर्यात् षड्भागं प्रति चोच्छ्रयम् ।
प्रतेरुच्छ्रयमेवं तु दशभागे कृते पुनः ॥
त्रिभागं कुमुदं पट्टं स्याद् द्व्यंशे कण्ठपट्टिका ।
त्र्यंशेऽन्तरितं तस्या वाजनं च द्व्यंशकम् ॥
सिंहव्यालगजेन्द्रैः स्यात् प्रतिभूषणसंयुतम् ।
प्रतिक्रममिदं चैव अधिष्ठानोच्चमं विदुः ॥"

इति ॥ १३ ॥

वास्त्वाधारसमुच्छ्रये प्रकृतिभक्ते वा त्रिभिः पादुकं
छन्दोभिर्जगतीं रसैः कुमुदकं चैकेन तत्पट्टिकाम् ।
भागाभ्यां गलपादकान् विरचयेदर्धांशतः पट्टिकां
क्षुद्रां सार्धधरांशकेन महतीं स्वांशोल्लसद्वाजनाम् ॥

मासूरेऽशैर्दिनेशांशिनि सति जगतीकैरवे श्रुत्युपायै-
स्तच्छिष्टैः पट्टिकामन्तरिमपि रचयेद् वाजनं च प्रतिं च ।
प्रत्युत्पन्नक्रमाख्ये क्रम इति कथितः पट्टिकान्तं तथातः
खण्डान् सार्धैकतो वाजनमपि सदलैकांशतः पादबन्धे ॥

---

पक्षान्तरेणाप्यधिष्ठानविभागमाह —वास्त्वाधारेति । वास्त्वाधारसमुच्छ्रये अधिष्ठानोच्चे । प्रकृतिभक्ते एकविंशतिधा कृते सति । त्रिभिः पादुकं विरचयेत् । वेति पक्षान्तरद्योतकः । छन्दोभिः सप्तभिर्जगतीम् । रसैः षड्भिः कुमुदकम् । एकेन तत्पट्टिकां कुमुदपट्टिकाम् । भागाभ्यां गलपादकान् गलकान् पादान् । अर्धांशतः क्षुद्रामल्पां पट्टिकाम् । सार्धधरांशकेन अर्धसहितैकेन । महतीं स्वांशोल्लसद्वाजनां स्वार्धांशदिना कृतवाजनां महत्पट्टिकां च । तथा मञ्जर्याम् —

"कुर्यादधिष्ठानमथैकविंशै(रशैं)र्विभक्तं तिथिहस्तगेहे ।
अंशत्रिकैः कल्पितपादुकं च सप्तांशक्लृप्तां जगतीं विदध्यात् ॥
षड्भिर्विदध्यात् कुमुदं तथैकभागेन कुर्यादथ पट्टिकां च ।
आलिङ्गरूपां गलपादमंशद्वयेन सम्यग् विदधीत भूयः ॥
सार्धांशक्लृप्तामथ पट्टिकां च क्षुद्राभिधानां च महाख्यपट्टीम् ।
अध्यर्धक्लृप्तां विदधीत सम्यक् कर्तव्यमेवं विधिवत् क्रमेण ॥"

इति ॥ १४ ॥

पुनरप्यधिष्ठानान्तरयोर्विशेषमाह — मासूर इति । मासूरे दिनेशांशिनि द्वादशधा कृते सति । श्रुत्युपायैश्चतुर्भिश्चतुर्भिरंशैः । जगतीकैरवे जगतीं कुमुदकं च रचयेत् । तच्छिष्टैश्चतुर्भिरंशैः । क्रमेण पट्टिकामन्तरिं वाजनं प्रतिं च प्रत्युत्पन्नक्रमाख्ये प्रतिक्रमाख्ये अधिष्ठाने । क्रमः अवयवक्रमः । इति उक्तविधिना[3]

---

१. 'रां' इति मूलकोशपाठः. २. 'कां भा' ख. पाठः. ३. 'धानक' क. पाठः

यावत् स्वायोच्चमानं गमयतु जगतीं बाह्यतो मानसूत्रात्
तत्तुल्यं कैरवं चोच्छ्रूयसमचरणोनार्धपादांशकं च ।
शिष्टं तत्पट्टिकाब्जादिकमपि गमयेन्मानसूत्रात् समन्तात्
तत्तच्छोभानुरूपं गमयतु जगतीसूत्रतः पादुकं च ॥१६॥

---

कथितं[1] । पादबन्धे अधिष्ठाने । पट्टिकां तथा कृत्वा तत ऊर्ध्वं सार्धैकतः ख-ण्डान्, सदलैकांशतः अर्धसहितैकांशतो[2] वाजनं च । तथाच मञ्जर्याम्—

"उत्सेधं विभजेत् त्रिधान्तिममथो भङ्क्त्वा चतुर्धा क्रमा-
देकांशे जगतीं परे कुमुदकं भागे विदध्यात् ततः ।
भागौ द्वावथ पट्टिकान्तरिगतावन्त्यौ प्रतेः स्यान्मुखं
कर्तव्यं विधिवत्प्रतिक्रममिदं वृद्धिप्रदं वेश्मनः ॥
एकेन कुर्यादथ पट्टिकां च सार्धेन खण्डान् विदधीत सम्यक् ।
शिष्टेन कुर्यादथ वाजनं च कर्तव्यमेवं खलु पादबन्धे ॥"

इति ॥ १५ ॥

अधिष्ठानावयवानां निर्गममाह — यावदिति । मानसूत्रात् प्रमाणसू-त्रादुत्तरबाह्यादिति यावत् । यावत् स्वायोच्चमानं यावत् स्वायमानं यावत् स्वो-च्चमानं वा । अत्रायशब्देन योनिरुच्यते । यावत्प्रमाणे स्वस्योपरिगता योनिर्भ-वति तत्स्वायमानं यावत् पुनर्जगत्या उच्चं त(याव?)त् स्वोच्चमानमित्युभयथा जगतीं बाह्यतो गमयतु । तत्तुल्यं जगतीतुल्यम् । कैरवं कुमुदं च पट्टिकाब्जादिकं तच्छिष्टमपि उच्छ्रूयसमचरणोनार्धपादांशकम् उच्छ्रूयसमं वा पादोनं वा अ-र्धांशकं वा पादांशकं वा । तत्तच्छोभानुरूपं तस्य तस्यावयवस्य शोभाया आ-नुरूप्यं यथा भवति तथा । मानसूत्रात् समन्ताच्चतुर्दिशं बहिर्गमयेत् । पादुकं च जगतीसूत्रतो यथायोगं गमयतु । तथाहुः—

"यावत्स्वयोनिरूर्ध्वस्था भवेत् तावद्धि निष्क्रमः"

इति । तथाच —

"तत्समं निष्क्रमं चैव अर्धं पादोनमेव च"

इति । मयमते च —

---

१. 'तं' ख. पाठः. २. 'र्धसिंहस' क. पाठः.

**चित्वेत्यधिष्ठानमिहानुरूपं**
**समं तलीकृत्य शिलाप्रतानैः ।**
**विभज्य गर्भान्तरबाह्यभित्ति-**
**तन्मध्यनाडी रचयेद् यथार्हम् ॥ १७ ॥**
**वह्न्यादितिथ्यवधिकौजविभागभक्ते**
**व्यासे गृहस्य नयनाद्युरगान्तिमांशैः ।**
**पञ्चांशकैश्च वसुभागयुतेऽर्धतश्च**
**गर्भालयस्य विततिर्नवधोदितेति ॥ १८ ॥**

---

"यावज्जगतिसूत्रान्तस्तावत् कुमुदनिर्गमः ।
अम्बुजानां तु सर्वेषामुत्सेधसमनिर्गमः ॥
वेत्राणां चैव सर्वेषां चतुर्भागैकनिर्गमः ।
एवं नीप्रक्रमं शोभावशात् प्रोक्तं स्वयंभुवा ॥
प्रवेशं निर्गमं कुर्यात् सर्वाङ्गानां मसूरके ।"

इति ॥ १६ ॥

अधिष्ठानविधिमुक्त्वा गर्भभित्त्यादिकमाह—चित्वेति । इह इति उक्तप्रकाराणमन्यतमेनापि विधिना । अनुरूपं योग्यमधिष्ठानम् । चित्वा चयनं कृत्वा । शिलाप्रतानैः शिलाप्रस्तरैः समं यथा भवति तथा तलीकृत्य । गर्भान्तरबाह्यभित्तितन्मध्यनाडीः गर्भगृहमान्तरभित्तिं बाह्यभित्तिं तन्मध्यगतां नाडीं च यथार्हं विभज्य रचयेत् ॥ १७ ॥

तत्र गर्भगृहस्य विभागमाह—वह्न्यादीति । गृहस्य मूलगृहस्य । व्यासे वह्न्यादितिथ्यवधिकौजविभागभक्ते त्र्यादिपञ्चदशान्तिमैस्त्रिपञ्चसप्तादिविषमविभागैर्भक्तेंऽशिते सति । नयनाद्युरगान्तिमांशैः क्रमेण द्व्याद्यष्टान्तिमैरंशैः । तथा वसुभागयुतेऽष्टधा विभक्ते । पञ्चांशकैश्च अर्धतः गृहस्यार्धतश्च । इति गर्भालयस्य विततिर्विस्तृतिर्नवधा उदिता । तथा निबन्धने—

"त्र्याद्या पञ्चदशौजांशे[1] व्यासे द्व्याद्यैर्यथाक्रमम् ।
पञ्चाष्टांशेऽखिलार्धं वा गर्भं तु नवधा स्मृतम् ॥"

इति ॥ १८ ॥

---

१. 'शैर्व्यासे' ख. पाठः.

बाह्या गृहव्यासगजांशतः स्याद्
भित्तिः परा गर्भगजांशतश्च ।
नाडी समन्तादुभयान्तराले
संमेल्य वा भित्तियुगं गृहेऽल्पे ॥ १९ ॥

विस्तारेऽल्पगृहे क्वचिद् विशिखभक्तेऽन्तःपदे पीठिकां
पङ्क्त्या गर्भगृहं करोतु परितः पङ्क्त्या च भित्तिं घनाम् ।
तस्मिन् नन्दविभाजिते सति विधायैवं ततो वीथिकां
भित्तिं चोभयपङ्क्तितो विरचयेद् द्वारं च कोष्ठेऽग्रतः ॥

भित्तिलक्षणमाह — बाह्येति । गृहव्यासगजांशतः मूलगृहव्यासस्याष्टांशतो बाह्या भित्तिः स्यात् । परा अन्तर्गता भित्तिः । गर्भगजांशतः गर्भगृहस्याष्टांशेन स्यात् । उभयान्तराले भित्तिद्वयस्यान्तराले । समन्तात् परितो नाडी स्यात् । अल्पे गृहे भित्तियुगं भित्तिद्वयम् । सम्मेल्यैकीकृत्य वा स्यात्। तथा मञ्जर्याम्—

"आरूढभित्तिर्विहिताष्टमांशैरेषां[2] वहिः शिष्टमलिन्दमस्य[3] ।
अष्टांशमानादथ बाह्यभित्तिर्भित्तिर्घना[4] स्यादथवाल्पगेहे ॥ "

इति ॥ १९ ॥

पक्षान्तरेण तेषां विभागमाह — विस्तार इति । क्वचिदल्पगृहे विस्तारे विशिखभक्ते आयामतो विस्तारतश्च पञ्चविभक्ते । तत्रान्तःपदे पीठिकां देवस्य पीठं करोतु । पङ्क्त्या तदावरणपङ्क्त्या गर्भगृहं च । परितस्तदावरणे पङ्क्त्या घनां भित्तिं च । तत्रापि प्रकारान्तरमाह — तस्मिन्निति । तस्मिन् गृहे । नन्दविभाजिते आयामतो विस्तारतश्च नवधा कृते सति । एवमुक्तक्रमेण पीठिकां गर्भगृहमान्तरभित्तिं च विधाय । तत उभयपङ्क्तित आवरणपङ्क्तिद्वयेन । क्रमाद् वीथिकां नाडीं बाह्यभित्तिं च विरचयेत् । बाह्यभित्तावन्तर्भित्तौ च अग्रतः कोष्ठे अग्रकोष्ठप्रमाणेन द्वारं च विरचयेत् । तथाहुः —

"व्यासेऽभिकृतिकोष्ठे स्यात् पीठं कोष्ठेन मध्यतः ।
तद्बहिर्वसुकोष्ठानां पङ्क्त्या गर्भगृहं भवेत् ॥

१. 'ह्य', २. 'ह', ३. 'ष्ठि' ४. 'त्तिभित्ति', ५. 'ह्ये' ख. पाठः.

प्रत्यन्ते वा गलान्ते रचयतु तदुदङ्मध्यसूत्रेऽम्बुमार्गं
सोमेशानान्तरोद्यद्वसुनवदशभागादिकं वा व्यतीत्य।
मासूरोत्सेधमात्रं चरणविरहितं वार्धवृद्धं प्रणालं
निर्यातं बाह्यतोऽन्तर्विनिहितमधिकुड्यं तदर्धांशमात्रम् ॥

---

कोष्ठपङ्क्त्या बहिर्भित्तिस्तत्र द्वारं तु कोष्ठतः।
एकभित्त्येकतलकं दैवं धामेदमीरितम् ॥

तद्वत् प्रासादविस्तारस्यैकाशीतिपदस्य तु ।
मध्यस्थनवकोष्ठैः स्यात् सपीठं गर्भमन्दिरम् ॥

तद्बाह्ये कोष्ठपङ्क्त्या तु भित्तिं द्वारं च कल्पयेत् ।
तद्बाह्यपङ्क्त्याः परितः कल्पयेन्मध्यनाडिकाम् ॥

प्रासादभित्तिस्तद्बाह्ये पङ्क्त्या द्वारं च कल्पयेत् ।
त्रिहस्ते तु घना भित्तिः पञ्चहस्तेऽपि वा तथा ॥"

इति ॥ २० ॥

ततः प्रणाललक्षणमाह — प्रत्यन्त इति । प्रत्यन्तेऽधिष्ठानस्य प्रतेरन्ते गलान्ते वा । तदुदङ्मध्यसूत्रे गर्भगृहस्योदग्गतमध्यसूत्रे । सोमेशानान्तरोद्यद्वसुनवदशभागादिकं सोमेशानयोरन्तरगतदैर्घ्यस्याष्टभागं वा नवभागं वा दशभागं वा, आदिशब्देन शिवादिमूर्तिवशाद् विहितं प्रमाणं वा। व्यतीत्य मध्यसूत्रात् पूर्वतोऽतिक्रमय्य । अम्बुमार्गं जलयात्रामार्गयुक्तं प्रणालं रचयतु । तत्तु प्रणालं मासूरोत्सेधमात्रम् अधिष्ठानोच्चमानम् । तस्माच्चरणविरहितं वा तथार्धवृद्धमर्धाधिकं वा । बाह्यतो निर्यातं निर्गतम् । तदर्धांशमात्रमन्तरधिकुड्यं कुड्ये विनिहितं स्थितं च रचयतु । तथा तन्त्रान्तरे —

"धाम्नः प्रतिग्रीवगसोमसूत्रात् प्रागन्तभागं प्रविधाय तेषु ।
द्व्येकं शिवे द्वित्रि हरौ त्रिपञ्च शेषेष्वतीत्योदकमार्गसूत्रम् ॥

प्रतेः पुरोऽर्धं वसुनन्ददिग्भिर्विभज्य भागेष्वखिलामराणाम् ।
एकैकभागं समतीत्य कुर्याद् विचक्षणो गोमुखमध्यमत्र ॥

---

१. 'का:' ख. पाठः.

**स्वायामाग्र्यंशकादिप्रविततनिजमूलानलांशादिविस्तीर्णाग्रं विस्तारतुल्यत्रिपददलघनं त्र्यंशक्लृप्ताम्बुमार्गम् । व्यात्तव्यालास्यमध्यप्रसृमरनिजमूलोज्ज्वलं गोमुखं तन्मुक्तादामादिवल्लीवलयपरिगतं शुण्डुभिर्मण्डितं च ॥ २२ ॥**

---

स्यात् कुट्टिमं गोमुखदीर्घमानं पादोनितं वा तदथार्धयुक्तम् ।
व्यालाननं स्यादिह शुण्डुभेदो[1] मणिश्च वल्लीपरिशोभितं च ॥"

काश्यपीये च —

"भान्वङ्गुलं समारभ्य गुणाङ्गुलविवर्धनात् ।
चतुर्विंशाङ्गुलं यावत् तावत् पञ्चविधायतम् ॥
भित्तिबाह्यगतं ह्येतत् तस्यार्धं गर्भगेहके ।
वेशयित्वाथवा भित्तेरभ्यन्तरगतं तु वा ॥"

इति ॥ २१ ॥

स्वायामाग्र्यंशकादिप्रविततनिजमूलानलांशादिविस्तीर्णाग्रं स्वायामात् स्वदीर्घात् त्र्यंशकादिना विस्तीर्णस्य निजमूलस्य त्र्यंशादिना विस्तीर्णमग्रं यस्य तत् । तथा विस्तारतुल्यत्रिपददलघनं विस्तारतुल्यं[2] त्रिपदमर्धं वा घनं यस्य तत् । तथा त्र्यंशक्लृप्ताम्बुमार्गं विस्तारस्य त्र्यंशेन क्लृप्तमम्बुनो मार्गं यस्य तत् । तथा व्यात्तव्यालास्यमध्यप्रसृमरनिजमूलोज्ज्वलं व्यात्ताद् विशेषेण विवृताद् व्यालाननमध्यात् प्रसरणशीलेन निजमूलेनोज्ज्वलं यत् तत् । तथा मुक्तादामादिवल्लीवलयपरिगतं मुक्तादामादिरूपाभिर्वल्लीभिर्वलयैश्च परिगतं व्याप्तं यत् तत् । तथा शुण्डुभिरलङ्कारविशेषैश्च मण्डितं च गोमुखापराख्यं प्रणालं रचयतु । तथा काश्यपीये —

"वस्वङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ।
कलाङ्गुलावसानं तु विस्तारं पञ्चधा क्रमात् ॥
तन्मूलतारपञ्चांशत्रिभागं चाग्रविस्तृतम्[3] ।
तद्विस्तारसमं वाथ त्रिभागं वार्धकं घनम् ॥

---

१. 'भोक्तो म' ख. पाठः. २. 'ल्यत्रि' क. ख. पाठः. ३. 'त्व' क. पाठः.

**स्तम्भाः कोणचतुष्कमध्यविनिवेश्याः स्युः प्रतेरूर्ध्वतः**
**सामान्येन समान्तराः सुरविमानेषूदिता द्वादश ।**
**एते विंशतिरीशदोःप्रभृतिकेष्वेतेषु ते नैकधा**
**चोक्ताः स्वाकृतिभूषणक्रमवशादेष्वर्पयेच्चोत्तरम् ॥ २३ ॥**
**कार्याः स्युश्चरणा युगाष्टनृपकोणाः सर्वतो वर्तुला**
**विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रकाः ।**

---

विस्तारस्य त्रिभागैकच्छिद्रतारं[1] नतं यथा ।
नालं[2] मध्ये तु कर्तव्यं निम्नोन्नतविवर्जितम् ॥
मूलादग्रं नतं किञ्चिन्मूलं सिंहास्यवन्धितम् ।''

इति ॥ २२ ॥

कुड्यस्तम्भस्थापने नियममाह—स्तम्भा इति । सुरविमानेषु देवालयेषु । प्रतेरूर्ध्वतः प्रतेरुपरिभागे । सामान्येन त्रिकरादिषु कोणचतुष्कमध्यविनिवेश्याः कोणानां चतुष्के तन्मध्ये द्वौ द्वौ च निवेश्याः स्थाप्याः । समान्तराः समभक्तेनान्तरेण युक्ताः द्वादश स्तम्भा उदिताः स्युः । ईशदोःप्रभृतिकेषु एकादशकरादिषु । एतेषु सुरविमानेषु । एते स्तम्भा विंशतिरुदिताः । ते स्तम्भाः । स्वाकृतिभूषणक्रमवशात् स्वाकृतिवशात् स्वभूषणवशाच्च । नैकधा अनेकधा चोक्ताः । एषु स्तम्भेषूत्तरमर्पयेच्च । तथा निबन्धने—

"द्वादशैव चतुष्कोणमध्यस्थाः कुड्यपादकाः ।
एकादशकरे स्तम्भा विंशतिर्मण्डनान्विताः ॥
समाः स्तम्भान्तराः सर्वे प्रासादे[3] सार्वदेशिके ।
विषमस्तम्भभागं तु वास्तु वस्तुविनाशनम् ॥''

इति ॥ २३ ॥

स्तम्भानामाकृतिभेदमाह—कार्याः स्युरिति । चरणाः स्तम्भाः । सर्वतो युगाष्टनृपकोणा वा सर्वतश्चतुष्कोणाः तथाष्टकोणाः षोडशकोणाश्च । सर्वतो वर्तुला वा वृत्ताकाराः । विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रका वा

---

१. 'बे कं छिद्रं', २. 'लम', ३. 'प्रघारे सा' क. पाठः.

**मूलोद्भावितकर्णसूत्रचतुरश्रोर्ध्वांशवृत्ताः पुनः**
**शुण्डोद्भेदविचित्रवृत्तरुचिरा वाऽऽरब्धगेहोचिताः ॥ २४ ॥**
**ओमां कुर्वीत दण्डद्वयततचरणोच्चां घटं दण्डयुग्म-**
**व्यासं साङ्घ्र्यादिदण्डोच्छ्रयमुदधिततां दण्डतोऽङ्घ्र्यूनतीव्राम्**

---

विस्तारेण त्रिगुणितोपरिभागे त्रिगुणितेन विस्तारमानेनोन्मितेनाष्टाश्रेण युक्ताः। मूलोद्भावितकर्णसूत्रचतुरश्रोर्ध्वांशवृत्ता वा मूलगतचतुरश्रस्य कर्णसूत्रमानं चतुरश्रं कृत्वा तदूर्ध्वतो वृत्तेनाकारेण युक्ताः। पुनः शुण्डोद्भेदविचित्रवृत्तरुचिरा वा शुण्डोद्भेदैर्भिन्नवेत्राकारैरलङ्कारविशेषैर्विचित्रेण वृत्तेन सुन्दराः। आरब्धगेहोचिताः आरब्धस्य गृहस्य योग्याः स्युः। तथा निबन्धने —

"पञ्चाश्रिजास्त्रयो वृत्तास्तुर्यश्रः पोतिकान्वितः।
स्तम्भः साधारणो धाम्नां कुम्भमण्ड्यादिमण्डितः॥
विस्तारत्रिगुणादूर्ध्वमष्टाश्रस्तावता कृतः।
स्तम्भः सपोतिकाकुम्भस्तथा मध्याश्रकः स्मृतः॥
आमूलतः कृतोऽष्टाश्रः सर्वाष्टाश्रः सपोतिकः।
षोडशाश्रिकृतश्चैव[2] वीरकाण्डसमुज्ज्वलैः[3]॥
कुम्भतन्मण्डनैर्युक्तः षोडशाश्रः सपोतिकः।
मूले कर्णस्थमानेन चतुरश्रोऽथ वर्तुलः॥
कुम्भमण्डनसंयुक्तो मूलाश्रश्च सपोतिकः।
सर्वत्र वर्तुलो युक्तः कलशेन च मण्डनैः॥
पोतिकासहितो मूर्ध्नि वृत्तपादस्तु कीर्तितः।
कुम्भमण्डनसंयुक्तो[4] वीरकाण्डस्थपोतिकः॥
शुण्डभेदैसमो वृत्तः शुण्डपाद इति स्मृतः।"

इति ॥ २४ ॥

स्तम्भावयवभूतानामोमादीनां लक्षणमाह — **ओमामिति**। दण्डद्वयततचरणोच्चां दण्डद्वयविस्तारां [5]दण्डपादेनोच्चामोमां स्तम्भपीठत्वेन कुर्वीत।

---

१. 'त्ताका', २. 'श्रकृतं चैव', ३. 'लाः' क. पाठः. ४. 'के' ख. पाठः.
५. 'दे' क. पाठः. ६. 'कु' ख. पाठः.

**मण्डि दण्डप्रथाङ्घ्र्यंशकरहितघनं वीरकाण्डं त्रिसार्धे-**
**षूदन्वद्दण्डदीर्घां चरणतततदर्धोच्छ्रयां पोतिकां च ॥ २५ ॥**

---

घटं घटाकारेण कल्पनीयमवयवम् । दण्डयुग्मव्यासं दण्डद्वयविस्तारम् साङ्घ्र्यादिदण्डोच्छ्रयं सपादादिदण्डोत्सेधं च । मण्डि घटस्योपरि स्थाप्यां फलकाम् । दण्डतः उदधिततां चतुर्दण्डसमविस्ताराम् । अङ्घ्र्यूनतीव्राम् । अङ्घ्र्यूनेन दण्डेन घनां च । वीरकाण्डं मण्ड्या उपरि कल्पनीयमवयवम् । दण्डप्रथाङ्घ्र्यंशकराहितघनं दण्डविस्तारं तत्पादांशहीनतीव्रं च । पोतिकां वीरकाण्डोपरि उत्तरस्याधः कल्पनीयाम् । त्रिसार्धेषूदन्वद्दण्डदीर्घां त्रिदण्डेन वा सार्धपञ्चदण्डेन वा चतुर्दण्डेन वा दीर्घाम् । चरणतततदर्धोच्छ्रयां स्तम्भमूलविस्तारेण विस्तीर्णां तदर्धोत्सेधयुक्तां च । तथाहुः—

"स्तम्भमूलघनाः शैला ओमा द्विगुणविस्तराः ।
तुर्यश्रा मध्यतोगर्ता दण्डपादेन चोद्गताः ॥
दण्डपादेन तीव्रा च तच्चतुर्गुणविस्तरा ।
मण्डिः पद्मविचित्रा च माल्यंनागफणाकृतिः ॥
पादोनतीव्रं तुर्यश्रं वीरकाण्डं च दण्डतः ।
पोतिकास्त्वायता दण्डैः सार्धपञ्चचतुस्त्रिभिः ॥
अर्धत्रिभागपादस्था तलिः स्याद् दण्डविस्तरा ।"

तथाच काश्यपीये—

"विस्तारसद्दशोत्सेधाः पञ्चदण्डायतान्विताः ॥
उत्तमाः पोतिकाः ख्यातास्तारद्वित्र्यंशमुन्नताः ।
चतुर्दण्डायतोपेता मध्यमा सा प्रकीर्तिता ॥
विस्तारस्यार्धतुङ्गा तु गुणदण्डायतान्विता ।
कन्यसा पोतिकाख्याता........ ..........
मूलपादसमव्यासा श्रेष्ठा मध्ये तु मध्यमा ।
अग्रपादविशालस्य समा कन्यसपोतिका ॥"

इति ॥ २५ ॥

---

१. 'स्या' क. ख. घ. पाठः.

**भित्तिव्यासमितैर्विभज्य बहिरन्तः पञ्चसप्तांशकान्
कृत्वा कल्पितसूत्रसंस्थनिजमध्यद्वारयोगान्यथ ।
मध्यान्मध्यमतीत्य दिक्षु रचयेद् द्वाराणि तूर्ध्वं प्रते-
रग्र्यद्वारमृते घनानि कृतशोभान्यूर्ध्वतस्तोरणैः ॥ २६ ॥**

---

द्वारकल्पनमाह—भित्तीति । भित्तिव्यासं भित्तेर्विस्तारम् । इनैः द्वादशभिर्विभज्य बहिः पञ्चाङ्कान् अन्तः सप्तांशकांश्च कृत्वा । कल्पितसूत्रसंस्थनिजमध्यद्वारयोगानि तत्र कल्पिते सूत्रे संस्थितानि निजमध्यानि निजाया द्वारशाखाया मध्यगतसूत्राणि द्वारशाखाभिधानि द्वारयोगानि । तथाविधानि द्वाराणि चतसृषु दिक्षु तु प्रतेरूर्ध्वम् । मध्यान्मध्यमतीत्य प्रासादमध्यसूत्राद् द्वारमध्यसूत्रं किञ्चिदतीत्य नीत्वा रचयेत् । अग्र्यद्वारमृते अग्र्यद्वारं वर्जयित्वा । घनानि बन्धद्वाराणि । ऊर्ध्वतस्तोरणैः कृतशोभानि च रचयेत् ।

> "योगं तु स्थापयेद् विप्र! शान्तिहोमपुरःसरम् ।
> भित्तिव्यासे तु भान्वंशे बाह्यात् पञ्चावसानकम् ॥
> अभ्यन्तरात् तु सप्तांशसमं योगस्य मध्यमम् ।"

इति । तन्त्रान्तरे च—

> "मुहूर्ते स्थापयेद् विद्वान् मध्यान्मध्यं विमुच्य च"

इति । तथा च गुरुदेवः—

> "सर्वत्र प्रत्युपर्येव द्वारं कुर्याद् विचक्षणः"

इति[1] । मध्यान्मध्यमतीत्येत्यस्यायमाशयः—वक्ष्यमाणमग्र्यद्वारविस्तारमेकविंशतिभागं कृत्वा एकांशं वामतस्त्यक्त्वा तत्र द्वारमध्यं यथा भवति तथा रचयेत् । अपराण्यपि त्रीणि द्वाराणि प्रदक्षिणक्रमेण षट्त्रिंशद्भागं चतुष्षष्टिभागमेकाशीतिभागं च कृत्वैकैकभागमतीत्य द्वारमध्यानि रचयेत् । अथवा घनद्वारि त्रीण्यपि षट्त्रिंशं भागं वा चतुष्षष्टिभागं वा एकाशीतिभागं वातीत्य द्वारमध्यानि रचयेदिति । तथाहुः—

> "स्वव्यासमूर्छाधृतियुङ्मद्वन्द्वेन्दुगजांशकैः ।
> द्वारं प्रदक्षिणश्चाल्यां स्वेष्वेकेनैव वा घनाः (?)" ॥ २६ ॥

---

१. 'ति । कीदृशौ' क. ख. ग. पाठः

**गर्भागारप्रताने शिववसुदिनकृच्छैलतिथ्यंशितेऽशै-**
**र्बिम्बद्वारोच्छ्रयः स्याद् गिरिशरतुरगाम्नायमातङ्गसङ्ख्यः ।**
**उत्सेधेऽत्रैकविंशत्यतिधृतितिथिविश्वाङ्कभक्ते प्रक्लृप्ते**
**व्यासो दिङ्नन्दशैलोर्म्युदधिपरिमितांशैः क्रमात् कल्प-**
**नीयः ॥ २७ ॥**

**व्यासे गर्भनिकेतनस्य दहनेषुद्वारनेत्रांशिते**
**लिङ्गद्वारसमुच्छ्रयं वितनुयाद् द्वित्रीषुचन्द्रांशकैः ।**

---

कीदृशौ द्वारोत्सेधविस्तारावित्याकाङ्क्षायामाह —गर्भागारेति । गर्भागारप्रताने गर्भगृहविस्तारे । शिववसुदिनकृच्छैलतिथ्यंशिते एकादशधाष्टधा द्वादशधा सप्तधा पञ्चदशधा भक्ते । क्रमेण गिरिशरतुरगाम्नायमातङ्गसंख्यैः सप्तभिः पञ्चभिः सप्तभिश्चतुर्भिरष्टभिश्चांशैः । बिम्बद्वारोच्छ्रयः बिम्बे स्थाप्ये द्वारोच्छ्रयः स्यात् । अत्रैवं प्रकप्ते उत्सेधे एव क्रमेण । एकविंशत्यतिधृतितिथिविश्वाङ्कभक्ते एकविंशतिधैकोनविंशतिधा पञ्चदशधा त्रयोदशधा नवधा वा भक्ते । क्रमाद् दिङ्नन्दशैलोर्म्युदधिपरिमितांशैः दशभिर्नवभिः सप्तभिः षड्भिश्चतुर्भिश्चांशैर्व्यासः कल्पनीयः स्यात् । तथाह भास्करः—

"प्रतिमाद्वारमानं तु गर्भागारेण चोच्यते ।
एकादशात् सप्तोत्सेधमेकविंशाद् दशविस्तरम् ॥
अष्टांशे पञ्चभागोच्चं नवदशे नवविस्तारम् ।
द्वादशांशे सप्तोत्सेधं त्रिपञ्चे सप्तविस्तरम् ॥
सप्तभागे चतुष्कोच्चं त्रयोदशे षड्विस्तरम् ।
तिथिभक्तेऽष्टसंख्योच्चं नवभक्ते चतुर्विस्तरम् ॥"

इति ॥ २७ ॥

लिङ्गे स्थाप्ये द्वारोत्सेधविस्तारयोर्विशेषमाह — व्यास इति । गर्भनिकेतनस्य गर्भगृहस्य व्यासे । दहनेषुद्वारनेत्रांशिते त्रिभिः पञ्चभिर्नवभिर्द्वाभ्यां वा भक्ते । क्रमाद् द्वित्रीषुचन्द्रांशकैः द्वित्रिपञ्चैकांशकैर्लिङ्गद्वारसमुच्छ्रयं वितनुयात् । तस्मिन्नेव द्वारसमुच्छ्रये । क्रमेण नयनात्यष्टीशशैलांशिते द्विधा सप्तदशधा एकादशधा सप्तधा च भक्ते । क्रमाद् इलामहोरगशराग्न्यंशैः एकेनाष्टभिः पञ्चभिस्त्रिभिर्भागैस्तद्विस्तारं कल्पयेत् । तथाच भास्करः—

**तस्मिन् द्वारसमुच्छ्रयेऽथ नयनात्यष्टीशशैलांशिते**
**तद्विस्तारमिलामहोरगशराग्न्यंशैः क्रमात् कल्पयेत् ॥ २८ ॥**
**कुर्यात् सर्वसुरेषु शैलवसुनन्दाशांशितेऽङ्घ्र्युच्छ्रये**
**द्वारोत्सेधमिहैकभागरहितं विस्तीर्णमात्मार्धतः ।**
**योगौ स्तम्भसमाधिपाददलविस्तीर्णौ स्फुरद्वाजनौ**
**विस्तारार्धघनौ भुवङ्गमपतङ्गाढ्यौ च मूलाग्रयोः ॥ २९ ॥**

---

"अथ तद् द्वारमानं तु गर्भागारेण चोच्यते ।
त्रिभागद्वयमुत्सेधमुत्सेधार्धं तु विस्तरम् ॥
पञ्चभागत्रिभागोच्चं सप्तदशाष्टविस्तरम् ।
नवांशात् पञ्चोत्सेधं दशैकांशात् पञ्चविस्तरम् ॥
विस्तारार्धं कनिष्ठोच्चं सप्तभागं त्रिविस्तरम् ।
गर्भागारप्रमाणेन लिङ्गद्वारस्य मानकम् ॥"

इति ॥ २८ ॥

स्तम्भवशादपि द्वारभेदमाह — **कुर्यात् सर्वसुरेष्विति** । सर्वदेवेषु अङ्घ्र्युच्छ्रये स्तम्भोच्चे । शैलवसुनन्दाशांशिते सप्तधाष्टधा नवधा दशधा वा विभक्ते । इह एकभागरहितम् एकांशहीनं द्वारोत्सेधं कुर्यात् । आत्मार्धतः आयामार्धतो विस्तीर्णं च । द्वारशाखालक्षणमाह — योगाविति । योगौ द्वारशाखाख्यौ । स्तम्भसमाधिपाददलविस्तीर्णौ स्तम्भविस्तारसमेन वा सपादस्तम्भविस्तारेण वा सार्धस्तम्भविस्तारेण वा विस्तीर्णौ । स्फुरद्वाजनौ वाजनेन स्फुरन्तौ । विस्तारार्धघनौ स्वविस्तारार्धतीव्रौ । मूलाग्रयोर्मूले अग्रे च । क्रमाद् भुवंगमपतङ्गाढ्यौ भुवंगमेन पतङ्गेन च युक्तौ च कुर्यात् । तथाह गुरुदेवः—

"स्तम्भायामे तु दिङ्नन्दवसुसप्तांशके क्रमात् ।
नन्दवस्वृषिषड्भागैर्द्वारोत्सेधं प्रकल्पयेत् ॥
तदर्धविस्तृतं च स्याद् द्वारं देवालयेषु वै ।
सपादपादविस्तारस्तदर्धबहलो दृढः ॥
कवाटयोगस्तत्पार्श्वे वाजनं पूर्ववद् भवेत् ।"

---

१. 'स्तारमा' इति मूलकोशपाठः.

**द्वारोत्सेधनियुक्तशेषचरणोत्सेधे शरांशीकृते**
**द्व्यंशेनाधरपट्टिकां मितघनां सार्धेन वाङ्कांशिते ।**
**हीनां वाजनकेन योगविततां शिष्टांशतः पट्टिका-**
**मूर्ध्वस्थामथ मङ्गलाढ्यफलकां युक्त्योर्ध्वपट्टयूर्ध्वतः ॥ ३० ॥**

**दण्डाङ्‌घ्र्यङ्गमतङ्गजांशबहलं तावद्युतद्वार्दल-**
**व्यासं मूलशिखायुतं दृढतरं कार्यं कवाटद्वयम् ।**

---

इति । तथाच काश्यपः —

"पादविष्कम्भमानं वा सपादं सार्धमेव वा ।
द्वारयोगस्य विस्तारं तस्यार्धं घनमुच्यते ॥"

इति ॥ २९ ॥

द्वाराच्छिष्टांशविनियोगमाह — द्वारोत्सेधेति । द्वारोत्सेधनियुक्तशेष-चरणोत्सेधे स्तम्भोत्सेधाद् द्वारोत्सेधं त्यक्त्वा शिष्टे । शरांशीकृते पञ्चधा कृते । द्व्यंशेन मितघनां कृततीव्राम् । अधरपट्टिकां भुवंगमाख्याम् । वाजनकेन हीनां योगविततां द्वारशाखासमविस्तृतां च कुर्यात् । अङ्कांशिते नवधा कृते । सार्धेना-र्धसहितेन द्व्यंशेन वा कुर्यात् । शिष्टांशत ऊर्ध्वस्थां पट्टिकां पतङ्गाख्यां च । ऊ-र्ध्वपट्टयूर्ध्वतो युक्त्या मङ्गलाढ्यफलकां मङ्गलया लक्ष्म्या संयुक्तां फलकां च । तथाच गुरुदेवः —

"द्वारोच्चशेषे पञ्चांशे भवेदंशद्वयं त्वधः ।
ऊर्ध्वं त्रयोंऽशास्तत्र स्युः फलका चात्र चित्रिता ॥"

इति ॥ ३० ॥

कवाटलक्षणमाह — दण्डेति । दण्डाङ्‌घ्र्यङ्गमतङ्गजांशबहलं दण्डस्य चतुर्भागेन वा षड्भागेन वाष्टभागेन वा घनेन युक्तम् । तावद्युतद्वार्दलव्यासं यावान् बहलस्तावद्युतेन द्वारार्धेन विस्तारयुक्तम् । मूलशिखायुतं मूलगतनाले-नाग्रगतया शिखया च युक्तम् । दृढतरं सारदारुनिर्मितं च कवाटद्वयं कार्यं स्यात् । वामकवाटरोपितपराग्भागा वामकवाटाश्लिष्टपृष्ठभागा । ततः कवाटात् । अर्धतीव्रा कवाटार्धबहला । तद्द्विप्रतता कवाटतीव्रद्विगुणितविस्तारा च । सूचस्तनाद्यु-

कार्या वामकवाटरोपितपराग्भागार्धतीव्रा तत-
स्तद्विन्नप्रततता च सूत्रफलका सूच्यस्तनाद्युज्ज्वला ॥ ३१ ॥
ऊर्ध्वाधरभ्रमरकार्गलसन्धिपाल-
प्रक्षेपणीयवलयान्यपि पत्रकाणि ।

---

ज्ज्वला सुष्ठूर्ध्वाद्भिः स्तनाकृतिभिरन्यैश्चालङ्कारविशेषैः उज्ज्वला सूत्रफलका च कार्या स्यात् । तथाच गुरुदेवः—

''दण्डाच्चतुष्षडष्टांशं कवाटफलकाघनम् ।
श्रेष्ठमध्याधमं ज्ञेयं क्रमात् सर्वेषु धामसु ॥
स्तम्भाष्टांशघनौ रम्यौ कवाटौ विस्तरेऽधिकौ ।
तदर्धबहलो दण्डो मध्ये द्विगुणविस्तरः ॥''

इति ॥ ३१ ॥

कवाटभूषणान्याह — ऊर्ध्वाधरेति । कवाटयोर्द्वयोरपि ऊर्ध्वाधरभ्रमरकार्गलसन्धिपालप्रक्षेपणीयवलयानि ऊर्ध्वे अधरे च भ्रमरकौ भ्रमणसाधकौ यन्त्रविशेषौ[1] अर्गलं कवाटस्यान्तर्भागस्थः कवाटस्य विवृतिनिरोधको यन्त्रविशेषः सन्धिपालः कवाटयोः सन्धिं पालयतीति[2] सूत्रफलका प्रक्षेपणीयः कवाटस्य बहिर्भागस्थः कवाटविवृतिनिरोधको लोहमयो यन्त्रविशेषः वलयानि कवाटाकर्षणार्थं कल्पितानि वलयाकाराणि लोहविकाराणि । पत्रकाणि च कवाटयोः स्थैर्यसिद्धये बद्धानि लताकारेण निर्मितानि लौहानि भूषणितानि । पुनस्तिर्यञ्चि तिर्यग्गतानि । उदञ्चि ऊर्ध्वगतानि च । पुलकार्तवकुड्मलानि पुष्पाणामवस्थाविशेषद्योतकानि भूषणानि । सश्रीमुखेन्दुशकलानि श्रीमुखाः श्रीदेव्यादीनामाकाराः तैः सहितानीन्दुशकलानि चन्द्रखण्डाकाराणि एतदादीनि भूषणानि स्युः । तथाहुः —

''श्रीमुखं वामदण्डं च पञ्जरी पुलकार्गलौ ।
क्षेपणं सन्धिपालं च दण्डकुण्डलकौ तथा ॥

---

१. 'यकौ अ' ख. पाठः. २. 'ति न्सूत्र' ख. घ. पाठः. ३. पि' ख. पाठः

तिर्यञ्च्युदञ्चि पुलकार्तवकुड्मलानि
सश्रीमुखेन्दुशकलानि कवाटयोः स्युः ॥ ३२ ॥

अग्र्यद्वारभुवङ्गमस्थलसमारब्धान्यधोऽधः क्रमात्
सोपानानि समानि सारशिलया चिन्वीत यावत्तलम् ।
अध्यर्धद्विगुणात्तदण्डविपुलानि द्वारशाखाद्वयी-
पार्श्वोद्यन्मकरास्यनिःसृतलतारुद्धोभयान्तानि च ॥ ३३ ॥

अग्र्यद्वारप्रतातिमहिभिः संविभज्याशुगांशैः
क्लृप्तव्यासं रचयतु घनद्वारमन्यत्रिदिक्स्थम् ।

---

अन्तर्गतविषाणौ च फल्गुभ्रमरकौ तथा ।
वलाहैः परिघश्चैव भूषणानि कवाटयोः ॥"

इति ॥ ३२ ॥

सोपानलक्षणमाह — अग्र्यद्वारेति । अग्र्यद्वारभुवंगमस्थलसमारब्धानि अग्रभवस्य द्वारस्य यो भुवंगमः तत्स्थलात् समारब्धानि । क्रमादधोधोभागस्थितानि । यावत्तलं तलपर्यन्तं यथा तथा । द्वारशाखाद्वयीपार्श्वोद्यन्मकरास्यनिस्सृतलतारुद्धोभयान्तानि द्वारशाखाद्वय्याः पार्श्वादुद्यतो मकरास्यान्निःसृतया लतया प्रतिरुद्धोभयपार्श्वानि। अध्यर्धद्विगुणात्तदण्डविपुलानि अध्यर्धेन द्विगुणेन वा गृहीतेन दण्डेन विस्तृतानि । समानि युग्मानि समविस्ताराणि च सोपानानि सारशिलया चिन्वीत । गुरुदेवः —

"समखण्डानि कुर्वीत सोपानानि यथाक्रमम् ।
द्विदण्डं वाध्य(र्ध)दण्डं (वा) भवेत्"

इति च ॥ ३३ ॥

अन्यस्य घनद्वारत्रयस्य लक्षणमाह — अग्र्यद्वारेति । अग्र्यद्वारप्रततिम् अग्र्यद्वारस्य विस्तारम् । आहिभिरष्टाभिः संविभज्य । आशुगांशैः पञ्चभागैः । क्लृप्तव्यासं क्लृप्तविस्तारम् । द्विघ्नव्यासायतं द्विगुणितेन विस्तारेणायामयुक्तम् । अधिदलाद्द्विघ्नतत्यायतं वा अध्यर्धद्विगुणविस्तारं वा ! तूद्य-

---

१. 'गुल्फभ्र' ख. घ. पाठः. २. 'हापरिघं चैव' ख. पाठः.

**द्विघ्नव्यासायतमथ द्विदलद्विघनतत्यानतं वा**
**सूद्यद्योगप्रकटितकवाटादिकस्वाङ्गदीप्तम् ॥ ३४ ॥**

**स्तम्भे दिङ्नन्दनागांशिनि झषमनलांशेन शेषेण पादौ**
**व्यासं स्तम्भार्धतोऽब्ध्याशुगरसमितदण्डेन वा तत्र कुर्यात् ।**

---

द्योगप्रकटितकवाटादिकस्वाङ्गदीप्तं सुतरामुद्यति योगे प्रकाशितेन कवाटादिना स्वाङ्गेन सुन्दरं च । घनद्वारं द्वारप्रतिरूपम् । अन्यत्रिदिक्स्थम् अग्रद्वारादन्यत्रिदिक्षु स्थितं रचयतु । तथाहुः —

> "पुरोद्वारस्य विस्तारे त्वष्टभक्तेऽत्र पञ्चभिः ।
> घनद्वारस्य विस्तारं ततो द्विगुणदैर्घ्यकम् ॥
> द्विगुणार्धं तु वा दैर्घ्यं घनद्वारगतं शुभम् ॥"

इति ॥ ३४ ॥

तोरणलक्षणमाह — **स्तम्भ इति** । स्तम्भे स्तम्भोच्चे । दिङ्नन्दनागांशिनि दशधा नवधाष्टधा वांशिते । अनलांशेन त्र्यंशेन । झषं मत्स्यरूपं द्वारोपरिगतावयवं कुर्यात् । शेषेण[1] शिष्टैरंशैः । पादौ तोरणपादौ । स्तम्भार्धतः स्तम्भार्धमानेन वा । अब्ध्याशुगरसमितदण्डेन वा चतुर्भिः पञ्चभिः षड्भिर्दण्डैर्वा । तत्र तोरणे व्यासं कुर्यात् । अथ पत्रादीद्धार्धचन्द्रात्मकमिति पत्रतोरणमुच्यते । पत्रलतादिभिर्दीप्तमर्धचन्द्राकारं च । मकरास्यादिमत् पञ्चभुग्नमिति मकरतोरणमुच्यते । मकरास्यादिभिर्युक्तं पञ्चधा वक्रीकृतं च । विविधखगलसन्नक्रतुण्डोज्ज्वलमिति चित्रतोरणमुच्यते । विविधैः पक्षिभिर्लसद् नक्रतुण्डेन चोज्ज्वलं च । इति तत् प्रशस्तं तोरणं त्रिविधं कर्तव्यं स्यात् । तथाह काश्यपः —

> "अथ वक्ष्ये विशेषेण तोरणानां तु लक्षणम् ।
> पादोदयदशांशेषु सप्तांशं चरणोदयम् ॥
> शेषांशं गुणमानं तु झषमानमुदाहृतम् ।
> नवांशे पादतुङ्गे तु षडंशं चरणोदयम् ॥
> शेषं झषोदयं ख्यातमष्टांशे चाङ्घ्रितुङ्गके ।
> पञ्चांशं चरणोच्चङ्गं झषोत्सेधं गुणांशकम् ॥

---

१. 'ण विशि' क. पाठः

**पत्रादीद्धार्धचन्द्रात्मकमथ मकरास्यादिमत् पञ्चभुग्नं**
**कर्तव्यं तोरणं तद् विविधखगलसन्नक्रतुण्डोज्ज्वलं च ॥३५॥**
**प्रत्युत्तरान्तर्विरचय्य भित्तिं**
**ततः समन्तात् सुदृढैः शिलाद्यैः ।**

---

तुङ्गार्धविपुलो वाथ वेदभूतरसाङ्घ्रि वा ।
तोरणस्य तु तद्बाह्ये व्यासमेवं चतुर्विधम् ॥
प्रासादमण्डपादीनां मध्यभागे तु तोरणम् ।
अनेन विधिना विप्र! कर्तव्यं कुड्यबाह्यके ॥
पत्राख्यतोरणं चादौ द्वितीयं मकरतोरणम् ।
तृतीयं चित्रसंज्ञं च त्रिविधं तोरणाकृति ॥
अर्धचन्द्रमिवाकारपत्रराजिविराजितम् ।
पत्रतोरणमाख्यातं ततो मकरमुच्यते ॥
पञ्चवक्त्रसमायुक्तं पार्श्वयोर्मकरान्वितम् ।
मध्ये पुरिसमायुक्तं नानाविधलतान्वितम् ॥
नानालङ्कारसंयुक्तं यत्तन्मकरतोरणम् ।
तदेव पार्श्वयोर्मध्ये पुरि मत्स्यद्वयोरपि ॥
नक्रतुण्डं प्रकर्तव्यं भूतविद्याधराङ्ककम् ।
सिंहेभव्यालहंसाद्यैर्बालस्रङ्मुक्तदामकैः ॥
मत्स्यैश्च विविधैश्चित्रै रत्नबन्धैश्च भूषितम् ।
चित्रतोरणमेतत् स्यात् ॥"

इति ॥ ३५ ॥

भित्तिलक्षणमाह—**प्रत्युत्तरान्तरिति** । प्रत्युत्तरान्तः प्रतेरुत्तरस्य चान्तर्मध्यभागे । समन्तात् परितः । सुदृढैः सुतरां सारतरैः । शिलाद्यैः शिलेष्टकादिभिः भित्तिं विरचय्य । तां भित्तिम् । अङ्घ्रिमूले स्तम्भाद्योभागे । भित्तेरधोभाग इत्यर्थः । तत्र वेदिकया भूषयेत् । तदूर्ध्वतः वेदेरुपरिभागे । उज्ज्वलपञ्जराद्यैः उज्ज्वलैः पञ्जराद्यलङ्कारविशेषैश्च भूषयेत् । तथाहुः—

"प्रत्युत्तरान्तरे भित्तिर्जालेष्टकशिलामयी"

तां भूषयेद् वेदिकयाङ्घ्रिमूले
तदूर्ध्वतश्चोज्ज्वलपञ्जराद्यैः ॥ ३६ ॥

**प्रत्युत्सेधेन पादायतिवसुमुनिषड्भागतोऽध्यर्धकेन द्वित्रिघ्नेनाङ्घ्रितारेण च भवतु समोऽभ्युच्छ्रयो वेदिकायाः। उत्सेधे द्व्यंशितेऽधोवधि गुणरशनान्तर्यथाष्टाद्रिषड्भागेंऽशैः कम्पाब्जकम्पाः शशिकरशशिभिः शेषतोऽधो गलं च**

---

इति । तथाच गुरुदेवः —

"कुड्येषु तोरणानि स्युस्तत्कुड्यं पञ्चधा स्मृतम् ।
शिलामयं चैष्टकं च (ज?जा)लकामयमित्यपि ॥
फलकामयमित्यन्यन्मृण्मयं चापरं क्रमात् ।"

इति ॥ ३६ ॥

वेदिकालक्षणमाह — **प्रत्युत्सेधेनेति** । प्रत्युत्सेधेन प्रतेरुत्सेधप्रमाणेन वा । पादायतिवसुमुनिषड्भागतः स्तम्भायामस्याष्टभागेन वा सप्तभागेन वा षड्भागेन वा । अध्यर्धकेनाङ्घ्रितारेण अर्धसहितैकेन स्तम्भविस्तारेण । द्वित्रिघ्नेन च द्विगुणितेन वा त्रिगुणितेन वा स्तम्भविस्तारेण समो वेदिकाया अभ्युच्छ्रयो भवतु । अथोत्सेधे द्व्यंशिते अधोवधि अधःपर्यन्तम् । गुणरशना तिस्रो मेखला अन्तरी च भवतु । अथवाष्टाद्रिषड्भागे अष्टधा सप्तधा षोढा वा भक्ते। शशिकरशशिभिरेकद्व्येकांशैः। क्रमेण कम्पाब्जकम्पाः शेषतोऽधोभागे गलं च । तथाहुः —

"प्रतेरुपरि वेदिः स्यात् प्रत्युत्सेधेन सम्मिता ।"

तथाच काश्यपीये —

"स्तम्भोदये तु षट्सप्तवसुभागविभाजिते ।
एकांशं वेदिकामानं क्रमाच्छ्रेष्ठान्तराधमम् ॥"

मयमते च —

"प्रतेरुपरि वेदिः स्यात् सार्धद्वित्र्यङ्घ्रिणोदिता ।"

इति । मुरारिश्च —

"मेखलात्रयसंयुक्ता वेदिकान्तरिभूषिता"

**प्रासादः सकलोऽङ्घ्रितोरणचतुर्द्वारान्वितो मण्डित-**
**स्तम्भाभ्यन्तरजालपञ्जरयुतो वा पञ्चहस्तादिकः ।**
**युक्तो मूलतले विदिक्स्थितचतुष्कूटैः परस्तत्परः**
**शालाकूटकनासिकादिविलसज्जालोज्ज्वलत्पञ्जरः ॥ ३८ ॥**

---

इति । काश्यपीये च —

"अष्टांशे वेदिकोत्सेधे वेदाङ्गं गलमानकम् ।
गलोर्ध्वकम्पमेकांशं द्व्यंशेनाब्जं प्रकल्पयेत् ॥
तदूर्ध्वकम्पमेकांशं कर्तव्यं द्विजसत्तम ! ॥
स्वरषडंशे वेद्युच्चे त्रिद्व्यंशं च क्रमाद् गलम् ॥
कम्पं पद्मं च कम्पं च प्रागिवैवं प्रकल्पयेत् ॥"

इति ॥ ३७ ॥

भित्तिभूषणान्याह — **प्रासाद** इति । सकलः प्रासादोऽङ्घ्रितोरणचतुर्द्वारान्वितः अङ्घ्रिभिस्तोरणैश्चतुर्भिर्द्वारैश्च युक्तः स्यात् । पञ्चहस्तादिकस्तु मण्डितस्तम्भाभ्यन्तरजालपञ्जरयुतो वा । मण्डितानां स्तम्भानामन्तराले जालसहितपञ्जरयुतः । परः तत उपरि मूलतले भित्तेर्मूलप्रदेशे विदिक्स्थितचतुष्कूटैः कोणेषु स्थितैश्चतुर्भिः कूटैर्युक्तः । तत्परस्तु शालाकूटकनासिकादिविलसज्जालोज्ज्वलत्पञ्जरः शालाभिः कूटैर्नासिकादिभिश्च शोभमानजालकैश्च दीप्तिमद्भिः पञ्जरैश्च युक्तः । तथाहुः —

"त्रिहस्ते दण्डविस्तीर्णास्तदर्धबहलाः शुभाः ।
द्वादशैव चतुष्कोणमध्यस्थाः कुड्यपादकाः ॥
पार्श्वयोः पृष्ठतो युक्तास्तोरणैरुज्ज्वलैस्त्रिभिः ।
तोरणत्रयसंयुक्ते पञ्चहस्तेऽष्टपञ्जरे ॥
जालकानि त्रिभिर्दण्डैर्नन्द्यावर्तादिकानि च ।

---

१. 'कैः' ख. पाठः.

**कुड्ये पङ्क्त्यादिभक्ते विदिशि विरचयेत् कूटमेकांशविस्तारायामं द्व्यंशदीर्घां दिशि दिशि विनतामेकभागेन शालाम्। शालाकूटान्तराले चरणविरहितांशोन्मितां नासिकां तत्पार्श्वद्वन्द्वे सजालं चरणविरहितांशा[1]दतः पञ्जरं च ॥३९॥**

---

तुर्याश्राणि गवाक्षाणि गजेन्द्रनयनानि च ॥

लताश्च विविधास्तत्र कारयेत् स्वस्तिकानि वा ।
कुड्यस्तम्भांस्तथा कुर्यान्मूलाश्रान् कुम्भमण्डितान् ॥

सप्तहस्ते च चित्राढ्यं तोरणं मकरोज्ज्वलम् ।
पत्रैश्चित्रीकृतं कुर्यान्मध्ये रत्नादिमण्डितम् ॥

मण्डितान् कुड्यपादांश्च द्वादशैवात्र पूर्ववत् ।
कर्णकूटांश्च परितः शालापञ्जरकाष्टकम् ॥

पूर्ववन्मण्डितान् स्तम्भान्नवहस्ते तु मन्दिरे ।
कर्णकूटैश्च संयुक्ते शालापञ्जरतोरणैः ॥

एकादशकरे स्तम्भा विंशतिर्मण्डितान्विताः ।
दिक्षु चत्वारि चत्वारि पञ्जराणि शुभानि च ॥

नास्त्योऽत्र षोडशोर्ध्वं च शिखरे हारकास्तथा ।
त्रयोदशकरे स्तम्भा विंशतिर्मण्डितास्तथा ॥"

इत्यादि ॥ ३८ ॥

भित्त्यलङ्काराणां विभागमाह — कुड्य इति । कुड्ये पङ्क्त्यादिभक्ते दशधाष्टधा वा भक्ते। विदिशि कोणेषु एकांशविस्तारायामम् एकांशेन विस्तारमायामं च कूटं विरचयेत् । दिशि दिशि चतसृषु दिक्षु । द्व्यंशदीर्घां द्व्यंशाभ्यां दीर्घाम् । एकभागेन विततां विस्तृतां शालां च । शालाकूटान्तराले शालाकूटयोर्मध्ये चरणविरहितांशोन्मितां पादोनांशमितां नासिकां च । तत्पार्श्वद्वन्द्वे नासिकयोः पार्श्वद्वन्द्वे चरणविरहितांशादितः पादोनांशादिना। सजालं जालमार्गसहितं पञ्जरं च । तथाच गुरुदेवः —

---

1. 'ठा' क. पाठः

**धाम्नोऽष्टांशमितोऽथवा प्रतिमुखैः स्तूप्यन्तिमैः संयुतः**
**प्रासादाकृतिकश्च कूट उदितो मध्यस्फुरन्नासिकः।**
**शाला तत्समसूत्रगा मुखपटीशक्तिध्वजाद्युज्ज्वला**
**स्तूपीत्रय्युपशोभिता परिलसन्नासा च सङ्कीर्तिता ॥ ४० ॥**
**दण्डैर्द्वित्रिचतुर्मितैर्मितवितानातानकं पञ्जरं**
**नासाद्युज्ज्वलितं च जालकमथो वेद्यूर्ध्वतः संस्थितम्।**

---

"कर्णमध्येऽन्तरे भित्तेरथवा मानसूत्रतः।
निर्गतैरुक्तमानेन कूटकोष्ठकपञ्जरैः॥
गजपृष्ठादिभिश्चोक्तैः कुर्यादवयवैर्युतम्।"

इति ॥ ३९ ॥

कूटादीनां लक्षणमाह — धाम्न इति। अथवा तत्र धाम्नो गृहस्याष्टांशमितः प्रासादाकृतिकः प्रासादवदाकारेण युक्तः। तत्र प्रतिमुखैः स्तूप्यन्तिमैः प्रतिमारभ्य स्तूपीपर्यन्तैरवयवैः संयुतः। मध्यस्फुरन्नासिकः मध्ये स्फुरन्त्या नास्या युक्तश्च कूट उदितः। तत्समसूत्रगा कूटसूत्रस्था। मुखपटीशक्तिध्वजाद्युज्ज्वला मुखपट्या शक्त्या ध्वजादिभिश्चोज्ज्वला स्तूपीत्रय्युपशोभिता स्तूपिकात्रयेणोज्ज्वला च परिलसन्नासा च परितो लसन्तीभिर्नासीभिश्चोज्ज्वला शाला संकीर्तिता। तथाच गुरुदेवः —

"कूटोऽष्टांशेन सद्मनः।
शाला च तावती रम्या विस्तारद्विगुणायता।
कर्णाश्रितं मध्यमैकनासिकं स्तूपिकान्वितम्॥
प्रासादावयवं प्राज्ञाः कूटं नाम प्रचक्षते।
सायतं समुखपट्टिकमर्धस्पष्टकोटियुतमध्यमनासम्।
शक्तिमद्ध्वजमपि त्रिशिखं तत् पार्श्वयोर्बहुशिखं खलु कोष्ठम्॥"

शिखाशब्देन स्तूपिकोच्यते कोष्ठमिति शाला च ॥ ४० ॥

पञ्जरजालकयोर्लक्षणमाह — दण्डैरिति। द्वित्रिचतुर्मितैर्दण्डैर्मितवितानातानकं द्व्यादिदण्डैर्मितविस्तारदैर्घ्यं नासाद्युज्ज्वलितं नासादिभिरुज्ज्वलितं च पञ्जरं कर्तव्यं स्यात्। अथो जालकं वेद्यूर्ध्वतः वेदेरूर्ध्वभागे संस्थितम्। तत्तु

---

१. 'दी', २. 'श्चा' ख. पाठः.

**दण्डैर्द्व्यादियुगान्तिमैस्ततमतो दण्डर्द्धितश्चायतं**
**कर्तव्यं द्विगुणान्तिमं सुषुरितं गोमूत्रकादिक्रमात् ॥ ४१ ॥**
**स्तम्भान्तरे महति धामनि पादविस्ता-**
**रोच्चाधिपादततपद्मगकुम्भसंस्थाम् ।**

---

द्व्यादियुगान्तिमैः द्व्यादिचतुरन्तैर्दण्डैः ततं विस्तृतम् । अतो विस्ताराद् दण्डर्द्धितो द्विगुणान्तिममायतं गोमूत्रकादिक्रमात् सुषिरितं कृतसुषिरं च कर्तव्यम् । पराशर आह —

"द्वाभ्यां त्रिभिश्चतुर्भिर्वा कुड्यस्तम्भेऽस्तु पञ्जरम् ।
मुखे शालामुखे चैकस्तूपिकं हस्तिपृष्ठवत् ॥
पञ्जरं नाम तत्प्रोक्तम्"

इति । तथाच काश्यपः —

"द्विदण्डं कन्यसव्यासं त्रिदण्डं मध्यमं भवेत् ।
चतुर्दण्डविशालं तु उत्तमं परिकीर्तितम् ।
विस्तारसदृशोत्सेधादेकदण्डविवर्धनात् ।
विस्तारद्विगुणं यावत् तावद् वै जालकोन्नतम् ॥"

इति ॥ ४१ ॥

कुम्भलताख्यमलङ्कारविशेषमाह — **स्तम्भान्तर** इति । महति धामनि समन्तात् स्तम्भान्तरे पादविस्तारोच्चाधिपादततपद्मगकुम्भसंस्थां स्तम्भविस्तारोच्चं सपादस्तम्भविस्तारततं च पद्मं कृत्वा तद्गतं कुम्भं तत्सदृशं च कृत्वा तस्मादुद्गतां पादायतां स्तम्भपर्यन्तदीर्घां घटमुखोद्गतपत्रचित्रमूलां घटस्य मुखादुद्गतैः पत्रैर्विचित्रमूलां कुम्भलतां प्रकल्पयतु । तथा काश्यपीये —

"स्तम्भमूले तु चेद्यूर्ध्वे पद्मासनं प्रकल्पयेत् ।
पादव्याससमुत्तुङ्गं सपादं पद्मविस्तरम् ॥
पद्मोच्चं वसुधाभज्यकम्पमेकांशमुच्यते ।
अधःपद्मं गुणांशं तु एकांशं गलमुच्यते ॥
ऊर्ध्वपद्मं द्विभागं तु कम्पमेकेन कल्पयेत् ।
तदूर्ध्वे कुम्भतुङ्गं तु पद्मस्योच्चसमं भवेत् ॥"

इति ॥ मञ्जर्यां च —

पादायतां घटमुखोद्गतपत्रचित्र-
मूलां प्रकल्पयतु कुम्भलतां समन्तात् ॥ ४२ ॥

भङ्क्त्वा प्रत्युत्तरान्तर्गतचरणमितिं भोगिभिर्भागतोऽधो
वेदिं वेदैश्च पादान् दलरचितवलभ्युत्तरं भागतोऽथ ।
यावत्स्वोत्सेधनीप्रप्रसरवलभितः स्वार्हनीप्रं कपोतं
गेहेऽल्पे सप्तमेनोज्ज्वलपदगृहपिण्डिं करोत्वष्टमेन ॥ ४३ ॥

खण्डोत्तरं चरणविस्तृतितुल्यविस्ता-
रोत्सेधमुत्तममतश्चरणोनतीव्रम् ।

---

"प्रत्युत्तरान्तरसमां विदधीत सम्यक् पादाधिकामपि च कुम्भलतामतोऽपि" इति ॥ ४२ ॥

अल्पगेहे विशेषकल्पनमाह—भङ्क्त्वेति । प्रत्युत्तरान्तर्गतचरणमितिं प्रतेरुत्तरस्य चान्तर्गतं स्तम्भमानं भोगिभिरष्टधा भङ्क्त्वा अधः एकभागतो वेदिकां वेदैश्चतुर्भागैः पादान् अथैकभागतो दलरचितवलभ्युत्तरम् अर्धेन रचितया वलभ्या सह मृन्मयोत्तरम् अथ सप्तमेन भागेन यावत्स्वोत्सेधनीप्रप्रसरवलभितः यावान् स्वोत्सेधस्तावता नीप्रप्रसरेण युक्तया वलभ्या उपरि स्वार्हनीप्रं स्वयोग्यनीप्रयुक्तं कपोतम् अष्टमेन भागेन उज्ज्वलपदगृहपिण्डिम् उज्ज्वलैः स्तम्भैर्युक्तां गृहपिण्डिं च करोतु ॥ ४३ ॥

उत्तरमाह—खण्डोत्तरमिति । चरणविस्तृतितुल्यविस्तारोत्सेधं स्तम्भविस्तृत्या तुल्याभ्यां विस्तारोत्सेधाभ्यां युक्तं खण्डोत्तरमुत्तमं स्यात् । अतः खण्डोत्तरात् चरणोनतीव्रं पादोनघनं पत्रोत्तरं मध्यमम् । दलविहीनघनम् अर्धेन विहीनघनं रूपोत्तरं कनिष्ठं च । घनतती विपरीततो वेति चूलिकास्थापनमुच्यते । तत्र घनतती तीव्रविस्तारौ विपरीततो व्यत्यासेन स्याताम् ।

थाच गुरुदेवः—

"उत्तरं विन्यसेदूर्ध्वं तच्चापि त्रिविधं मतम् ।
खण्डोत्तरं पत्रबन्धं ततो रूपोत्तरं भवेत् ॥
स्तम्भविस्तारविस्तीर्णमुन्नतं चाङ्घ्रिजातिजम् ।
खण्डोत्तरं स्यादेतस्मात् पादोनं पत्रबन्धकम् ॥

**पत्रोत्तरं दलविहीनघनं कनिष्ठं**
**रूपोत्तरं घनतती विपरीततो वा ॥ ४४ ॥**

**उत्सेधे विशिखांशिते द्वितयतो रूपोत्तरे वाजनं**
**षड्भक्तेऽल्पमिलांशतो द्वितयतो वा स्यान्महावाजनम् ।**
**एतन्निर्गमनं निजांशविहितं न्यस्येदुपर्युत्तर-**
**स्यैतत्तीव्रसमुच्छ्रयोच्छ्रयदलांशव्याततां पट्टिकाम् ॥ ४५ ॥**

**एकाङ्घ्र्यूनादिदण्डोच्छ्रितमुपरि निधायोत्तरे वाजनं प्राक्**
**तिर्यग्दण्डोच्छ्रिताङ्घ्र्यूनितविततितुलास्तासु वंशानुवृत्त्या ।**

---

स्तम्भव्याससमोत्सेधमुत्सेधार्धेन विस्तृतम् ।
विपरीतं तु वा नीचं रूपोत्तरमिदं भवेत् ॥ "

इति ॥ ४४ ॥

रूपोत्तरे वाजनविन्यासमाह — उत्सेध इति । रूपोत्तरस्योत्सेधे घने विशिखांशिते पञ्चांशिते द्वितयतो द्व्यंशेन वाजनं स्यात् । अथवा षड्भक्ते इलांशत एकांशेनाल्पं वाजनम् । द्वितयतो महावाजनं च । एतन्निर्गमनं वाजननिर्गमनं निजांशविहितं निजांशेन कल्पितं स्यात् । पुनरुत्तरस्योपरि एतत्तीव्रसमुच्छ्रयोच्छ्रयदलांशव्याततां उत्तरतीव्रसमुच्छ्रयाम् उच्छ्रयार्धविस्तीर्णां पट्टिकां न्यसेत् । तथाच गुरुदेवः —

"उत्तरोच्छ्रयषड्भागत्रिभागं घनमानकम् ।
एकांशं वाजनोत्सेधं द्व्यंशं चैवार्धवाजनम् ॥" ॥ ४५ ॥

फलकाप्रस्तरेणाच्छादनक्रममाह — एकाङ्घ्र्यूनेति । एकाङ्घ्र्यूनादिदण्डोच्छ्रितं वाजननामानं प्राक्पूर्वमुत्तरे निधाय पुनर्दण्डोच्छ्रिताङ्घ्र्यूनितविततितुलाः दण्डोच्छ्रितास्तदङ्घ्र्यूनविततीस्तुलास्तिर्यग् निधाय तासु तुलासु वंशानुवृत्त्या उत्तरानुसारेण स्वार्धाक्रान्ताः स्वार्धेनाक्रान्ता जयन्तीर्निधाय तदुपरि अनुमार्गं कृत्वा स्थापयित्वा सुसमीकृत्य स्वोचितघनफलकाप्रस्तरेण स्वयोग्यघनानां फलकानां प्रस्तरेणोर्ध्वभागं निश्छिद्रं छादयेत् । तथाच गुरुदेवः —

---

१. 'म् । निबन्धनं च फ' क. ख. ग. पाठः.

**स्वार्धाक्रान्ता जयन्तीस्तदुपरि सुसमीकृत्य कृत्वानुमार्गं**
**निश्छिद्रं छादयेत् स्वोचितघनफलकाप्रस्तरेणोर्ध्वभागम् ॥**

**द्वारार्धतः कदलिकाकरणेन गर्भ-**
**कुड्यं क्रमान्मुकुलयेदथवा शिलाद्यैः ।**
**द्वारोर्ध्वतोऽष्टपुटचारुलसत्तरङ्ग-**
**गर्भार्धतुङ्गमपिधानशिलाभिरामम् ॥ ४७ ॥**

---

"उत्तरोपरि कुर्यात्तु वाजनं तस्य कथ्यते ।
त्रिचतुष्पञ्चदण्डानामायामस्तस्य सम्मतः ॥
स्तम्भविस्तारपादं वा त्रिपादं वोच्छ्रितं भवेत् ।
दण्डोच्चं वा त्रिपादं वा वाजनं पूर्ववत् स्मृतम् ॥"

इति । निबन्धने च —

"दण्डतीव्राश्च पादोनबहलास्तिर्यगुत्तरे ।
न्यसेद् भारतुला रम्या जयन्तीश्चानुवंशतः ॥
तत्पार्श्वेष्वनुमार्गाः स्युर्दण्डार्धेनार्धतीव्रकाः ।
प्रस्तरस्तेषु दण्डोच्चश्चित्रतोऽधस्तले समः ॥"

इति । गुरुदेवश्च —

"वाजनस्योपरिष्टात्तु कुर्याद्भारतुलावलीः ।"

इत्यादि ॥ ४६ ॥

पक्षान्तरेण शिलादिभिराच्छादनक्रममाह — **द्वारार्धत** इति । द्वारार्धतो द्वारार्धात् कोणत आरभ्य[1] कदलिकाकरणेन उपर्युपर्यन्तरन्तः[2] प्रवेशनं कदलिकाकरणं, तेन । गर्भकुड्यं गर्भगृहे कुड्यं क्रमाच्छिलाद्यैः शिलादिभिरिष्टकादिभिर्वा मुकुलयेत् मुकुलीकुर्याद्वा । द्वारोर्ध्वतः द्वारोर्ध्वभागे तु अष्टपुटचारुलसत्तरङ्गम् अष्टपुटाश्रितैश्चारुभिः शोभमानैस्तरङ्गैर्युक्तं गर्भार्धतुङ्गं गर्भार्धेन तुङ्गम् अपिधानशिलाभिरामं उपर्याच्छादनशिलया मनोरमं च । तथाहुः[3] —

"द्वारार्धात् कदलीकारं द्वारसीमान्तमर्धपुटम् ।
गर्भार्धं कदलिकोत्सेधमथ पूर्णेष्टकं भवेद् ॥" इति ॥ ४७ ॥

---

१. 'भ्यारभ्य क', २. 'तः', ३. 'ह' क. पाठः.

**कुर्यादुत्तरपट्टिकोपरि लुपाः कूटप्रविष्टाग्रकाः**
**स्वस्वांशाहितकर्णसूत्रकमिता मध्यादिकर्णावधि ।**
**स्तम्भोच्चे शरशैलनन्दनयनैर्भक्ते चतुर्धोत्तरात्**
**तासां स्यादवलम्बनं नयनवह्नयब्ध्युर्वरांशैः क्रमात् ॥ ४८ ॥**
**अष्टांशकादिकृशविस्तृतिपावकांश-**
**तीव्रा च नीप्रफलकोत्तरतो लुपानाम् ।**
**द्वित्र्याङ्गुलादिविततं चतुरश्ररूपं**
**कर्तव्यमासु वलयं च निजानुरूपम् ॥ ४९ ॥**

---

शिखरनिर्माणविधिमाह—**कुर्यादिति** । उत्तरपट्टिकोपरि उत्तरस्थितायाः पट्टिकाया उपरि कूटप्रविष्टाग्रकाः कूटे प्रविष्टेनाग्रभागेन युक्ताः स्वस्वांशाहितकर्णसूत्रकमिताः स्वस्वांशतः कूटसूत्रपर्यन्तस्य भुजासूत्रं यावत् तावन्मानेन सूत्रेण चतुरश्रं कृत्वा तत्कर्णसूत्रामिता लुपा मध्यादिकर्णावधि कुर्यात् । निजाङ्कोर्ध्वाङ्कोत्तरमध्यकर्णगतवाहाः(?)कूटकर्णोन्मिता इति पाठेऽप्येवमेवार्थो ग्राह्यः । स्तम्भोच्चे शरशैलनन्दनयनैः पञ्चधा सप्तधा नवधा द्वेधा वा भक्ते क्रमाद् नयनवह्नयब्ध्युर्वरांशैः द्वित्रिचतुरेकांशैश्चतुर्धा उत्तरात् तासां लुपानामवलम्बनम् अधोगमनं स्यात् । तथा निबन्धने—

"मध्यादारभ्य कर्णान्तमनन्तरलुपाक्रमात् ।
स्वैः स्वैः कर्णस्थितैः सूत्रैर्लुपानां मानमादिशेत् ॥"

इति । तथाच मञ्जर्याम्—

"पञ्च द्विभागमथ सप्तभिदि त्रिभागं पादस्य चार्धमिति (तत्) त्रिविधं लुपान्तम्"

इति ॥ ४८ ॥

नीप्रफलकादिकमाह—**अष्टांशकादीति** । उत्तरतः उत्तराद् अष्टांशकादिकृशविस्तृतिपावकांशतीव्रा अष्टांशकादिना कृशविस्तारा त्र्यंशेन घना च नीप्रफलका नीप्रस्थानगता फलका स्यात् । आसु लुपासु द्वित्र्याङ्गुलादिविततं द्व्यङ्गुलत्र्यङ्गुलादिविस्तृतं चतुरश्ररूप निजानुरूपं द्वित्र्यादिसंख्यावशाद् यथायोग्यं वलयं कर्तव्यं स्यात् । तथाहुः—

---

१. 'ह्र' ख. पाठः.　　२. 'र्शा', ३. 'ता', ४. 'त' मूलपाठः.

**शाकाद्युत्तमदारुक्लृप्तफलकैरेताः समन्ताल्लुपाः**
**सञ्छाद्योपरि ततिपधानफलकां कृत्वोल्लसत्कीलकाम् ।**
**वास्त्वाधारसमोन्नतां प्रथिततत्पाथोजकुम्भादिकां**
**विन्यस्येन्नवपुण्डरीकमुकुलाग्रामूर्ध्वतः स्तूबिकाम् ॥ ५० ॥**
**वर्षातपादिवारणकल्यैः शुल्बादिकल्पितैः फलकैः ।**
**सारेष्टकादिभिर्वा विमानशिखरं ततः सुपिदधातु ॥**
**अल्पे धामनि विस्तृतिद्विगुणितप्रायोच्छ्रयेऽष्टांशिते**
**मूलांशेन मसूरकोच्छ्रयमथ स्तम्भोच्छ्रयं द्व्यंशतः ।**

---

"स्यादङ्गुलत्रयमितं वलयं द्व्यङ्गुलं चाप्यर्धमङ्गुलमिति त्रिविधं लुपानाम् ।" इति ॥ ४९ ॥

लुपानामुपरिगतावयवमाह — शाकादीति । एता लुपाः शाकाद्युत्तमदारुक्लृप्तफलकैः शाकादिभिरुत्तमवृक्षक्लृप्तफलकैः समन्तात् , शाको जातिवृक्षः, सर्वतः संछाद्य । तदुपरिभागे ततिपधानफलकाम् अवसानफलकाम् । उल्लसत्कीलकाम् ऊर्ध्वभागोद्गतकीलयुक्तां च कृत्वा । तदूर्ध्वतो वास्त्वाधारसमोन्नताम् अधिष्ठानसमोच्छ्रयाम् । प्रथिततत्पाथोजकुम्भादिकां प्रकाशितपद्मकुम्भादिकाम् । नवपुण्डरीकमुकुलाग्रां नवीनपद्ममुकुलवदग्रभागयुक्तां स्तूबिकां विन्यस्येत् ॥ ५० ॥

ततो विमानशिखरं प्रासादोपरिप्रदेशम् । वर्षातपादिवारणकल्यैः वर्षातपहिमादिनिवारणक्षमैः । शुल्बादिकल्पितैः[1] ताम्रादिनिर्मितैः । फलकैः सारेष्टकादिभिर्वा सारैरिष्टकाविशेषैर्वा । पिदधातु[2] आच्छादयतु ॥ ५१ ॥

पक्षान्तरेण क्वचिदल्पप्रासादे नियममाह — अल्प इति । अल्पे धामनि विस्तृतिद्विगुणितप्रायोच्छ्रये विस्तारद्विगुणाद्युक्तोत्सेधे अष्टांशिते सति । मूलांशेन अधोगतांशेन । मसूरकोच्छ्रयम् अधिष्ठानोच्छ्रयं विरचयेत् । अथ तदुपरि ॱ ंशतः स्तम्भोच्छ्रयं, भूयोंऽशतः प्रस्तरं वक्ष्यमाणप्रस्तरोच्छ्रयम् , इलांशेन एकांशेन प्रक्लृप्तोच्छ्रयं गळं, भागाभ्यां शिखरोच्छ्रयम् , एकांशतः स्तूबिकां च विरचयेत् । तथाच गुरुदेवः —

---

1. 'तैः फ', 2. 'तु छाद' क. पाठः.

**भूयः प्रस्तरमंशतो गलमिलांशेन प्रक्लृप्तोच्छ्रयं**
**भागाभ्यां शिखरोच्छ्रयं विरचयेदेकांशतः स्तूपिकाम् ॥**
**स्तम्भार्धादिसमुच्छ्रये प्रकृतिभक्ते प्रस्तरे वातिधृ-**
**त्यंशे चोत्तरवाजने त्रिशशिभिर्भूतालिरंशैस्त्रिभिः ।**
**क्ष्माद्रीन्दुक्षितिभिः सवाजनकपोतालिङ्गपट्टयन्तरी-**
**स्त्र्येकांशैः प्रतिवाजने प्रतिकपोते क्ष्मांशहान्यावरे ॥**

"उच्छ्रयेऽथाष्टधा भक्ते स्यादधिष्ठानमंशतः ।
स्तम्भोत्सेधस्तु भागाभ्यां प्रस्तरश्चैकभागतः ॥
कण्ठश्चांशेन शिखरं द्वाभ्यां स्तूपी तथांशतः ।
एवं धामैकतलकं द्वितलं च समूहयेत् ॥"

इति ॥ ५२ ॥

तत्र प्रस्तरस्य विभागमाह —**स्तम्भार्धादी**ति । स्तम्भार्धादिसमुच्छ्रये स्तम्भार्धादिना प्रमाणेन कृतोत्सेधे प्रस्तरे । प्रकृतिभक्ते एकविंशतिधा कृते वा । अतिधृत्यंशे एकोनविंशतिधा[1] च वा कृते । त्रिशशिभिः त्र्यंशैरेकांशेन च । क्रमेण उत्तरवाजने मृन्मयोत्तरं तद्वाजनं च[2] । विरचयेदिति पूर्वश्लोकादायाति । त्रिभिरंशैर्भूतालिः । क्ष्माद्रीन्दुक्षितिभिः एकसप्तैकैकांशैः क्रमात् सवाजनकपोतालिङ्गपट्टयन्तरीः[3] वाजनसहितं कपोतमालिङ्गपट्टिमन्तरिं च । त्र्येकांशैः त्र्यंशैरेकांशेन च । प्रतिवाजने प्रतिं वाजनं च विरचयेत् । अवरे अधमे एकोनविंशतिधा कृते पक्षे । प्रतिकपोते प्रतिं कपोतं च । क्ष्मांशहान्या एकैकांशोनेन विरचयेत् । तथाहुः—

"अथ वक्ष्ये विशेषेण प्रस्तरस्य तु लक्षणम् ।
स्तम्भार्धमुच्चमानं वा आत्तोत्सेधांशमेव वा ॥
तदुच्चमेकविंशांशं कृत्वा गुणांशमुत्तरम् ।
वाजनं त्वेकभागेन भूतमालोन्नता त्रिभिः ॥
भूतमालोपरिष्टात् तु वाजनं त्वेकभागया ।
सप्तांशं तु कपोतोच्चमालिङ्गं त्वेकभागया ॥

१. 'धा वा' ख. पाठः. २. 'च स्यात । त्रि'. ३. 'भिः स' क. पाठः.

**इत्येकभूमौ चतुरश्ररूपे**
**सुरालयेऽल्पे विधिरभ्यधायि ।**
**अथाभिधास्ये द्वितलादिजाति-**
**च्छन्दादिवृत्तादिगतं विशेषम् ॥ ५४ ॥**

**त्र्याद्याशाकरपश्चिमं शशितलं बाणादिमार्ताण्डदोः-**
**पर्यन्तं द्वितलं हयादिनृपहस्तान्तं त्रिभूम्यन्वितम् ।**
**कुर्याद् धाम निजोचितोच्छ्रययुतं प्रोक्तोच्छ्रयेष्वेष्वतो**
**युक्त्या पाददलत्रिपादकरसंयोगक्षयौ च क्वचित् ॥५५॥**

अंशेनान्तरिकां कुर्यात् प्रत्युत्सेधं गुणांशकम् ।
वाजनं त्वेकभागेन अथवान्यप्रकारतः ॥
तुङ्गमेकोनविंशांशं कृत्वोत्तरं त्रिभागया ।
भागेन वाजनं कुर्यादन्यंशैर्वलभी भवेत् ॥
वाजनं त्वेकभागेन कपोतोच्चं रसांशकम् ।
आलिङ्गमानमंशेन अन्तरिं तु प्रकल्पयेत् ॥
प्रत्युत्सेधं द्विभागेन वाजनं त्वेकभागया ।"

इति ॥ ५३ ॥

इति उक्तप्रकारेण । एकभूमौ एकतले । चतुरश्ररूपे अल्पे सुरालये विधिः विरचनाकर्म । अभ्यधायि उक्तः । अथ द्वितलादिजातिच्छन्दादिवृत्तादिगतं विशेषम् अभिधास्ये वक्ष्ये ॥ ५४ ॥

तत्रैकतलद्वितलत्रितलानां नियममाह ---- त्र्यादीति । त्र्याद्याशाकरपश्चिमं त्रिकरादिदशकरान्तं धाम । शशितलं एकतलम् । बाणादिमार्ताण्डदोःपर्यन्तं पञ्चादिद्वादशकरान्तं द्वितलम् । हयादिनृपहस्तान्तं सप्तादिषोडशकरान्तं त्रिभूम्यन्वितं त्रितलयुक्तम् । निजोचितोच्छ्रययुतं पूर्वप्रोक्तोच्छ्रयसंयुक्तं धाम कुर्यात् । एषु प्रोक्तोच्छ्रयेषु उक्तोत्सेधेषु प्रासादेषु । युक्त्या औचित्येन । पाददलत्रिपादकरसंयोगक्षयौ करं वा त्रिपादं वा अर्धं वा पादं वा क्वचित् पक्षे संयोगं क्वचित् क्षयं वा कुर्यात् । तथाहुः —

"भूमिलम्भमिति प्रोक्तं त्रिचतुर्हस्तमानतः ।
द्विद्विहस्तविवृद्ध्यैकभूमेर्मानं चतुष्टयम् ॥

**आरूढभित्तिमुपचित्य लुपाग्रधानीं**
**युक्त्या तलान्तरविधौ प्रविधाय तस्याम् ।**
**बाह्योत्तराहितलुपा विनिवेश्य कृत्वा**
**तत्पट्टिकां च तलितेऽथ गलं विदध्यात् ॥ ५६ ॥**

**स्तम्भे प्राथमिकेऽनलादिशिवनिष्ठैरंशितेंऽशैः क्रमा-**
**न्नेत्राग्नित्रिगुणेषुशैलशरनागाङ्कोन्मितैः सम्मिता ।**

---

पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
द्वितले तु चतुर्मानं रुद्रभानुकरान्तकम् ॥
सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
पञ्चदशविकारान्तं त्रितले पञ्चमानकम् ॥"

इति । ग्रन्थान्तरे च —

"प्रत्युन्नतायतकरेषु च हस्तमाना-
द्धीनं त्रिपादकरमर्धमथापि पादम् ।
तत्रैव वास्तुनि यथोचितमाचरेद्वै
हानं च वर्धनमनिन्द्यमनेकशास्त्रे ॥"

इति ॥ ५५ ॥

तलान्तरविधिप्रकारमाह---- **आरूढेति** । तलान्तरविधौ आरूढभि-त्तिम[1] अन्तर्भित्तिम् । उपचित्य वर्धयित्वा । तत्र युक्त्या औचित्येन । लुपाग्रधानीं लुपाग्राणां धारणीं फलकां प्रविधाय । तस्यां बाह्योत्तराहितलुपाः बाह्योत्तरेषु स्थापिता लुपा विनिवेश्य । तत्पट्टिकां तदुपरिपट्टिकां च कृत्वा । तलिते तलीकृते अथ गलं विदध्यात् ॥ ५६ ॥

ग्रीवालक्षणमाह — **स्तम्भ** इति । प्राथमिके स्तम्भे[2] प्रथमस्तम्भे । अन-लादिशिवनिष्ठैः त्र्याद्येकादशान्तैरंशैरंशिते । क्रमाद् नेत्राग्नित्रिगुणेषुशैलशरनागा-ङ्कोन्मितैः द्वित्रित्रिपञ्चसप्तपञ्चाष्टनवभिरंशैः सम्मिता इति नवधा ग्रीवोक्ता ।

---

१. 'सु' इति मूलकोशपाठः. २. 'म्भे अ' क. पाठः.

**ग्रीवोक्ता नवधा ततोऽपि तलक्लृप्तौ पूर्वपूर्वाङ्घ्रितः**
**प्रोन्नेया च तदुन्नतिः प्रतितलं स्यात् प्रस्तरप्रक्रिया ॥ ५७ ॥**

**ग्रीवायामुपरि त्रिदण्डपरिशिष्टांशे चतुर्भाजिते**
**मूलांशं च तृतीयकं च दशधा तुर्यं च कृत्वांशकम् ।**
**आलिङ्गाह्वयपट्टिकां त्रिभिरुभाभ्यामन्तरिं पञ्चभिः**
**स्वद्व्यंशाहितवाजनां प्रतिमधःपङ्क्त्यंशके कल्पयेत् ॥**

**शालाकूटगवाक्षकादिरुचिरां भित्तिं द्वितीये तृती-**
**येंऽशे पञ्चभिरुत्तरं च वलभिं भूतद्विपाद्युज्ज्वलाम् ।**

---

ततोऽपि तलक्लृप्तौ पूर्वपूर्वाङ्घ्रितः पूर्वस्मात् पूर्वस्मात् स्तम्भात् । तदुन्नतिः तस्यास्तस्या ग्रीवाया उन्नतिः । प्रोन्नेया ज्ञेया । प्रतितलं तले तले च । प्रस्तरप्रक्रिया प्रस्तररचना च स्यात् । तथाहुः—

> "त्रिचतुष्पञ्चषट्सप्तभागेऽष्टांशे नवांशके ।
> दशैकादशभागे च दारुस्तम्भे यथाक्रमम् ॥
> द्वाभ्यां त्रिभिस्त्रिभिर्भागैस्त्रिभिर्वै पञ्चसप्तभिः ।
> पञ्चाष्टनवभिश्चैव नवग्रीवा विमानना ॥"

इति । तथाच मुरारिः—

> "त्रिकाद्येकादशान्तांशा दारुस्तम्भे द्व्यादिभिः ।
> कल्पयेन्नवधा ग्रीवा विमानानां विधानतः ॥"

इति ॥ ५७ ॥

ग्रीवायां प्रस्तरकल्पनामाह[1] द्वाभ्यां श्लोकाभ्याम् । ग्रीवायां ग्रीवाप्रदेशे उपरि । त्रिदण्डपरिशिष्टांशे त्रीन् दण्डान् विहाय शेषांशे । चतुर्भाजिते चतुर्धा कृते । मूलांशं तृतीयकमंशं[2] तुर्यं चतुर्थमंशं च दशधा कृत्वा । अधःपङ्क्त्यंशके अधोगजदशांशे । त्रिभिरंशैरालिङ्गाह्वयपट्टिकाम्, उभाभ्यामन्तरिं, पञ्चभिः स्वद्व्यंशाहितवाजनां स्वस्य द्व्यंशेन कृतवाजनां प्रतिं च क्रमात् कल्पयेत् ॥ ५८ ॥

द्वितीयेंऽशे शालाकूटगवाक्षकादिरुचिरां शालाभिः कूटैर्गवाक्षादिभिश्च सुन्दरां भित्तिं कल्पयेत् । तृतीयेंऽशे पञ्चभिरुत्तरं, पुनः पञ्चभिः भूतद्विपाद्यु-

---

१. 'द्व [illegible]भ्यामिति द्वा' घ. पाठः. २. 'शकं तु' ख. पाठः.

**तुर्येऽशे दशभिर्द्विक्लृप्त[illegible]पट्टयाढ्यं कपोतं ततः**
**सस्वाङ्घ्रिं गृहपिण्डमूर्ध्वनिहितैर्दण्डैस्त्रिभिः कल्पयेत् ॥**
**तले द्वितीये विदिशासु कूटान् दिशासु शालाश्च तदन्तरेषु।**
**नासीर्द्विशो वा रचयेद् दिशासु मूर्तीरजाद्याः शिखरे च**
**[नासीः ॥**

---

ज्ज्वलां वलभिं कल्पयेत् । पुनः तुर्येऽशे दशभिरंशैर्द्विक्लप्तमुखपट्टयाढ्यं द्व्यंशेन क्लप्तया मुखपट्ट्या युक्तं कपोतं कल्पयेत् । ततः ऊर्ध्वनिहितैः ऊर्ध्वभागे प्राक् त्यक्तैः त्रिभिर्दण्डैः । सस्वाङ्घ्रिं स्वपादैर्युक्तां गृहपिण्डं च कल्पयेत् । तथाच प्रयोगमञ्जरीव्याख्याने प्रद्योते 'त्रिंशद्भागविभक्तमि'त्यादिना ग्रीवालङ्कारमाह "भित्तेरुपरि त्रिदण्डं विहायाधश्चतुर्धा विभज्याधोंऽशं दशधा विभजेत् । द्वितीयभागं भित्तिसंज्ञं विधाय तदूर्ध्वद्वयं प्रत्येकं दशधा विभजेत् । अयं त्रिंशद्भागप्रकारः । प्रस्तरसंज्ञे तृतीयभागे भित्त्युपरि पञ्चभागेनोत्तरं विदध्यात् । पञ्चानां त्रिभागान्यन्तस्थितानि अन्तःप्रविष्टानि घनसंज्ञयोक्तानि । तदुपरि संश्लिष्टद्विभागं[2] वाजनं, तदुपरि पञ्चभागा वलभिरुपरिनिम्ना, तदुपरि चतुर्थे कपोतं दशभिर्बहिर्निम्नं, द्वाभ्यां मुखपट्टिर्दशभ्य एव, अधोदशकस्य त्रयेणालिङ्गपट्टिका, द्वाभ्याम् अन्तरिः, पञ्चभिः प्रतिर्भवेत् । प्रतेर्भाग एव द्वाभ्यां वाजनम्" इति ॥ ५९ ॥

द्वितीये तले विशेषेण भूषणान्याह — **तले द्वितीय** इति । । द्वितीये तले विदिशासु कूटान्, दिशासु शालाश्च, तदन्तरेषु शालाकूटयोर्मध्येषु द्विशो नासीर्वा रचयेत् । पुनर्दिशास्वजाद्या ब्रह्माद्या मूर्तीश्च, तदूर्ध्वगतशिखरे महानासीश्च रचयेत् । तथाच निबन्धने —

"ऊर्ध्वं कूटचतुष्कं च दिक्षु शालाचतुष्टयम् ।
नास्यः षोडश कर्तव्याः"

इति । तथाच —

"द्वितीयभूमौ संस्थाप्या दिक्षु दिङ्मूर्तयोऽथवा ।
ब्रह्मा वोमापतिः प्राच्यामाचक्षाणस्तु दक्षिणे ॥
प्रतीच्यां नरसिंहस्तु कृष्णः स्कन्दोऽथवोत्तरे ।"

इत्यादि ॥ ६० ॥

---

१. 'वि', २. 'रि प' ख. पाठः.

बाह्योत्तरेण रहिते विगतोर्ध्वकूटे
ग्रीवान्तरे निजगजांशकृशाग्रकुड्ये ।
न्यस्योत्तरं न्यसतु तत्र लुपास्तुलास्थ-
पादेषु लग्नशिरसश्चरणार्धलम्बाः ॥ ६१ ॥

प्रासादास्त्रितलादिभानुतलनिष्ठा जातयः स्थाणुसू-
र्याद्यैरोजसमैः करैः परिमिताश्चासप्ततेर्वर्धितैः ।
षोढा वह्नितलादयो ह्यधममध्यश्रेष्ठक्लृप्त्या पृथग्
व्यासाग्र्यंशगुणांशकाधिकसमुत्सेधाश्च ते प्रायशः ॥६२॥

---

मध्यमशिखराणां क्लृप्तिमाह — बाह्योत्तरेणेति । बाह्योत्तरेण रहिते बाह्योत्तरेण हीने । विगतोर्ध्वकूटे ग्रीवान्तरे निजगजांशकृशाग्रकुड्ये स्वाष्टांश-कृशे भित्त्यग्रे । उत्तरं न्यस्य तत्र तुलास्थपादेषु अन्तःस्थितासु तुलासु स्तम्भान् न्यस्य तेषु । लग्नशिरसः लग्नशिरांसि लुपाग्राणि च कृत्वा । चरणार्धलम्बाः उत्त-रात्-स्तम्भार्धमाननीचा लुपाश्च न्यसतु ॥ ६१ ॥

जात्यादिमहाप्रासादानां क्लृप्तिमाह — प्रासादा इति । त्रितलादि-भानुतलनिष्ठाः त्रिभूम्यादिद्वादशभूम्यन्ताः प्रासादाः जातय इति प्रसिद्धाः । ते च स्थाणुसूर्याद्यैः एकादशाद्यैर्द्वादशाद्यैश्च । करैरोजसमैः एकादशाद्योजकरै-र्द्वादशादिभिर्युग्मकरैश्च । आ सप्ततेः सप्ततिकरपर्यन्तं वर्धितैः करैः परिमिताश्च । वह्नितलादयः त्रितलादयः पृथग् ह्यधममध्यश्रेष्ठक्लृप्त्या प्रत्येकमोजयुग्मभेदा-दधममध्यमोत्तमभेदाच्च षोढा भवन्ति । ते पुनः प्रायशो व्यासाग्र्यंशगुणांश-काधिकसमुत्सेधाः व्यासस्य विस्तारस्य अग्र्यंशे सप्तांशे गुणांशाधिकेन [1]त्र्यंशा-धिकेनोत्सेधेन युक्ताश्च । सप्ततिकरे प्रासादे शतकर उत्सेध इत्यादिक्रमेणाव-गन्तव्या इत्यर्थः । तथा पितामह आह —

"हस्तसप्ततिविस्तारं शतहस्तोच्छ्रितं भवेत् ।
उत्तमं द्वादशतलं विमानं जातिरु[illegible]ं ॥
भवेन्नवतिषष्टिभ्यां त्र्युत्तराभ्यां यथाक्रमम् ।
उच्चविस्तारयोः श्रेष्ठमेकादशतलं गृहम् ॥

---

१. 'त्रि' क. पाठः.

**विश्वेन्द्राद्येषुषट्षष्ट्यसमसमकरैरब्धिभौमादयः स्यु-श्छन्दा हस्तैर्नवाशादिभिरिषुरसपञ्चाशदन्तैर्विकल्पाः ।**

---

उन्नतं चतुरशीत्या सप्तपञ्चाशदायतम् ।
श्रेष्ठं दशतलं धाम विज्ञेयं जातिसंज्ञितम् ॥
उच्छ्रितं पञ्चसप्तत्या चैकपञ्चाशदायतम् ।
नवभौमं विमानं तु विज्ञेयमतिशोभनम् ॥
षट्षष्ट्युच्चं तथा पञ्चचत्वारिंशत्समायतम् ।
हस्तानां कीर्तितं धाम जातिरष्टतलं शुभम् ॥
सप्तपञ्चाशदुत्तुङ्गं नवत्रिंशत्करायतम् ।
सप्तभौमं विमानं तु जात्यं सर्वफलप्रदम् ॥
त्रयस्त्रिंशत्करव्यासं चत्वारिंशद्भिरुत्तरैः ।
नवभिश्चोच्छ्रितं धाम षट्तलं परिकीर्तितम् ॥
नवत्रिंशत्करोत्तुङ्गं सप्तविंशत्करायतम् ।
पञ्चभौमं गृहं प्रोक्तं जातिभेदसमुद्भवम् ।
त्रिंशता चैकविंशत्या तुङ्गव्यासं चतुस्तलम् ॥
एकविंशत्करोत्तुङ्गं दशपञ्चकविस्तृतम् ।
त्रिभौमं भवनं प्रोक्तं मुख्यं जातिसमुद्भवम् ॥
एवं त्रितलमारभ्य यावद्द्वादशभूमिकम् ॥
उक्तमानात् प्रतितलं ह्रासयेद् द्विकरं क्रमात् ।
मध्यमानि विमानानि भवन्तीह दश क्रमात् ॥
मध्येभ्यो द्विकरह्रासात् कनिष्ठानि पृथक् क्रमात् ।
संभवन्ति विमानानि तिमिरारितलादिह ॥
अथवा युग्महस्तैस्तु षोडशादिक्रमेण तु ।
सप्तत्यन्तर्विमानानि त्रितलादीनि वै दश ॥''

इत्यादि ॥ ६२ ॥

छन्दप्रासादानां नियममाह — **विश्वेति** । **विश्वेन्द्राद्येषुषट्षष्ट्यसमसमकरैः** विश्वेन्द्राद्यैरिपुषट्षष्ट्यन्तैरसमसमकरैः त्रयोदशहस्तादिपञ्चषष्ट्यन्तैरोजकरैः चतुर्दशहस्तादिषट्षष्टिकरान्तैर्युग्मकरैर्युक्ताः **अब्धिभौमादयः**

**पञ्चक्ष्माद्याश्च सर्वे प्रतितलमृतुभिन्ना विवस्वत्तलान्ता**
**रुद्राद्यैकोनतानावधिभिरुदधिभूम्याद्यथाभाससंज्ञाः ॥**
**आभासेऽत्र चतुस्तलादिशिवभूम्यन्तं पृथग् वेदभे-**
**दाढ्यं द्वादशमन्तिमं ह्यधममध्यादिक्रमात् षड्भिदम्।**
**षष्टिर्जातिगृहे भिदाः करवशाच्छन्दे षडूनास्ततः**
**षट्कोनाश्च विकल्पधामनि तथाभासे दशोनास्ततः॥६४॥**

---

चतुस्तलादयः छन्दाः स्युः । विकल्पप्रासादानां नियममाह — हस्तैरित्यादिना । नवाशादिभिः नवदशादिभिः । इषुरसपञ्चाशदन्तैः नवादिपञ्चपञ्चाशदन्तैरोजसङ्ख्यैः दशादिषट्पञ्चाशदन्तैर्युग्मसंख्यैः हस्तैर्युक्ताः । पञ्चक्ष्माद्याः पञ्चतलादयो विकल्पाः स्युः । तेषां छन्दानां विकल्पानां च साधारणनियममाह — सर्व इत्यादिना । ते सर्वे प्रतितलम् ऋतुभिन्नाः षोढा भिन्नाः । विवस्वत्तलान्ताः द्वादशतलान्ताश्च स्युः । अथ आभासप्रासादानां नियममाह — रुद्राद्यैकोनेत्यादिना । रुद्राद्येकोनतानावधिभिः रुद्राद्यैरेकोनतानान्तैः तत्रैकादशहस्तादिसप्तचत्वारिंशद्धस्तान्तैरसमकरैः द्वादशहस्ताद्यष्टचत्वारिंशदन्तैः समकरैश्च युक्ताः । उदधिभूम्यादि चतुस्तलादिद्वादशतलान्तं यथा भवन्ति तथा आभाससंज्ञाश्च स्युः ॥ ६३ ॥

आभासप्रासादेषु प्रतितलं प्रासादानां भेदमाह — **आभासेऽत्रेति** । आभासे प्रासादे । चतुस्तलादिशिवभूम्यन्तं चतुस्तलाद्येकादशतलान्तम् । पृथक् प्रतितलम् । वेदभेदाढ्यं चतुश्चतुर्भेदयुक्तम् । अन्तिमं द्वादशतलं ह्यधममध्यादिक्रमाद् ह्यधममध्यमोत्तमक्रमेण । षड्भिदं षड्भिर्भेदैर्युक्तम् । पुनर्जात्यादीनां करवशाद् भेदा गण्यन्ते षष्टिरित्यादिना श्लोकशेषेण । जातिगृहे जातिप्रासादे । करवशात् षष्टिर्भिदाः भेदाः । छन्दे छन्दप्रासादे । ततः षडूनाश्चतुष्पञ्चाशत् । विकल्पधामनि विकल्पप्रासादे । ततः षट्कोनाः अष्टचत्वारिंशत् । आभासे ततो दशोनाः अष्टत्रिंशद्भेदाः स्युः । तथाच काश्यपीये —

"छन्दमानमथो शृणु ।
त्रिचतुर्दशहस्तादिद्विद्विहस्तविवर्धनात् ॥
पञ्चषट्षष्टिहस्तान्तं व्यासं वै सप्तविंशतिः ।
वेदभूमिं समारभ्य भानुभूमावसानकम् ॥
अधमं मध्यमोत्कृष्टं मानानि स्युस्तलं प्रति ।

**स्वाभीष्टमाने दशयुक्तसप्तशतांशिते विश्वलसच्छतांशः।**
**यस्तेन मानेन परिभ्रमय्य वृत्तात्मकं वेश्म समातनोतु ॥**
**नाहार्धमानप्रचये हरिद्भिर्भक्तेऽर्णवांशैर्विततिं तनोतु ।**
**आयाममंशैर्ऋतुसंमितैश्च तुर्यश्रदीर्घस्य सुरालयस्य ॥ ६६ ॥**

---

सप्ताष्टादशहस्तादि त्रित्रिहस्तविवर्धनात् ॥
पञ्चषण्णवतिर्यावदुच्चं प्रागिव सङ्ख्यया ।
छन्दमेवं समाख्यातम्"

इति । तथा विकल्पप्रासादमधिकृत्य काश्यपः —

"विकल्पमधुना शृणु ।
नवपङ्क्तिकरात् पञ्चषट्पञ्चाशत्करान्तकम् ॥
द्विद्विहस्तविवृद्ध्या तु चतुर्विंशतिसङ्ख्यया ।
पञ्चभूमिं समारभ्य यावदर्कतलान्तकम् ॥
अधमं मध्यमोत्कृष्टं त्रयो भेदास्तलं प्रति ।
सप्ताष्टादिकपङ्क्त्यादि त्रित्रिहस्तविवर्धनात् ॥
षट्सप्ताधिकाशीत्यन्तमुच्चं प्रागिव सङ्ख्यया ।"

इति । आभासप्रासादमधिकृत्य पितामहः —

"एकादशकरांसप्तचत्वारिंशत्करातते[2] ।
द्विहस्तवर्धनात् प्राग्वदूनविंशतिसंख्यया ।
चतुर्भौमादार्कभौममाभासाख्यानि तानि वै" ॥ ६४ ॥

अथ वृत्तादिप्रासादानां क्लृप्तिमाह — **स्वाभीष्टमान** इति । स्वाभीष्टमाने स्वाभीष्टस्य प्रासादस्य माने । विस्तारायामराशौ दशयुक्तसप्तशतांशिते दशयुतेन सप्तशतसंख्येनांशिते भेदिते सति । तेषु विश्वलसच्छतांशः त्रयोदशयुतशतांशो यः तेन मानेन परिभ्रमय्य वृत्तीकृत्य वृत्तात्मकं वृत्तस्वरूपं वेश्म प्रासादं समातनोतु ॥ ६५ ॥

चतुरश्रदीर्घस्य प्रासादस्य क्लृप्तिमाह — **नाहार्धेति** । तुर्यश्रदीर्घस्य दीर्घचतुरश्रस्य । सुरालयस्य प्रासादस्य । नाहार्धमानप्रचये स्वपरिधेरर्धे हरिद्भिः दशभिर्भक्ते । अर्णवांशैः चतुरंशैर्विततिं तनोतु । ऋतुसम्मितैः षडंशैरायामं च ॥ ६६ ॥

---

१. 'रान्' ङ. पाठः. २. 'तेः' घ. 'तैः' ङ. पाठः.

स्वाभीष्टे परिणाहमाननिचये धाम्नश्चतुःषष्टिभा-
गोनेऽष्टादशधा कृतेऽर्णवमितैरंशैः पृथक् कल्पयेत् ।
पार्श्वद्वन्द्वसमायती मुखततिं च द्व्यंशसूत्रभ्रमात्
प्रायः साङ्घ्रिरसांशनाहमपि पृष्ठं हस्तिपृष्ठात्मनः ॥

भागद्वये द्विरदपृष्ठसमुक्तनीत्या
वृत्तीकृते तदुभयान्तरभागदैर्घ्यम् ।
स्वेध्मांशतो विरहितेन गुणांशकेन
वृत्तायते वितनुयात् सुरवर्यधिष्ण्ये ॥ ६८ ॥

षोढा विभज्य निजवाञ्छितमानराशि-
मंशायतानि परिकल्प्य षडश्रकाणि ।
कुर्याद् गृहं रसपुटं द्विगुणांशमानो
व्यासोंऽशितेऽत्र तिथिभिर्नयनांशहीनः ॥ ६९ ॥

---

हस्तिपृष्ठप्रासादस्य कॢप्तिमाह — स्वाभीष्ट इति । हस्तिपृष्ठात्मनो धाम्नः हस्तिपृष्ठप्रासादस्य । स्वाभीष्टे परिणाहमाननिचये स्वाभीष्टप्रासादस्य परिधौ । चतुष्षष्टिभागोने परिवृत्तस्य चतुष्षष्टिभागं त्यक्त्वा । शिष्टे अष्टादशधा तु कृते । अर्णवमितैः चतुर्भिरंशैः पृथक् पार्श्वद्वन्द्वसमायती मुखततिं च पार्श्वद्वयदैर्घ्यं मुखविस्तारं च कल्पयेत् । पुनः पृष्ठे द्व्यंशसूत्रभ्रमात् प्रायः साङ्घ्रिरसांशनाहं सपादषडंशपरिधियुक्तं पृष्ठं च कल्पयेत् ॥ ६७ ॥

वृत्तायतप्रासादक्लृप्तिमाह — भागद्वय इति । वृत्तायते सुरवर्यधिष्ण्ये प्रासादे । भागद्वये द्विरदपृष्ठसमुक्तनीत्या हस्तिपृष्ठोक्तप्रकारेण वृत्तीकृते । तदुभयान्तरभागदैर्घ्यं वृत्तद्वयस्य मध्यगतं दैर्घ्यम् । स्वेध्मांशतो विरहितेन स्वस्य नाहस्यैकविंशत्यंशतो रहितेन । गुणांशकेन त्रिभागेन वितनुयात् ॥ ६८ ॥

षट्कोणप्रासादमाह — षोढा विभज्येति । निजवाञ्छितमानराशिं निजेष्टप्रासादपरिणाहं षोढा विभज्य । अंशायतानि एकैकांशदीर्घाणि । षडश्राणि परिकल्प्य रसपुटं षट्पुटात्मकं गृहं कुर्यात् । अत्र षट्कोणप्रासादे । तिथिभिः पञ्चदशभिः । अंशिते नाहे नयनांशहीनो द्व्यंशहीनः । द्विगुणांशमानो व्यासः दण्ड इत्यर्थः ॥ ६९ ॥

---

१. 'ष' इति मूलकोशपाठः. २. 'त' घ. ङ. पाठः.

स्वाभीष्टनाहे दशधा विभक्ते
व्यासस्त्रिभागैर्द्विषडंशितेऽस्मिन् ।
व्यासे शरांशैर्विहितायतांस्त-
दश्रींश्च कुर्याद् वसुकोणधाम्नः ॥ ७० ॥

मूलाद्याशिखरं युगाश्ररचितं गेहं स्मृतं नागरं
ग्रीवाद्याशिखरक्रियं षडुरगाश्रोद्भेदितं द्राविडम् ।
मूलाद्वा गलतोऽथवा परिलसद्वृत्तात्मकं वेसरं
तेष्वेकं पृथगात्तलक्ष्मसु विदध्यादात्मनः सम्मतम् ॥

नेत्रेषुसप्तदशभानुभिरादिधाम्न-
स्तारं विभज्य विधुलोकयुगाङ्गभूतैः ।
विस्तारमत्र रचयेन्मुखमण्डपस्य
पादोनमर्धमथवा सममस्य दैर्घ्यम् ॥ ७२ ॥

---

अष्टाश्रप्रासादक्लृप्तिमाह — स्वाभीष्टेति । वसुकोणधाम्नः अष्टाश्र-प्रासादस्य । स्वाभीष्टनाहे स्वस्य परिधौ । दशधा विभक्ते त्रिभागैर्व्यासो दण्डः । अस्मिन् व्यासे । द्विषडंशिते द्वादशधा कृते । शरांशैः पञ्चांशैः । विहितायतान् कृतदीर्घांस्तदश्रींश्च कुर्यात् ॥ ७० ॥

चतुरश्रादिप्रासादानां नामानि कथयति — मूलादीति । मूलाद्याशि-खरम् अधिष्ठानादिशिखरावसानम् । युगाश्ररचितं चतुरश्ररूपेण कृतं गेहं नागरं स्मृतम् । ग्रीवाद्याशिखरक्रियं ग्रीवादिशिखरपर्यन्तम् । षडुरगाश्रोद्भेदितं षडश्र भेदितमष्टाश्रभेदितं च द्राविडं स्मृतम् । अथ मूलाद्वा गलतो वा परिलसद्वृ-त्तात्मकं वेसरं स्मृतम् । तेषु पृथगात्तलक्ष्मसु पृथक् पृथगुक्तलक्षणेषु मध्ये । आत्मनः स्वस्य सम्मतं विदध्यात् ॥ ७१ ॥

मुखमण्डपलक्षणमाह — नेत्रेति । आदिधाम्नो मूलप्रासादस्य तारं विस्तारं नेत्रेषुसप्तदशभानुभिः द्विधा पञ्चधा सप्तधा दशधा द्वादशधा वा वि-भज्य । अत्र क्रमेण विधुलोकयुगाङ्गभूतैः एकत्रिचतुःषट्पञ्चांशैः । मुखमण्डप-स्य विस्तारं रचयेत् । अस्य मुखमण्डपस्य विस्तारस्य । तत्पादोनं तदर्धं तत्समं वा दैर्घ्यं च रचयेत् ॥ ७२ ॥

**दण्डेऽर्धेऽन्तर्गतं मण्डलमवनिमितेऽर्धान्विते वान्तहारा**
**दोःसङ्ख्ये मध्यहारा जलधिपरिमिते बाह्यहाराद्रिसङ्ख्ये ।**
**मर्यादा मूलधाम्नः प्रथमचरमवर्जं मुखायामयुक्ताः**
**प्राकाराः पञ्च कार्याः स्युरिह चरमसीमैकविंशेऽपि वा स्यात् ॥**
**प्रासादस्योत्तरसमवधेर्जागतान्तस्य वा स्याद्**
**व्यासो दण्डस्त्रिविध उदितः पादुकान्तस्य वात्र ।**

---

पञ्चप्राकाराणां विभागमाह — **दण्डेऽर्धे** इति । मूलधाम्नो मूलप्रासादाद् अर्धे दण्डे गते सति । अन्तर्गतं मण्डलमष्टमूर्तीनां स्थानं स्यात् । अवनिमिते एकदण्डे । अर्धान्विते सार्धैकदण्डे वा अन्तहारा स्यात् । दोस्संख्ये द्विदण्डे मध्यहारा । जलधिपरिमिते चतुर्दण्डे बाह्यहारा । अद्रिसंख्ये सप्तदण्डे मर्यादा च । इह चरमसीमा महामर्यादा । सापि एकविंशे दण्डे वा स्यात् । एते पञ्च प्राकाराः प्रथमचरमवर्जं प्रथममन्तर्गतमण्डलं चरमं महामर्यादां च वर्जयित्वा मुखायामयुक्ताः कार्याः स्युः । तथाच विष्णुसंहितायाम् —

> "अन्तर्मण्डलदण्डार्धे दण्डे स्यादन्तहारका ।
> मध्यहारा द्विदण्डा च चतुर्मर्यादभित्तिका ॥
> सप्तदण्डायता कार्या मर्यादा महती तथा ।"

इति । पाशुपते च —

> "सप्तसीमासमायुक्तं स्थानं सर्वदिवौकसाम् ।
> अन्तर्मण्डलमाद्यं स्याद् दण्डार्धे जगतीस्थलात् ॥
> तस्मादप्येकदण्डान्ते चान्तहारा गृहाद् बहिः ।
> मूलस्थानाद् द्विदण्डान्ते दीपशाला सुशोभना ॥
> नीचहारां ततः कुर्याद् दण्डार्धे भित्तिरुज्ज्वला ।
> मध्यहारा चतुर्दण्डे मर्यादा सप्तसंमिते ॥
> एकविंशतिदण्डान्ते महन्मर्यादभित्तिका ।"

इति ॥ ७२ ॥

दण्डलक्षणमाह — **प्रासादस्येति** । प्रासादस्योत्तरसमवधेः उत्तरावधेर्व्यासो दण्डः स्यात् । जागतान्तस्य वा जगतीपर्यन्तस्य व्यासो वा ।

**नेयश्चायं निजनिजपदात् सैकदण्डः सपादः**
**सार्धः साङ्घ्रित्रय इति मुखायाममानं समुक्तम् ॥ ७४ ॥**
**भक्तायामग्रभूमाविषुभिरिह बहिर्व्यंशकं त्र्यंशमन्तः**
**कृत्वान्तर्मण्डले दिक्परिवृढबलिपीठेषु तद्दण्डसीमा ।**
**प्राच्यावाच्याः स्वसूत्रेष्वितरदिगधिपाश्चालिताः किञ्चनातः**
**प्रादक्षिण्यान्मिथस्ते द्वितय इह महादिङ्मुखाः सम्मुखाश्च ॥**

---

पादुकान्तस्य पादुकपर्यन्तस्य व्यासो वा इति अत्र त्रिविधो दण्ड उदितः स्यात् । त्रिविधोऽप्ययं दण्डः निजनिजपदात् स्वस्वस्थानाद् नेयो गमयितव्यश्च । मुखायामनियममाह — सैकदण्ड इति । सैकदण्डः एकदण्डयुक्तः । सपादः पाददण्डयुक्तः । सार्धः अर्धदण्डयुक्तः । साङ्घ्रित्रयः त्रिपाददण्डयुक्त इति मुखायाममानं समुक्तम् । तथाहि विष्णुसंहितायां—

"मुखायामस्त्रिपादेन पादेनार्धेन वा स्मृतः"

इति । पाशुपते च —

"अर्धेन पादहीनेन समस्तेनोत्तरेण तु"

इति ॥ ७४ ॥

प्राकारान् प्रति दण्डावधिमाह — भक्तायामिति । अन्तर्मण्डले दिक्परिवृढबलिपीठेषु दिङ्नायकबलिपीठेषु । अग्रभूमौ अग्रस्थलयाम् । इषुभिः पञ्चभिर्भक्तायां बहिर्व्यंशकम् अन्तस्त्र्यंशकं कृत्वा तस्मिन् सूत्रे तद्दण्डसीमा तत्रस्थस्य दण्डस्यावसानं स्याद् । प्राच्यावाच्याः प्राग्भवा दक्षिणभवाश्च दिगधिपाः स्वसूत्रेषु । इतरदिगधिपाः पश्चिमभवाः उत्तरभवाश्च । अतः[1] स्वसूत्रात् प्रादक्षिण्यात् किञ्चन चालिताः गमिताः स्युः । ते द्वितयेऽपि महादिङ्मुखाः, न कोणाभिमुखाः, सम्मुखाः अन्योन्याभिमुखाश्च । तथा विष्णुसंहितायां —

" पूर्वास्त्वप्रतिचाल्याः स्युरितरास्त्वस्थिराः शुभाः ।
अन्योन्यं दक्षिणाक्षिभ्यामीक्षणं शस्यते बुधैः ॥"

इति । तथा[2] मञ्जर्यां च —

"अन्तर्मण्डलसीमान्ते लोकेशानां हि पीठिका ।

---

१. 'तः सू' ख. पाठः. २. 'था च म' ख. घ. पाठः.

अन्तर्मण्डलतो व्यतीत्य करमात्रं प्रार्चनामण्डपं
तुर्यश्रं समसूरकं निजमुखायामस्य वा मध्यतः ।
वेदस्तम्भभृतैकभारमथवा कुर्याच्चतुर्द्वादश-
स्तम्भद्व्युत्तरसंयुतं स्वमकुटाद्यालङ्क्रियालङ्कृतम् ॥

दण्डं स्वं समतीत्य भित्तिरुदिता बाह्यान्तहाराश्रिता
दण्डान्तो द्विविधस्तदुत्तरविभिन्नोऽग्रे सभाभेदतः ।
ज्वालासीमनि दीपधामनि तथान्तस्थोत्तरेऽन्तर्गते
प्राकारेऽथ बहिष्ठितोत्तरबहिः साले महीयस्यपि ॥ ७७ ॥

---

विरिञ्चस्येशपूर्वेण नैर्ऋत्यां पश्चिमोत्तरे ॥
अनन्तस्योत्तरे सोमात् कुबेरस्य "

इत्यादि ॥ ७५ ॥

पूजामण्डपं विधत्ते — अन्तर्मण्डलत इति । अन्तर्मण्डलतः करमात्रं व्यतीत्य वा निजमुखायामस्य निजमुखदैर्घ्यस्य मध्यतो वा प्रार्चनामण्डपं कुर्यात् । तुर्यश्रं चतुरश्रं च । समसूरकं साधिष्ठानं च । वेदस्तम्भभृतैकभारं चतुर्भिः स्तम्भैर्धृतैकोत्तरं च । अथवा चतुर्द्वादशस्तम्भद्व्युत्तरसंयुतम् अन्तश्चतुर्भिर्बहिर्द्वादशभिः स्तम्भैः तथा द्व्युत्तरेण च संयुतं च । स्वमकुटाद्यालङ्क्रियालङ्कृतं स्तूप्याद्यलङ्क्रियाभिः संयुतं च । तथाहुः —

"समं त्रिपादमर्धं वा प्रासादस्य तु मण्डपम् ।
पुरस्तादुक्तमानानां लत्रिद्व्येकतलं तु वा ॥
प्रासादतुल्यालङ्कारं तत्समाङ्गं च मण्डयेत् ।"

इति ॥ ७६ ॥

अन्तहारादिषु दण्डावसानस्य नियममाह — दण्डं स्वमिति । अन्तहाराश्रिता बाह्या भित्तिः स्वं दण्डं समतीत्योदिता । अग्रे सभाभेदतः सभाया भेदेन हेतुना । तदुत्तरविभिन्नः सभाया उत्तरभेदवशात् । दण्डान्तो दण्डसीमा द्विविध उदितः । दीपधामनि दीपशालायाम् । ज्वालासीमनि दीपज्वालाग्रे दण्डा-

पृष्ठे सपार्श्वद्वितये स्वमूलयोन्यन्वितं मण्डपमाकलय्य।
तुर्यश्रमातत्य ततोऽन्तराले तन्वीत संयोज्य मिथोऽन्तहा-
[राम् ॥ ७८ ॥

कृत्वा वंशं मुखायत्युपचितनिजदण्डस्थितं पार्श्वहारा-
भारासक्ताग्रमूलं प्रथितगुणविभागादिक्लृप्त्या विभज्य।
कृत्वा तद्भागतस्तद्वितितिमुचितयोन्याढ्यमन्योत्तराणि
न्यस्यारूढोत्तरादीन्यपि रचयतु तद्युक्तितोऽग्रे सभायाम्॥

स्वाभीष्टे समर्धिते गृहपरीणाहे स्ववंशप्रथा-
द्वन्द्वोने चतुरादियुग्मपरिसङ्ख्याभिर्विभक्ते समम्।

---

न्तः। तथान्तर्गते प्राकारे अन्तस्थोत्तरे प्राकारस्यान्तःस्थितोत्तरे दण्डान्तः। अथ महीयसि साले महामर्यादायाम्। बहिष्ठितोत्तरबहिः बहिष्ठितस्योत्तरस्य बहिर्भागे दण्डान्तः ॥ ७७ ॥

अन्तहाराक्लृप्तिमाह — पृष्ठ इति। सपार्श्वद्वितये पृष्ठे स्वमूलयोन्यन्वितं स्वस्त्रदिग्भवयोन्युपक्लृप्तं तुर्यश्रं मण्डपमाकलय्य कल्पयित्वा। आतत्य दीर्घीकृत्य अन्तराले मिथोऽन्योन्यं संयोज्यान्तहारां तन्वीत ॥ ७८ ॥

सभालक्षणमाह — कृत्वा वंशमिति। अग्रे अग्रभागे सभायाम्। मुखायत्युपचितनिजदण्डस्थितं मुखायामयुक्ताया अन्तहारायाः कल्पिते दण्डे स्थितम्। पार्श्वहाराभारासक्ताग्रमूलं पार्श्वहाराया भारे उत्तरे आसक्तयोर्मूलाग्रभागयोर्युक्तम्। वंशम् उत्तरं कृत्वा संस्थाप्य। उचितयोन्याढ्यं स्वदिग्भवयोनियुक्तं च कल्पयित्वा। प्रथितगुणविभागादिक्लृप्त्या प्रसिद्धेन गुणविभागादिना विभज्य। तद्भागतस्तदंशेन। तद्वितितिं तद्विस्तारं च कृत्वा। तथा तत्सादृश्यान्यन्योत्तराणि त्रीणि च न्यस्य पुनस्तद्युक्तितः आरूढोत्तरादीन्यपि रचयतु ॥ ७९ ॥

पादसूत्राख्यायाः सभाया विशेषमाह — स्वाभीष्ट इति। स्वाभीष्टे गृहपरीणाहे स्वयोनियुक्तस्य गृहस्य परिधौ। समं यथा तथा अर्धिते सति तत्र स्ववंशप्रथाद्वन्द्वोने स्वोत्तरविस्तारद्विगुणं विहाय। चतुरादियुग्मपरिसंख्याभिः

एकांशेन ततिं तनोतु परिशिष्टैराततिं चांशकै-
ऊनांशं परितः प्रपूरयतु चैवं पादसूत्रे क्रमः ॥ ८० ॥

प्रासादमध्याद् बहिरग्रतो गते
तदुत्तरोत्थे सदलद्विसङ्ख्यके ।
दण्डे त्रिसार्धत्रिशराङ्गसप्तके
स्वधाम्नि कुर्याद् बलिपीठिकां तथा ॥ ८१ ॥

पूजापीठसमं षडंशरहितं गर्भप्रतिप्रोन्मितं
प्रासादप्रतिसम्मितं च बलिपीठेऽञ्जान्तिमाभ्युच्छ्रयम् ।

---

समं विभक्ते तदेकांशेन ततिं तनोतु । परिशिष्टैरंशैराततिं च तनोतु । ऊ-नांशं प्राक् त्यक्तमुत्तरविस्तारद्वयं च परितः प्रपूरयतु । एवं पादसूत्रे पादसूत्रा-ख्यसभाविशेषे क्रमः स्यात् ॥ ८० ॥

बलिपीठक्लृप्तिमाह --- प्रासादमध्यादिति । प्रासादमध्यदेशादारभ्या-ग्रतो गते बहिर्भागे सदलद्विसंख्यके अर्धसहितद्विदण्डे वा त्रिसार्धत्रिशराङ्गस-प्तके त्रिदण्डे वा अर्धसहितत्रिदण्डे वा पञ्चदण्डे वा षड्दण्डे वा सप्तदण्डे वा तदुत्तरोत्थे प्रासादोत्तरकल्पिते दण्डे बलिपीठिकां स्वधाम्नि स्वोचित-क्लृप्त्या कल्पिते गृहे कुर्यात् । तथा पाशुपते---

"पञ्चषट्सप्तदण्डाग्रे कल्पयेद् बलिपीठिकाम्"

इति । मञ्जर्यां च — "पीठं प्रासादमध्यादथ बलिविधये पञ्चषट्सप्तदण्ड-मुक्त्वा" इति ॥ ८१ ॥

बलिपीठलक्षणमाह --- पूजापीठेति । बलिपीठे अञ्जान्तिमाभ्युच्छ्रयं पद्मपर्यन्तमुच्चं पूजापीठसमं देवस्य पीठपर्यन्तं वा तस्मात् षडंशरहितं वा ग-र्भप्रतिप्रोन्मितं गर्भगृहस्य प्रतिपर्यन्तं वा प्रासादप्रतिसम्मितं वा विदधीत । चकारो विकल्पार्थः । निजेष्टे उत्सेधे दशधांशिते सति सप्तांशैः पीठिकावि-स्तृतिं पीठिकाया उत्तरगतविस्तृतिं, मूलनिलयौचित्यात् तदङ्गक्रियां तदवयव-विभागं च विदधीत । तथाहि विष्णुसंहितायां —

---

१. 'त्र' मूलपाठः. २. 'रद्व', ३. 'क्ता', ४. 'तं ग' क. पाठः.

**उत्सेधे दशधांशिते सति निजेष्टे पीठिकाविस्तृतिं**
**सप्तांशैर्विदधीत मूलनिलयौचित्यात् तदङ्गक्रियाम् ॥ ८२ ॥**
**पृथ्व्या पादुकमंशतो जगतिकां वेदैर्गुणैः कैरवं**
**तत्पट्टीगलकम्बुनिद्रवमपि क्ष्मापङ्क्तिभूमीन्दुभिः ।**
**कुर्वीत ज्वलनैः कपोतमिलयाग्रे पट्टिकां पङ्कजं**
**नेत्राभ्यामपि सप्तविंशतिविभक्ते पीठिकाभ्युच्छ्रये ॥ ८३ ॥**
**पीठोच्चे रदभेदिते सदलभूसार्धेषुबाणेन्दुभू-**
**दस्राः पादुकजागते कुमुदतत्पट्टयन्तरीषु प्रती ।**

---

"बलिपीठसमुत्सेधो गर्भागारप्रतेः समः ।
पूजापीठसमो वापि षड्नो वा प्रकीर्तितः ॥
उत्सेधं दशधा कृत्वा सप्तांशस्तस्य विस्तरः ।"

इति ॥ ८२ ॥

तद्विभागकॢप्तिमाह — पृथ्व्येति । पीठिकाभ्युच्छ्रये सप्तविंशतिविभक्ते सति पृथ्व्या अंशतः एकांशेन पादुकं, वेदैश्चतुर्भिरंशतो जगतिकां, गुणैस्त्रिभिः कैरवं कुमुदं, तत्पट्टीगलकम्बुनिद्रवमपि तत्पट्टीं कुमुदपट्टिकां गलं कण्ठं कम्बु निद्रवं च इति स्थानचतुष्कं क्रमेण क्ष्मापङ्क्तिभूमन्दुिभिः एकेन दशभिरेकैकेन चांशतः, ज्वलनैः त्रिभिः कपोतम्, इलया एकेन अग्रे पट्टिकाम् अग्रपट्टिकां, नेत्राभ्यां द्व्यंशतः पङ्कजं च कुर्वीत । तथा च विष्णुसंहितायां —

"सप्तविंशतिधा कृत्वा सममेव तदुच्छ्रयम् ।
एकांशं[2] पादुकं कुर्याच्चतुर्भिर्जगतीं पुनः ॥
त्रिभागं कुमुदं चैव तथैकांशेन पट्टिकाम् ।
दशांशं कण्ठमित्याहुरंशाभ्यां कम्बुनिद्रवौ ॥
त्रिभिः कपोतमित्याहुरेकांशेनाग्रपट्टिकाम् ।
द्व्यंशकं पद्ममग्रे स्यादेतत् पीठस्य लक्षणम्" ॥ ८३ ॥

पक्षान्तरेण बलिपीठलक्षणमाह — **पीठोच्च** इति । पीठोच्चे रदभेदिते द्वात्रिंशद्धा कृते सति सदलभूसार्धेषुबाणेन्दुभूदस्राः सदलभूरर्धसहितमेकं

---

१. 'कां ने' क. पाठः. २. 'शे' ग. पाठः.

**अंशा वेदयुगानि वेदिगलयोः सार्धौ वलभ्युत्तरे**
**दस्रौ चेति कपोतके शशिकराः स्युः पट्टिकापद्मयोः॥८४॥**

---

सार्धेषुरर्धसहितं पञ्चकं वाणाः पञ्च इन्दुरेकः भूरेका दस्रौ द्वौ, एतत्क्रमेण पादुकजागते पादुके जगत्यां च कुमुदतत्पट्यन्तरीषु कुमुदे कुमुदपट्यामन्तर्यां च प्रतौ च एतत्स्थानषट्के उक्ता अंशाः स्युः । वेदिगलयोः वेद्यां गले च वेदयुगानि चत्वारश्चत्वारोंऽशाः । वलभ्युत्तरे वलभिसहितोत्तरे सार्धौ दस्रौ अर्धसहितद्व्यंशौ । कपोतके च इति अर्धसहितद्व्यंशौ । पट्टिकापद्मयोः पट्टि-कायां पद्मे च क्रमात् शशिकराः एकांशो द्व्यंशकौ च स्युः । पञ्चप्राकारा-णामुक्तत्वात् केचन तद्विशेषाः संवादग्रन्थैरुदाह्रियन्ते —

"प्रासादभवनादीनां रक्षालङ्कारसिद्धये ।
वप्राणि क्रमशः कुर्यात् पञ्चत्रिद्व्येकसंख्यया ॥"

अत्र मय आह —

"क्षुद्राणामल्पहर्म्याणां स्वव्यासार्धप्रमाणतः ।
अन्तर्मण्डलकं कुर्यात् संत्रिहस्तं तु तत्समम् ॥

द्वितीयं[2] च तृतीयं च तस्मात् पञ्चकराधिकम् ।
तस्मात् स सप्तहस्तं तु तत्समं स्याच्चतुर्थकम् ॥

नवहस्तसमायुक्तं तत्समं पञ्चमं भवेत् ।
मध्यमानां[3] तु मूलार्धमन्तर्मण्डलकं भवेत् ।
ततः शरर्षिजगतीरुद्रहस्तं यथाक्रमम् ॥

वप्रान्तरालविस्तारः प्रोक्तः प्राकारपञ्चके ।
अथोत्तमानां मूलार्धं प्रथमं त्वथ चर्षिभिः[4] ॥

नन्दरुद्रातिजगतीहस्तैर्हारा भवन्ति हि ।
अन्तर्मण्डलभित्तेः स्याद् विष्कम्भः सार्धहस्तवान् ॥

तस्मात् त्रित्र्यङ्गुलाधिक्यात् क्रमात् साला भवन्ति हि ।
तत्तद्विष्कम्भमानात् तु त्रिगुणं वा चतुर्गुणम् ॥

---

१. 'प्र', २. 'यस्त तु', ३. 'नं', ४. 'पङ्क्तिभिः' घ. पाठः.

प्राकारतुङ्गता ज्ञेया स्वोच्चाष्टांशं शिरोवनम् ।
उत्तरान्तोच्छ्रिता वा स्यात् कुम्भमञ्च्यन्तकोऽपि वा ॥
मसूरकादिवर्गाढ्या खण्डहर्म्यादिमण्डिता ।
बुद्बुदार्धेन्दुशीर्षा वा ऋजुर्वा भित्तिरिष्यते ॥"

इति । तथा च—

"क्षुद्राल्पभित्तिविस्तारो हस्तादारभ्य पूर्ववत् ।
क्रमात् त्र्यङ्गुलाधिक्याद् वर्धयेत् सार्धहस्ततः ॥
सोत्तरा वाजनच्छत्रशीर्षवत्यश्च भित्तयः ।"

इत्यादि ।

"गोपुराणामथो लक्ष्म यथावदपि कल्प्यते ।
प्रतिवप्रं तु कर्तव्यं द्वारे द्वारे तु गोपुरम् ॥"

अत्र मयश्च—

"क्षुद्राल्पमध्यमुख्यानां वप्राणां स्वप्रमाणतः ।
मूलप्रासादविस्तारे सप्ताष्टनवभागिके[1] ॥
दशैकादशभागे च तत्तदेकांशहानितः ॥
द्वारशोभादिविस्तारं गोपुरान्तं भवेत् क्रमात् ।
क्षुद्राल्पकानां धाम्नां स्यान्मानमेवं यथोदितम् ॥
मध्यानां मूलधाम्नस्तु व्यासे वेदेषुभागिके ।
षट्सप्ताष्टांशके[2] वा स्याद् भागोनं गोपुरं पृथक् ॥
त्रिभागैकांशमर्धं च द्विभागं स्यात् त्रिभागिके ।
चतुर्भागे त्रिभागं च पञ्चांशे चतुरंशकम् ॥
द्वारशोभादिविस्तारं श्रेष्ठानां गोपुरं मतम् ।
तुङ्गं तु गोपुराणां स्यात् सप्तांशे रुद्रभागिकम् ॥
चतुरंशे षडंशोच्चं पञ्चांशे सप्तभागिकम् ।
सप्तांशं तु चतुर्भागे नवभागे तु पञ्चके ॥
द्विगुणं वा यथासंख्यं द्वारायतनतुङ्गता ।"

इत्यादि ॥ ८४ ॥

---

१. 'नै' क. पाठः २. 'शे' ख. पाठः

द्वारोत्सेधसमं तदङ्घ्रिरहितं[1] द्वारेऽखिले चोनिते
नन्दांशेन गजांशकेन च समं भक्ते त्रिधा द्व्यंशकैः ।
क्लृप्तानीत्युदितानि पञ्च मनुबिम्बान्यत्र गर्भालये
भक्ते लोकशरेक्षणैर्द्विगुणभूम्यंशग्रहात् त्रीणि च ॥ ८५ ॥

स्वाभीष्टं दशधोत्तमे विभजतां मानं समं मध्यमे
कर्तव्ये नवधाष्टधा च चरमे बिम्बे तदेकांशकम् ।

---

एवं प्रासादमण्डपप्राकारादीनां लक्षणमभिधाय प्रतिमापीठादीनां लक्षणं वदन् प्रथमं मन्त्रबिम्बस्य दैर्घ्यक्लृप्तिमाह — द्वारोत्सेधसममिति । द्वारस्योत्सेधेन समं तदङ्घ्रिरहितं द्वारोत्सेधाच्चतुर्थांशहीनमिति द्वे बिम्बे । अखिले द्वारे द्वारोत्सेधे नन्दांशेन नवांशेनोनिते द्वारे च गजांशकेन अष्टांशेनोनिते द्वारे च तेषु त्रिष्वपि त्रिधा समं भक्ते द्व्यंशकैः द्विद्विभागैरिति त्रीणि क्लृप्तानि इति अत्र द्वारवशात् पञ्च मनुबिम्बान्युदितानि । पुनर्गर्भालये गर्भगृहे लोकशरेक्षणैः त्रिभिः पञ्चभिर्द्वाभ्यां च भक्ते क्रमाद् द्विगुणभूम्यंशग्रहाद् द्वित्र्येकांशपरिग्रहात् त्रीणि चोदितानि स्युः । तथाहि विष्णुसंहितायां —

"द्वारोच्चेऽष्टांशहीने स्यात् त्रिभक्तेऽर्चा द्विभागिका ।
नवांशोने समस्ते वा पादोना वापि तत्समा ॥"

इति । ब्रह्मरात्रे च —

"अत्र तु प्रतिमायामः पञ्चधा परिकीर्तितः ।
प्रासादगर्भभागार्धमायाममधमं भवेत् ॥
पञ्चभागीकृते त्वत्र त्रिभागैर्मध्यमं भवेत् ।
त्रिभागीकृतगर्भे तु द्विभागं[2] चोत्तमं भवेत् ॥
पादायामश्च कर्तव्यो द्वारायामस्तथैव च ।"

इति ॥ ८५ ॥

कल्पितदैर्घ्यस्य मन्त्रबिम्बस्य प्रस्तारे विभागक्लृप्तिमाह — स्वाभीष्टमिति । उत्तमे बिम्बे कर्तव्ये स्वाभीष्टं मानं समं दशधा विभजताम् अंशीकुर्यात्, मध्यमे कर्तव्ये नवधा च, चरमे अधमे अष्टधा च । तदेकांशकं

---

१. 'त' मूलपाठः. २. 'द्वा' ख. पाठः.

**तालं तन्मिहिरांशमङ्गुलमदोद्वन्द्वं कलां गोलकं**
**चाहुर्मध्यममन्त्रबिम्बरचनात्रोदीर्यते सङ्ग्रहात् ॥ ८६ ॥**
**प्रायः स्ववाञ्छितमिति द्विगुणायतेष्ट-**
**पादोनविस्तृततदर्धघनां शिलां ताम् ।**

---

दशांशिते नवांशिते अष्टांशिते च तेष्वेकमंशं तालमाहुः । आचार्या इति शेषः । तन्मिहिरांशं तस्य तालस्य द्वादशांशमङ्गुलमाहुः । अदोद्वन्द्वम् अङ्गुलद्वयं कलां गोलकं चाहुः । तत्राङ्गुलस्याष्टांशं यवं चेति सिद्धं भवति । अत्र एषु त्रिष्वपि मध्ये मध्यम(मन्त्र)बिम्बरचना नवतालबिम्बरचनाप्रकारः संग्रहात् संक्षेपेणोदीर्यते । तथाच —

"उत्तमा दशतालर्चा नवताला तु मध्यमा ।
अष्टतालाधमा ज्ञेया देव्यः स्युश्चाष्टतालिकाः ॥
उत्तमं पार्थिवे मानं दारवे मध्यमं भवेत् ।
मणिजे चाधमं ज्ञेयमिच्छयान्यत्र कल्पयेत् ॥
दशधा नवधा चेष्टं मानं कृत्वैकमंशकम् ।
भङ्क्त्वा द्वादशधा ज्ञेयं स्वाङ्गुलं येन मीयते ॥"

तथा च सात्वते —

"अष्टोत्तरशतांशो यः स्वोन्नतेरङ्गुलं तु तत् ।
तद्वेऽङ्गुले कला नेत्रं गोलकं भाग एव च ॥
अङ्गुलाष्टमभागो यः स यवः परिकीर्तितः ।"

इति ॥ ८६ ॥

बिम्बप्रस्तारे इतिकर्तव्यतां दर्शयति — प्राय इति । प्रायः स्ववाञ्छितमितिद्विगुणायतेष्टपादोनविस्तृततदर्धघनां प्रायेण स्ववाञ्छिताया मितेः द्विगुणप्रमाणेनायतेन युक्ताम्, इष्टस्य स्वाभीष्टदैर्घ्यस्य पादोनेन प्रमाणेन विस्तृतां, तदर्धेन विस्तारार्धेन घनेन तीव्रेण च युक्तां तां प्रस्तुतां शिलां तुर्यश्रितां चतुरश्रीकृतां कृत्वा समतले प्रदेशे निपुणमचञ्चलं निधाय अथात्र मन्त्रमूर्तेः प्रस्तारं तनुयात् । तथाच निबन्धने —

---

१. 'ष्टालिसि' क. पाठः. २. 'चलं' ख. पाठः

**तुर्याश्रतां समतले निपुणं निधाय**
**प्रस्तारमत्र तनुयादथ मन्त्रमूर्तेः ॥ ८७ ॥**

**शीर्षाग्राद्यलिकान्तिमं त्रिभिरतो भास्वन्मितैरङ्गुलै-**
**रुन्मेयं चिबुकान्तिमं गुणमितैः कण्ठो हृदन्तं ततः ।**
**नाभ्यन्तं च शिवान्तिमं च दिनकृत्सङ्ख्यैस्त्रिभिर्जानुनी**
**गुल्फाद्याङ्घ्रियुगं च सङ्कृतिमितैर्जङ्घाद्वयोरुद्वये ॥ ८८ ॥**

---

"चतुरश्रायतां कृत्वा शिलां पूर्वप्रमाणिताम् ।"

इति । सात्त्वते च —

"भूभागे तु समे श्लक्ष्णे मानमुत्कीर्य तेन वै ।
निरूप्यावयवानां च लक्ष्म विस्तृतिपूर्वकम् ॥"

इति ॥ ८७ ॥

नवतालकल्पनीयस्याष्टोत्तरशताङ्गुलस्य बिम्बस्य विभागक्लृप्तिमाह — शीर्षाग्रादिति । शीर्षाग्राद्यलिकान्तिमं मूर्धादिललाटपर्यन्तं त्रिभिरङ्गुलैः उन्मेयं स्यात् । अतो ललाटात् चिबुकान्तिमं भास्वन्मितैर्द्वादशभिरङ्गुलैरुन्मेयम् । गुणमितैस्त्रिभिः कण्ठ उन्मेयः । ततः कण्ठात् हृदन्तं ततो नाभ्यन्तं ततः शिवान्तिमं लिङ्गान्तं च, एतानि त्रीणि स्थानानि दिनकृत्संख्यैर्द्वादशभिर्द्वादशभिः । त्रिभिर्जानुनी जानुद्वयम् । गुल्फाद्यङ्घ्रियुतं गुल्फाद्यधोगतपादद्वयं च त्रिभिः । जङ्घाद्वयोरुद्वये जङ्घाद्वयमूरुद्वयं च संकृतिमितैश्चतुर्विंशत्यङ्गुलैः । तथा विष्णुसंहितायां —

"ग्रीवाहृन्नाभिमेढ्रान्तं मुखमानेन कल्पयेत् ।
तद्वद्भक्त्वा मूर्धकण्ठाङ्घ्रिजानुदेशे समं न्यसेत् ॥

जङ्घोरू द्विगुणौ ज्ञेयौ बाहू चाजानुलम्बिनौ ।
किरीटमधिकं कुर्यात् पद्मनालं च मानतः ॥"

इति ॥ ८८ ॥

**सीमास्वासु सपद्मनालमुकुटान्तासूरुजङ्घाद्वयी-**
**मध्याढ्यासु करोतु षोडश तिरश्चीनानि सूत्राण्यथ ।**
**मध्ये कर्णकरास्त्रसीमसु तथा सप्तोर्ध्वगान्यप्यथो**
**वक्त्रं द्वादशवर्गकोष्ठसुविचित्रं कल्पयेत् सूत्रकैः ॥ ८९ ॥**

---

एवं विभक्तासु सन्धिषु सूत्राण्यास्फालयेदित्याह — सीमास्विति । सपद्मनालमुकुटान्तासु पद्मनालस्य मुकुटस्य चावसानयुक्तासु ऊरुजङ्घाद्वयीमध्याढ्यासु ऊरुद्वयस्य जङ्घाद्वयस्य च मध्यभागयुक्तास्वासु सीमासु संभूय षोडश तिरश्चीनानि सूत्राणि करोतु, अथ तथा मध्ये कर्णकरास्त्रसीमसु कर्णसीम्नोः करसीम्नोरायुधसीम्नोश्च सप्तोर्ध्वगान्यपि सूत्राणि च । अथो वक्त्रं वक्त्रप्रदेशं द्वादश(वर्ग)कोष्ठसुविचित्रम् आयामतो विस्तारतश्च द्वादशपदयुक्तं सूत्रकैरास्फाल्य कल्पयेत् । तथाच वैष्णवे —

"तिर्यक् षोडश सूत्राणि सप्तोर्ध्वानि च कल्पयेत् ।"

सनन्दप्रश्ने च —

"पादे सूत्रद्वयं तिर्यग्जङ्घामध्ये तृतीयकम् ।
पादेन जानु [त्व]ज्ञयमूरुमध्ये तथापरम् ॥"

मेढ्रान्ते सप्तमं ज्ञेयं नाभ्यां च हृदये द्वयम् ।
कण्ठे द्वयं ललाटेऽन्यत् सूत्रमेकं शिरस्यथ ॥

मकुटान्ते च विज्ञेयम् सूत्राण्येवं चतुर्दश ।
पद्मान्ते चैकमेकं च नालान्ते चेति षोडश ॥

सुषुम्नाकर्णयुग्बाह्वायुधे सप्तोर्ध्वगानि च ।"

पुनर्वैष्णवे —

"तिर्यगूर्ध्वगतैः सूत्रैर्मुखे द्वादशधा कृते ।"

इति ॥ ८९ ॥

अष्टाङ्गुलायतमतोऽर्धततं ललाट-
मर्धेन्दुसुन्दरमधोऽङ्घिपदायता स्यात्।
नासा पदद्वयतताङ्गुलनिम्नमूला
व्यासोच्छ्रिताग्ररुचिरा तिलपुष्पकल्पा ॥ ९० ॥

तन्मूलपार्श्वयुजि पञ्चमसूत्रसंस्थे
कोष्ठद्वयाततिमती पदविस्तृते च।

---

मुखविभागमाह—अष्टाङ्गुलेति। अष्टाङ्गुलायतम् अष्टाङ्गुलैर्दैर्घ्ययुक्तम्, अतो दैर्घ्याद्, अर्धततं चतुरङ्गुलविस्तृतम्, अर्धेन्दुसुन्दरम् अर्धेन्दुवत् सुन्दरं, ललाटं स्यात्। अस्याधोगता, अङ्घिपदायता पदानामङ्गुलप्रमाणत्वाच्चतु-रङ्गुलदीर्घा, पदद्वयतता अङ्गुलद्वयविस्तृता, अङ्गुलनिम्नमूला एकाङ्गुलनि-म्नेन मूलेन युक्ता, व्यासोच्छ्रिताग्ररुचिरा अङ्गुलद्वयोच्छ्रितेनाग्रभागेन सुन्दरा, तिलपुष्पकल्पा तिलपुष्पसदृशी च नासा स्यात्। तथा निबन्धने—

"चतुष्केण चतुष्केण ललाटं नासिका मुखम्।"

सात्वते च—

"आस्यनासाललाटार्थं वदनांशं भजेत् त्रिधा।
तत्राग्रतः कलामानं घ्राणं स्यात् तिलपुष्पवत्॥"

वैष्णवे च—

"ललाटकण्ठविस्तारो नासिकाद्विगुणो मतः।
नेत्रवन्नासिकाग्रोच्चं निम्नमूलं तदर्धतः॥"

इति ॥ ९० ॥

नेत्रलक्षणमाह — तन्मूलेति। तन्मूलपार्श्वयुजि नासाया मूलस्य पार्श्व-द्वये, पञ्चमसूत्रसंस्थे वदनोर्ध्वगतसूत्रादारभ्य गणनात् पञ्चमसूत्रस्थिते, कोष्ठ-द्वयाततिमती अङ्गुलद्वयदीर्घयुक्ते, पदविस्तृते एकाङ्गुलविस्तारयुक्ते च, मध्यत्रिभागकृततारकतत्रिभागक्लृप्तार्चिषी नेत्रस्य मध्ये नेत्रत्रिभागेन कृता-भ्यां द्वाभ्यां तारकाभ्यां तत्रिभागेन कृताभ्यामर्चिर्भ्यां च युक्ते, द्वे नयनाम्बुजे अम्बुजान्तर्दलसमाने नयने विरचयेत्। तथा सनन्दप्रश्ने—

---

१. 'त', २. 'तो', ३. 'लि' मूलपाठः.

मध्यत्रिभागकृततारकतत्त्रिभाग
क्लृप्तार्चिषी विरचयेन्नयनाम्बुजे द्वे ॥ ९१ ॥

फालेक्षणान्तरगते द्विकलायते च
चिल्ल्यौ कलाव्यवहिते द्वियवप्रताने ।
नेत्रैकवीथिविसरत्तुटुकान्तरन्ध्रौ
कर्णौ करार्णवपदप्रततातती च ॥ ९२ ॥

---

"तन्मध्ये नासिका कार्या तस्य मध्यगतस्य तु ।
उभयोः पार्श्वयोः सूत्रे तत्र सूत्रान्तरस्थिते ॥
ऊर्ध्वाङ्गुलादधस्तात्तु अङ्गुले पञ्चमे स्थिते ।
अधोऽङ्गुलैरूर्ध्वतस्तु अङ्गुले चाष्टमे स्थिते ॥
तयोस्तु सूत्रयोर्मध्ये कुर्याज्ज्योतिर्द्वयं समम् ।"

इति । सात्वते च—

"आद्यस्य नासिकांशस्य मध्यभागसमाश्रिते ।
कुर्यान्नेत्रश्रुतिच्छिद्रे तत्र नेत्रे कलान्तरे ॥"

इति । विष्णुसंहितायां च—

"तारके तत्त्रिभागस्थे ज्योतिषी तत्त्रिभागतः"

इति ॥ ९१ ॥

चिल्लीलक्षणमाह—फालेति । फालेक्षणान्तरगते ललाटनेत्रयोर्मध्यगते, द्विकलायते चतुरङ्गुलदीर्घे, द्वियवप्रताने द्वियवविस्तारे, कलाव्यवहिते मध्ये द्व्यङ्गुलविच्छिन्ने च, चिल्ल्यौ चिल्लीद्वयं, विरचयेत् । कर्णलक्षणमाह—नेत्रेति । नेत्रैकवीथिविसरत्तुटुकान्तरन्ध्रौ नेत्रैकवीथ्यां प्रसरतः कर्णशङ्कुनाम्नस्तुटुकस्यान्ते रन्ध्रेण युक्तौ, करार्णवपदप्रतताततौ द्व्यङ्गुलविस्तारौ चतुरङ्गुलदीर्घौ च, कर्णौ विरचयेत् । तथा सात्वते—

---

१. 'कृ', २. 'दं' मूलकोशपाठः. ३. 'ले' ख. पाठः, ४, ५. 'त्र भा' क. पाठः. ६, 'घ' ख. पाठः.

**द्व्येकाङ्गुलायततदर्धततताधरोत्त-**
**रोष्ठान्ततोऽङ्गुलविनिस्सृतसृक्कयुग्मम् ।**
**कम्बीरकादिरुचिरं प्रकरोतु गोजिं**
**घोणाग्रसामिपिहिताष्टयवावतीर्णाम् ॥ ९३ ॥**

---

"भ्रूलते द्विकले स्मृते ।
मध्यतो द्वियवे वालचन्द्रतुरुये क्रमक्षते ॥"

इति । तथाच विष्णुसंहितायां —

"भ्रूमध्यं नेत्रमध्यवत् ।
कर्णायामस्तु नासावद् विस्तारं च तदग्रवत् ॥
तुट्टकौ नेत्रसूत्रस्थौ तद्विस्तारेण सम्मितौ ।"

इति ॥ ९२ ॥

ओष्ठादीनां लक्षणमाह — **द्व्येकाङ्गुलेति** । द्व्येकाङ्गुलायततदर्धतता-धरोत्तरोष्ठान्ततः क्रमेण द्वाभ्यामङ्गुलाभ्याम् एकेनाङ्गुलेनायतं तदर्धेन ततं विस्तृतम् अधरोष्ठमुत्तरोष्ठं च तयोरन्ततोऽवसाने, अङ्गुलविनिःसृतसृक्क-युग्मम् एकाङ्गुलेन विनिस्सृतं व्यवहितं सृक्कयुग्मं च, कम्बीरकादिरुचिरं क-म्बीरकादिना रुचिरं सुन्दरं च, प्रकरोतु । कम्बीरो हनुः । घोणाग्रसामिपि-हिताष्टयवावतीर्णां घोणाग्रेण नासाग्रेण सामि अर्धं पिहितां छन्नाम् एकाङ्गु-लाधोगतां गोजिं[2] नासाया अधोगतकुल्यां च प्रकरोतु । तथा विष्णुसं-हितायां —

"पुटौ निष्पावबीजाभौ भ्रूमध्यं नेत्रमध्यवत् ।
अधरस्तत्समोऽन्योष्ठो गोजिकामानमर्धतः ॥"

सात्वते च —

"अर्धाङ्गुलं चोत्तरोष्ठमधरोष्ठं तु चाङ्गुलम् ।
गोलेकं चिबुकं विद्धि सृक्किण्योश्चतुरङ्गुलम् ॥
नासाग्रग्राहनिर्मुक्तगोजीमानं चतुर्यवम् ।
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ॥"

इति ॥ ९३ ॥

---

१. 'की' मूलकोशपाठः. २. 'चिं' क. पाठः. ३. 'ज्यां' ख. पाठः. ४. 'लं' क. पाठः.

शब्दग्रहादिचिबुकावधि मानमिष्ट-
मष्टाङ्गुलैश्चिबुकमानमथाङ्गुलाभ्याम् ।
ग्रीवा गजाङ्गुलतताऽर्ककलोपपन्नं
कक्षान्तरं स्तनयुगान्तरमेकतालम् ॥ ९४ ॥

नाभिस्थली प्रवितता नृपतिप्रमाणैः
स्यादङ्गुलैः कटितटी धृतिसम्मितैश्च ।
कक्षस्तनान्तरमृतुप्रमिताङ्गुलाढ्यं
कक्षांसमध्यमपि मांसलमंसयुग्मम् ॥ ९५ ॥

---

कण्ठचिबुकादीनामान्तरालिकं मानमाह — शब्दग्रहेति । शब्दग्रहादिचिबुकावधि कर्णादिचिबुकपर्यन्तं, मानमष्टाङ्गुलैरिष्टम् । अथाङ्गुलाभ्यां द्वाभ्यां चिबुकमानम् । गजाङ्गुलतता अष्टाङ्गुलविस्तृता ग्रीवा स्यात् । अर्ककलोपपन्नं चतुर्विंशत्यङ्गुलमितं कक्षान्तरं कक्षयोर्मध्यविस्तारं च, एकतालं द्वादशाङ्गुलं स्तनयुगान्तरं स्तनयोर्मध्यविस्तारं च । तथाहि विष्णुसंहितायां —

"चिबुकाकर्णयोर्मध्यकण्ठांसा नेत्रसम्मिताः ।
ललाटकण्ठविस्तारो नासिकाद्विगुणो मतः ॥
स्तनान्तरं मुखं विद्याद् द्विगुणं चैव कक्षयोः ।"

इति ॥ ९४ ॥

नृपतिप्रमाणैः षोडशसंख्यैरङ्गुलैः प्रवितता विस्तीर्णा नाभिस्थली स्यात् । धृतिसम्मितैरष्टादशाङ्गुलैः कटितटी च । ऋतुप्रतिमिताङ्गुलाढ्यं षडङ्गुलयुक्तं कक्षस्तनान्तरं कक्षस्तनयोरन्तरालम् । कक्षांसमध्यमपि कक्षांसयोर्मध्यमपि तथा षडङ्गुलयुक्तम् । मांसलं घनं चांसयुग्मं स्यात् । तथाच विष्णुसंहितायां —

"कण्ठद्विगुण एवेष्टो नाभिदेशे तु विस्तरः ।
कटौ नेत्राधिकस्त्र्यंशं स्तनकक्षान्तरं विदुः ॥
तावत्कक्षांसमध्यं च कारयेत् स्कन्धमुन्नतम् ।"

इति ॥ ९५ ॥

---

१. 'लं चिबुं' मूलकोशपाठः.

कक्षादिसन्ध्यवधिकायतिरङ्कसंख्यैः
स्याद् गोलकैः शिवमितैर्मणिबन्धनिष्ठा ।
दिक्संख्यकैरुपभुजेऽथ ततिश्चतुर्भि-
र्मूले प्रकोर्परयुगे भुजयोस्त्रिभिश्च ॥ ९६ ॥
अष्टाङ्गुलैः करतलाततिरब्धिहीनै-
स्तद्विस्तृतिर्भवति मध्यमिकायतिश्च ।
मध्याद् दशांशरहिते निजपार्श्वजे तत्-
पङ्क्त्यंशमात्ररहिते प्रथमान्त्यशाखे ॥ ९७ ॥

---

अङ्कसंख्यैर्नवभिर्गोलकैरष्टादशाङ्गुलैः कक्षादिसन्ध्यवधिकायतिः कक्षादिकोर्परान्तदैर्घ्यं स्यात् । शिवमितैरेकादशसंख्यैर्गोलकैर्द्वाविंशत्यङ्गुलैः सन्ध्यादिमणिबन्धनिष्ठा आयतिः स्यात् । उपभुजे ऊर्ध्वभुजे सति तत्र दिक्संख्यकैर्गोलकैर्विंशत्यङ्गुलैः सन्ध्यादिमणिबन्धनिष्ठायतिः स्यात् । अथ भुजमूले चतुर्भिर्गोलकैरष्टाङ्गुलैः ततिः विस्तारः स्यात् । प्रकोर्परयुगे त्रिभिर्गोलकैः षडङ्गुलैस्ततिश्च । तथाच संहितायां —

"कटिवत् सन्धिकक्षान्तं प्रकोष्ठं नासिकाधिकम् ।"

मुरारौ च —

"उपबाहोस्तु विज्ञेया शलाका दशगोलका ।
मणिबन्धस्तु नासावत् ततोऽङ्गुष्ठान्तरं तथा ॥
द्विगुणो बाहुविस्तारो नेत्रोनश्चैव कोर्परे ।"

इति ॥ ९६ ॥

करतलाततिः करतलगतदैर्घ्यम्, अष्टाङ्गुलैर्भवति । तद्विस्तृतिः करतलविस्तारः अब्धिहीनैरष्टाङ्गुलैः षडङ्गुलैर्भवतीत्यर्थः । मध्यमिकायतिश्च मध्यमाया दैर्घ्यं च तथा षडङ्गुलैः । मध्यान्मध्यमादैर्घ्याद् दशांशरहिते दशांशहीने निजपार्श्वजे मध्यपार्श्वजे तर्जन्यनामिके । तत्पङ्क्त्यंशमात्ररहिते तर्जन्यनामिकाभ्यां दशांशमात्ररहिते प्रथमान्त्यशाखे अङ्गुष्ठ(तर्जन्यौ ? कनिष्ठिके) भवतः । तथाच संहितायां—

---

१. 'त', २. 'ध्या द' मूलकोशपाठः. ३. 'ततो', ४. 'क्षि', ५. 'जे त' ख. पाठः.

**अङ्गुष्ठके विततिरर्कयवैः परासु**
**त्र्यंशोनितैः प्रतिपरुः लघिमा यवेन ।**
**मध्योद्भवाप्रथमपर्वयुगं समान-**
**दैर्घ्यं तदर्धपरिमाणमथाग्र्यपर्व ॥ ९८ ॥**
**देशिन्युपावरजयोरमुतोद्विपांश-**
**हीनानि पादरहितानि कनिष्ठिकायाः ।**
**पर्वाणि पर्वयुगलं क्रमशोऽथ तर्जा-**
**मध्याद्यपर्वसुसमं प्रथमोद्भवायाः ॥ ९९ ॥**

"तत्र मध्यमयोर्मानं नासिकाधरयोगतः ।
तले नेत्राधिकायामे मध्यमायामविस्तरे ॥
कल्पयेदर्धपर्वोने तथा तर्जन्यनामिके ।
तयोरप्यर्धपर्वोने तथाङ्गुष्ठकनिष्ठिके ॥"

इति ॥ ९७ ॥

अङ्गुष्ठके अर्कयवैर्द्वादशयवैर्विस्तृतिः । परास्वङ्गुलीपु त्र्यंशोनितैरष्टयवैर्विततिः । प्रतिपरुः प्रतिपर्व लघिमा लघुत्वं यवेन एकयवेन । मध्योद्भवाप्रथमपर्वयुगं मध्यमायाः अधोगतपर्वद्वयं समानदैर्घ्यम् । अथाग्र्यपर्व मध्यमाया अन्त्यपर्व तदर्धपरिमाणं तदर्धदैर्घ्ययुक्तम् । तथा काश्यपः —

"अङ्गुष्ठमूलविस्तारं सपादांशमुदाहृतम्"

इति । सात्वते च —

"द्विपर्वस्तु स्मृतोऽङ्गुष्ठः सर्वाश्चाङ्गुलविस्तृताः ।
सर्वासां मूलमध्यान्ताद् ग्रासयेच्च यवं यवम् ॥
मध्यमापर्वणी पूर्वे समे शेषं तदर्धकम् ।"

इति ॥ ९८ ॥

देशिन्युपावरजयोः तर्जन्यनामिकयोः अमुतो मध्यमाया द्विपांशहीनानि अष्टांशहीनानि पर्वाणि । कनिष्ठिकाया अमुतः पादरहितानि पर्वाणि । अथ प्रथमोद्भवाया अङ्गुष्ठस्य पर्वयुगलं क्रमशस्तर्जामध्याद्यपर्वसुसमं तर्जनीमध्यमयोराद्यपर्वभ्यां सुसमं भवति । तथाहुः —

१. 'र्वम् ॥', २. 'सं' ख. पाठः.

स्वस्वाग्रपर्वदलतो रचिता नखाः स्यु-
र्नाहोऽङ्गुलैः श्रुतिमितैः प्रथमप्रसूतेः ।
मध्याद्द्विपार्श्वजनितावरजास्वतोऽतो
नाहोऽष्टमांशरहितो विहितः क्रमेण ॥ १०० ॥
अङ्गुष्ठतर्जनिकयोर्नयनाङ्गुलाढ्य-
मभ्यन्तरं प्रथमजामणिबन्धमध्यम् ।
अब्ध्यङ्गुलैः परिमितं मणिबन्धकेऽपि
तैर्विस्तृतिः करभदैर्घ्यमथार्धतालम् ॥ १०१ ॥

---

"अष्टांशोनानि पर्वाणि ततो देशिन्यनामयोः ।
पादोनानि कनीयस्या योक्तव्यान्यनुरूपतः ॥
तर्जनीमध्यमापर्वसमे चाङ्गुष्ठपर्वणी ।"

इति ॥ ९९ ॥

स्वस्वाग्रपर्वदलतः स्वस्वाग्रपर्वार्धेन रचिता नखाः स्युः । प्रथमप्रसूतेः अङ्गुष्ठस्य नाहः श्रुतिमितैः चतुर्भिरङ्गुलैः स्यात् । मध्याद्द्विपार्श्वजनितावरजासु मध्यमायां तर्जन्यनामिकयोः कनिष्ठिकायां च क्रमेण अतोऽतः अस्मादस्माद् अष्टमांशरहितो नाहो विहितः । तथाच संहितायां —

"सर्वाङ्गुलीषु कार्याः स्युरग्रपर्वार्धतो नखाः ।
नाहोऽङ्गुष्ठस्य नासावदष्टांशोनं ततोऽन्ययोः ॥
ततश्चैवं कनिष्ठाया वृत्ते भुजसमे स्फिजौ ।"

इति ॥ १०० ॥

अङ्गुष्ठतर्जनिकयोः अ(भ्य)न्तरं मध्यं नयनाङ्गुलाढ्यं द्व्यङ्गुलयुक्तम् । प्रथमजामणिबन्धमध्यम् अङ्गु मणिबन्धयोरन्तरम् अब्ध्यङ्गुलैश्चतुरङ्गुलैः परिमितम् । मणिबन्धकेऽपि तैश्चतुरङ्गुलैः विस्तृतिः स्यात् । (മണിബന്ധം = കണങ്കൈക്കെട്ട്) करभदैर्घ्यं करभस्य दैर्घ्यम् अर्धतालं षडङ्गुलं स्यात् । (കരഭം = ചെറുവിരൽക്കു കീഴ്ഭാഗം.) तथाहुः —

"तत्राङ्गुष्ठप्रदेशिन्योर्नेत्रसम्मितमन्तरम् ।
मणिबन्धस्तु नासावत् ततोऽङ्गुष्ठान्तरं तथा ।
अन्तरं मध्यमातुल्यं कनिष्ठामणिबन्धयोः"

इति ॥ १०१ ॥

लिङ्गं युगाङ्गुलमितं वृषणद्वयं स्याद्
द्विद्व्यङ्गुलं द्विरदकुम्भनिभे स्फिजौ द्वे ।
वृत्ते षडङ्गुलतते द्वयमध्यसंस्था
कौपीनराज्यपि कलावितता कृशाग्रा ॥ १०२ ॥

मूलान्तराग्रविततिः क्रमशोऽङ्गुलैः स्या-
दूरुद्वये सुषिरभानुशरप्रमाणैः ।
जङ्घाद्वयेऽङ्गगिरिसत्रियवत्रिसंख्यैः
कुर्यात् ककुप्परिमितैरपि जानुयुग्मे ॥ १०३ ॥

---

लिङ्गं युगाङ्गुलमितं मेढ्रं चतुरङ्गुलदीर्घम् । वृषणद्वयं द्विद्व्यङ्गुलम् । स्फिजौ षडङ्गुलतते षडङ्गुलविस्तृते वृत्ते वृत्ताकारे च द्विरदकुम्भनिभे द्विपकुम्भप्रख्ये च । द्वयमध्यसंस्था कौपीनराजी कौपीनवीथी कलावितता द्व्यङ्गुलविस्तारा कृशाग्रा च क्रमेण कार्श्ययुक्ताग्रभागापि स्यात् । तथा सात्वते—

"द्व्यङ्गुलौ वृषणौ दैर्घ्यान्मूलान्तसमविस्तृतौ ।"

इति । मुरारौ च —

"द्व्यङ्गुलौ वृषणौ मेढ्रं चतुरङ्गुलमायतम् ।"

इति । निबन्धने च —"स्फिजौ षडङ्गुले वृत्ते" इति । सात्वते —

"तथा कौपीनराजी च द्व्यङ्गुला मूलतः स्मृता ।"

इति ॥ १०२ ॥

ऊरुद्वये मूलान्तराग्रविततिः मूलमध्यान्तेषु विस्तृतिः सुषिरभानुशरप्रमाणैः क्रमशो नवद्वादशपञ्चसङ्ख्यैरङ्गुलैः स्यात् । जङ्घाद्वये मूलान्तराग्रविततिः अङ्गगिरिसात्रियवत्रिसङ्ख्यैः क्रमेण षड्भिः सप्तभिः त्रियवयुक्तैस्त्रिभिरङ्गुलैश्च स्यात् । जानुयुग्मके ककुप्परिमितैः दशाङ्गुलैर्विततिरपि स्यात् । तथा विष्णुसंहितायाम् —

"ऊरू मुखवदक्ष्यूनं जानू जङ्घा मुखार्धतः ।"

इति ॥ १०३ ॥

---

१. 'द्वश्च', २. 'द' ख. पाठः.

मूलादिवेदशरसाङ्घ्रिरसाङ्गसङ्ख्यै-
र्व्यासोऽङ्गुलैः पदतलेऽर्कमितैश्च दैर्घ्यम्।
अङ्गुष्ठसीम्नि कलयोन्नतिरर्धतोऽन्य-
पार्श्वेऽङ्गुलैः प्रपददैर्घ्यमृतुप्रमाणैः॥ १०४॥

अङ्गुष्ठतत्सहभुवोर्जगदङ्गुलाढ्यं
दैर्घ्यं नखान्नखमितिर्ह्रसितास्ततोऽन्याः।
पर्वत्रयाहितरुचोऽङ्गुलयो द्विपर्वा-
ङ्गुष्ठोऽर्धपर्वशशिखण्डनिभा नखाः स्युः॥ १०५॥

---

पदतले मूलादिप्रदेशेषु वेदशरसाङ्घ्रिरसाङ्गसंख्यैः चतुर्भिः पञ्चभिः[1] सपादैः षड्भिः षड्भिश्चाङ्गुलैः क्रमशो व्यासः स्यात्। अर्कमितैर्द्वादशाङ्गुलैर्दैर्घ्यं च। अङ्गुष्ठसीम्नि अङ्गुष्ठवति पार्श्वे कलया व्यङ्गुलेनोन्नतिश्च। अन्यपार्श्वे कनिष्ठावति पार्श्वे अर्धतः एकाङ्गुलेनोन्नतिः। प्रपददैर्घ्यम् ऋतुप्रमाणैः षडङ्गुलैश्च। तथा सात्त्वते —

"पार्ष्णी द्विगोलकतते तन्मध्ये साङ्गुले कले"

इति। तथाच संहितायां—

"मुखायततलौ पादौ पुरस्ताज्जङ्घया समौ।
कूर्मोन्नतौ क्रमोनोच्चौ तत्राङ्गुष्ठौ तदर्धकौ॥"

इति॥ १०४॥

अङ्गुष्ठतत्सहभुवोः पादाङ्गुष्ठतर्जन्योः। जगदङ्गुलाढ्यं त्र्यङ्गुलविशिष्टं दैर्घ्यम्। ततोऽन्याः तिस्रोऽङ्गुलयः। नखान्नखमितिह्रसिताः क्रमान्नखान्नखमानेन ह्रस्वाः। पर्वत्रयाहितरुचः पर्वत्रयेण शोभावत्यश्च। अङ्गुष्ठो द्विपर्वा च। तासां नखाः अर्धपर्वशशिखण्डनिभाः अर्धार्धपर्वणा शशिखण्डसदृशाश्च स्युः। तथा वैष्णवे —

"तत्राङ्गुष्ठौ तदर्धकौ।
प्रदेशिन्यौ च तत्तुल्ये हीनाः शेषा नखान्नखम्॥
अनङ्गुष्ठास्त्रिपर्वाणो नखा रक्तार्धचन्द्रवत्।"

इति॥ १०५॥

---

१. 'प्र' मूलपाठः.

अङ्गुष्ठके रसमितैः परिधिः परस्यां
स्यादङ्गुलैस्त्रिभिरतोऽष्टमभागहीनैः ।
कार्यः क्रमात् तदितरास्वखिलेषु तत्त-
द्व्यासेन लोकगुणितेन करोतु नाहम् ॥ १०६ ॥

तालैस्त्रिभिः शिरसि साष्टियवेषुसङ्ख्यैः
कक्षान्तरे रहितविश्वयवैश्चतुर्भिः ।
कुक्षौ त्रिभिर्भवति नाभितलेऽर्धयुक्तै-
र्नाहस्तथा कटितटेऽर्धयुताग्धिसङ्ख्यैः ॥ १०७ ॥

---

अङ्गुष्ठके रसमितैः षडङ्गुलैः परिधिर्नाहः । परस्यां तर्जन्यां त्रिभिरङ्गु-लैश्च । तदितरासु तिसृषु अतोऽष्टमभागहीनैः परिधिः कार्यः । अथाखिलेष्व-वयवेषु लोकगुणितेन तत्तद्व्यासेन नाहं करोतु । तथाच संहितायां—

"नाहोऽङ्गुष्ठस्य मध्यावत् तर्जन्यङ्गुष्ठदैर्घ्यवत् ।
अष्टाशोनाः क्रमादन्याः कारयेदनुरूपतः ॥"

इति ॥ १०६ ॥

त्रिभिस्तालैः शिरसि नाहः स्यात् । कक्षान्तरे कक्षप्रदेशे साष्टियवेषु-संख्यैः द्व्यङ्गुलसहितपञ्चतालैः, कुक्षौ रहितविश्वयवैः त्रयोदशयवरहितैश्च-तुस्तालैः, नाभितले अर्धयुक्तैरर्धतालयुक्तैस्त्रिभिस्तालैः, तथा कटितटे अर्ध-युताग्धिसंख्यैः अर्धतालयुक्तचतुस्तालैर्नाहो भवति । तथा सात्त्वते —

"शिरसः परिणाहं तु विद्धि षट्त्रिंशदङ्गुलम् ।
कक्षान्तर्वेष्टनं विद्धि पञ्चतालं सलोचनम् ॥
विनाङ्गुलद्वयेनैव द्वे ताले द्विगुणीकृते ।
यवत्रयसमायुक्तं विद्धि तत्कुक्षिवेष्टनम् ॥
परिधिर्नाभिमध्ये तु त्रिता(लः!लं) सत्रिलोचनम् ।
स षड्गोलकतन्मानं परिध्यर्थं कटेः स्मृतम् ॥"

इति ॥ १०७ ॥

---

१. 'ता', २. 'ग', ३. 'ता' मूलपाठः.

जङ्घोरुबाहुयुगमध्यकराङ्गुलीषु
कार्या करीन्द्रकरवत् परिवृत्तताऽत्र ।
कूर्माभता प्रपदयोर्जलजाभता च
कण्ठे कपोलतलयोर्मुकुराभता च ॥ १०८ ॥

अत्रैकाङ्गुलसम्मितेन परिवेष्ट्योष्णीषपट्टेन के
कोटीरं मुकुटोज्ज्वलं विरचयेदष्टाङ्गुलैः सर्वतः ।
द्व्यष्टाभिर्धृतिसम्मितैर्दिनकरद्वन्द्वप्रमैर्वाङ्गुलै-
रुष्णीषोपरिभासमानमुकुटोपेतं किरीटं हरौ ॥ १०९ ॥

---

जङ्घोरुबाहुयुगमध्यकराङ्गुलीषु जङ्घयोरूर्वोः बाहुद्वये मध्यप्रदेशे कराङ्गुलीषु च करीन्द्रकरवद् गजनासावत् परिवृत्तता वृत्ताकारता कार्या । प्रपदयोः- कूर्माभता कूर्मसदृशता, कण्ठे जलजाभता शङ्खाकारता, कपोलयोर्मुकुराभता च कार्या ॥ १०८ ॥

मुकुटलक्षणमाह — अत्रेति । अत्र के मूर्धनि एकाङ्गुलसम्मितेन उष्णीषपट्टेन परिवेष्ट्य सर्वतः सर्वदेवेषु अष्टाङ्गुलैः सम्मितं मुकुटोज्ज्वलं मुकुटेनोज्ज्वलं कोटीरं जटाबन्धं विरचयेत् । हरौ तु द्व्यष्टाभिः षोडशभिर्वा धृतिसम्मितैः अष्टादशभिर्वा दिनकरद्वन्द्वप्रमैः चतुर्विंशत्यङ्गुलैर्वा उष्णीषोपरिभासमानमुकुटोपेतम् उष्णीषपट्टस्योपरिभागे शोभमानेन मुकुटेनोपेतं[1] किरीटं विरचयेत् । तथा ब्रह्मरात्रे — "उष्णीषमङ्गुलं प्रोक्तम्" इति । निबन्धने—

"जटाबन्धोऽधिकः कार्यः सोऽप्यष्टाङ्गुलसम्मितः ।"

इति । पद्धतौ —

"षोडशाङ्गुलमायामं सौवर्णमणिदीपितम् ।"

मुरारौ —

"मुखद्विगुणमध्यर्धं किरीटं कैश्चिदिष्यते ।
षोडशाङ्गुलमित्याहुस्तस्मादधममेव तत् ॥"

इति ॥ १०९ ॥

---

१. 'किरीटस्तु ज' क. पाठः.

**कुर्यात् किरीटं शिखरैः समेतं त्रिपञ्चसप्तप्रमितैर्यथार्हम्[1] ।**
**अण्डोपमं वा कमलोपमं वा छत्रोपमं वा कमठोपमं वा ॥**
**ग्रीवाद्यङ्घ्र्यवसानसूत्रितदशस्थानानि संवर्धिता-**
**न्येकैकाङ्गुलतो यवैरथ वसूर्म्याम्नायसङ्ख्यैः क्रमात् ।**

---

किरीटं तु त्रिपञ्चसप्तप्रमितैः त्रिभिः पञ्चभिः सप्तभिर्वा शिखरैः समेतं कुर्यात् । तद् अण्डोपमं वृत्ताकारं वा कमलोपमं वा छत्रोपमं वा कमठोपमं वा यथार्हं यथायोग्यं कुर्यात् । तथा सात्त्वते —

"त्रिपञ्चसप्तशिखरो मौलिरष्टकलोन्नतः ।
निर्जटानां ललाटोर्ध्वे मकुटं वा सुशोभनम् ॥"

ब्रह्मरात्रे च —

"चतुर्विधं किरीटान्तमस्मिंस्तन्त्रे मया श्रुतम् ।
छत्राण्डपद्मकूर्माणां कुर्यादाकारमन्ततः ॥"

इति ॥ ११० ॥

अथ दुर्गामुद्दिश्य दशतालविधानाय नवतालबिम्बाद् विशेषकल्पनास्थितिमाह — ग्रीवाद्यङ्घ्र्यवसानेति । ग्रीवाद्यङ्घ्र्यवसानसूत्रितदशस्थानानि ग्रीवामारभ्य पादपर्यन्तं नवतालबिम्बोक्तक्रमेण सूत्रैः कल्पितानि दश स्थानानि । तत्र ग्रीवा प्रथमं स्थानं, ततो हृदन्तं द्वितीयं, ततो नाभ्यन्तं तृतीयं, ततो लिङ्गान्तं चतुर्थं, तत ऊरुमध्यसूत्रान्तं पञ्चमं, तत ऊर्वोरधस्सूत्रपर्यन्तं षष्ठं, ततो जान्वधस्सूत्रान्तं सप्तमं, ततो जङ्घामध्यसूत्रान्तमष्टमं, ततो जङ्घाया अधोगतसूत्रान्तं नवमं, ततः पादाग्रपर्यन्तं दशममित्युक्तानि दश स्थानानि एकैकाङ्गुलतः संवर्धितानि पूर्वकल्पितादेकैकाङ्गुलाधिकानि स्युरिति दशमस्य तालस्य दशसंख्या अङ्गुलयो योजिताः । पुनर्द्वे एव शिष्टे । अथ वसूर्म्याम्नायसंख्यैः अष्टाभिः षड्भिश्चतुर्भिश्च यवैः क्रमेण उष्णीषाद्यलकाक्षिनोग्रचरमम् उष्णीषाद्यलकान्तं, तदादिनेत्रान्तं, तदादिनासाग्रान्तं, त्रीणि स्थानानि योजनीयानि स्युरित्यष्टादशयवयोगाद् द्व्यङ्गुलतो

---

१. 'थायो' ख. पाठः.

**उष्णीषाद्यलकाक्षिनोग्रचरमं तद्द्वन्द्वहीना हनु-**
**र्दुर्गायामिति पङ्क्तितालपरिभिन्नायां समुक्तोन्मितिः॥**

---

द्वियवाधिक्ये प्राप्ते तद्द्वन्द्वहीना द्वियवरहिता हनुः कपोलस्थली स्या-दिति पङ्क्तितालपरिभिन्नायां दशतालविभक्तायां दुर्गायामुन्मितिः समुक्ता। तथाहुः—

"मध्येन दशतालेन गौरीलक्ष्मीगिरां मतम्।
दुर्गायाश्चापि मातॄणां मध्येनैव प्रकल्पयेत्॥
मध्येन दशतालेन स्त्रीमानं कथ्यतेऽधुना।
भागः कचान्त उष्णी(षस्तः?षात् त)स्माद् भागः सषड्यवः॥
नेत्रान्तः स्यात् ततो नासापुटान्तः स चतुर्यवः।
भागः स्यादथ हन्वन्तो रामांशैस्तु सषड्यवैः॥
हनोर्भागस्तु कर्णान्तस्ततो हृन्नाभियोनयः।
पृथक् त्रयोदशांशैः स्युरूरू षड्विंशदङ्गुलैः॥
भागेन जानुस्तस्माच्च जङ्घे षड्विंशदङ्गुलैः।
भागेन पादौ च तलौ भागायामौ प्रकल्पयेत्॥"

इति। तथाच काश्यपः—

"सविंशच्छतभागेन स्त्रीमाने तु विभाजिते।
एकांशमङ्गुलं ख्यातं तदष्टांशं यवं भवेत्॥
उष्णीषोदयमेकांशं केशान्तं तु गुणाङ्गुलम्।
केशान्तादक्षिसूत्रान्तं सत्रिभागं गुणांशकम्॥
अक्षिसूत्रात् पुटान्तं तु सार्धवेदांशमिष्यते।
नासापुटात्तु हन्वन्तं सत्रिपादगुणांशकम्॥
तस्याधः कण्ठमानं तु चतुर्भागमुदाहृतम्।
(हिकादाहृतदा ? एतस्माद्धृद)यान्तं च हृदयान्नाभिसीमकम्॥
नाभ्या आयोनिपर्यन्तं समं त्रयोदशाङ्गुलम्।
ऊरुदीर्घं तु षड्विंशदङ्गुलं जानु युगांशकम्॥
ऊरुदीर्घसमं जङ्घादीर्घं पादतलं युगम्॥"

इति॥ १११॥

**विस्तारः शिवशैलकैर्मुखगलेऽत्यष्टया द्विकक्षान्तरे**
**वक्षोजे नवभिः पृथक् च तदधो विश्वैः शिवैर्मध्यतः ।**
**कृत्या श्रोणितले कटौ रवियुगेनोर्वोः सजानुद्वये**
**जङ्घायुङ्नलकेऽर्कशैलरसवेदैश्चाङ्गुलैः सम्मितैः ॥ ११२ ॥**
**उत्कृत्याधिभुजं प्रकोर्परमनुद्वाभ्यां प्रकोष्ठे तले**
**धृत्या सप्तभिराततिर्युगशराङ्गेष्वर्णवैरङ्गुलैः ।**

---

दशतालबिम्बस्य विस्तारमाह — **विस्तार** इति । मुखगले मुखे गले च क्रमात् शिवशैलकैः एकादशभिः सप्तभिश्चाङ्गुलैः विस्तारः स्यात् । द्विकक्षान्तरे कक्षयोर्मध्यप्रदेशे अत्यष्टया सप्तदशाङ्गुलैर्विस्तारः । वक्षोजे स्तने नवभिरङ्गुलैः । तदधः वक्षोजाधोभागे विश्वैः त्रयोदशाङ्गुलैः, मध्यतो मध्यप्रदेशे शिवैरेकादशाङ्गुलैः, श्रोणितले जघनप्रदेशे कृत्या विंशत्यङ्गुलैः कटौ रवियुगेन चतुर्विंशत्यङ्गुलैः, ऊर्वोः सजानुद्वये जङ्घायुङ्नलके ऊर्वादिचतुर्षु स्थानेषु क्रमाद् अर्कशैलरसवेदैः द्वादशभिः सप्तभिः षड्भिश्चतुर्भिरङ्गुलैर्विस्तारः । तथाच काश्यपः —

> "ग्रीवा सप्ताङ्गुलव्यासा रुद्रांशैर्मुखविस्तृतिः ।
> कक्षयोरन्तरव्यासो भवेत् सप्तदशाङ्गुलैः ॥
> तदधोऽतिजगत्यंशैर्नन्दांशैः स्यात् प्रतिस्तनम् ।
> षड्यवव्यासनिम्ना स्यान्नाभिर्मध्यं ततस्तनु ॥
> रुद्रमात्रैस्तु विस्तारं रोमराज्या च शोभितम् ।
> कटिर्द्वितालविस्तारा श्रोणी कृत्यङ्गुलैस्ततः ॥
> जानुव्यांसः सप्तमात्रैरूर्वोर्व्यासस्तु तालतः ।
> नलकाततिर्वेदांशा जङ्घामध्यं रसाङ्गुलम् ॥"

इति ॥ ११२ ॥

**उत्कृत्या** षड्विंशत्यङ्गुलैः अधिभुजं भुजयोः आततिः दैर्घ्यं स्यात् । प्रकोर्परमनु प्रकोर्परयोः द्वाभ्यां द्व्यङ्गुलाभ्यां, प्रकोष्ठे धृत्या अष्टादशाङ्गुलैः तले पाणितलयोः सप्तभिरङ्गुलैराततिः स्यात् । अङ्गुष्ठादिष्वङ्गुलीषु क्रमाद्

---

१. 'तुःस्था' ख. पाठः

**अङ्गुष्ठादिषु तत्ततिर्नवनगाद्यब्यङ्गसङ्ख्यैर्यवै-**
**स्त्रीष्वश्वैर्मणिबन्धकोर्परभुजामूलेऽङ्गुलैर्विस्तृतिः ॥**
**तर्जन्यग्रिमयोर्युगैर्युगयवन्यूनैः पराङ्घ्र्यङ्गुलि-**
**ष्वायामोऽङ्गुलकैर्नृपाष्टसदलाद्यब्यङ्गसंख्यैर्यवैः ।**

---

युगशराङ्गेष्वर्णवैः चतुर्भिः पञ्चभिः षड्भिः पञ्चभिः चतुर्भिश्चाङ्गुलैराततिः स्यात् । तत्ततिः तासामङ्गुलीनां ततिः नवनगाद्यब्यङ्गसंख्यैः क्रमेण नवभिः सप्तभिरष्टभिः सप्तभिः षड्भिश्च यवैः स्यात् । मणिबन्धकोर्परभुजामूले क्रमात् त्रीष्वश्वैः त्रिभिः पञ्चभिः सप्तभिश्चाङ्गुलैर्विस्तृतिः स्यात् । तथाचाहुः—

"उत्कृत्यंशैर्भुजायामः कोर्परः स्यात् कलासमः ।
धृत्यंशैस्तु प्रकोष्ठः स्यात् तलं सप्ताङ्गुलायतम् ॥
वेदेष्वृतुशराम्नायैरायताङ्गुलयः क्रमात् ।
नवर्षिवस्वृषिरसयवैरङ्गुलयस्तताः ॥
रामेषुषट्सप्तमात्रैर्मणिबन्धश्च कोर्परः ।
बाहुमध्यं च मूलं च विस्तीर्णं स्यात् क्रमेण तु ॥"

इति ॥ ११३ ॥

**तर्जन्यग्रिमयोः** पादतर्जन्यङ्गुष्ठयोः युगैः चतुर्भिरङ्गुलकैरायामः स्यात् । पराङ्घ्र्यङ्गुलिषु पादस्य परासु मध्यमानामिकाकनिष्ठासु क्रमाद् युगयवन्यूनैः चतुश्चतुर्यवहीनैः चतुरङ्गुलादर्धार्धाङ्गुलहीनैरायामः स्यात् । ज्येष्ठादीनां क्रमाद् नृपाष्टसदलाद्यब्यङ्गसंख्यैः षोडशभिरष्टभिरर्धान्वितसप्तभिः सप्तभिः षड्भिश्च यवैर्व्यासः स्यात् । सार्धयुगाङ्गुलैः अर्धाङ्गुलसहितचतुरङ्गुलैः स्तनसमुत्सेधः स्तनयोरुन्नतिः स्यात् । चूचुके त्रिभिरङ्गुलैर्व्यासः । अक्षे स्तनाग्रभागे श्रुतिभिः चतुर्भिर्यवैर्व्यासः । नाभौ ऋतुमितैः षड्भिर्व्यासः । दशा द्वाभ्यां यवाभ्यामक्षोन्नतिः स्यात् । तथाचाहुः—

"तर्जन्यग्रिमयोर्दीर्घं चतुर्भागमुदाहृतम् ।
सार्धत्रिभागं मध्या स्यात् त्रिभागं तदनामिका ॥

---

१. 'ली' ख. पाठः.

व्यासः सार्धयुगाङ्गुलैः स्तनसमुत्सेधस्त्रिभिश्चूचुके
व्यासोऽक्षे श्रुतिभिर्यवैर्ऋतुमितैर्नाभौ दृशाक्षोन्नतिः ॥

विघ्नेशं शरतालकैर्विरचयेत् त्र्यक्षं महेभाननं
गूढाभुग्नगलं स्थितं समुपविष्टं वातिपीनाङ्गकम् ।
उष्णीषान्मुखमेककेन सदलाभ्यां तालकाभ्यां ततः
कट्यन्तं चरणौ कराश्च करणीयाः सार्धतस्तालतः ॥११५॥

---

सार्धद्विभागमानं तु कनिष्ठाङ्गुलदीर्घकम् ।
द्विरष्टाष्टसार्धसप्तपातालैर्ऋतुभिर्यवैः ॥
अङ्गुष्ठादिकनिष्ठान्तं चरणाङ्गुलविस्तृतम् ।
रामांशैश्चूचुकव्यासः सार्धभागोन्नतौ स्तनौ ॥
स्तना(क्षमात्रं ? क्षं श्रुतिमानं) स्याद् द्वियवः स्यात् तदुन्नतिः ॥"

इति ॥ ११४ ॥

अथ गणपतिमुद्दिश्य पञ्चतालस्थितिमाह — विघ्नेशमिति । विघ्नेशं शरतालकैः पञ्चतालैः विरचयेत् । कीदृशं, त्र्यक्षम् अक्ष्णां त्रयेण युक्तं महेभाननं मत्तवारणेन्द्रसमानमुखं, गूढाभुग्नगलं गूढेन तिरोहितेन आभुग्नेन ईषद्वक्रितेन गलेन युक्तम्, अतिपीनाङ्गकम् अतिस्थूलकायं, स्थितं तिष्ठन्तं, वा समुपविष्टं सम्यगासीनं वा । उष्णीषाद् उष्णीषपट्टादारभ्य मुखं मुखमानम् एककेन तालेन, तत आरभ्य कट्यन्तमानं सदलाभ्यां तालाभ्याम् अर्धसहितेन तालद्वयेन, चरणौ कराश्च सार्धतस्तालतः सार्धैकतालेन करणीयाः स्युः । तथाचाहुः —

"विघ्नेशः पञ्चतालः स्यात् स्वासीनो वा स्थितो भवेत् ।
उष्णीषाधोमुखं तालं सार्धतालायताः कराः ॥
सार्धद्वितालं कण्ठाधोमानमाकटिसूत्रकम् ।
सार्धतालायतौ पादौ पीवरः सर्वतो भवेत् ॥"

इति ॥ ११५ ॥

**श्रीमद्रत्नकिरीटकुण्डलयुगग्रैवेयहाराङ्गद-**
**श्रेणीकङ्कणसोपवीतरशनावासोऽङ्घ्रिभूषादिकम् ।**
**तत्तन्मूर्त्यनुरूपतोऽत्र रचयेत् स्वस्वायुधाद्युज्ज्वलं**
**श्लक्ष्णं दृष्टिमनोहरं विरचनादाक्ष्याद् यथालक्षणम् ॥**

**पद्मं तालसमुच्छ्रयं द्विगुणविस्तारं च षोढा कृते**
**मूले पट्टमिलांशतो द्वितयतोऽस्याधस्तनाष्टच्छदम् ।**

---

तत्तन्मूर्तीनामलङ्कारं विशेषेण रचनीयमित्याह — **श्रीमदिति** । श्रीमद्रत्नकिरीटकुण्डलयुगग्रैवेयहाराङ्गदश्रेणीकङ्कणसोपवीतरशनावासोऽङ्घ्रिभूषादिकं श्रीमन्ति रत्नमयं किरीटं शिरोभूषणं तथा कुण्डलयुगं कर्णालङ्कारद्वयं तथा ग्रैवेयं ग्रीवाभूषणं तथा हारादिकमुरःस्थलभूषणं तथा अङ्गदश्रेणी भुजाभूषणावलिः कङ्कणं प्रकोष्ठभूषणं सोपवीतं ग्रीवागतोपवीतादिकं तथा रशनावस्त्रादिकं कटिभूषणं तथा मञ्जीराद्यङ्घ्रिभूषादिकं च तत्तन्मूर्त्यनुरूपतः स्वस्वमूर्तियोग्यतया तथा स्वस्वायुधाद्युज्ज्वलं स्वस्वायुधैरप्यतिशयेनोज्ज्वलं श्लक्ष्णम् अपरुषं दृष्टिमनोहरं नेत्रमनसोः प्रसादकरं यथालक्षणं लक्षणादनपवृत्तं च विरचनादाक्ष्याद् निर्माणकौशलेन विरचयेत् ॥ ११६ ॥

पदाधस्तनपद्मलक्षणमाह — **पद्ममिति** । पद्मं तालसमुच्छ्रयं द्वादशाङ्गुलोच्चं द्विगुणविस्तारं चतुर्विंशत्यङ्गुलविस्तारं च करोतु । षोढा कृते उत्सेधे षोढा विभक्ते सति मूले अधोभागे इलांशतः एकांशेन पट्टं वलयं करोतु । द्वितयतो द्व्यंशे अस्य पद्मस्याधस्तनाष्टच्छदम् अधोगताष्टपत्रम्, अब्जमध्यं पद्मस्य मध्यप्रदेशम् अङ्घ्रयूनप्रथं स्वविस्तारात् पादोनविस्तारयुक्तम्, उपरिष्टात् त्रिभिर्भागैः पट्टयुतमष्टपत्रं करोतु । अत्र पीठोच्छ्रयः कमलेनामा उक्तपद्मेन सहैव । पद्मोत्सेधः पीठोत्सेधे योजनीय इत्यर्थः । तथाच भास्करः —

"अथ पद्मस्य तूत्सेधं मुखमानसमुच्छ्रयम् ।
यावत्पद्मस्य तूत्सेधं षड्भागं च विधाय च ॥

व्यासः सार्धयुगाङ्गुलैः स्तनसमुत्सेधस्त्रिभिश्चूचुके
व्यासोऽक्ष्णे श्रुतिभिर्यवैर्ऋतुमितैर्गोभौ दृशाक्षोन्नतिः ॥

विघ्नेशं शरतालकैर्विरचयेत् त्र्यक्षं महेभाननं
गूढाभुग्नगलं स्थितं समुपविष्टं वातिपीनाङ्गकम् ।
उष्णीषान्मुखमेककेन सदलाभ्यां तालकाभ्यां ततः
कट्यन्तं चरणौ कराश्च करणीयाः सार्धतस्तालतः ॥११५॥

---

सार्धद्विभागमानं तु कनिष्ठाङ्गुलदीर्घकम् ।
द्विरष्टाष्टसार्धसप्तपातालैर्ऋतुभिर्यवैः ॥
अङ्गुष्ठादिकनिष्ठान्तं चरणाङ्गुलविस्तृतम् ।
रामांशैश्चूचुकव्यासः सार्धभागोन्नतौ स्तनौ ॥
स्तना(क्षमात्रं ? क्षं श्रुतिमानं) स्याद् द्वियवः स्यात् तदुन्नतिः ॥"

इति ॥ ११४ ॥

अथ गणपतिमुद्दिश्य पञ्चतालस्थितिमाह — **विघ्नेशमिति** । विघ्नेशं शरतालकैः पञ्चतालैः विरचयेत् । कीदृशं, त्र्यक्षम् अक्ष्णां त्रयेण युक्तं महेभाननं मत्तवारणेन्द्रसमानमुखं, गूढाभुग्नगलं गूढेन तिरोहितेन आभुग्नेन ईषद्वक्रितेन गलेन युक्तम्, अतिपीनाङ्गकम् अतिस्थूलकायं, स्थितं तिष्ठन्तं, वा समुपविष्टं सम्यगासीनं वा । उष्णीषाद् उष्णीषपट्टादारभ्य मुखं मुखमानम् एककेन तालेन, तत आरभ्य कट्यन्तमानं सदलाभ्यां तालाभ्याम् अर्धसाहितेन तालद्वयेन, चरणौ कराश्च सार्धतस्तालतः सार्धैकतालेन करणीयाः स्युः । तथाचाहुः —

"विघ्नेशः पञ्चतालः स्यात् स्वासीनो वा स्थितो भवेत् ।
उष्णीषाधोमुखं तालं सार्धतालायताः कराः ॥
सार्धद्वितालं कण्ठाधोमानमाकटिसूत्रकम् ।
सार्धतालायतौ पादौ पीवरः सर्वतो भवेत् ॥"

इति ॥ ११५॥

श्रीमद्रत्नकिरीटकुण्डलयुगग्रैवेयहाराङ्गद-
श्रेणीकङ्कणसोपवीतरशनावासोऽङ्घ्रिभूषादिकम् ।
तत्तन्मूर्त्यनुरूपतोऽत्र रचयेत् स्वस्वायुधाद्युज्ज्वलं
श्लक्ष्णं दृष्टिमनोहरं विरचनादाक्ष्याद् यथालक्षणम् ॥

पद्मं तालसमुच्छ्रयं द्विगुणविस्तारं च षोढा कृते
मूले पट्टमिलांशतो द्वितयतोऽस्याधस्तनाष्टच्छदम् ।

---

तत्तन्मूर्तीनामलङ्कारं विशेषेण रचनीयमित्याह — श्रीमदिति । श्रीमद्रत्नकिरीटकुण्डलयुगग्रैवेयहाराङ्गदश्रेणीकङ्कणसोपवीतरशनावासोऽङ्घ्रिभूषादिकं श्रीमन्ति रत्नमयं किरीटं शिरोभूषणं तथा कुण्डलयुगं कर्णालङ्कारद्वयं तथा ग्रैवेयं ग्रीवाभूषणं तथा हारादिकमुरःस्थलभूषणं तथा अङ्गदश्रेणी भुजाभूषणावलिः कङ्कणं प्रकोष्ठभूषणं सोपवीतं ग्रीवागतोपवीतादिकं तथा रशनावस्त्रादिकं कटिभूषणं तथा मञ्जीराद्यङ्घ्रिभूषादिकं च तत्तन्मूर्त्यनुरूपतः स्वस्वमूर्तियोग्यतया तथा स्वस्वायुधाद्युज्ज्वलं स्वस्वायुधैरप्यतिशयेनोज्ज्वलं श्लक्ष्णम् अपरुषं दृष्टिमनोहरं नेत्रमनसोः प्रसादकरं यथालक्षणं लक्षणादनपवृत्तं च विरचनादाक्ष्याद् निर्माणकौशलेन विरचयेत् ॥ ११६ ॥

पदाधस्तनपद्मलक्षणमाह — पद्ममिति । पद्मं तालसमुच्छ्रयं द्वादशाङ्गुलोच्चं द्विगुणविस्तारं चतुर्विंशत्यङ्गुलविस्तारं च करोतु । षोढा कृते उत्सेधे षोढा विभक्ते सति मूले अधोभागे इलांशतः एकांशेन पट्टं वलयं करोतु । द्वितयतो द्व्यंशे अस्य पद्मस्याधस्तनाष्टच्छदम् अधोगताष्टपत्रम्, अब्जमध्यं पद्मस्य मध्यप्रदेशम् अङ्घ्रयूनप्रथं स्वविस्तारात् पादोनविस्तारयुक्तम्, उपरिष्टात् त्रिभिर्भागैः पट्टयुतमष्टपत्रं करोतु । अत्र पीठोच्छ्रयः कमलेनामा उक्तपद्मेन सहैव । पद्मोत्सेधः पीठोत्सेधे योजनीय इत्यर्थः । तथाच भास्करः —

"अथ पद्मस्य तूत्सेधं मुखमानसमुच्छ्रयम् ।
यावत्पद्मस्य तूत्सेधं षड्भागं च विधाय च ॥

**अङ्घ्र्यूनप्रथमब्जमध्यमुपरिष्टादष्टपत्रं त्रिभि-**
**र्भागैः पट्टयुतं करोतु कमलेनामात्र पीठोच्छ्रयः ॥ ११७॥**
**विंशत्या प्रतिमाङ्गुलैः प्रविततं वृन्ते तथा सैकया**
**नालं सद्विकयापिवाथ विततेरष्टाचलाङ्गांशकैः ।**
**अन्ते हीनवितानमारचयतु ब्रह्मोपलान्तायतं**
**तुर्याश्रं सकलेषु वैधसमिदं वृत्तं क्वचिच्चैश्वरम् ॥ ११८॥**

---

त्रिभागमूर्ध्वपद्मं स्यादधःपद्मं[2] द्वियंशकम् ।
शेषांशं पद्मपट्टं स्यात् पीठमानसमाश्रितम् ॥
पद्मस्य विस्तरो ज्ञेयो द्वितालस्त्रितालो वा(?) ।
पद्मविस्तारमेवं स्यात् त्रिभागो मध्यविस्तरः ॥
अष्टपत्रैस्तु संयुक्तं वृत्तमेव विधीयते ।''

इति ॥ ११७ ॥

नाललक्षणमाह — **विंशत्येति** । वृन्ते पद्ममूले विंशत्या वा सैकया विंशत्या वा सद्विकया विंशत्या वा प्रतिमाङ्गुलैः प्रतिमायास्तालवशात् कल्पितैरङ्गुलैः प्रविततं विस्तृतं नालमारचयतु । अथान्ते नालाग्रे वितते: मूलविस्तृतेः अष्टाचलाङ्गांशकैः अष्टांशेन वा सप्तांशेन वा षडंशेन वा हीनवितानं रहितविस्तारं ब्रह्मोपलान्तायतं नपुंसकशिलापर्यन्तदैर्घ्ययुक्तं रचयतु । इदं नालं सकलेषु देवेषु वैधसं ब्रह्मदेवत्यं तुर्याश्रं, तथाच क्वचिद् वृत्तं चैश्वरं रुद्रदेवत्यं च । तथाच भास्करः —

''पद्मनालस्य विस्तारं प्रतिमाङ्गुलेन चोच्यते ।
द्वाविंशतिश्च अङ्गुल्य एकविंशाङ्गुलं भवेत् ॥
विंशाङ्गुलं तथैव स्यात् त्रिविधं नालविस्तरम् ।
नालमूलस्य तारेण[3] अग्रविस्तारहीनता ॥
अष्टभागैकहीनं स्यात् सप्तभागैकहीनकम् ।
षड्भागस्यैकहीनं स्यात् त्रिविधं त्वग्रहीनकम् ॥''

इति । तथाच मुरारिः —

---

१. 'त' मूलपाठः. २. 'द्मस्यांश' ख. पाठः. ३. 'त्रा' क. पाठः.

**लिङ्गानि सायककरादिपदोनिताश्वि-**
**हस्तान्तिमानि चरणांशविमुक्तिक्लृप्त्या ।**
**स्युर्वर्णिनां मुखभुजोरुपदोद्भवानां**
**पञ्चाग्निपावकजगत्परिसङ्ख्यकानि ॥ ११९ ॥**
**अङ्घ्र्यंशकक्रमकृतह्रसनेन भूयो**
**द्वे चैकमप्यनुविलोमकुलोत्थयोः स्युः ।**

---

"तस्य नालं तु वृत्तं स्याच्चतुरश्रं तु वा भवेत् ।
वृत्तं शिवात्मकं ब्राह्मं तथा स्याच्चतुरश्रकम् ॥
रत्नन्यासस्पृगेव स्यान्नान्यथा नालमिष्यते ।"

इति ॥ ११८ ॥

बिम्बलक्षणमुक्त्वा लिङ्गलक्षणमाह — **लिङ्गानीति** । मुखभुजोरुपदोद्भवानां ब्रह्मणो मुखादिभ्यः संभूतानां ब्राह्मणक्षत्रियवैश्यशूद्राणां वर्णिनां[2] क्रमेण चरणांशविमुक्तिक्लृप्त्या पादपादांशहीनक्रमेण सायककरादिपदोनिताश्विहस्तान्तिमानि पञ्चकरादिपादोनद्विहस्तावसानानि पञ्चाग्निपावकजगत्परिसंख्यकानि पञ्चत्रित्रित्रिसंख्यकानि लिङ्गानि स्युः । तत्र पञ्चकरपादोनपञ्चकरसार्धचतुष्करसपादचतुष्करचतुष्करमितानि पञ्च लिङ्गानि ब्राह्मणानां, पादोनचतुष्करसार्धत्रिकरसपादत्रिकरमितानि त्रीणि क्षत्रियाणां, त्रिकरपादोनत्रिकरसार्धद्विकरमितानि त्रीणि वैश्यानां, सपादद्विकरद्विकरपादोनद्विकरमितानि त्रीणि लिङ्गानि शूद्राणामिति विभागः । तथाच पाशुपते —

"पञ्चहस्तादि विप्राणां ह्रासादेकैकपादतः ।
लिङ्गं पञ्चविधं तद्वदन्येषां च त्रयं त्रयम् ॥"

इति ॥ ११९ ॥

भूयः पादोनद्विकरादारभ्य अङ्घ्र्यंशकक्रमकृतह्रसनेन पादांशहीनक्लृप्त्या अनुविलोमकुलोत्थयोः अनुलोमजातस्य प्रतिलोमजातस्य च क्रमेण द्वे चैकमपि लिङ्गानि स्युः । तत्र सार्धैककरसपादैककरमिते द्वे लिङ्गे अनुलोमजातानाम्, एककरमेकमेव लिङ्गं प्रतिलोमजातानाम् । तान्येककरादिकानि

---

१. 'युक्तक्लृ' मूलपाठः २. 'र्णां' क. पाठः.

तान्युत्तरोत्तरकुलप्रभवेषु चानु-
लोम्यात् प्रकल्पयतु वैककरादिकानि ॥ १२० ॥

गर्भव्यासे विभक्ते स्मरशरनवनेत्रैस्त्रिपञ्चैकभागै-
र्लिङ्गानि त्रीणि तेषु त्रिषु गुणदलितेष्वेकभागैर्द्विभागैः ।
द्वे द्वे तानि स्युरेवं नव चरणयुतं तत्समं पादहीनं
द्वाराद् द्व्येकांशकाभ्यामपि गुणदलिते तत्र पञ्चेतराणि ॥

---

लिङ्गानि उत्तरोत्तरकुलप्रभवेष्वानुलोम्याद् अनुलोमक्रमेण प्रकल्पयतु वा । तत्र ब्राह्मणानां सर्वाणि लिङ्गानि ग्राह्याणि । क्षत्रियाणां स्वानि, वैश्यानां विहितानि चेत्यादि च कल्पयतु । तथा निबन्धने —

"द्विकरान्तं च पञ्चादि विप्रादीनां क्रमात् स्मृतम् ।
एकहस्तं तु यल्लिङ्गं प्रातिलोम(च?ज)मुच्यते ॥" ॥ १२० ॥

गर्भगृहप्रमाणेनापि लिङ्गान्याह — **गर्भव्यास** इति । स्मरशरनवनेत्रैः पञ्चभिर्नवभिर्द्वाभ्यां च गर्भव्यासे गर्भगृहव्यासे विभक्ते सति क्रमात् त्रिपञ्चैकभागैश्च त्रीणि लिङ्गानि । तेषु त्रिषु लिङ्गेषु गुणदलितेषु त्रि[1]त्रिभक्तेषु एकभागैर्द्विभागैश्च इति तत्र तत्र द्वे द्वे । एवं तानि लिङ्गानि नव स्युः । पुनर्द्वारवशादपि लिङ्गान्याह चरणयुतमित्यादिश्लोकशेषेण । तत्समं द्वारसमं चरणयुतं द्वारात् पादांशाधिकं पादहीनं द्वारात् पादांशहीनं, गुणदलिते त्रिभक्ते तत्र द्वारे द्व्येकांशकाभ्यामपि द्व्यंशेनैकांशेन च इतीतराण्यपि पञ्च लिङ्गानि स्युः । तथा[2] च पाशुपते —

" भूतरन्ध्राष्टभेदेन गर्भगेहे विभाजिते ।
वह्निभूतचतुर्भिस्तु कल्पितं त्रिविधं विदुः ॥"

क्रियासारे च —

"त्रितयं विभजेत् त्रिधा ।
एकस्य द्वितयं चैकमेकस्यैवं नवोदितम् ॥"

पुनरपि पाशुपते —

---

१. 'त्रिभक्ते', २. 'था पा' क· पाठः.

**लिङ्गं सर्वसमं समोन्मितिविभक्तांशत्रयं तत् पुनः**
**स्वायत्या समनाहकं यदि समांशं चाथ वृद्ध्युत्तरम् ।**
**भक्ते भानुयुजोच्छ्रयेऽद्रिवसुनन्दांशै(स्तु) मूलादिषू-**
**पेतं दिग्दलिते त्रिलोकयुगसङ्ख्याभिस्तथेशाधिकम् ॥**

---

"पादाधिकं समस्तं च पादोनं गुणभाजिते ।
द्वाभ्यामेकेन निर्दिष्टं द्वारमानेन पञ्चधा ॥"

इति ॥ १२१ ॥

इति लिङ्गायाममुक्त्वा तेषां विभागक्लृप्तिमाह — **लिङ्गमिति** । समोन्मितिविभक्तांशत्रयं समेनोन्मानेन दैर्घ्येण[1] विभक्तमंशत्रयं चतुरश्राष्टाश्रवृत्तस्वरूपं यद्यल्लिङ्गं तत् सर्वसममिति प्रसिद्धम् । तल्लिङ्गं पुनः स्वायत्या स्वस्वभागदैर्घ्येण समनाहकं यदि भवति, तर्हि तत् समांशमिति प्रसिद्धम् । अथ भानुयुजा चतुर्विंशतिधा उच्छ्रये भक्ते सति मूलादिषु चतुरश्रादिषु अद्रिवसुनन्दांशैरुपेतं लिङ्गं वृद्ध्युत्तरम् । तथा दिग्दलिते दशधा विभक्ते मूलादिषु त्रिलोकयुगसंख्याभिः त्रित्रिचतुर्भागैरुपेतमीशाधिकमिति प्रसिद्धम् । तथा निबन्धने —

"अग्रे मूले च मध्ये च प्रमाणं सर्वतः समम् ।
तद्धि सर्वसमं नाम वहुधान्यधनावहम् ॥
लिङ्गं त्रिधा विभक्तं स्यात् परिणाहसमायतम् ।
समांशमिति विज्ञेयं नैतत् सूक्ष्मतरं भवेत् ॥
उत्सेधमाने लिङ्गस्य चतुर्विंशतिभाजिते ।
सप्ताष्टनवभागैस्तु क्रमेणोर्ध्वविवर्धितम् ॥
वर्धमानमिति ज्ञेयं सर्वसम्पत्समृद्धिदम् ।
उत्सेधं दशधा भङ्क्त्वा मूलमध्यं त्रिभिस्त्रिभिः ।
चतुर्भागयुतं चोर्ध्वं कुर्यादेवं शिवाधिकम् ॥"

इति ॥ १२२ ॥

---

१. 'र्घ्वे' क. पाठः

**आयामे दलिते दिवाकरयुजाभीष्टेऽष्टभिर्विस्तृतिः**
**कार्यांशैरथ पञ्चपञ्चयवयुक्तैः सप्तभिः पञ्चभिः ।**
**स्वायामार्कयुगांशतद्विरसनांशः स्याद् यवः केवलैः**
**पञ्चांशैरपि गर्भगेहनवमांशेनापि सा स्मर्यते ॥ १२३ ॥**
**यथोचितातानवितानयुक्तां शिलां त्रिधोक्तक्रमतो विभज्य।**

---

आयामस्य क्लृप्तिमुक्त्वा विस्तारक्लृप्तिमाह — **आयाम** इति । अभीष्टे आयामे दिवाकरयुजा चतुर्विंशतिधा दलिते विभक्ते अष्टभिः विस्तृतिः कार्या । अथात्रैव पञ्चपञ्चयवयुक्तैः इति । पञ्चयवयुक्तैः सप्तभिश्च पञ्चयवयुक्तैः पञ्चभिश्चांशैरिति द्विधा च विस्तृतिः कार्या । तन्मध्ये तत्रत्यं यवलक्षणमप्याह — स्वायामार्कयुगांशतद्विरसनांशः स्याद् यव इति । स्वायामस्य स्वदैर्घ्यस्यार्कयुगांशः चतुर्विंशत्यंशो यस्तस्य द्विरसनांशोऽष्टांशश्च यः स यवः स्यात् । पुनः पूर्वोक्तशेषत्वेन विस्तारान्तरमाह — केवलैरित्यादिना । आयामे चतुर्विंशतिधा कृते केवलैः पञ्चांशैरपि विस्तृतिः कार्या । अपिशब्देन ब्राह्मणादिवर्णिनामेव ते चत्वारो विस्तारा इति सूचितम् । गर्भगेहे[3]नवमांशेनापि सा विस्तृतिः स्मर्यते क्रियत इत्यर्थः । तथाचाहुः —

"चतुर्विंशतिभक्तस्य विस्तारोऽष्टभिरंशकैः ।
यवपञ्चकसंयुक्तैः सप्तभिः पञ्चभिस्तथा ॥
केवलैः पञ्चभिश्चैवं विस्तारो ब्राह्मणादिषु ।
चतुर्विंशतिभागं तु पुनर्भङ्क्त्वाष्टधांशकैः ॥
यवस्थाने च संयुक्तैः कल्पयेद् द्विकरादिकम् ।"

इति ।

"गर्भत्रिभागं पीठं स्याल्लिङ्गं पीठत्रिभागकम् ।"

इति च ॥ १२३ ॥

एवं कल्पितायाः शिलायाश्चतुरश्रादिरूपेण त्रैविध्यकल्पनमाह — **यथोचितातानेति** । यथोचितातानवितानयुक्तां यथोचिताभ्यामातानवि-

---

१. 'क', २. 'स स्मार्य' मूलपाठः. ३. 'हे' क. पाठः.

**मूलं युगाश्रं विदधीत मध्यमष्टाश्रकं वृत्तमयं परं च ॥१२४॥**
**तुर्याश्रे सुसमे प्रसार्य भुजसूत्रं कर्णसूत्राध्वना**
**तस्यान्ताहितलक्ष्मसु प्रतिदिशं द्वे द्वे भुजासूत्रके ।**
**कृत्वा तद्द्वयमध्यसंस्थितचतुष्कोणानि संशोध्य सा-**
**ध्वष्टाश्रं विदधीत वृत्तमपि तद्द्व्यष्टाश्रकादिक्रमात् ॥१२५॥**
**विस्तारं शिवलिङ्गमूर्ध्नि वसुनन्दादित्यरुद्रांशकं**
**कृत्वात्र क्रमशो विशोध्य परितो द्व्येकद्विलोकांशकान् ।**

---

तानाभ्यां युक्तां शिलामुक्तक्रमतस्त्रिधा विभज्य मूलं युगाश्रं चतुरश्रं मध्यम् अष्टाश्रकं परं वृत्तमयं च विदधीत । तथा निबन्धने —

"आयामं तु द्विधा कृत्वा मूलमध्याग्रतः क्रमात् ।
तुर्याश्राष्टाश्रवृत्तानि भूपीठव्योमगानि तु ॥"

इति ॥ १२४ ॥

तत्करणविधानमाह — **तुर्याश्र** इति । सुसमे तुर्याश्रे दीर्घचतुरश्रीकृते तत्र शिलाप्रकाण्डे भुजसूत्रं. दिक्सूत्रं कर्णसूत्राध्वना कोणसूत्रमार्गेण प्रसार्य तस्य सूत्रस्य अन्ताहितलक्ष्मसु अवसाने सम्पादितलाञ्छनेषु प्रतिदिशं चतसृष्वपि दिक्षु द्वे द्वे भुजासूत्रे दिक्सूत्रे कृत्वा तद्द्वयमध्यसंस्थितचतुष्कोणानि तस्य भुजासूत्रद्वयस्य मध्यस्थितानि चत्वारि कोणानि संशोध्य त्यक्त्वा साधु यथावदष्टाश्रं विदधीत । तद्द्व्यष्टाश्रकादिक्रमात् । तत्पुनरष्टाश्रं तथैव प्रोक्तक्रमेण षोडशाश्रं तद्द्वात्रिंशदश्रमित्यादिक्रमेण वृत्तमपि विदधीत । तथाच मञ्जर्यां —

"निक्षिप्य कर्णेषु च बाहुसूत्रं तस्यावसाने विनिधाय सूत्रम् ।
कोणेषु सर्वत्र च निम्नमेतदष्टाश्रकं वृत्तमथैवमेवम् ॥"

इति ॥ १२५ ॥

शिरोवर्तनविधिमाह — **विस्तारमिति** । अत्र शिवलिङ्गमूर्ध्नि वसुनन्दादित्यरुद्रांशकम् अष्टनवद्वादशैकादशभागं कृत्वा क्रमशो द्व्येकद्विलोकांश-

---

१. 'तो' मूलपाठः. २. 'श्रयुक्तं च' ख. पाठः.

**कृत्वात्यष्टितिथिप्रकृत्यतिधृतिख्यातांशयुक्तं क्रमात्**
**पूजाभागमिहोक्तभागमुपरिष्टाच्छोधयेद् वर्णिषु ॥ १२६ ॥**

**तन्मस्तके नवविभागतया विभक्ते**
**भागं विशोध्य परितः शिवभागदैर्घ्यम्[1] ।**
**द्वात्रिंशदंशकतया परिकल्प्य भागा-**
**नेकैकशो द्विजमुखेषु विशोधयेद्वा ॥ १२७ ॥**

---

कान् त्र्येकद्वित्रिभागान् परितो विशोध्य पुनः पूजाभागं वृत्तभागमपि तथा-त्यष्टितिथिप्रकृत्यातिधृतिख्यातांशयुक्तं सप्तदशपञ्चदशैकविंशत्येकोनविंशत्यंश-युक्तं कृत्वा क्रमादिहापि उक्तभागं त्र्येकद्वित्रिभागमुपरिष्टाद् वर्णिषु ब्राह्मणादिषु शोधयेत् । तथाच पाशुपते —

"वसुरन्ध्रऋतुद्वन्द्वरुद्रभेदे तु विस्तृते ।
त्र्येकद्वित्रितयांशैस्तु वर्तयेल्लिङ्गमस्तकम् ॥
सप्तपञ्चमहारुद्रनवयुक्तैर्दशांशकैः ।
पूजाभागगते दैर्घ्ये विभक्ते कल्पयेत् क्रमात् ॥
अंशैः पूर्वोदितैरेव त्रपुषीफलमस्तकम् ।
छत्राभं बालचन्द्राभं कुक्कुटाण्डनिभं क्रमात् ॥"

इति ॥ १२६ ॥

पक्षान्तरमाश्रित्य शिरोवर्तनमाह — **तन्मस्तक** इति । तन्मस्तके तस्योर्ध्वभागविस्तारे नवविभागतया विभक्ते सति परितो भागमेकांशं विशो-ध्य शिवभागदैर्घ्ये पूजाभागायामं द्वात्रिंशदंशतया परिकल्प्य द्विजमुखेषु ब्राह्मणादिषु भागानेकैकशः एकैकाधिक्येन शोधयेद्वा । तथाच क्रियासारे —

"विस्तारं नवधा भङ्क्त्वा बाह्यभागं विशोधयेत् ।
आयामं शिवभागस्य समं भङ्क्त्वाष्टधान्तिमम् ॥
वेदैर्विभज्य वर्णानामेकैकं तु विशोधयेत् ।"

इति ॥ १२७ ॥

---

1. 'र्घ्ये' ख. पाठः.

कुर्वीत त्रपुषीफलाग्रसदृशं छत्रोपमं मस्तकं
बालेन्द्वाकृति कुक्कुटाण्डसदृशं विप्रादिवर्णक्रमात् ।
भेदाः सर्वसमांशकप्रभृतयो नाहप्रभेदान्विता-
स्तेऽप्येतत्क्रमतः स्युरेतदनुलोमाङ्गीकृतिश्चेष्यते ॥ १२८ ॥

भङ्क्त्वा त्रेधा शिवांशायतिमुपरितनं भागमुत्क्षिप्य शिष्टं
कृत्वाष्टांशं समास्फाल्य च विषुवसिरासूत्रमत्राष्टमांशे ।

---

तत्र वर्णवशाद् भेदमाह — कुर्वीतेति । विप्रादिवर्णक्रमात् त्रपुषीफलाग्रसदृशं, त्रपुषीफलं (ചുരക്കാ) तस्याग्राभं छत्रोपमं छत्राकारं बालेन्द्वाकृति बालेन्दुसदृशं कुक्कुटाण्डसदृशं च मस्तकं कुर्वीत । नाहप्रभेदान्विताः नाहप्रभेदेन युक्ताः सर्वसमांशकप्रभृतयो भेदाश्च एतत्क(मात् ? मतः) विप्रादिक्रमात् स्युः । एतदनुलोमाङ्गीकृतिश्च विप्रादीनामनुलोमाङ्गीकारश्चेष्यते । तथाच मञ्जर्यां —

"लिङ्गस्य त्रपुषीफलाग्रसदृशं विप्रस्य कुर्याच्छिर-
श्छत्राभं धरणीपतेः शशिकलाकारं विशः कल्पयेत् ।
शूद्राणामपि कुक्कुटाण्डसदृशं सर्वं समस्तस्य वा
वर्णस्य प्रविधेयमेषु बहुधा भेदाः पृथक् संस्थिताः ॥"

इत्यादि ॥ १२८ ॥

लक्ष(ण ? णो)द्धारमाह — भङ्क्त्वेति । शिवांशायतिं पूजाभागदैर्घ्यं त्रेधा भङ्क्त्वा उपरितनम् ऊर्ध्वगतं भागमुत्क्षिप्य ऊर्ध्वं त्यक्त्वा शिष्टमष्टांशं कृत्वा विषुवसिरासूत्रं मध्यनाडीसूत्रं चास्फाल्य अत्राष्टमांशे लिङ्गाभं शिवलिङ्गाभं लक्ष्म वर्णिनां साधारणं लिखेत् । अथ विप्रादिकप्त्या यवरूपं यवाकारं महेभक्षणाभं गजनयननिभं व्रीह्याकारं बद्धाञ्जलिनिभमपि लिखेद्वा । तथाचाहुः—

"पूजाभागं त्रिधा भङ्क्त्वा मुक्त्वा भागमथान्तिमम् ।
कण्ठादिमौलिपर्यन्तं मुखं तस्मिन् व्यवस्थितम् ॥

**लिङ्गाभं लक्ष्म साधारणमथ यवरूपं महेभेक्षणाभं**
**व्रीह्याकारं च बद्धाञ्जलिनिभमपि विप्रादिक्लृप्त्या लिखेद्वा॥**
**रेखां लक्षणमूलतो मणिमयीं मूलांशयुग्मान्तिमं**
**रेखे लक्षणपार्श्वजे च परिलिख्येष्वंशमध्यावधि ।**
**ऊर्ध्वाग्रैर्ऋतुसूत्रकैस्त्रिदशकोष्ठानि प्रकल्प्याथ ते**
**तत्कर्णक्रमतः परागवनिपङ्क्त्यन्ते मिथो योजयेत्॥ १३०॥**
**विस्तारोऽधमलक्षणे द्वियवतस्तत्पादवृद्ध्योर्ध्वतो**
**रेखा तद्दलतो मिता मणिमयी तत्सामिक्लृप्ते परे ।**

---

शेषाभ्यां लक्षणोद्धारं लिङ्गाकारं समं भवेत् ।
तद्ब्रह्मसूत्रमुल्लिख्य विप्राणां तु यवाकृति ॥
नृपतेरिभनेत्राभं व्रीह्याकारं स्मृतं विशः ।
शूद्रस्याञ्जलिमुद्राभं सर्वेषां सर्वमेव वा ॥"

इति ॥ १२९ ॥

मणिरेखापार्श्वरेखयोर्लक्ष्[1]णमाह — **रेखामिति** । लक्षणमूलतः लक्षणोद्धारादधोभागे मणिमयीं मणिसंज्ञां मध्यस्थां रेखां मूलांशयुग्मान्तिमं मूलांशयुग्मपर्यन्तं परिलिख्य लक्षणपार्श्वजे लक्षणस्य पार्श्वगते च रेखे इष्वंशमध्यावधि पञ्चमांशमध्यपर्यन्तं परिलिख्य ऊर्ध्वाग्रैर्ऋतुसूत्रकैः षट्सूत्रैः त्रिदशकोष्ठानि त्रिंशत्पदानि प्रकल्प्याथ (ते) तत्कर्णक्रमतः तत्कोणक्रमेण पराक् पृष्ठभागे अवनिपङ्क्त्यन्ते ए(व ? क)पङ्क्त्यवसाने मिथोऽन्योन्यं योजयेत् । तथाच मञ्जर्याम् —

"भङ्क्त्वा तं च तथाष्टधा सममधस्त्यक्त्वा च भागद्वयं
रेखां तां मणिसंज्ञिकीं परिलिखेत् पार्श्वद्वये भ्रामयेत् ।
रेखे पञ्चमभागमध्यनिहिते पृष्ठे तथा संगति-
श्चान्त्यांशोपरि मध्यमाश्च ललिता रेखा न निम्नोन्नताः ॥"

इति ॥ १३० ॥

तत्र अधमलक्षणे अधमलिङ्गस्य लक्षणे द्वियवतो विस्तारः स्यात् । ऊर्ध्वतो मध्यमोत्तमयोस्तत्पादवृद्ध्या विस्तारः । मणिमयी रेखा तद्दलतः तद-

---

[1] 'क्ष्माह' ख. पाठः.

**रेखा दक्षिणवाममध्यरचिता ब्रह्माजितानङ्गजि-**
**द्देवत्याश्चतुरश्रकादिशिवलिङ्गांशाश्च तद्देवताः ॥ १३१ ॥**
**बिम्बे बिम्बोच्छ्रयसमसमायामविस्तारयुक्तं**
**स्वव्यासार्धोच्छ्रयपरिगतं च प्रकुर्वीत पीठम् ।**

---

र्धेन मिता । परे अन्ये पार्श्वरेखे तत्सामिक्लृप्ते तदर्धमिते च स्याताम् । दक्षिणवाममध्यरचिता रेखाः क्रमाद् ब्रह्माजितानङ्गजिद्देवत्याः ब्रह्मविष्णुरुद्रदेवताः। चतुरश्रादिशिवलिङ्गांशाश्च चतुरश्राष्टाश्रवृत्तांशाश्च तद्देवताः स्युः। तथाहुः —

"यवद्वयमथारभ्य वर्धयेल्लिङ्गमानतः।
लक्षणस्य तु विस्तारं पादेन द्विगुणान्ततः ॥
विस्तारं मणिरेखायाः खातं चापि यवादितः ।
ब्रह्मसूत्रस्य यत् खातं तदर्धं पक्षसूत्रयोः ॥"

इति । तथाच —

"दक्षिणायां चतुर्मुखः ।
वामाख्यायां महाविष्णर्मध्यगायां महेश्वरः ॥"

इति । मञ्जर्यां च —

"विष्णुस्थाणुपितामहाश्च विहिता भागत्रये देवताः"

इति ॥ १३१ ॥

एवं बिम्बस्य लिङ्गस्य च लक्षणमुक्त्वा तयोः पीठलक्षणमाह — **बिम्ब इति** । वि(म्ब ? म्बे) स्थाप्ये बिम्बोच्छ्रयसमसमायामविस्तारयुक्तं बिम्बोच्छ्रयसमेनायामेन विस्तारेण च युक्तं, स्वव्यासार्धोच्छ्रयपरिगतं स्वस्य व्यासस्यार्धमात्रेणोच्छ्रयेण युक्तं पीठं प्रकुर्वीत । लिङ्गे स्थाप्ये लिङ्गव्यासत्रिगुणितविततत्याततिभ्यां लिङ्गविस्तारत्रिगुणिताभ्यां विस्तारदीर्घाभ्यां समेतं, स्वाष्टाश्रकसमसमुच्छ्रायि लिङ्गस्याष्टाश्रेण समानोच्छ्रयं तुर्यश्ररूपं चतुरश्राकारं पीठं प्रकुर्वीत। तथाच संहितायां —

"बिम्बोच्चार्धं तु पीठोच्चमायामो बिम्बमानतः"

---

१. 'मा' ख. पाठः.

लिङ्गव्यासत्रिगुणितविततव्याततिभ्यां समेतं
लिङ्गे स्वाष्टाश्रकसमसमुच्छ्राथि तुर्यश्ररूपम् ॥ १३२ ॥
द्व्यष्टांशे शिवपीठके क्षितिशराब्धीन्द्वंशकैः पादुकं
प्राद्ध्याज्जगतीं तथा कुमुदकं तत्पट्टिकां च क्रमात्।
अंशाभ्यां गलमंशकेन गलपट्टिं जागतेऽब्ध्यंशिनि
ग्रीवान्तेऽर्धयुतद्वयेन वलभिं शिष्टेन पट्टिं सदा ॥ १३३ ॥

---

इति । "लोहजस्यैकयोनिजम् । शैलमन्यत्र विज्ञेयम्" इति च । तथाच पाशुपते —

"लिङ्गत्रिगुणविस्तीर्णां विष्णुभागसमोच्छ्रयाम् ।
लिङ्गायामप्रविस्तीर्णां कल्पयेद् वाथ पीठिकाम् ॥"

इति ॥ १३२ ॥

तत्र शिवलिङ्गपीठस्य क्लृप्तिमाह — द्व्यष्टाश इति । शिवपीठके द्व्यष्टांशे षोडशांशीकृते सति क्षितिशराब्धीन्द्वंशकैः एकपञ्चचतुरेकांशकैः क्रमात् पादुकं जगतीं तथा कुमुदकं तत्पट्टिकां च प्राद्ध्यात् । अंशाभ्यामंशद्वयेन गलं च एकेनांशेन गलपट्टिं च । जागते अब्ध्यंशिनि चतुर्भिरंशैरेव जगतीमादध्या(द्यभि ? त्)। ग्रीवान्ते अर्धयुतद्वयेन वलभिं सदापि पक्षद्वयेऽपि[1] शिष्टेन पट्टिं च । तथाचाहुः —

"उत्सेधं विभजेत् तस्याः समं षोडशधा क्रमात् ।
एकेन पादुकं कुर्यात् पञ्चभिर्जगतीमपि ॥
कुमुदं कुमुदपट्टिं च वेदैरेकांशकेन तु ।
द्वाभ्यामेकेन कर्तव्यं गलं च गलपट्टिकाम् ॥
अंशद्वयेन सुदृढं कल्पयेन्मुखपट्टिकाम् ।"

तथाच मञ्जर्याम् —

"उत्सेधं वसुयुग्मकेन विभजेत् पीठस्य चैकांशतः
कुर्यात् पादुकमंशकैश्च जगतीं वेदैश्चतुर्भिः क्रमात् ।

---

१. 'येनापि' ख. पाठः.

**पीठे मुक्त्वा प्रतिष्ठावटमुदधिविभागं विधायावशिष्टं**
**द्वाभ्यामाधाय पाथोवलयमुदकधात्रीं विधायांशकेन ।**
**शिष्टेनाधाय तद्वेष्टनमथ तदुदक् त्र्यंशविस्तारदैर्घ्यं**
**कुर्यादष्टाश्रमाशांशककृतजलकुल्यं कृशाग्रं प्रनालम् ॥**
**बिम्बे नपुंसकशिलां निजनालमूल-**
**विस्तारतोऽधिचरणांशदलांशतानाम् ।**

---

एकांशेन विलोचनेन कुमुदं चालिङ्गपट्टिं गलं
सार्धांशद्वितयेन रम्यवलभिं शिष्टेन पट्टिं खनेत् ॥''

इति ॥ १३३ ॥

पीठस्योपरिगतविभागमाह — पीठ इति । पीठे प्रतिष्ठावटं मुक्त्वा अवशिष्टमुदधिविभागं चतुर्धा च विधाय द्वाभ्यामन्तर्गताभ्यामंशाभ्यां पाथोवलयं जलमार्गाकारं वलयमाधाय एकेनांशेनोदकधात्रीं शिष्टेन तद्वेष्टनं चाधायाथ तदुदग्भागे त्र्यंशविस्तारदैर्घ्यं पीठस्य त्रिभागेन विस्तारदैर्घ्ययुक्तमाशांशकृतजलकुल्यं दशांशेन कृतजलकुल्यमष्टाश्रं क्रमात् कृशाग्रं प्रनालं कुर्यात् । तथाचाहुः —

''लिङ्गावटं त्रियंशेन शिष्टं कृत्वाष्टधा क्रमात् ।
वलयं वारिमार्गस्य वेदैः खातं तदर्धतः ॥
खातस्य पार्श्वयोः कुर्याद् द्वाभ्यां द्वाभ्यां तु मेखलाम् ।
प्रनालमुत्तरे कुर्याद् विस्तारायामतः समम् ॥
त्रिभागेन तु पीठस्य कृत्वाष्टाश्रं समन्ततः ।
तद्दशांशेन खातं स्यात् किञ्चिदग्रे तनूकृतम्[1] ॥
तरङ्गमूलपार्श्वे तु जगत्यां चोर्ध्वतोऽर्पयेत्[2] ।
षोडशांशेन गमनं पीठमध्यादथैशगम् ॥''

इति ॥ १३४ ॥

बिम्बविषये नपुंसकशिलालक्षणमाह — बिम्ब इति । बिम्बे बिम्बविषये निजनालमूलविस्तारतः निजबिम्बनालस्य मूलभागविस्तृाराद् अधिचरणांशदलांशतानां पादाधिक्येन वार्धाधिक्येन वा विस्तारेण युक्तां, द्विघ्नप्रथां

---

१. 'तत्सम', २. 'वर्धतो' क. पाठः.

द्विघ्नप्रथां च विदधीत निजप्रथार्ध-
पादोनतत्समसमुच्छ्रयसम्प्रपन्नाम् ॥ १३५ ॥

भङ्क्त्वा त्रिधाङ्घ्रिदृषदुच्छ्रयमेकमंशं
पीठे द्विभागमुपवेशयतूर्वरायाम् ।
द्व्येकार्धिताङ्गुलिमितं खनतूत्तमादि
ब्रह्माश्ममूर्ध्न्युचितनालनिवेशनाय ॥ १३६ ॥

लिङ्गायामसमो नपुंसकशिलाव्यासो वरिष्ठोऽवरः
पूजांशाद्द्विगुणस्तदन्तरमितावष्टांशितायां क्रमात् ।

---

नालमूलविस्ताराद् द्विगुणितविस्तारयुक्तां वा, तथा निजप्रथार्धपादोनतत्समसमुच्छ्रयसंप्रपन्नां निजविस्तारार्धेन वा पादोनेन वा तत्समेन वा समुच्छ्रयेण युक्तां नपुंसकशिलां विदधीत । तथाचाहुः—

"पादशैलप्रमाणतः ।
पादाधिकमथाध्यर्धं द्विगुणं वा सविस्तरम् ॥
विस्तारार्धोच्छ्रयं कुर्यात् पादोनं वा विधीयते ।
विस्तारतः समं वापि त्रिविधं च तदुच्छ्रयम् ॥"

इति ॥ १३५ ॥

पुनः अङ्घ्रिदृषदुच्छ्रयं नपुंसकशिलोत्सेधं त्रिधा भङ्क्त्वा एकमंशं पीठे द्विभागमुर्वरायां भूमौ च उपवेशयतु । ब्रह्माश्ममूर्ध्नि नपुंसकशिलोपरिभागे उत्तमादिक्रमेण द्व्येकार्धिताङ्गुलिमितं द्वाभ्यामेकेन अर्धाङ्गुलेन वा मितम् उचितनालनिवेशनाय तत्र योग्यस्य नालस्य निवेशनाय खनतु च ॥ १३६ ॥

अथ लिङ्गविषये नपुंसकशिलालक्षणमाह—लिङ्गायामेति । लिङ्गायामसमः लिङ्गस्य दैर्घ्येण समो नपुंसकशिलाव्यासः नपुंसकशिलाया विस्तारो वरिष्ठ उत्तमः, पूजांशाद्द्विगुणः अवरः अधमः, तदन्तरमितौ तयोरन्तरगतायां मितौ अष्टांशितायां क्रमादंशवृद्ध्या अंशांशवर्धनेन अधममध्यमादिकविधिः अधमाधमाद्युत्तमोत्तमपर्यन्तस्य विधिः । तथाच सव्यासार्धतो व्या-

**अंशाद्वर्याधममध्यमादिकविधिर्न्यासार्धतोऽङ्घ्रयन्तिम-**
**श्चोत्सेधश्च तथात्र लिङ्गविनिवेशार्हश्च कार्योऽवटः ॥ १३७ ॥**
**सकले सति मूलबिम्बके निगमांशोन्मिति कर्मबिम्बकम् ।**
**सकलाकृति निष्कलेऽपि वा स्थितमासीनमुत प्रकल्पयेत् ॥**

---

सार्धमारभ्य अङ्घ्रयन्तिमः पादांशपर्यन्त उत्सेधश्च । तस्मिन्नपि तथाष्टांशिते तथा उत्तमोत्तमाद्यधमाधमपर्यन्तविधिश्च । तथात्र लिङ्गविनिवेशनार्हः लिङ्गविनिवेशनाय योग्योऽवटश्च कार्यः । तथाच गुरुदेवः—

"लिङ्गायामसमन्यासा श्रेष्ठा ब्रह्मशिला स्मृता ।
पूजांशद्विगुणा नीचा तयोर्मध्येऽष्टभागिके ॥
प्राग्वन्नव प्रकाराः स्युः शुभा ब्रह्मशिलाः स्मृताः ।
स्वव्यासार्धेन ता मुख्या नीचा पादांशतो घना ॥
तयोर्मध्येऽष्टधा भक्ते घनाद्ब्रह्मशिला नव ॥"

इति ॥ १३७ ॥

बिम्बविषये कौतुकलक्षणमाह—**सकल** इति । मूलबिम्बे सकले सावयवे सति निगमांशोन्मिति चतुर्थांशेनोन्मितं[1] मानं यथा भवति तथा कर्मणि बिम्बकौतुकं कल्पयेत् । निष्कले निरवयवे सकलाकृति सावयवत्वेनैव स्थितं स्थिते मूलबि(म्ब? म्बे) स्थितम् आसीनमुत आसीनं वा प्रकल्पयेत् । आसीने चोभयथा प्रकल्पयेत् । निगमांशोन्मितीत्येतदुपलक्षणम् । अन्यथा च ग्रन्थान्तरे विधानात्, तथा दर्शनाच्च । तथाहि—

"महति प्रतिमायामे तिथिभक्ते मधुद्विषः ।
अग्न्याद्यन्तिमैरंशैर्बलिबिम्बं प्रकल्पयेत् ॥
स्वायामपञ्चषड्भागैः कर्मार्चाष्ट्यंशितेऽथवा ।
अब्ध्याशुगरसाद्यंशैरल्पे महति वा भवेत् ॥"

इति । तथाच—

"बिम्बदीर्घनृपभाजितेंऽशकैर्वेदभूतरसपर्वतैस्तथा ।
अङ्गुलैश्च भवति स्वयोनिजैः कर्मबिम्बमितिरच्युतार्ययोः ॥"

---

१. 'न्मानं' ख. पाठः.

आयामेन शिवांशकस्य रचयेन्नाहेन वा सम्मितं
व्यासेनापि च मन्त्रलिङ्गविषये तत् कर्मबिम्बं शिवे ।
भङ्क्त्वा षोडशधा पुनस्त्रयमिदं रुद्राङ्कशैलाशुगा-
ग्न्यंशैर्वाधिकमूनितं च कुहचित् कुर्यात् तदौचित्यतः ॥
शिखिविशिखसुषिरभक्ते मूलगृहे मूललिङ्गे च ।
नेत्राग्निभूतभागैर्बालगृहं बाललिङ्गं च ॥ १४० ॥

इति तन्त्रसमुच्चये द्वितीयः
पटलो दर्शितदेवधिष्ण्यलक्ष्मा ।
परिमण्डपबिम्बलिङ्गपीठा-
दिकक्लृप्त्युक्तिसमन्वितः समाप्तः ॥ १४१ ॥

इति तन्त्रसमुच्चये

**द्वितीयः पटलः ।**

---

इति । रत्नावल्याम् — "अथ कर्मार्चाप्रमाणम् । यथा मूलार्चा, कर्मार्चापि तथैव कार्या । स्थाने स्थितमासीनं वा कारयेत् । अन्यकर्मार्चाः स्थिता एव कुर्यात् । महाबेरत्रिभागैकभागमुत्तमम् । कर्मार्चाप्रतिमोच्छ्रूयं नवभागं कृत्वैकभागमपोह्य शेषं त्रिभागं कृत्वा एकभागं मध्यममि"त्यादि ॥ १३८ ॥

लिङ्गविषये कर्मबिम्बमानमाह — **आयामेनेति** । मन्त्रलिङ्गविषये शिवांशकस्य वृत्तांशकस्यायामेन वा तस्य नाहेन वा तस्य व्यासेन वापि सम्मितं कर्मबिम्बं रचयेत् । कुहचित् पुनरिदं त्रयं षोडशधा भङ्क्त्वा रुद्राङ्कशैलाशुगाग्न्यंशैः एकादशनवसप्तपञ्चत्र्यंशैरधिकं कुहचिदूनितं वा तदौचित्यतः कुर्यात् ॥ १३९ ॥

निष्क्रमणार्थमल्पगेहाल्पबिम्बयोः प्रमाणमाह — **शिखीति** । मूलप्रासादे मूललिङ्गे च त्रिभिः पञ्चभिर्नवभिर्वा भक्ते क्रमेण द्वाभ्यां त्रिभिः पञ्चभिर्वा बालालयमल्पबिम्बं च कुर्यात् ॥ १४० ॥

पटलमुपसंहरति — इति द्वितीयः पटलः समाप्तः । दर्शितदेवधिष्ण्यलक्ष्मा प्रतिपादितप्रासादलक्षणेन युक्तः । परिमण्डपबिम्बलिङ्गपीठादिकक्लृप्त्युक्तिसमन्वितः अन्तहारादिबिम्बलिङ्गादिक्लृप्तिवचनेन युक्तश्च ॥ १४१ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

**द्वितीयः पटलः ॥**

---

## अथ तृतीयः पटलः ।

**कुर्यात् प्रागधिवासकर्मदिवसान्मित्राङ्कसङ्ख्ये दिने**
**शैलेषुप्रमितेऽथवाधिगतयामायां शुभायां निशि ।**
**प्रत्यग्द्वारि सुरालयोदगुपक्लृप्ते संवृते मण्डपे**
**मन्त्री तन्तुकुशस्रगादिकृतसंस्कारेऽङ्कुरारोपणम् ॥ १ ॥**

**क्षेत्रे वारिधिवर्गकोष्ठसुविचित्रे शालिदर्भाग्रकैः**
**पीठानि प्रविधाय तेषु विनिदध्यात् पालिकाः षोडश ।**

---

अतीतपटलेन प्रासादप्रतिमादिसम्पादनमभिधाय सम्प्रति प्रतिष्ठाकर्मणः प्राक्कर्त्तव्यबीजावापादिकं ब्रूते — कुर्यादिति । अधिवासकर्मदिवसात् प्राक् । यद्यपि प्रतिष्ठाकर्मणः प्रागिति वक्तव्यम्,

''अष्टमेऽह्नि प्रतिष्ठायाः प्राक् कुर्यादङ्कुरार्पणम्''

इत्याद्यागमेषूक्तत्वात् । तथापि बीजाङ्कुराणामधिवासकर्मण्येव विनियोग इत्यभिप्रेत्य तथोक्तम् । अधिवासकर्मदिवसः प्रतिष्ठाया दिवसात् पूर्वेद्युरेव । तस्मात् प्राक् । मित्राङ्कसंख्ये मित्रा द्वादश अङ्का नव तत्संख्ये वा । शैलेषुप्रमिते शैलाः सप्त इषवः पञ्च तत्संख्ये वा दिने अधिगतयामायां प्राप्तैकयामायां शुभायां निर्दोषायां निशि सुरालयोदगुपक्लृप्ते देवालयस्योदग्भागकल्पिते प्रत्यग्द्वारि पश्चिमभागगतद्वारे संवृते सम्यगाच्छादिते तन्तुकुशस्रगादिकृतसंस्कारे तन्तुकुशस्रगादिभिः कृतसंस्कारे । आदिशब्देन मुष्ट्यादिभिः स्थलशुद्धिर्विवक्षिता । मण्डपे अङ्कुरारोपणं कुर्यात् । मन्त्रीति, स्थलशुद्ध्यादौ मन्त्रं कर्म च जानन्नित्यर्थः ॥ १ ॥

तद्विधानमाह — क्षेत्र इत्यादिभिः । वारिधिवर्गकोष्ठसुविचित्रे वारिधयश्चत्वारः तेषां वर्गाः षोडश तत्संख्यैः पदैर्विचित्रिते क्षेत्रे शालिदर्भाग्रकैः शालिभिः दर्भाग्रैश्च पीठानि प्रविधाय-तेषु पीठेषु अस्त्राप्क्षालितवर्मसूत्रकलिताः अस्त्रमन्त्रेण अद्भिः क्षालिताः कवचमन्त्रेण त्रिगुणसूत्रेण बद्धाः

---

१. 'पि', २. 'कृ' ख. पाठः. ३. 'ख्या' क. पाठः.

अस्त्राप्क्षालितवर्मसूत्रकलिता दूर्वादिदीप्ता लस-
त्कूर्चा मृत्सिकताकरीषरजसा पूर्णा हुताशादितः ॥ २ ॥

अस्त्रस्वमन्त्रजलदुग्धसमाप्लुतानि
बीजानि तत्र पुरतो विनिधाय मन्त्री ।
इष्टाम्बिकेयकृतनान्द्यभिधानकर्मा
पुण्याहमाचरतु मूर्तिधरैरुपेतः ॥ ३ ॥

पीठं प्रपूज्य परिकल्पितसंस्क्रियासु
विष्णुं स्वनाममनुनार्हतु पालिकासु ।
बीजेषु तत्तदधिपांश्च पृथक्स्थितेषु
सम्मिश्रितेषु यजतामथवौषधीशम् ॥ ४ ॥

---

दूर्वादिदीप्ताः दूर्वादर्भपल्लवैः शोभिताः मृत्सिकताकरीषरजसा मृद्भिर्वालुकाभिः करीषरजोभिश्चोत्तरोत्तरं पूर्णाः लसत्कूर्चाः शोभनकूर्चैश्च युक्ताः षोडश पालिकाः हुताशादितः अग्निकोणमारभ्य निदध्यात् । अयं भावः—दक्षिणपङ्क्तौ पूर्वादिपश्चिमान्तं तदुत्तरपङ्क्तौ पश्चिमादिपूर्वान्तं तस्या अप्युत्तरपङ्क्तौ पूर्वादिपश्चिमान्तं सर्वोत्तरपङ्क्तौ पश्चिमादिपूर्वान्तमिति ॥ २ ॥

एवं पालिकासादनमुक्त्वा बीजसादनादिकमाह — अस्त्रेति । मन्त्री मन्त्रविशेषज्ञो गुरुः अस्त्रस्वमन्त्रजलदुग्धसमाप्लुतानि अस्त्रेण स्वमन्त्रेण च क्रमात् जलेन दुग्धेन च क्षालितानि बीजानि तत्र पुरतो विनिधाय इष्टाम्बिकेयकृतनान्द्यभिधानकर्मा भूत्वा इष्ट आम्बिकेयो गणपतिर्येन कृतं नान्द्यभिधानं कर्म च येन सः, नान्द्यभिधानकं नान्दीमुखं, मूर्तिधरैरुपेतः मूर्तिपालैः सह मङ्गलाङ्कुरदेवताः प्रीयन्तां प्रीयन्तां मङ्गलाङ्कुरदेवताः इति विशेषयुक्तं पुण्याहमाचरतु । अत्र पुण्याहकाले बीजानां पालिकानां च प्रोक्षणमवगन्तव्यम् ॥ ३ ॥

पीठं प्रपूज्य परिकल्पितसंस्क्रियासु कृतशोषणादिक्रियासु पालिकासु विष्णुं स्वनाममनुना 'ओं विष्णवे नम' इति मन्त्रेण अर्हतु अर्चयतु । पृथक्स्थितेषु बीजेषु तत्तधिपांश्चार्हतु । अथवा सम्मिश्रितेषु युक्तेषु बीजेषु ओषधीशं सोमं 'सों सोमाय नम' इति मन्त्रेण यजताम् ॥ ४ ॥

---

१. 'रचिता', २. 'शो' क. पाठः.

ब्रह्मार्च्योऽधियवं मुरारिरधिमुद्गं सर्षपेष्वीश्वरो
निष्पावेषु मरुत् प्रियङ्गुषु गुहो माषेष्वमर्त्याधिपः ।
खल्वेष्वग्निरिनोऽधिशाल्यधितिलं प्रेताधिभू राजमा-
षाख्येष्वप्पतिराढकीषु च रमा श्यामेषु सोमः क्रमात् ॥

एतानि बीजानि समाहितात्मा
क्रमेण पात्रेषु पवित्रपाणिः ।
नदत्सु वाद्येषु वपेत् तदुक्त-
मन्त्रेण वह्न्यादिशिवावसानम् ॥ ६ ॥

तानि प्रोक्षतु तत्तदागमसमुक्तेनाणुना सादरं
पाथोभिः कुशकूर्चचर्चितकरो गन्धक्षपामेदुरैः ।
देवं तत्र ततोऽभिवाह्य सकलीकृत्योपहारान् क्रमाद्
दत्त्वा स्नानविधौ समुक्षतु तथापोह्यादितन्मन्त्रतः ॥ ७ ॥

---

पृथक्स्थितेषु बीजेष्वर्चनार्थं तद्देवतामाह—ब्रह्मार्च्य इति । अधि-यवं यवेषु ब्रह्मार्च्यः, अधिमुद्गं मुद्गेषु मुरारिः विष्णुः, सर्षपेष्वीश्वरो रुद्रः, निष्पावेषु मरुद् वायुः, प्रियङ्गुषु गुहः स्कन्दः, माषेषु अमर्त्याधिपः इन्द्रः, खल्वेष्वग्निः, अधिशालि शालिषु इनः सूर्यः, अधितिलं तिलेषु प्रेताधिभूः यमः, राजमाषेष्वप्पतिर्वरुणः, आढकीषु रमा श्रीः, श्यामेषु सोमश्च । तेषां क्रमाच्चतुर्थीनमोन्तानि स्वस्वनामान्येव मन्त्राः । बीजानां पृथगर्चनेऽपि सम्मि-श्रितेषु बीजेषु सोमार्चनं कर्तव्यम् ॥ ५ ॥

अर्चितानां बीजानां वापमाह—एतानीति । गुरुः पवित्रपाणिः समा-हितात्मा च भूत्वा वाद्येषु नदत्सु सत्सु एतानि बीजानि पात्रेषु स्थापितासु पालिकासु तदुक्तमन्त्रेण तत्र तत्र वापस्योक्तमन्त्रेण वह्न्यादिशिवावसानं पूर्वे-मोक्तेन क्रमेण वपेत् ॥ ६ ॥

वापानन्तरं प्रोक्षणादिकमाह—तानीति । कुशकूर्चचर्चितकरः दर्भ-मयेन कूर्चेनालङ्कृतकरो गुरुः तानि बीजानि गन्धक्षपामेदुरैः अष्टगन्धर-जनीचूर्णमिलितैः पाथोभिः जलैः तत्तदागमसमुक्तेन तेषु तेष्वागमेषु प्रोक्ष-णार्थमुक्तेन (अणुना) मन्त्रेण सादरं प्रोक्षतु । ततस्तत्र देवमभिवाह्य सकली-

---

१. 'ण व' क. पाठः.

**दत्त्वा वस्त्रादिभूषावधि तदनु यजेत् तं च पञ्चोपहारै-**
**र्नैवेद्यान्ते प्रसाद्यामलवसनवृतान्यस्त्रतस्तानि रक्षेत् ।**
**प्रागाद्यासूपलिप्तास्तृतकुशरुचिरास्वष्टदिक्ष्वर्चयित्वा**
**दद्यात् तद्रात्रिपेभ्यो बलिमपि परिषत्संयुतेभ्यो ग्रहेभ्यः ॥**
**उक्षेदूर्ध्वदिनेषु पीठयजनान्ते पात्रबीजाधिदै-**
**वेज्याकृत् सवनेषु देवमभिवाद्योक्तक्रमात् पूजयेत् ।**
**रात्रौ तत्र बलिं हरेदिह बलिः शुद्धेन भूतान्धसा**
**तत्तद्द्रव्यसमन्वितेन चरुणा वान्ते स्वयं स्नातु च ॥ ९ ॥**

---

कृत्योपहारान् क्रमाद् दत्त्वा स्नानविधौ स्नानकाले आपोह्यादितन्मन्त्रः आपोहिष्ठादिप्रोक्षणमन्त्रैः तथा पूर्वोक्तप्रकारेण प्रोक्षतु च ॥ ७ ॥

तदनु वस्त्रादिभूषावधि वस्त्रादिभूषणान्तमुपहरणं दत्त्वा तदनु तं देवं पञ्चोपहारैर्यजेच्च । नैवेद्यान्ते प्रसाद्य प्रसन्नपूजां कृत्वा अमलवसनवृतानि नवीनवस्त्राच्छादितानि (तानि) बीजान्यस्त्रतो रक्षेत् । उपलिप्तास्तृतकुशरुचिरासु उपलिप्तासु क्षिप्तदर्भासु च प्रागाद्यासु अष्टदिक्षु तद्रात्रिपमन्त्रेणार्चयित्वा तद्रात्रिपेभ्यः परिषत्संयुतेभ्यो ग्रहेभ्यः 'ओं ब्रह्मग्रहेभ्यो नमः' 'तत्पारिषदेभ्यो नमः' इत्यादिमन्त्राभ्यां बलिमपि दद्यात् ॥ ८ ॥

एवं तद्रात्रिकर्मोक्त्वा शेषदिनेषु कर्तव्यं कर्माह — उक्षेदिति । ऊर्ध्वदिनेषु त्रिषु सवनेषु पीठपूजान्ते पात्रबीजाधिदैवेज्याकृत् पात्रबीजयोरधिदैवतं विष्णुः सोमश्च तयोः पूजाकृन्मन्त्री तत्तन्मन्त्रेणोक्षेत् । ततः उक्तक्रमाद् देवमभिवाद्य पूजयेत् । तत्र तेषु दिनेषु रात्रौ तृतीयसवनपूजानन्तरं बलिं हरेच्च । इह अत्रत्यो बलिः शुद्धेन चरुणा वा भूतान्धसा भूतकूरहविषा वा तत्तद्द्रव्यसमन्वितेन तत्तद्देवतानां विहितेन द्रव्यसमन्वितेन चरुणा वा स्यात् । अन्ते बलिदानानन्तरं स्वयं गुरुः स्नातु च, बलिदानानन्तरं स्नानस्य विहितत्वात् ॥ ९ ॥

---

१. 'सम्यार्चनमुदितमभिध्याय रक्षां च कुर्यात् ।', २. 'स्वद्रव्ययुक्तं बलिमपि परितो रात्रिपेभ्यो ग्र', ३. 'त्सपरिषद्भ्यस्तद्ग्रहेभ्यस्ततः स्नायादप्यधिवासकर्मदिवसे प्रातर्बलिं चाचरेत् ॥ शा' ख. पाठः.

शालीमाषयवप्रियङ्गुतिलमृत्साखल्वमुद्गासुरी-
शिम्बश्यामकराजमाषकमयः शार्ङ्गीशदुर्गाजिते ।
बीजौघः शिवविघ्नयोरपयवान्त्योऽन्तेद्विहीनो गुहे
निर्मुद्गादिरथार्यके ससुमनो वेणूत्थनीवारवान् ॥ १० ॥

बीजानि वह्निभुवि वा शिववत् स्वमूलं
प्रक्षालनेऽणुरखिलेषु हराविनार्णम् ।
तत्रेश्वरे भवति तत्पुरुषः प्रवापे
स्यात् त्र्यम्बकाणुरधिशूलि परेषु मूलम् ॥ ११ ॥

त्रियम्बकाय शर्वाय शङ्कराय शिवाय च ।
सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥ १२ ॥

इति ॥

---

बीजवापकर्माभिधाय बीजादीनाह— शालीति । शार्ङ्गीशदुर्गाजिते शङ्करनारायणदुर्गाविष्णुषु शालीमाषयवप्रियङ्गुतिलमृत्साखल्वमुद्गासुरीशिम्बश्यामकराजमाषकमयः शाल्यादिराजमाषान्तस्वरूपो बीजौघः बीजानां समूहः स्यात् । (ശാലി=നെല്ല്. മാഷം=ഉഴുന്ന്. യവം തന്നെ. പ്രിയംഗു=തിന. തിലം=എള്ള്. മൃത്സാ=തുവര ഖല്വം=മതിര. മുദ്ഗം=ചെറുപയറ. ആസുരി=കടുക്. ശിംബം=അവര. ശ്യാമകം=ചാമ. രാജമാഷം=വലിയപയറ.) शिवविघ्नयोरपयवान्त्यः अपगतो यवोऽन्त्यो राजमाषश्च यस्मिन् बीजौघे । गुहे अन्तद्विहीनः अन्ते प्राप्ताभ्यां श्याम(क)राजमाषाभ्यां हीनः । अथार्यके निर्मुद्गादिः निर्गतो हीनो मुद्गादिः यथा स तथा ससुमनः सुमनेन सहितः । इह सुमनशब्दोऽकारान्त एव, "गोधूमः सुमनः समौ" इत्युक्तत्वात् । वेणूत्थनीवारवांश्च वैणवेन नीवारेण च सहितः । (സുമനം=കോതമ്പ്. വേണൂത്ഥം=മുളനെല്ല്. നീവാരം=വരിനെല്ല്.) ॥

वह्निभुवि स्कन्दे शिववद्वा बीजानि । अखिलेषु देवेषु बीजस्य प्रक्षालने स्वमूलं स्वस्वमूलमेव अणुर्मन्त्रः । हरौ इनार्णं द्वादशाक्षरमन्त्रः । ईश्वरे तत्र प्रक्षालने तत्पुरुषोऽणुः । अधिशूलि शिवे प्रवापे त्र्यम्बकाणुः त्र्यम्बकायेत्यादिमन्त्रः । परेषु प्रवापे मूलमन्त्रः ॥ ११ ॥

त्र्यम्बकाणुं पठति — त्रियम्बकायेति ॥ १२ ॥

---

१. 'ढकीराजिश्या' ख. पाठः. २. 'न्त्य' मूलकोशपाठः. ३. 'त्र्यम्ब' ङ. पाठः.

गायत्र्या निजयात्र सेचनविधिर्विघ्नार्यषाण्मातुरे
शार्ङ्गीशाजितयोस्त्रितारकनमोमूर्ध्ना जितन्ताणुना ।
कार्यः षण्मुखविद्यये षुभुवि वा शक्त्या ध्रुवाद्यन्तया
दुर्गायां मनुना मनोभवरिपौ वापोदितेन स्वयम् ॥ १३ ॥
बलेर्ब्रह्मभूतेन्द्रगन्धर्वयक्षाः
सरक्षःपिशाचाः स्मृता विष्णुविघ्नाः ।
ततः स्कन्दरुद्राः शिवाः शर्वविघ्ने
द्विषड् देवता रात्रिक्लृप्त्यात्र योज्याः ॥ १४ ॥
भूतपितृयक्षनागब्रह्मशिवा बलिभुजः स्मृता विष्णवन्ताः[1] ।
हरिहरदुर्गाहरिषु स्कन्द इमे शिवसमुक्तबीजोप्तिविधौ ॥

विघ्नार्यषाण्मातुरे गणपतिशास्तृस्कन्देषु अत्र निजया स्वस्वगायत्र्या सेचनविधिः कार्यः । शार्ङ्गीशाजितयोः त्रितारकनमोमूर्ध्ना प्रणवत्रयं नमश्शब्दश्चोर्ध्वस्थितेन जितन्ताणुना 'जितन्त' इत्यादिमन्त्रेण, इषुभुवि स्कन्दे षण्मुखविद्यया 'ओं नमः षण्मुखाये'ति मन्त्रेण वा, दुर्गायां ध्रुवाद्यन्तया प्रणवपुटितया शक्त्या भुवनेश्वर्या, मनोभवरिपौ शिवे वापोदितेन स्वयं 'त्रियम्बकाये'त्यनेनैव ॥ १३ ॥

बलिदेवता आह — बलेरिति । शर्वविघ्ने शिवगणेशयोः बलेः बलिविधेः ब्रह्मभूतेन्द्रगन्धर्वयक्षाः इति पञ्च, सरक्षःपिशाचाः राक्षसपिशाचयुक्ता इति द्वे, विष्णुविघ्ना इति च द्वे, ततः स्कन्दरुद्रा इति च द्वे, शिवाश्च इत्येका । अत्र सर्वबहुवचनं मन्त्रे च बहुवचनप्रयोगार्थम् । इति द्विषट् द्वादश देवताः स्मृताः । अत्रासु देवतासु मध्ये रात्रीणां क्लृप्त्या योज्याः । अयं भावः — पञ्चरात्रिक्लृप्त्यैव बीजावापः क्रियते चेत् पञ्चसु रात्रिष्वादौ भवाः पञ्चैव देवताः स्युः, सप्तरात्रिक्लृप्त्या चेत् सप्तैव, नवरात्रिक्लृप्त्या चेन्नव, द्वादशरात्रिक्लृप्त्या चेदखिला योज्या इति ॥ १४ ॥

हरिहरदुर्गाहरिषु भूतपितृयक्षनागब्रह्मशिवाः इति षट्, विष्णवन्ताः अन्ते विष्णुयुक्ताः इत्येकः, एवं सप्त बलिभुजः स्मृताः । स्कन्दे शिवसमुक्तबीजोप्तिविधौ शिवसमुक्तानि बीजान्युप्यन्ते चेत् इमे बलिभोक्तारः ॥ १५ ॥

---

१. 'गुहे देवताश्चेन्द्रभूतक्रमात् तं ॥ भू' ख. पाठः. २. 'क्ति' क. पाठः

**भूतेशे बलिभाजो भूतपिशाचाश्च यक्षनागाश्च ।**
**ब्रह्मशिवविष्णुपितरः ससर्वदेवा ग्रहा नव प्रोक्ताः ॥ १६ ॥**

**इतीरितानां बलिदेवतानां सङ्ख्यातिरिक्तेषु बलिं दिनेषु ।**
**तदन्त्यया देवतयैव दद्याद् वक्ष्ये बलिद्रव्यगणं क्रमेण ॥**

**ब्राह्मं पुष्पकुशाक्षताम्बुचरुणान्यं भूतकूरान्धसा**
**सर्पिःसक्तुपयोदधीन्द्रलतिकागौलान्धसैन्द्रं हरेत् ।**
**तुर्यं वैणवपायसेन जलपुष्पाज्यान्धसा पञ्चमं**
**दोषाकम्बुतुषैः सरक्तकुसुमान्धोगन्धकै राक्षसम् ॥ १८ ॥**

**माषान्नान्वितमत्स्यमांसकृसरक्षौद्रैः सतैलक्षपा-**
**लाजैः सप्तममष्टमं गुलभुवा वैघ्नं त्रिमध्वोदनैः ।**

---

भूतेशे शास्तरि भूतपिशाचाः इति द्वौ, यक्षनागाश्च इति च द्वौ, ब्रह्मशिवविष्णुपितरः इति चत्वारः, ससर्वदेवाः सर्वदेवसहिता इत्येकः, एवं नव बलिभाजो ग्रहाः प्रोक्ताः ॥ १६ ॥

इतीरितानां बलिदेवतानां संख्यातिरिक्तेषु देवताभ्योऽहस्संख्याधिक्ये तद्दिनेषु तदन्त्यया देवतयैव बलिं दद्यात् । बलिद्रव्यगणं क्रमेण वक्ष्ये ॥१७॥

सद्विपमुखे सगणपतौ शिवे पुष्पकुशाक्षताम्बुचरुणा पुष्पकुशाक्षतजल-युक्तेन हविषा ब्राह्मं ब्रह्मदेवत्यं बलिं हरेत् । अन्यं भौतिकं भूतकूरान्धसा भूतकूरयुक्तेन हविषा । भूतकू(रो ? रं) वक्ष्यति । ऐन्द्रं सर्पिःसक्तुपयोदधीन्द्रल-तिकागौलान्धसा । (സക്തു=തരിപ്പണ. ഇന്ദ്രലതികാ=ഉഴിഞ്ഞ.) गौ-लान्धो गुलेन सह पक्वं हविः । तुर्यं गान्धर्वं वैणवपायसेन । पञ्चमं याक्षं जलपुष्पाज्यान्धसा जलपुष्पाज्यसहितेन हविषा । राक्षसं दोषाकम्बुतुषैः । (ദോഷാ=മഞ്ഞൾ. കംബു=കൺച. തുഷം=ഉമി) सरक्तकुसुमान्धोग-न्धकैः । रक्तकुसुमं (അന്ധസ്സ്-ഹവിസ്സ്) सप्तमं पैशाचं सतैलक्षपालाजैः माषान्नान्वितमत्स्यमांसकृसरक्षौद्रैः । माषान्नं माषेण सह पक्वमन्नं, मत्स्यमांसं मोदकादिप्रतिनिधिना कल्पितं, कृसरं तिलेन सह पक्वमन्नं, क्षौद्रं मधु । अष्टमं वैष्णवं गुलभुवा गुलान्नेन । वैघ्नं त्रिमध्वोदनैः त्रिमधुरहाविर्भिः ।

---

१. 'सिद्धान्ध', २. 'न्धसा गु' ख. पाठः.

दध्याज्यान्वितकेरदुग्धचरुणा स्कान्दं शिवेऽन्यान्निशा-
दध्युद्यत्कृसरेण सद्विपमुखेऽन्त्यं[2] साज्यदुग्धान्धसा[3] ॥ १९ ॥
[युग्मम्]

गुहेऽत्र निःश्यामकराजमाषे बीजे विपर्यस्तमुपाद्ययुग्मम् ।
स्कन्दग्रहेभ्यो बलिरष्टमेऽह्नि गौलेन दौग्धेन ततः परस्तात् ॥

हारिद्रं दधिसक्तुलाजपललाढ्यं भूतकूराह्वयं
प्राचीनं तिलतण्डुलं परमुडुम्बं लाजधानान्वितम् ।
याक्षं नागमुशन्ति केररसशालीपिष्टसक्तूत्तरं
पाथोजाक्षतमन्नपूपमपरं गौलौदनं सप्तमम् ॥ २१ ॥

---

स्कान्दं दध्याज्यान्वितकेरदुग्धचरुणा । केरदुग्धं नालिकेरक्षीरम् । अन्यद् रौद्रं निशादध्युद्यत्कृसरेण निशादधिभ्यां सहितेन कृसरेण । (നിശ=മഞ്ഞൾ) कृसरमुक्तम् । अन्त्य शैवं साज्यदुग्धान्धसा आज्यक्षीरसहितहविषा ॥ १८, १९ ॥

गुहे अत्र बलिविधौ निःश्यामकराजमाषे श्यामैराजमाषाभ्यां रहिते बीजे उपाद्ययुग्मं द्वितीयतृतीये देवते विपर्यस्तमिन्द्रभूतक्रमेण । तथा तद्बलिद्रव्ययुग्ममपीत्यर्थः । तत्राष्टमेऽह्नि स्कन्दग्रहेभ्यो गौलेन बलिर्भवति । ततः परस्तात् स्कन्दग्रहेभ्य एव दौग्धेन च ॥ २० ॥

विष्णुदुर्गाहरीशषाण्मातुरेषु प्राचीनं प्राग्भवं दधिसक्तुलाजपललाढ्यम् । (ലാജം=മലർ. പലലം=എള്ളുവറത്തു) हारिद्रं निशाचूर्णेन सह पक्वमन्नं भूतकूराह्वयं भूतकूरमिति सर्वत्र प्रसिद्धम् उशन्ति इच्छन्ति । परं द्वितीयं तिलतण्डुलं तिलेन तण्डुलेन च सहितं हविरित्यर्थः । अत्र सर्वत्र तत्तदुक्तद्रव्येण सह हविर्योज्यम् । याक्षं तृतीयम् लाजधानान्वितम् उडुम्बम् । (ധാനാ=അരിവറത്തു്. ഉഡുംബം=ഉന്മൻ)नागं चतुर्थं केररसशालीपि-

---

१. 'बालिं यामिनीद', २. 'शैवमथ चान्त्यं', ३. 'सा ॥ इति द्वादश ब्रह्मपूर्वग्रहाणां बलिद्रव्याणि क्रमेणोदितानि । द्वितीयं तृतीयं च तद्देवतावद् विपर्यस्य कार्यं गुहे द्रव्यकं च ॥ हा', ४. 'माकरा' ख. पाठः.

दिवसेऽष्टमे पयोन्नं कृसरं नवमे पयोन्नमत ऊर्ध्वम् ।
द्रव्याणि विष्णुदुर्गाहरीशषाण्मातुरेष्वाहुः ॥ २२ ॥
भूतान्नैस्तैलमांसौदनरजनिरजःसक्तुभिर्लाजधाना-
दध्यौडुम्बैस्तथा तण्डुलविमलरजःसक्तुकेरीपयोन्नैः ।
स्यात् पद्मव्रीहिदूर्वाक्षतयवतिलसिद्धार्थगन्धैर्गुलान्नै
र्दौग्धान्नैर्दाधिकान्नैर्बलिरिह कुसुमान्नैः क्रमाद् भूतनाथे ॥

पौर्वाह्णिके प्रत्तबलीन् सुरूपान्
स्वारूढपीठादिचितीनथैतान् ।
बीजाङ्कुरान् मन्त्रिवरोऽधिवास-
कर्मण्यमुष्मिन् विनियोजयेच्च ॥ २४ ॥

---

पिष्टसक्तु नालिकेरक्षीरं शालीपिष्टं सक्तु च । उत्तरं पञ्चमं पाथोजाक्षतम् । पाथोजं पद्मम् । अपरं षष्ठम् अन्नपूपम् अन्नमपूपं च । सप्तमं गौलौदनम् । अष्टमे दिवसे पयोन्नम् । नवमे कृसरम् । अत ऊर्ध्वं सर्वेष्वहस्सु पयोन्नमेवेति द्रव्याण्याहुः । बुधा इति शेषः ॥ २१, २२ ॥

भूतनाथे क्रमात् पूर्वं भूतान्नैः भूतक्रूरैः । पुनः तैलमांसौदनरजनिरजः-सक्तुभिः । तैलमभ्यञ्जम् । मांसं मोदकेन कल्पितम् । अन्यानि स्पष्टानि । पुनः लाजधानादध्यौडुम्बैः । एतान्युक्तानि । तथा पुनः तण्डुलविमलरजःसक्तुके-रीपयोन्नैः तण्डुलचूर्णं सक्तु नालिकेरक्षीरमन्नं च, एतैः । पुनः पद्मव्री-हिदूर्वाक्षतयवतिलसिद्धार्थगन्धैः, एते प्रसिद्धाः । पुनः गुलान्नैः । पुन-र्दाधिकान्नैः दध्ना सह पक्वहविर्भिः कुसुमान्नैः । इह बलिविधौ एतैर्बलिः स्यात् ॥ २३ ॥

अथाधिवासकर्मणि तद्विनियोगविधानमाह — पौर्वाह्णिक इति । अथ मन्त्रिवरः मन्त्रदेवतयोरैक्यं विद्वान् । अधिवासकर्मदिने पौर्वाह्णिके प्रातः-कालपूजानन्तरं प्रत्तबलीन् प्रकर्षेण दत्तबलीन् । सुरूपान् शोभनवर्णान् । स्वा-रूढपीठादिचितीन् स्वस्मिन् योजितपीठादिगतचैतन्ययुक्तान् बीजाङ्कुरान् । अमुष्मिन्नधिवासकर्मणि विनियोजयेच्च प्रतिमायाः परितः संस्थाप्य तद्विभूतित्वेन कल्पयेदित्यर्थः ॥ २४ ॥

---

१. 'नारू' क. पाठः.

संस्थाप्य केतुं बलिपीठबाह्ये
घण्टापताकानिजवाहनाढ्यम् ।
त्रिसन्ध्यमभ्यर्च्य किरेद् बलिं च
तत्प्रक्रियां वच्मि महोत्सवोक्तौ ॥ २५ ॥

अधिवासविधानवासरात् प्रा-
गथ तुर्येऽहनि साधकः सुक्लृप्ताम् ।
प्रतिमां परिगृह्य कारुवर्या-
दपराह्णेऽप्स्व[1]धिवासयेत शैलीम्[2] ॥ २६ ॥

स्नात्वा समाचम्य समाश्रितात्मा
मन्त्री समभ्यर्च्य गणाधिनाथम् ।
सन्तर्प्य विप्रान्छिवदिक्प्रक्लृप्ते
तन्मण्डपे नेत्रविधिं विदध्यात् ॥ २७ ॥

ध्वजस्थापनस्यापि कर्तव्यतामाह —— **संस्थाप्येति** । (बलिपीठबाह्ये) बलिपीठस्थानस्य बाह्ये घण्टापताकानिजवाहनाढ्यं घण्टया पताकया निजनिजवाहनेन च युक्तं केतुं संस्थाप्य । त्रिसन्ध्यं सन्ध्यात्रयेऽप्यभ्यर्च्य बलिं किरेच्च । महोत्सवोक्तौ महानुत्सवो महोत्सवस्तदभिधाने । (तत्प्रक्रियां) तत्प्रकारं वच्मि वक्ष्यामीत्यर्थः ॥ २५ ॥

अथ प्रतिमापरिग्रहादिकं विधत्ते —— **अधिवासेति** । अथ साधकः अधिवासविधानवासरात् । प्रतिष्ठाकर्मणः पूर्वदिवसोऽधिवासकर्मवासर इति पूर्वमेवोक्तम् । तस्मात् प्राक् तुर्ये चतुर्थेऽहनि । अपराह्णे मध्यकालातीते । शैलीं शिलासम्बन्धिनीम् सुक्लृप्तां लक्षणकौशलेन च शुभावयवसंस्थानकल्पितां प्रतिमाम् । कारुवर्यात् शिल्पिप्रवरात् परिगृह्य अप्सु अधिवासयेत ॥ २६ ॥

तत्क्रियाक्रममाह —— **स्नात्वेत्यादिभिः** । मन्त्री स्नात्वा तदर्थं मन्त्रस्नानं कृत्वा । समाचम्य तथा मन्त्राचमनमपि विधाय । समाश्रितात्मा क्वचिच्छुद्धे प्रदेशे उपविश्य सकलीकरणशङ्खपूरणात्माराधनकृद् भूत्वा गणाधिनाथं समभ्यर्च्य अग्रतः स्वस्तिके[3] शालिदर्भादिभिः क्लृप्ते पीठे यथाविधि शोधितं

१. 'स्व' क. पाठः, २. 'लीम् ॥ स्विष्ठात्माज्यमधू' ख. पाठः. ३. 'ते' क. पाठः.

संयोज्याज्यमधू सुवर्णचषके संजप्य मध्वृक्त्रिकं
शुद्धस्वालयसम्मुखीनशयनीयन्यस्तबिम्बाक्षिणी ।
सूच्यग्रेण विलिख्य साज्यमधुना तक्ष्णा समुत्कीर्य ते
प्रोक्ष्यापूर्य तथैव साज्यमधुना शय्यादि तक्ष्णेऽर्पयेत् ॥

शय्यायां शयितस्य शर्वगुहयोर्बिम्बस्य दद्याद् बलिं
राज्याज्योज्ज्वलपायसेन परितः प्राग् देवताभ्योणुना ।
मूर्धन्यक्षतसर्षपाच्छकुसुमं न्यस्येत् त्रिनेत्रे ततः
सूत्रं चन्दनचर्चितं च मणिरेखायामनेन क्षिपेत् ॥ २९ ॥

---

सुवर्णमयं चषकं संस्थाप्य कूर्चविन्यासानन्तरं मधु च सममासिच्य मूलेनार्चयित्वा विप्रान् दानैः सन्तर्प्य शिवदिक्प्रक्लृप्ते तन्मण्डपे गत्वा नेत्रविधिं नेत्रोल्लेखनविधिं विदध्यात् ॥ २७ ॥

कथं तदित्यत्राह — संयोज्येति । सुवर्णचषके संयोजितं तदादाय मध्वृक्त्रिकं 'मधु वाता' इति तृचं संजप्य । शुद्धस्वालयसम्मुखीनशयनीयन्यस्तबिम्बाक्षिणी शुद्धे प्रासादाभिमुखशय्यायां शयनीये न्यस्तस्य बिम्बस्याक्षिणी नेत्रे। साज्यमधुना आज्यमधुयुक्तेन सूच्यग्रेण विलिख्य । तक्ष्णा ते अक्षिणी समुत्कीर्य स्पष्टीकरणं कारयित्वा । जलेन प्रोक्ष्य तथैव तेन साज्यमधुना आपूर्य पुनः शय्यादि सुवर्णचषकादिकं च तक्ष्णेऽर्पयेत् दापयेत् ॥ २८ ॥

शिवस्कन्दयोर्विशेषमाह — शय्यायामिति । प्राक् नेत्रोल्लेखनात् प्राक् । शय्यायां शयितस्य शर्वगुहयोर्बिम्बस्य परितो राज्याज्योज्ज्वलपायसेन सर्षपाज्ययुक्तेन पायसेन । देवताभ्योणुना 'देवताभ्यः पितृभ्योऽथे'त्यादिमन्त्रेण बलिं दद्यात् । तत्र त्रिनेत्रे मूर्धनि शिरसि । अक्षतसर्षपाच्छकुसुमम् अक्षतसर्षपयुक्तं श्वेतपुष्पं न्यस्येत् । ततश्चन्दनचर्चितं चन्दनपङ्करूषितं (सूत्रम्) अनेन 'ओं नमो भगवत' इत्यादिमन्त्रेण मणिरेखायां क्षिपेत् ॥ २९ ॥

ततस्तन्मन्त्रं लिखति — 'ओं नम' इत्यादि ।

---

१. 'संयोज्य म', २. 'जप्त्वा स्वा', ३. 'सूच्या तया शिल्पिना तद्दृष्टी सुसमे विधाप्य शयनाद्यस्मै पुनर्दापयेत् ॥ शय्यायां', ४. 'त्वा ब' ख. पाठः

"ओं नमो भगवते रुद्राय हिरण्यरेतसे महात्मने शिवाय शिवरूपाय उमाप्रियाय नमो नमः" इति ।

संप्रोक्तक्रमतो विलोचनविधिं कुर्याद् गुहेऽथेश्वरे-
ऽघोरेणाज्यमधू सुयोज्य मधुमन्मन्त्रं प्रजप्यामुना ।
सूच्यग्रेण विलिख्य लक्ष्म मणिरेखापार्श्वरेखान्वितं
तक्ष्णा तद् विरचय्य सर्वमथ मध्वाज्येन संपूरयेत् ॥

सन्तुष्टेन ततो निजायतनवद् भद्रासने स्थापितं
तक्ष्णा तत्करतः प्रगृह्य यजमानेनाथ तत् प्रार्पितम् ।
तारेण प्रविलोक्य तच्चरणयोस्तारं प्लुतं प्रोच्चरन्
गृह्णीयान्मनुबिम्बमुद्गतकुशाग्राभ्यां कराभ्यां गुरुः ॥

पाथोदर्भकधेनुबालघृतमासूराम्बुभिः श्रीपतौ
साज्यक्षौद्रकवल्कमृद्भसितचूर्णैर्गन्धतोयैः शिवे ।

---

अथ गुहे संप्रोक्तक्रमतो विलोचनविधिं नेत्रोल्लेखनं कुर्यात् । ईश्वरे अघोरेणाज्यमधू सुयोज्य । मधुमन्मन्त्रं 'मधु वाते'ति तृचं प्रजप्य । अमुना 'मधु वाते'ति तृचेन साज्यमधुना सूच्यग्रेण मणिरेखापार्श्वरेखान्वितं लक्ष्म विलिख्य । तक्ष्णा तत् लक्षणादिकं विरचय्य । अथ सर्वं लक्ष्मादिकं रेखासमूहं मध्वाज्येन सम्पूरयेत् ॥ ३० ॥

तत्परिग्रहप्रकारमाह — सन्तुष्टेनेति । अथ गुरुः सन्तुष्टेन हिरण्यवस्त्रादिदानतस्तुष्टेन तक्ष्णा । तत उद्धृत्य निजायतनवद् निजप्रासादो यद्दिङ्मुखस्तद्दिङ्मुखं भद्रासने स्थापितम् । यजमानेन तत्करतः कारुकरतः प्रगृह्य प्रार्पितम् । तद् मनुबिम्बं तारेण प्रविलोक्य तारं प्लुतं प्रोच्चरन् । उद्गतकुशाग्राभ्याम् ऊर्ध्वगतदर्भाग्राभ्यां कराभ्याम् । तच्चरणयोरभिवाद्यरूपेण गृह्णीयात् ॥ ३१ ॥

गृहीतस्य बिम्बस्य शोधनमाह — पाथ इति । श्रीपतौ पाथोदर्भकधेनुबालघृतमासूराम्बुभिः क्रमतः स्वमूलमनुना स्वास्त्रेण वा शोधयेत् । अयमत्र शोधनप्रकारः — उक्तमन्त्रेण पूर्वं (पाथो ?) जलेनाभिषिच्य

---

१. 'मन्त्री तत्परिपूर्य तेन रचयेत् तक्ष्णा यथालक्षणम् ॥ सन्तु' ख. पाठः. २. 'बुधः ॥' क. पाठः. ३. 'ले तेना' ग. पाठः.

**अप्क्षौद्राज्यकदर्भवल्कसुमृदद्भिश्चाजितेशे मधू-**
**र्ध्वस्थाज्येन हरीरितेन महिषारावम्बुदर्भादिना ॥ ३२ ॥**
**दर्भाद्यप्पशुलूमगोघृतमसूराग्गोमयाद्भिर्गुहे**
**पाथोमृन्निजकल्कदर्भजलमध्वाज्यैः समासूरकैः ।**
**विघ्ने शास्तरि साम्बुदर्भकुशमृत्त्वग्गव्यकैः शालिपि-**
**ष्टाद्भिश्च क्रमतः स्वमूलमनुना स्वास्त्रेण वा शोधयेत् ॥**
**मुद्गनिशायवशालीगोधूमसुवर्णजानि चूर्णानि ।**
**स्थाणौ स्वबिम्बकलशाद्यवगन्तव्यं मृदादि सर्वेषु ॥ ३४ ॥**
**अथालङ्कृत्य गन्धाद्यैः कुर्यान्नीराजनं शिवे ।**
**विष्णवादौ निजहोमान्ते विघ्नादौ कौतुकान्ततः ॥ ३५ ॥**

---

दर्भकैः संघृष्य धेनुवालेन च संघृष्य घृतेनाभिषिच्य (മാസൂരം=കടലക്കാ ര്പ്പാടി) तेनोद्वर्त्याम्बुभिः क्षालयेदिति । एवं सर्वत्रानुरूपेण शोधनं कार्यम् । स्वमूलमनुना स्वास्त्रेण वेति प्रत्येकं सम्बध्यते । शिवे साज्यक्षौद्रकवल्कमृद्भसितचूर्णै आज्यसहितेन क्षौद्रेण । क्षौद्रं मधु, वल्कास्त्वचः, मृन्मृत्तिका, भसितं भस्म चूर्णं च । एतैर्गन्धतोयैश्च । अजितेशे अप्क्षौद्राज्यकदर्भवल्कसुमृदद्भिश्च । माहिषारौ हरीरितेन हरावुक्तेन अम्बुदर्भादिना । मधूर्ध्वस्थाज्येन आज्यात् पूर्वं मधुना च । गुहे दर्भाद्यप्पशुलूमगोघृतमसूराग्गोमयाद्भिः । दर्भादिः दर्भा मृदस्त्वचश्च, अप् जलं, पशुलूम पशुवालं, गोघृतमाज्यमेव, मसूर उक्तः, अप् गोमयम् अम्बु च, एतैः । विघ्ने पाथोमृन्निजकल्कदर्भजलमध्वाज्यैः समासूरकैः । निजकल्काः निजास्त्वचः । शास्तरि साम्बुदर्भकुशमृत्त्वग्गव्यकैः शालिपिष्टाद्भिश्च ॥ ३२,३३ ॥

चूर्णान्याह — मुद्गेति । स्थाणौ मुद्गनिशायवशालीगोधूमसुवर्णजानि चूर्णानि । (ഗോധൂമം=ഗോതമ്പ്) सर्वेषु मृदादि मृत्त्वगादि स्वबिम्बकलशाद्यवगन्तव्यं स्वबिम्बशुद्धिकलशादितो ज्ञातव्यम् ॥ ३४ ॥

अथ शिवे गन्धाद्यैरलङ्कृत्य नीराजनं कुर्यात् । विष्ण्वादौ विष्णुदुर्गास्कन्देषु । निजहोमान्ते निजाक्षतहोमावसाने । विघ्नादौ विघ्नशर्वश्रीशयोः ।

---

१. 'एवं विशोधितं बिम्बं गन्धपुष्पाद्यलङ्कृतम् । विधाय तत्र दर्भादि त्यक्त्वा भूमिं विशोधयेत् ॥ अ' ख. पाठः

अग्रेऽग्निं विनिधाय तत्र विधिवद् विष्णौ सदुर्गागुहे
प्रत्येकं शतशः शमीदलमिलद्भिः साज्यकैरक्षतैः।
सप्तव्याहृतिभिर्जुहोतु जिनवर्णेनात्र पूर्णा हरौ
सम्पातं प्रतिमाङ्गपूर्तिविधये पादादिषु प्रार्पयेत्[1] ॥ ३६ ॥

इष्ट्वा गन्धादिभिः कौतुकमथ[2] कलयेन्मूलतो विघ्नशर्व[3]-
श्रीशे ताराभिरुद्धोपचरणमनुनोक्ताहुतेः प्राक् कुमारे।
चण्ड्यां चक्रेण वोर्ध्वं मुरजिति जलवासोद्धतौ सोपचारे-
णार्ष्टार्णेनार्यके प्राङ् निजकलशविधेर्बीजमन्त्रेण मन्त्री ॥[4]

---

कौतुकान्ततः कौतुकबन्धनानन्तरम् । अत्र शिवशब्दः शास्तुरप्युपलक्षणार्थः ॥ ३९ ॥

अक्षतहोममाह — अग्र इति । सदुर्गागुहे विष्णौ अग्रे प्रतिमाया अग्रभागे । विधिवद् उल्लेखनादिपूर्वकम् अग्निं विनिधाय । तत्राग्नौ । शमीदलमिलद्भिः शमीपत्रमिश्रैः । साज्यकैरक्षतैः सप्तव्याहृतिभिः 'ओं भूः स्वाहा' इत्यादिभिः 'ओं सत्यं स्वाहा' इत्यन्तैर्मन्त्रैः प्रत्येकं शतं जुहोतु । हरौ अत्र अक्षतहोमे । जिनवर्णेन गायत्र्या । पूर्णा पूर्णाहुतिः स्यात् । तेषु देवेषु संपातं प्रतिमाङ्गपूर्तिविधये प्रतिमाया अङ्गपरिपूरणार्थम् । पादादिषु मूर्धान्तेषु अर्पयेत् ॥ ३६ ॥

कौतुकबन्धनमाह — इष्ट्वेति । मन्त्री मन्त्रविशेषज्ञो गुरुः । विघ्नशर्वश्रीशे च अथ शोधनानन्तरं गन्धादिभिरिष्ट्वा मूलतः कौतुकं कलयेत् । कुमारे उक्ताहुतेः अक्षतहोमात् प्राक् । ताराभिरुद्धोपचरणमनुना प्रणवपुटितोपचारमन्त्रेण । चण्ड्यां दुर्गायाम् । उक्ताहुतेरूर्ध्वं वा पूर्वं वा चक्रेण सुदर्शनमन्त्रेण । मुरजिति जलवासोद्धतौ जलाधिवासादुद्धते सति । सोपचारेणाष्टार्णेन । अर्यके निजकलशविधेः बिम्बशुद्धिकलशाभिषेकात् प्राग् द्वादशपटले वक्ष्यमाणेन बीजमन्त्रेण च ॥ ३७ ॥

---

१. 'होमान्ते प्रतिमात्मनि प्रतनुयात् सम्पातपातादिकम् ॥ इ', २. 'पि' ख. पाठः ३. 'वे' क. पाठः. ४. 'बीजाणुनार्ये भ्रवपरिपुटितेनोपचाराणुनाथ । स्कन्दे प्रोक्ताहुतेः प्राक् महिषजिति परं वा रथाङ्गेन तोयावासोद्धारे जितन्तोपरिकृतनिजमूलेन शार्ङ्गायुधे च ॥ स्थि' ख. पाठः. ५ 'भिदि ज' मूलकोशपाठः.

स्थित्वा प्रार्थ्य 'नमस्त' इत्यणुयुजा दर्भाग्रगर्भाञ्जलिः
क्षौमक्षिप्तसमुक्तसर्षपसुवर्णोर्जस्वलं कौतुकम् ।
ऊर्णासूत्रसितं सुवर्त्य परिजप्य स्वाणुना सप्तधा
साङ्गुष्ठोपकनिष्ठिकाङ्गुलियुजा बध्नातु बाहूत्तमे ॥

नमस्तेऽर्चे ! सुरेशानि ! प्रतीके ! विश्वकर्मणः ।
प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः ॥ ३९ ॥

त्वयि संपूजयामीशं नारायणमनामयम् ।
रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव ॥ ४० ॥

त्वयि संपूजयामीशौ शम्भुनारायणौ सदा ।
इत्यादितत्तत्कल्पोक्तभिदयात्र मनुं पठेत् ॥ ४१ ॥

नमस्तेऽर्चे ! सुरेशानि ! विश्वावासे ! सुरारिणि ! ।
प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः ॥ ४२ ॥

---

कौतुकबन्धनस्येतिकर्तव्यतां दर्शयति — स्थित्वेति । दर्भाग्रगर्भाञ्जलिः दर्भाग्रद्वयेनान्तर्गतमञ्जलिं बद्ध्वा । अग्रतः स्थित्वा नमस्त इत्यणुयुजा 'नमस्तेऽर्चे ! सुरेशानी'त्यादिमन्त्रद्वयेन प्रार्थ्य । क्षौमक्षिप्तसमुक्तसर्षपसुवर्णोर्जस्वलं क्षौमखण्डे क्षिप्तेन मुक्तासर्षपसहितेन सुवर्णेन तेजोवत् । ऊर्णासूत्रसितम् । (ഉൺനൂൽ = കങ്കണം) तेन बद्धं कौतुकम् । साङ्गुष्ठोपकनिष्ठिकाङ्गुलियुजा अङ्गुष्ठसहिताभ्यामनामिकाभ्यां सप्तधा सुवर्त्य । स्वाणुना परिजप्य बाहूत्तमे दक्षिणकरे बध्नातु ॥ ३८ ॥

विष्णुप्रार्थनामन्त्रद्वयं पठति — नमस्त इति ॥ ३९,४० ॥

शिवनारायणादौ विशेषमाह — त्वयीति । अत्र कौतुकबन्धने । तत्तत्कल्पोक्तभिदया तत्तदागमोक्तभेदेन सह मनुं पठेद् उच्चरेत् ॥ ४१ ॥

दुर्गाप्रार्थनमन्त्रे विशेषमाह पुनः — नमस्त इति । इत्यादिरूप इत्यादिस्वरूपः । दुर्गोपस्थानमन्त्रकः दुर्गाया उपस्थानमन्त्रः ॥ ४२,४३ ॥

---

१. 'स्वा' क. पाठः.

त्वयि संपूजयामीशे ! देवीं नारायणीं सदा ।
रहितेत्यादिरूपोऽत्र दुर्गोपस्थानमन्त्रकः ॥ ४३ ॥

अर्चामथावेष्ट्य सदर्भवस्त्रैरारोप्य मन्त्री निपुणं रथादौ ।
छत्रध्वजाद्यैर्बहुवाद्यहृद्यं जलाधिवासाय नयेच्च तीर्थम् ॥

तीरेऽवतार्य[1] सलिलं सकलीकृतात्मा
संशोध्य तत्र वरुणं परिपूज्य देवम् ।
तन्मन्त्रतश्च परिजप्य च वारुणाद्यं
कृत्वात्र बोधिफलकं प्रयजेत पीठम् ॥ ४५ ॥

ह्रामादिस्वस्वबीजोर्ध्वगतनतिपरायाक्षरोद्यत्पृथिव्या-
द्याख्योद्भिन्नात्मने हुंफडिति मनुमुदीर्यासुमुद्धातवृत्त्या ।

---

अथार्चां सदर्भवस्त्रैरावेष्ट्य रथादौ याने । निपुणम् अप्रमादयुक्तमारोप्य । छत्रध्वजाद्यैः सह बहुवाद्यहृद्यं बहुभिर्वाद्यवादनेन हृद्यं मनोहरं यथा भवति तथा । मन्त्री कनिक्रदादिमन्त्रं जपन् जलाधिवासाय तीर्थं नयेच्च ॥ ४४ ॥

तीरे बिम्बमवतार्य सकलीकृतात्मा स्वस्य सकलीकरणादि कृत्वा । सलिलं शोषणादिभिः संशोध्य । तत्र वरुणं तन्मन्त्रतः स्वमूलतो देवं च परिपूज्य । वारुणाद्यं पञ्चवारुणात्मकं परिजप्य । अत्र बोधिफलकं कृत्वा अश्वत्थनिर्मितां सकूर्चां फलकां विन्यस्य तत्र पीठं प्रयजेत ॥ ४५ ॥

अत्र पूर्ववेष्टितानि वस्त्रादीन्यपास्याभिषिच्यालङ्कृत्य ह्रामादिस्वस्वबीजोर्ध्वगतनतिपरायाक्षरोद्यत्पृथिव्याद्याख्योद्भिन्नात्मने हुंफडिति ह्रामित्या-

---

१. 'कः ॥ नेत्रं तत्र तदीयनेत्रमनुमूलोङ्कारकैर्गोलतारार्चिष्कल्पनयोक्तकौतुकविधेः प्रागार्यके प्रोल्लिखेत् । ज्योतिर्लिङ्गमिदं यदीह परिभूषामात्रमाकल्पयेज्जायासत्यकबिम्बके यदि तथा सर्वं तयोश्चाचरेत् ॥ अथांशुकाद्यैः परिभूष्य बिम्बं नीराज्यकृत्वा नि',

२. 'र्यं परिशोध्य च धारणाभिस्तीर्थाम्बुपीठमभिपूज्य जलाधिनाथम् । मन्त्री स्वमन्त्रकृतसन्निधिमर्चयित्वा तत्र स्वमूलमनुना प्रयजेच्च देवम् ॥ पञ्चवारुणजपाभाविते वारिणीह फलकं सकूर्चकम् । न्यस्य बिम्बविनिवेशनाय तत्रार्चयेच्च निजयोगविष्टरम् ॥ ह्रा' ख. पाठः.

**आयम्यानेन हुंफट्पदकृतनमसोद्धाप्य हृत्वा धराद्यं**
**ज्योतीरूपां ध्रुवेण प्रतिकृतिमुदके वासयेत् प्राक्शिरस्काम् ॥**
**[1]रक्षां कृत्वा पञ्चमन्त्रैः समन्तात्**
**सोस्त्रैर्[2]दिक्पांस्तद्बहिः संविभाव्य ।**
**दीपानग्नि[3] जागरूकांश्च पुंस-**
**स्तत्रारक्षेत् स्थापयित्वा त्रिरात्रम् ॥ ४७ ॥**
**प्रासादं परिगृह्य कारुकरतः कर्त्रा गुरुः प्रार्पितं**
**पर्यैत्य प्रयतोऽथ रात्रिसमये सङ्गृह्य संशोध्य च ।**

---

दिस्वस्वबीजानाम् ऊर्ध्वगतैर्नतिर्नम इति परायेत्यक्षरैश्चोद्गच्छद्भिः पृथिव्याद्याख्यायुक्तैश्च आत्मने हुं फडित्यक्षरैर्मनुमुदीर्य । 'ह्रां नमः पराय पृथिव्यात्मने हुं फट्', 'ह्रीं नमः पराय अवात्मने हुं फट्', 'ह्लूं नमः पराय तेजआत्मने हुं फट्', 'ह्रैं नमः पराय वाय्वात्मने हुं फट्', 'ह्रौं नमः परायाकाशात्मने हुं फड्' इति मन्त्रानुदीर्येत्यर्थः । उद्घातवृत्त्या भूतानां स्वस्वगुणांनुरूपिणी संख्योद्घाता वृत्तिः, तयासुं प्राणमायम्य हुंफट्पदकृतनमसा हुं फडिति पदे स्थापितेन नमःपदेन । 'ह्रां नमः पराय पृथिव्यात्मने नमः' इत्यादिनानेन उद्धाप्य पादाग्रादिनाभ्यन्तं तदादिहृदयान्तं तदादिकण्ठान्तं तदादितात्वन्तं तदादिमूर्धान्तं चोर्ध्वमूर्ध्वं तदा तदा व्याप्य धराद्यं पृथिव्याद्यं च हृत्वा संहृत्य शोषणदाहने च स्वस्वबीजाभ्यां कृत्वा ज्योतीरूपामग्निमयीं[4] प्रतिकृतिं प्रतिमां वस्त्रादिभिराच्छाद्य ध्रुवेण प्राक्छिरस्कामुदके वासयेत् ॥ ४६ ॥

पुनः स्वस्वैपदै[5][6] पञ्चमन्त्रैः समन्ताद् दिक्षूर्ध्वान्तं सास्त्रैरस्त्रेण च रक्षां कृत्वा तद्बहिर्दिक्पान् संविभाव्य कल्पयित्वा दीपानग्निं जागरूकान् उन्निद्रान् पुंसः पुरुषांश्च तत्र स्थापयित्वा त्रिरात्रमारक्षेत् ॥ ४७ ॥

एवं बिम्बं परिगृह्य जलाधिवासं कृत्वा ततः प्रासादमपि परिगृह्य शोधयेदित्याह —प्रासादमिति । अथ जलाधिवासानन्तरं गुरुः प्रयतः शुद्धो

---

1. 'दिक्षूर्ध्वान्तं पञ्च मन्त्रान् यथार्हं दिक्पानर्चिचश्च विष्वग् वि' ख. पाठः.
2. 'स्त्रा', 3. 'ग्नीन् जा' क. पाठः. 4. 'यीं प्रतिमां', 5. 'स्वपञ्च' ख. पाठः.
6. 'दै म' क. पाठः.

एतद्दक्षिणतो निषद्य सकलीकृत्यार्चितात्माग्रतो
विघ्नेशं प्रसमर्च्य बीजमनुना निर्विघ्नतां प्रार्थयेत् ॥ ४८ ॥

ततः समास्तीर्णकुशेषु सादितं
त्रिसूत्रकाद्यक्षतसूनपश्चिमम् ।
विशोधितं धारणया ध्रुवार्चितं
परामृशेत् स्वैर्मनुभिर्यथाक्रमम् ॥ ४९ ॥

सूत्रं प्राक् त्रिवृतं कुशस्रजमथो मुष्ट्या शकृद्वारि वा
पश्चात् सर्षपमुष्टिगोमयजलं गव्यं क्रमात् तत्परम् ।
कुर्याद्वा विकिरं समुष्टिकमथो गन्धाम्बु पुष्पाक्षतं
दर्भाग्रान्वितमन्ततो विकिरवापेऽन्ते तु तत्सादनम् ॥ ५० ॥

---

भूत्वा कर्त्रा यजमानेन कारुकरतः परिगृह्य प्रार्पितं दत्तं प्रासादं रात्रिसमये पर्येत्य परितः स्वयं गत्वा ऊनातिरेकं निरीक्ष्य संगृह्य संशोध्य तदन्तर्बहिश्च मार्जनालेपनाभ्यां शोधयित्वा एतद्दक्षिणतः प्रासादस्य दक्षिणभागे निषद्योपविश्य सकलीकृत्य शङ्खपूरणपूर्वमर्चितात्मा कृतात्माराधनो भूत्वाग्रतो बीजमनुना गणपतिबीजेन विघ्नेशं प्रसमर्च्य तं प्रति निर्विघ्नतां प्रार्थयेत् ॥ ४८ ॥

ततः समास्तीर्णकुशेषु सादितं त्रिसूत्रकाद्यक्षतसूनपश्चिमं त्रितन्त्वाद्यक्षतपुष्पान्तिमं द्रव्यजातं धारणया शोषणादिभिर्विशोधितं ध्रुवार्चितं तत् स्वैर्वक्ष्यमाणैर्मनुभिर्यथाक्रमं परामृशेत् संस्पृश्य जपेत् ॥ ४९ ॥

द्रव्याण्याह — सूत्रमिति । प्राक् पूर्वं त्रिवृतं त्रिगुणितं सूत्रं कुशस्रजं, चाथो मुष्ट्या सह शकृद्वारि गोमयजलं वा विकल्पेन, पश्चात् सर्षपमुष्टिगोमयजलं सर्षपं मुष्टिं गोमयजलं पञ्चगव्यं च क्रमात्, तत्परं विकिरं समुष्टिकं वा विकिरमुष्टिं च विकल्पेन कुर्यात् । अथ गन्धाम्बु दर्भाग्रान्वितं पुष्पाक्षतं च कुर्यात् संपातयेत् । अन्ततः अवसाने विकिरवापे पक्षे तु तत्सादनं चान्ते कुर्यात् ॥ ५० ॥

---

१. 'द' क. पाठः.

व्यस्ताव्यस्तंनिरञ्जनं त्रिगुणदाम्नोर्यं त्रिमुष्ट्यां शक्तु-
त्तोये वं सितसर्षपे रमथवा सैं हं हरौ मन्त्रवित्।
गव्ये पञ्च जपेन्मनून् विकिरकाद्येषु स्वमूलं हरा-
वर्कार्णं विकिरे त्रितन्तुषु तनुत्रं गव्यमन्वस्त्रकम्॥
दत्त्वा धेनूर्द्विजभ्यो द्विरदवदनमुद्वास्य तद्देवतात्मा
स्थित्वा द्वारोपकण्ठे विभुसदनमदः प्रेक्ष्य दृष्ट्यास्त्रमय्या।
फट्कारान्तेन तारेण च चुलुकभृतैरष्टताराभिजप्तैः
पाथोभिः प्रोक्ष्य रक्षःप्रकरमिह कृतावासमुत्सारयेच्च॥५२॥
ईशादीशादिगन्तिमं गुणकुशस्त्रग्भ्यां कपोतोपरि
प्रासादं परिवेष्ट्य दिष्टमनुना मुष्ट्योद्ययान्तर्बहिः।

---

तन्मन्त्रानाह — व्यस्ताव्यस्तेति। मन्त्रविद् मन्त्रविशेषज्ञो गुरुः त्रिगुणदाम्नोः त्रिसूत्रदर्भस्रजोः व्यस्ताव्यस्तनिरञ्जनं पृथग्भूतमपृथग्भूतं प्रणवं जपेत्। त्रिमुष्ट्यां मुष्टित्रये यमिति बीजं, शक्तुतोये वं बीजं, सितसर्षपे सिताः सर्षपा मुख्या इति सितसर्षप इत्युक्तं, तत्र रं वीजं, हरौ अथवा सैं हं क्ष्रौमिति नरसिंहबीजं, गव्ये निजान् पञ्च मन्त्रान्, विकिराद्येषु स्वस्वमूलं, हरौ विकिरेऽर्कार्णं द्वादशाक्षरं, त्रितन्तुषु तनुत्रं कवचं वा, गव्यमनु गव्येऽस्त्रकं च जपेत्॥५१॥

पुनर्द्विजेभ्यो धेनूर्दत्त्वा द्विरदवदनं गणपतिमुद्वास्य तद्देवतात्मा गुरुः स्वयं देवो भूत्वा द्वारोपकण्ठे प्रासादद्वारसमीपे स्थित्वा अदः एतद् विभुसदनं देवालयम् अस्त्रमय्या अस्त्रतेजःप्रसारिण्या दृष्ट्या प्रेक्ष्य चुलुकभृतैर्निजदक्षिणकरचुलुकगृहीतैः अष्टताराभिजप्तैः पाथोभिर्जलैः फट्कारान्तेन तारेण प्रोक्ष्य इह कृतावासं कृतस्थानीयकं रक्षःप्रकरं राक्षससमूहम् उत्सारयेद् अपसारयेच्च॥५२॥

ततः प्रासादं कपोतोपरिभागे गुणकुशस्रग्भ्यामीशादीशादिगन्तिमं दिष्टमनुना निर्दिष्टमन्त्रेण परिवेष्ट्य परितो वेष्टयित्वा। दिष्टमनुनेति सर्वत्र

---

१. 'त्रं वापि गव्येऽस्त्र' ग. पाठः. २. 'दृष्या तथान्त' इति मूलकोशपाठः. ३. 'क्ष्रौ' क. पाठः. ४. 'त्र प्रा' ख. पाठः.

सम्मृज्य प्रसमुक्ष्य गोमयजलेनोत्कीर्य सिद्धार्थकान्
मार्जन्या परिमृज्य सिञ्चतु शकृत्तोयेन गव्येन च ॥ ५३ ॥
त्रेधा च प्रविकीर्य तत्र विकिरान् संमृज्य वापोणुना
वोक्षेद् गन्धजलैः किरेत् पुनरिषेत्वेत्यादिना वाक्षतैः।
धूपं दीपमपि प्रकल्प्य परितो मूलेन गर्भालये-
ऽथैशेऽग्नावनिलेऽथवास्त्रमुदकुम्भेऽधोग्रकूर्चेऽर्चयेत् ॥ ५४ ॥
ईशेशाजितविघ्नशास्तृषु सदर्भब्रह्मशाखाकृता
मुष्टिः सैव गुहे सपिप्पलशिखाशाखाशलाकाकृता।
दुर्गाशार्ङ्गभृतोः सहाश्रितशलाकादर्भसन्दर्भिता
शार्ङ्गीशे द्विजशाखया प्रकलिता विष्णूदिता वा भवेत् ॥

---

योज्यम्। आद्यया मुष्ट्यान्तर्बहिश्च संमृज्य गोमयजलेन समुक्ष्य सिद्धार्थका-नुत्कीर्य मार्जन्या मुष्ट्या परिमृज्य शकृत्तोयेन गव्येन च सिञ्चतु ॥ ५३ ॥

तत्र विकिरानञ्जलिना त्रिधा च विकीर्य पुनर्मुष्ट्या संमृज्य वा गन्ध-जलैरापोणुना 'आपः पुनन्त्वि'त्यादिमन्त्रेण वा मूलेन वोक्षेत्। पुनः 'इषे त्वे'-त्यादिना वा मूलेन वाक्षतैः किरेत्। परितो धूपं दीपमपि मूलेन प्रकल्प्याथ गर्भालये ईशे अग्नौ अथवानिले कोणे अधोग्रकूर्चे उदकुम्भे उदकपूर्णे कुम्भे अस्त्रं स्वस्वास्त्रमावाह्यार्चयेत् ॥ ५४ ॥

मुष्टिलक्षणमाह — ईशेशेति। ईशेशाजितविघ्नशास्तृषु सदर्भब्रह्मशा-खाकृता दर्भैः सह पलाशशाखया कृता मुष्टिर्भवेत्। गुहे सपिप्पलशिखाशा-खाशलाकाकृता अश्वत्थाग्रशाखाभिः शलाकाभिश्च सह कृता सैव शैवादिषू-क्तैव। दुर्गाशार्ङ्गभृतोः सहाश्रितशलाकादर्भसन्दर्भिता सहायुक्ताभिः शलाका-भिश्च सह कृता दर्भैश्च बद्धा। (സഹാ=പൂവംകുരുന്നൽ. ശലാകാ=ഓ ലക്കിൽ.) शार्ङ्गीशे द्विजशाखया पलाशशाखया सह प्रकलिता विष्णू-दिता वा ॥ ५५ ॥

---

१. 'धूपाद्यं च समर्पयेद् विकिरकर्मान्ते तथा सादनेऽथैशे' ख. पाठः. २. 'ऐ' क. ख. पाठः. ३. 'ग्रे' क. पाठः.

चक्रं चक्रिनिसुम्भजिद्धरिहरेऽघोरं गणेशेश्वरे
स्याद् वा पाशुपतं तदन्वितरथाङ्गं वास्त्रमीशाच्युते ।
ज्वालामालिनिहुं ज्वलादिघृणिहुंफट् चेति संकीर्तिते
अस्त्रे शक्तिधरार्ययोः स्वलिपिक्लृप्ताङ्गे तथाङ्गाक्षरे[1] ॥

गर्भालयेऽभ्यर्चितविष्टरे[2]ऽत्र
प्रासादमन्त्रेण शिवे परेषु ।
मूलेन देवं गृहमूर्तिरूपं
प्रकल्प्य साङ्गं प्रयजेद् दिगीशैः ॥ ५७ ॥
जपेत् कृणुष्वाद्यसकृत् तथाष्ट-
शतं निजास्त्रं च विकीर्य राज्या ।
गन्धैरुत प्रोक्ष्य गृहं प्ररक्षेत्
पुष्पास्त्रतालत्रयकल्पनाद्यैः ॥ ५८ ॥

---

अस्त्रमाह — चक्रमिति । चक्रिनिसुंभजिद्धरिहरे विष्णुदुर्गाशिवनारायणे चक्रं सुदर्शनमस्त्रं स्यात् । गणेशेश्वरे गणपतिशिवयोः अघोरं पाशुपतं वा । ईशाच्युते तदन्वितरथाङ्गं पाशुपतेन युक्तं सुदर्शनं वा । शक्तिधरार्ययोः क्रमेण ज्वालामालिनिहुं ज्वलादिघृणिहुंफट् ज्वलघृणिहुंफाडिति च, स्वलिपिक्लृप्ताङ्गे स्वैः स्वैः षड्भिरक्षरैः कल्पिताङ्गयुक्ते, तथाङ्गाक्षरे षड्भिः षड्भिरक्षरेण च युक्ते अस्त्रे संकीर्तिते ॥ ५६ ॥

क्रियाशेषमाह — गर्भालय इति । गर्भालयेऽभ्यर्चितविष्टरे अत्र शिवे प्रासादमन्त्रेण, परेषु मूलेन च गृहमूर्तिरूपं देवं प्रकल्प्यावाह्य साङ्गम् अङ्गैर्युक्तं दिगीशैः सह प्रयजेत् ॥ ५७ ॥

'कृणुष्वा'दिमन्त्रजातमसकृत् प्रजपेत् । निजास्त्रं चाष्टशतं जपेत् । राज्या सर्षपेण विकीर्य गन्धैरुत प्रोक्ष्य वा पुष्पास्त्रतालत्रयकल्पनाद्यैः पुष्पा(स्त्रम ? स्त्रैर)[3]स्त्रजप्तपुष्पैर्दिक्षु क्षेपणैः तालत्रयादिग्बन्धनाद्यैश्च गृहं प्ररक्षेत् ॥ ५८ ॥

---

* "रे ॥ कृणुष्वपाजःप्रमुखाणुजापं कृत्वा सकृत् साष्टशतं तथास्त्रम् । संजप्य संरक्ष्य गृहं प्रकुर्याद् राक्षोघ्नहोमं बहिरग्निकोणे ॥ पक्षं' ख. पाठः. २. 'दर्भकेऽत्र' क. पाठः. ३. 'न्त्र' घ. पाठः.

ततो बहिः स्थण्डिलमारचय्य
हुताशकोणे विनिधाय वह्निम् ।
आध्वर्यवाह्निग्निमुखादिक्लप्त्या
राक्षोघ्नहोमं विदधति विद्वान् ॥ ५९ ॥

पक्वं रक्षोहणादिद्वयमयमनुनाज्यं कृणुष्वादिमन्त्रै-
र्येदेवाद्यैश्च दुर्गामनुभिरपि सभूरादिभिश्चाखिलेषु ।
प्राग् भूरादेः स्वगुह्याणुभिरजितहरे मार्गजाज्यान्नसर्पी-
ष्यस्त्रेणाथाष्टयुक्तं शतमपि जुहुयात् सर्वतः सस्वपूर्णम् ॥

होमान्ते खरमञ्जरीरसलसद्भस्मप्रणीताम्भसा
संपातेन शतास्त्रजापमहितेनोक्षेद् गृहं सर्वतः ।

---

ततो बहिर्हुताशकोणे स्थण्डिलमारचय्य वह्निं वि[2]निधाय । आध्वर्यवा-ह्निग्निमुखादिक्लप्त्या, आध्वर्यवा यजुर्वेदिनः, तेषां योग्ययाग्निमुखादिक्लृप्त्या राक्षोघ्नहोमं विदधीत । विद्वानिति राक्षोघ्नहोमेन दुष्टराक्षसादीनां निबर्हणं विद्वानित्यर्थः ॥ ५९ ॥

अखिलेषु रक्षोहणादिद्वयमयमनुना 'रक्षोहणं वाजिनं, विज्योतिषा बृहता' इति द्वयस्वरूपेण मन्त्रेण पक्वं जुहुयात् । कृणुष्वादिमन्त्रैरष्टादशभिर्येदेवाद्यैश्च पञ्चभिः दुर्गामनुभिः पञ्चभिर्दुर्गाभिश्च सभूरादिभिर्व्याहृतिभिरपि च आज्यं जुहुयात् । अजितहरे भूरादेः व्याहृतिभ्यः प्राक् स्वगुह्याणुभिः स्वपञ्चतत्त्वैश्च । अथ सर्वतः सर्वदेवेषु मार्गजाज्यान्नसर्पींषि, मार्गजोऽपामार्गः, अस्त्रेण स्वस्वास्त्रमन्त्रेणाष्टयुक्तं शतमपि सस्वपूर्णं स्वस्वपूर्णाहुतिसहितं यथा तथा जुहुयात् ॥

होमान्ते स्विष्टकृदादिहोमावसाने खरमञ्जरीरसलसद्भस्मप्रणीताम्भसा, खरमञ्जरीरसोऽपामार्गरसः, तेन मिलितेन भस्मना प्रणीताम्भसा च युक्तेन शतास्त्रजापमहितेन शतावृत्त्यास्त्रजापात् संजातमहितत्वेन संपातेन दर्भब्रह्ममयूरपिप्पलशिखाभिः दर्भपलाशापामार्गाश्वत्थशाखाभिः होममन्त्रैः कृणुष्वाद्यैः

---

१. 'र' क. पाठः. २. 'विधा' ख. पाठः.

दर्भैर्ब्रह्ममयूरपिप्पलशिखाभिर्होममन्त्रैरमुं
निक्षिप्यानलमेव वास्तुहवनं कुर्वीत शार्व्यां दिशि ॥ ६१ ॥
पूर्वेण तं हुतवहं विरचय्य पीठं
शालीनवीनवसनामलतण्डुलाद्यैः ।
दूर्वाशमीदलकुशोत्तरकूर्चचर्चि-
तेऽस्मिन् यजेत कलशौ परिधानतः प्राक् ॥ ६२ ॥
न्यक्कूर्चेऽभ्यर्चयतु निजया विद्ययावाह्य विद्वान्
प्रत्यक्संस्थे प्रकृतघटयोस्तण्डुलस्वर्णपूर्णे ।
शन्नोदेव्या द्विरभिहितपादाङ्गयर्चात्र शान्तिं
प्राचीने च प्रयजतु तथा स्वर्णरत्नोदपूर्णे ॥ ६३ ॥
पक्वं वास्तोष्पतेन्ते प्रतिमनुयुगलेनाथ सर्पिर्ध्रुवास्थू-
णाद्यैर्जातादिभिः शान्त्यृगणुभिरपि भूरादिभिश्चाखिलेषु ।

---

गृहं सर्वतः सर्वप्रदेशेषूक्षेत् । अमुमेवानलं शार्व्यां दिशि निक्षिप्य वास्तुहवनं वास्तुहोमं कुर्वीत ॥ ६१ ॥

अत्र परिधानतः परिधिस्थापनात् प्राक् तं हुतवहं पूर्वेण तस्याग्नेः पूर्वभागे शालीनवीनवसनामलतण्डुलाद्यैः शालीभिर्नवेन वस्त्रेणामलैस्तण्डुलतिलसिद्धार्थैश्च पीठं विरचय्य दूर्वाशमीदलकुशोत्तरकूर्चचर्चिते दूर्वाशमीदलकुशानामुपरि कूर्चेन चालङ्कृते अस्मिन् पीठे कलशौ यजेत ॥ ६२ ॥

विद्वान् मन्त्रविशेषज्ञः प्रकृतघटयोः प्रस्तुतयोर्वास्तुकलशयोः प्रत्यक्संस्थे पश्चिमगते न्यक्कूर्चे अधोग्रकूर्चे तण्डुलस्वर्णपूर्णे तण्डुलेन स्वर्णेन च पूर्णे कुम्भे निजया विद्यया स्वस्वमूलेनावाह्य देवमभ्यर्चयतु । तथाच प्रकृतघटयोः प्राचीने स्वर्णरत्नोदपूर्णे सुवर्णेन रत्नोदकैश्च पूर्णे अत्र कुम्भे द्विरभिहितपादाङ्गया द्विष्कृत्वा उच्चारणादुद्भूतैः षड्भिः पादैरङ्गानि यस्याः तया शन्नोदेव्या ऋचा शान्तिमावाह्य प्रयजतु ॥ ६३ ॥

अथाखिलेषु परिधिस्थापनाद्याज्यभागहोमान्ते वास्तोष्पतेन्ते प्रतिमनुयुगलेन वास्तोष्पत इत्यन्ते 'प्रतिजानीही'त्यादिना 'वास्तोष्पते शंमया' इत्यादिना च मन्त्रद्वयेन पक्वं जुहुयात् । अथ वास्तोष्पतेन्ते ध्रुवास्थूणाद्यैः षड्भिः, जातादिभिः 'ज़ातवेदस' इत्यादिपञ्चभिर्दुर्गाभिः शान्त्यृगणुभिः, शान्तिदे-

---

१. 'मायूराग्रकुशादिभिः परिजपन् मन्त्रान् हुतोल्कानमुं', २. 'देवं प्र' ख. पाठः.

भर्गे दुर्गापदे पञ्चभिरिह जुहुयाद् ब्रह्मभिर्गुह्यमन्त्रैः
शार्ङ्गीशे तत्पुरस्तात् तदुपरि निजषण्मन्त्रकैः षण्मुखे च ॥
शन्नोदेव्यणुना शमीघृतहविःसर्पींषि गव्याप्लुता
दूर्वाश्चाष्टशतं जुहोतु निखिले पूर्णाभिपूर्णं पृथक् ।
दुर्गायां पुनराद्ययादिमचतुष्कं दानवारौ हुनेद्
दूर्वा मूलत एव शास्तृगुहयोः सर्वं जिनार्णेन वा ॥ ६५ ॥
प्राक् पावकं स्विष्टकृतोऽवशिष्टे-
नान्नेन तोयाज्यसमन्वितेन ।
विकीर्य दर्भाग्रचयं नमोरु-
द्राद्येन मन्त्रेण बलिं विदध्यात् ॥ ६६ ॥
एकाशीतिपदात्मपद्मविहितं वह्नेरुदीच्यामुत
प्राच्यां वास्तुबलिं महेशदिशि वा कुर्यान्निजोक्तक्रमात् ।

---

वत्याभिः 'शन्न इन्द्राग्नी'त्यादिभिः पञ्चदशभिः ऋग्भिः, भूरादिभिर्व्याहृति-मिश्चापि सर्पिर्जुहुयात् । इह भर्गे शिवे दुर्गापदे पञ्चदुर्गास्थाने पञ्चभिर्ब्रह्म-भिश्च, शार्ङ्गीशे तत्पुरस्तात् पञ्चदुर्गाभ्यः पुरस्ताद् गुह्यमन्त्रैः, षण्मुखे त(त्पु-रस्तात्? दुपरि) पञ्चदुर्गाणामुपरि निजषण्मन्त्रैकैश्च जुहुयात् ॥ ६४ ॥

निखिले निखिलेषु देवेषु शमीघृतहविस्सर्पींषि गव्याप्लुता दूर्वाश्चा-ष्टशतं शन्नोदेव्यणुना पूर्णाभिपूर्णं पूर्णाहुतिभिः पूर्णं यथा भवति तथा जु-होतु । दुर्गायां पुनराद्यया 'जातवेदस' इत्यृचा आदिमचतुष्कं समिदाज्यच-(रुरा?र्वा)ज्यानि हुनेत् । दानवारौ विष्णौ दूर्वास्तु मूलत एव, शास्तृगुहयोः सर्वं द्रव्यपञ्चकं जिनार्णेन गायत्र्या वा हुनेत् ॥ ६५ ॥

पावकं प्राग् अग्नेः प्राग्भागे दर्भाग्रचयं विकीर्य स्विष्टकृतोऽवशिष्टेन स्विष्टकृदवदानोच्छिष्टेन तोयाज्यसमन्वितेनान्नेन नमोरुद्राद्येन 'नमो रुद्राय वास्तोष्पतय' इत्याद्येन मन्त्रेण बलिं विदध्यात् ॥ ६६ ॥

वह्नेरुदीच्यामुत प्राच्यां वा महेशदिशि वा एकाशीतिपदात्मपद्मवि-हितम् एकाशीतिपदस्वरूपे पद्मे निर्दिष्टं वास्तुबलिं निजोक्तक्रमाद् निजनि-

---

१. 'लमह्रणुनर्यगु', २. प्राग्वत् स्वयं साधकः कुर्याद् वास्तुबलिं तदापि विखिनस्तस्येश्वराशामुखे । सम्पा' ख. पाठः.

सम्पातेन सभस्मशान्तिजलगव्येनाथ शम्यादिकै-
रुक्षेच्छान्त्यभिमन्त्रितेन भवनं त्वंविप्रमन्त्रं जपन् ॥ ६७ ॥
गर्भागारे[3] कलशसुभृतांस्तण्डुलान् गेहमूर्तौ
प्रोत्कीर्यैतत्कलशसलिलैश्चापि सिक्त्वा तयर्चा ।
कृत्वा पुण्याहमपि सशिवं वास्तुवादादि विप्रैः
कृत्वा नीराजनमपि निजास्त्रेण रक्षां च कुर्यात् ॥ ६८ ॥
शुद्धोदग्भवने च[4] सप्तदशकद्रव्यक्रमात् क्षेत्रकं
कृत्वान्तर्नवकं प्रकल्प्य कलशानां बाह्यतो युक्तितः ।
श्रीशेऽन्तर्नवकेऽङ्कुरादिनवकं गन्धोदकं दिग्विदिक्-
खण्डान्तःस्थघटेषु शुद्धसलिलं शेषेषु चापूरयेत् ॥ ६९ ॥

---

जोक्तरीत्या कुर्यात् । अथ वास्तुबलेरनन्तरं सभस्मशान्तिजलगव्येन भस्मप्र-णीतजलगव्यशेषैर्युक्तेन शान्त्यभिमन्त्रितेन 'शन्नो देवीरि'ति जप्तेन संपातेन शम्यादिकैः शमीपलाशाश्वत्थशाखादर्भैः 'त्वं विप्र'मन्त्रं जपन् भवनमुक्षेत् ॥

गर्भागारे गर्भगृहे गेहमूर्तौ प्रासादरूपमूर्तौ कलशसुभृतान् वास्तुक-लशस्थान् तण्डुलान् मूलेन प्रोत्कीर्य एतत्कलशसलिलैः वास्तुकलशजलैश्चापि तया 'शन्नो देवीरि'ति ऋचा सिक्त्वा विप्रैः सह 'ओं वास्तुदेवताः प्रीयन्ता-मि'त्यादिविशेषसहितं पुण्याहं सशिवं वास्तुवादादि शिवं वास्त्वित्यादिमङ्गल-युक्तं कृत्वा नीराजनमपि कृत्वा निजनिजास्त्रेण रक्षां च कुर्यात् ॥ ६८ ॥

अथाधिवासदिवसात् पूर्वेद्युः कर्तव्यं बिम्बशुद्धिकलशपूजनमाह —
**शुद्धोदग्भवन** इति । अथ शुद्धोदग्भवने प्रासादस्योदग्भागक्लृप्ते मार्जना-दिस्थलशुद्धिभिः शुद्धे भवने सप्तदशकद्रव्यक्रमात् कलशपटले सप्तदशद्रव्ये वक्ष्यमाणक्रमात् क्षेत्रं कृत्वान्तः कलशानां नवकं बाह्यतो युक्तितश्च प्रकल्प्य श्रीशेऽन्तर्नवकेऽङ्कुरादिनवकमापूरयेत् । दिग्विदिक्खण्डान्तःस्थघटेषु दिग्वि-

---

१. 'च', २. 'सलिलोपेतेन शम्यप्रकैस्त्वं विप्रस्त्वमिति ब्रुवन् भगवतः प्रा-सादमभ्युक्षतु ॥ गर्भा', ३. 'लये निहितदर्भचये निजेन प्रासादरूपमणुना पुरुषं प्रकल्प्य । तस्मिन् समर्प्य घटपूरिततण्डुलानि मूलेन शान्तिकलशेन तया च सिञ्चेत् ॥ वास्तुपुण्याह-मादाय मूर्ति प्रासादरूपिणीम् । तत्स्थाब्जघटवीर्येण गुप्तां संभावयेत् सदा ॥ शुद्धो', ४. 'शिवादिकपुटक्षेत्रेऽङ्कुवर्गादिकाः स्युः कुम्भा इह मध्यतो नवकमेतद् वा' ख. पाठः.

मध्यान्तर्नवखण्डकेषु शिवशास्त्रोर्दिग्विदिक्क्लृप्तितो
दुर्गेभाननयोः प्रदक्षिणतया द्रव्याणि विन्यस्यतु ।
दिक्कोणक्रमतोऽन्तरादि शरजेऽथेशाच्युते मध्यतो
मध्याशाविदिशाक्रमान्नव बहिःखण्डेषु हेमाम्बु च ॥ ७० ॥

क्षीरिश्रीबकुलाम्रचम्पकपलाशाशोकनीपार्जुन-
प्रोत्थान्यत्र तु पल्लवानि कलशे कार्शानवाशादले ।
रक्षोदिक्स्थदले सपद्मकपटीरद्वन्द्वजात्यार्तवं
दर्भस्तम्बसकुन्दनन्द्यभिधदूर्वारोचनासर्षपम् ॥ ७१ ॥

यवव्रीहिस्वर्णं रजततिलकूलद्वितयमृ-
च्छकृद्युक्तं न्यस्येत् सततगतिदिक्पत्रकलशे ।

---

दिक्खण्डानामन्तःस्थितेषु घटेषु गन्धोदकं, शेषेषु घटेषु शुद्धसलिलं चापूरयेत् ॥ ६९ ॥

शिवशास्त्रोर्नवखण्डकेषु दिग्विदिक्क्लृप्तितो मध्यान्तर्द्रव्याणि विन्यस्यतु । दुर्गेभाननयोः प्रदक्षिणतया मध्यान्तश्च । शरजेऽन्तरादि दिक्कोणक्रमतश्च । अथेशाच्युते मध्यतो मध्यखण्डे मध्याशाविदिशाक्रमाद् मध्ये दिग्विदिक्क्रमाच्च नव द्रव्याणि बहिःखण्डेषु बहिःखण्डानामन्तःस्थघटेषु हेमाम्बु च विन्यस्यतु ॥ ७० ॥

हरावित्यूर्ध्वतो ग्राह्यम् । अत्र हरौ तु कार्शानवाशादले मध्यस्थपद्मस्याग्नेयकोणदलस्थे कलशे क्षीरिश्रीबकुलाम्रचम्पकपलाशाशोकनीपार्जुनप्रोत्थानि क्षीरिवृक्षाद्यर्जुनवृक्षान्तेभ्यो गृहीतानि पल्लवानि न्यसेत् । क्षीरिणः क्षीरवृक्षास्तोरणे वक्ष्यमाणाः । (ശ്രീ=കൂവളം. വകുളം=ഇലഞ്ഞി. ആമ്രം=മാവ്.) चम्पकः स्वयमेव । (പലാശം=പ്ലാശ്.) अशोकः स्वयमेव । (നീപം=കടമ്പ്. അർജ്ജുനം=മരുത്.) रक्षोदिक्स्थदले निर्ऋतिकोणस्थदलकलशे सपद्मकपटीरद्वन्द्वजात्यार्तवम् । सपद्मकं पद्मकसहितम् । (പദ്മകം=പതിമുകം.) पटीरद्वन्द्वं चन्दनं रक्तचन्दनं च । (ജാത്യാർത്തവം=പിച്ച

---

१. 'र' क. पाठः

सहाविष्णुक्रान्तीमधुकरगुलूच्यार्द्रकशमीः
शतावर्या श्यामाकमपि शिवदिक्पत्रकलशे ॥ ७२ ॥

प्रत्यक् फलं न्यसतु गव्यमवाक् कषायं
प्रागुत्तरे च शतमूल्यमृताकुमरीः ।
व्याघ्रीं वचां बहुसुतां च सहां च सिंहीं
वल्मीकसप्तकमृदः कलशेऽथ मध्ये ॥ ७३ ॥

ओं सोमाय वनस्पत्यन्तर्गतये नमो मृदन्तमनुः ।
गन्धोदेऽष्टार्णं स्याच्छुद्धोदे द्वादशाक्षरं च हरौ ॥ ७४ ॥

क्वाथोदगव्यभसितानि शिवे मृदम्भो-
गोमूत्रदुग्धदधिकं कुशगन्धवारि ।

---

കപ്പൂവ്.) दर्भस्तम्बसकुन्दनन्द्यभिधदूर्वारोचनासर्षपम् । (ദർഭസ്തംബം=ദർഭ മുള. കുന്ദം=കുരുന്ന് നന്ദി=നന്ത്യാർവട്ടം. രോചന=ഗോരോചന.) सततगतिदिक्पत्रकलशे वायव्यकोणगतकलशे यवव्रीहिस्वर्णं यवाः व्रीहयः स्वर्णं च रजततिलकूलद्वितयमृच्छकृद्युक्तं, कूलद्वितयमृद् नदीतीरद्वयस्था मृत्, शकृद् गोमयं, तैर्युक्तं न्यस्येत् । शिवदिक्पत्रकलशे ईशानकोणदलकलशे सहाविष्णुक्रान्तीमधुकरगुलूच्यार्द्रकशमीः (സഹാ=പൂവാംകുരുന്നൽ. മധുകരം-കയ്യുണ്ണി. ഗുളൂചി=ചിററമൃത്. ആർദ്രകം=ഇഞ്ചി. ശമീ=വന്നി.) शतावर्या सह । (ശതാവരി=ശതാവേലി. ശ്യാമാകം=കവിട്ട.) प्रत्यक् पश्चिमे फलं फलोदकं न्यसतु । अवाक् दक्षिणे गव्यं, प्राक् प्राग्भागे कषायम्, उत्तरे शतमूल्यमृताकुमारीः । (ശതമൂലീ=ക്കുങ്ങിരിക്ക.) अमृता स्वयम् । (കുമാരി=കററവാഴ. വ്യാഘ്രീ=ചെറുവഴുതിന. വചാ=വയമ്പ്.) बहुसुता शतावरी । सहा उक्ता (സിംഹീ=വലിയവഴുതിന.) एताः न्यसतु । अथ मध्ये मध्यस्थे कलशे वल्मीकसप्तकमृदः वल्मीकानां सप्तकादाहृता मृदः । 'ओं सोमाय वनस्पत्यन्तर्गतये नमः' इति मृदन्तमनुः पल्लवादिमृदन्तेषु पूरणे मन्त्रः स्यात् । गन्धोदे गन्धोदकेषु अष्टार्णं, शुद्धोदे द्वादशाक्षरं च ॥ ७१,७२,७३,७४ ॥

शिवे क्वाथोदगव्यभसितानि कषायं पञ्चगव्यं भस्मोदकं च, मृदम्भोगोमूत्रदुग्धदधिकं गोमूत्रं क्षीरं दधि च, कुशगन्धवारि कुशोदकं गन्धोदकं च ।

मृत्साजलं क्वथितवार्यथ पञ्चगव्यं
व्यस्तं समस्तमपि गन्धजलं प्रभेशे ॥ ७५ ॥

व्यस्तं क्रमेण महिषद्विषि पञ्चगव्यं
मृत्क्वाथरत्नसलिलान्यपि गन्धतोयम् ।
पाद्यार्घ्यगव्यकपयांसि दधि द्विपास्ये
क्वाथाम्बुमृत्कुशजलान्यपि गन्धवारि ॥ ७६ ॥

कौशोदगव्यककषायकदौर्व्यराजी-
मृद्रत्नशुद्धजलगन्धजलं कुमारे ।
मृत्क्वाथकं हरिहरे पृथगास्थितानि
गव्यानि पञ्च फलवार्यखिलौषधं च ॥ ७७ ॥

स्वस्वदिक्संस्थितब्रह्मतदङ्गैरिह पूरयेत् ।
मदनद्रुहि तद्द्रव्याण्यपरेषु स्वमूलतः ॥ ७८ ॥

---

क्रमः प्रागुक्तः । न्यसत्विति पूर्वस्मादायाति । प्रभेशे मृत्साजलं क्वथितवारि, अथ व्यस्तं पृथक्स्थितं पञ्चगव्यं पञ्चसु घटेषु, पुनः समस्तं पञ्चगव्यमप्येकस्मिन् घटे, गन्धजलं च ॥ ७५ ॥

महिषद्विषि व्यस्तं पञ्चगव्यं क्रमेण गोमूत्रगोमयक्षीरदध्याज्यक्रमेण, मृत्क्वाथरत्नसलिलानि मृज्जलं कषायं रत्नजलं च, गन्धतोयमपि । द्विपास्ये पाद्यार्घ्यगव्यकपयांसि पाद्यमर्घ्यं गव्यं च क्षीरं च, दधि, क्वाथाम्बुमृत्कुशजलानि कषायं मृज्जलं कुशजलं च, गन्धवार्यपि ॥ ७६ ॥

कुमारे कौशोदगव्यककषायकदौर्व्यराजी[1]मृद्रत्नशुद्धजलगन्धजलं कौशोदं गव्यं कषायं दूर्वोदं सर्षपोदं मृज्जलं रत्नजलं शुद्धजलं गन्धजलं च । हरिहरे मृत्क्वाथकं पृथगास्थितानि पञ्चगव्यानि फलवारि अखिलौषधं च न्यसतु ॥ ७७ ॥

मदनद्रुहि शिवे इह बिम्बशुद्धिकलशपूरणे स्वस्वदिक्संस्थितब्रह्मतदङ्गैः दिक्षु तत्पुरुषादिभिः अग्न्यादिकोणेषु हृदयशिखाकवचशिरोभिः पञ्चब्रह्माङ्गैर्मध्यकलश ईशानेन च (तद्)द्रव्याणि पूरयेद्, अपरेषु देवेषु स्वस्वमूलतश्च ॥ ७८ ॥

---

१. 'जि' ख. पाठः.

स्थाणौ नाकूक्षतीर्थद्विपशिखरिनदीवेदिकाचत्वरोत्था
विघ्ने क्षेत्राखुजाढ्याश्च्युतचरमसरिज्जाश्च्युताद्यन्तिमाः
सक्रोडोत्थाः कुमार्यां सरिदुभयतटक्षेत्रनाकूक्षजाता [स्युः ।
मृत्सा शार्ङ्गीश आर्ये करिकिरिवृषवल्मीकनद्युद्भवाश्च ॥

क्षीरि[2]द्विजद्रुमशमीखदिरं कुमार्यां
काथाङ्गकं हरिहरे खदिरोनितं तत् ।
विघ्ने पयोद्रुमकपित्थमधूकबिल्वं
शेष[3]प्र[4]सिद्धिरुपरि स्नपनाभिधाने ॥ ८० ॥

सर्वौषधानि[5] तिलमाषयवप्रियङ्गु-
गोधूमशाल्यणुसमाह्वयकान्य[6]थ स्युः ।

---

मृदादीनि कथयति — स्थाणाविति । स्थाणौ नाकूक्षतीर्थद्विपशिखरिनदीवेदिकाचत्वरोत्थाः वल्मीकवृषशृङ्गस्थतीर्थस्थगजशृङ्गस्थपर्वतस्थनदीगतवेदिकास्थचत्वरस्थाः मृदः स्युः । विघ्ने क्षेत्राखुजाढ्याः क्षेत्रजाखुजाभ्यां युक्ताः च्युतचरमसरिज्जाः हीनचत्वरस्थनदीगताश्च । कुमार्यां च्युताद्यन्तिमाः रहितवल्मीकचत्वरस्थाः सक्रोडोत्थाः सूकरदारितमृत्सहिताश्च । शार्ङ्गीशे सरिदुभयतटक्षेत्रनाकूक्षजाताः नद्या उभयतटाद् क्षेत्राद् वल्मीकादुक्षशृङ्गाच्च जाता मृत्साः मृदः । आर्ये करिकिरिवृषवल्मीकनद्युद्भवाः गजवराहवृषदन्तेभ्यो वल्मीकनदीभ्यां चोद्भवाश्च ॥ ७९ ॥

कुमार्यां क्षीरिद्विजद्रुमशमीखदिरं काथाङ्गकं कषायाङ्गम् । हरिहरे खदिरोनितं खदिररहितं तदेव । विघ्ने पयोद्रुमकपित्थमधूकबिल्वम् । (കപിത്ഥം=വ്ളാത്തി. മധൂകം=ഇരിപ്പ) शेषप्रसिद्धिः शेषद्रव्याणां प्रकर्षेण सिद्धिः प्राप्तिः उपरि स्नपनाभिधाने कलशपटले ॥ ८० ॥

अथ हरिहरे तिलमाषयवप्रियङ्गुगोधूमशाल्यणुसमाह्वयकानि (അണു=മത്തംപുല്ല്) इति ग्राम्याणि सप्त । नीवारगार्मुकगवीधुकजर्तिलाख्यश्यामाकवेणुफलवास्तुकसंयुतानि । (നീവാരം=വരിനെല്ല്. ഗാർമ്മുകം=കാട്ടുപ-

---

१. 'नाः स्युः ॥' ख. पाठः. २. 'र', ३. 'षे', ४. 'द्रुमुप' क. पाठः. ५. 'नि यवमाषतिलप्रि', ६. 'नि सप्त ।' ख. पाठः.

नीवारगार्मुकगवीथुकजर्तिलाख्य-
श्यामाकवेणुफलवास्तुकसंयुतानि ॥ ८१ ॥

मूलाष्टोर्ध्वशताज्यहुत्युदितसंपातं समर्प्यात्मभू-
खण्डस्थेषु हिरण्यवर्णमनुमन्येषु स्वमूलं हरौ ।
सर्वत्र स्वकमूलमेव परिजप्यान्येषु वस्त्रैर्नवै-
राच्छाद्येत्यधिवास्य तत्स्नपनतः पूर्वेऽह्नि रक्षेद् घटान् ॥

इति तन्त्रसमुच्चये तृतीयः पटलो मङ्गलबीजरोपणाढ्यः ।
जलवासनवास्तुयागबिम्बाप्लवकुम्भार्चनचर्चितः प्रणीतः ॥

इति तन्त्रसमुच्चये

तृतीयः पटलः ॥

---

യവ. ഗവീധുകം=ചലന്നി. ജര്‍ത്തിലം=കാട്ടെള്ള്. ശ്യാമാകം=കവിട്ട. വേണുഫലം=മുളനെല്ല്. വാസ്തുകം=വാസ്തുചീര) इत्यारण्यकैः सप्तभिः सहितानि सर्वौषधानि स्युः । तथाचाहुः—

"तिलमाषव्रीहियवाः प्रियङ्गवश्चाणवश्च गोधूमाः ।
एता ग्रामौषध्यो नीवाराद्यास्तथैव चारण्याः ॥
नीवारश्यामाका गवीथुका जर्तिलाश्च वेणुफलाः ।
गार्मुकवास्तुसमेता आरण्याः सप्त च स्युरोषध्यः ॥"

इति ॥ ८१ ॥

क्रियाशेषमाह—मूलेति । एवं कलशान् संपूर्य संपूज्य मूलाष्टोर्ध्वशताज्यहुत्युदितसंपातं मूलेनाष्टोर्ध्वं शतमाज्यं हुत्वा तत्संपातं कलशेषु समर्प्य हरौ आत्मभूखण्डस्थेषु मध्यखण्डस्थकलशेषु हिरण्यवर्णमनुं 'हिरण्यवर्णां हरिणीमि'ति मन्त्रम्, अन्येषु खण्डगतकलशेषु स्वमूलम्, अन्येषु देवेषु सर्वत्र अन्तर्बहिश्च स्वकमूलं स्वस्वमूलमेव परिजप्य नवैर्वस्त्रैराच्छाद्य इति उक्तप्रकारेणाधिवास्य तत्स्नपनतः पूर्वेऽह्नि घटानधिवास्य रक्षेत् ॥ ८२ ॥

पटलमुपसंहरति—इतीति । तन्त्रसमुच्चये ग्रन्थे तृतीयः पटलः प्रणीतः कृतः । कथंभूतः, मङ्गलबीजरोपणाढ्यः मङ्गलबीजरोपणाभिधानेन परिपूर्णः, जलवासनवास्तुयागबिम्बाप्लवकुम्भार्चनचर्चितः जलाधिवासनस्य प्रासादशुद्ध्यादिवास्तुपूजायाः बिम्बशुद्धिकलशार्चनस्य चोक्तिभिः पूजितः ॥ ८३ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

तृतीयः पटलः ।

---

## अथ चतुर्थः पटलः ।

अधिवासनमण्डपं तदर्हेऽह्न्यथ सङ्गृह्य गुरुर्विशोधयेत ।
रुचिरैः परिभूषितं वितानप्रमुखैर्मृष्टसुलिप्तभूमिभागम् ॥

स्नात्वा शुद्धनवीनवस्त्रपरिधाय्याचम्य तन्मण्डपं
स्वास्त्रेक्षादिनिरस्तभूतनिवहं प्राविश्य पर्येत्य च ।
नैर्ऋत्यामुपविश्य शोधितसमिष्टात्माथ विघ्नेश्वरं
संपूज्याभिहितक्रमात् त्रिगुणसूत्रादीनि संसादयेत् ॥ २ ॥

---

अथाधिवासदिवसे प्रातरेव मण्डपसंस्कारादिकं कर्तव्यमिति विवक्षन् पटलमारभते — अधिवासनमण्डपमिति । अथ गुरुः स्वयं तदर्हे तद्योग्ये अह्नि रुचिरैः सुन्दरैः वितानप्रमुखैः वितानाच्छादनाद्यैः परिभूषितं परितोऽलङ्कृतं मृष्टसुलिप्तभूमिभागं मार्जनालेपनाभ्यां शोधितभूप्रदेशम् अधिवासनमण्डपं देवस्याधिवासनार्थं संपादितं मण्डपं संगृह्य परिगृह्य विशोधयेत विशेषेण शोधयेत ॥ १ ॥

तच्छोधनविधानमाह — स्नात्वेति । गुरुर्विशेषतः स्नात्वा शुद्धनवीनवस्त्रपरिधायी शुद्धेन नवेन वस्त्रेण परिहितो भूत्वा आचम्य स्वास्त्रेक्षादिनिरस्तभूतनिवहं स्वस्वास्त्रेक्षणादिना निरस्तोऽपसारितो भूतसमूहो यत्र तन्मण्डपं प्राविश्यान्तर्गत्वा पर्येत्य चालिन्दमार्गेण परितश्च गत्वा नैर्ऋत्यां निर्ऋतिकोणे उपविश्य शोधितसमिष्टात्मा आत्मनः शोधनं मन्त्रभावनं शङ्खपूरणमात्माराधनं च कृत्वा अथ विघ्नेश्वरं संपूज्य त्रिगुणसूत्रादीनि अभिहितक्रमात् प्रासादशोधने अभिहितेन क्रमेण संसादयेत् ॥ २ ॥

---

१. 'त ॥ निर्गत्येशाद्यन्तमेतत् समन्ताद् व्यस्ताव्यस्तेनोदितेन ध्रुवेण । वर्मास्त्राभ्यां वेष्टयेद् वा त्रितन्तुदर्भस्रग्भ्यां मण्डपं नीप्रदेशे ॥' ख. पाठः.

विप्राननुज्ञाप्य निरेत्य मुख्यद्वाराऽस्त्रतः प्रोक्ष्य च मण्डपं तत्।
ईशादि नीध्रोपरि तन्तुदर्भस्रग्भ्यां यथोक्तं परिवेष्टयेच्च ॥
सर्वत्राप्यथ तोरणांश्चतसृषु प्रागादिदिक्षु क्रमात्
केतूंश्चाष्टसु दर्भपल्लवपटीसंभूषितान् स्थापयेत् ।
द्वौ द्वौ द्वार्यथवा हरीशमहिषार्योस्तोरणाभ्यन्तरे
विन्यस्येद् वृषवाहने नवसु दिक्षूर्ध्वावसानं पुनः ॥ ४ ॥
प्लाक्षौदुम्बररौहिणाश्चलदलोत्थश्चेश्वरे तोरणाः
सार्ये ते गुहविघ्नयोर्वटभवान्त्यास्ते हरीशाच्युते ।
प्रोक्ताः प्लाक्षचतुर्थपैप्पलपुरोगास्तेऽपि मध्यस्थयुग्-
व्यत्यासान्महिषद्विषि स्युरखिलेऽपीष्टा ध्वजा वैणवाः ॥

---

विप्रान् दानैरनुज्ञाप्य मुख्यद्वारा प्रधानद्वारेण निरेत्य निर्गम्य अस्त्रतः तन्मण्डपं च प्रोक्ष्य तालत्रयादि कृत्वा तन्तुकुशस्रग्भ्यां नीध्रोपरि नीध्रस्योपरिभागे यथोक्तमीशादीशपर्यन्तं परिवेष्टयेच्च ॥ ३ ॥

अथ सर्वत्र सर्वदेवेष्वपि पूर्वद्वारप्राधान्ये पश्चिमद्वारप्राधान्येऽपि प्रागादिष्वेव चतसृषु दिक्षु क्रमात् तोरणान् स्थापयेत्, दर्भपल्लवपटीसंभूषितान् दर्भैः पल्लवैः पताकया च समलङ्कृतान् केतून् ध्वजांश्च अष्टसु प्रागादिदिक्षु। हरीशमहिषार्योः अथवा द्वारि तोरणाभ्यन्तरे तोरणस्यान्तर्भागे द्वौ द्वौ केतून् विन्यस्येत् । वृषवाहने पुनर्नवसु दिक्षूर्ध्वावसानम् ऊर्ध्वगतमन्त्यमीशानकोण एव विन्यस्येत् ॥ ४ ॥

तोरणादीनाह — प्लाक्षेति । सार्ये शास्तृसहिते ईश्वरे प्लाक्षौदुम्बररौहिणाश्चलदलोत्थश्च । रोहिणो वटः । चलदलोऽश्वत्थः । तोरणाः तोरणवृक्षाः प्रोक्ताः स्युः । गुहविघ्नयोः वटभवान्त्याः ते प्लक्षोदुम्बराश्वत्थवटाः । हरीशाच्युते शिवनारायणविष्णवोः प्लाक्षचतुर्थपैप्पलपुरोगाः ते अश्वत्थोदुम्बरवटप्लक्षाः । महिषद्विषि तेऽपि मध्यस्थयुग्व्यत्यासाद् अश्वत्थवटोदुम्बरप्लक्षाः । अखिलेऽपि वैणवाः ध्वजाश्चेष्टाः स्युः ॥ ५ ॥

---

१. 'णानि त', २. 'श्चाष्टसु पूर्वादितः के', ३. 'दिक्षु प', ४. 'ताकादर्भसंभूषितान् । द्वौ' ख. पाठः.

द्वारां पार्श्वयुगे कृतास्त्रखननादिक्षिप्तदर्भाक्षता-
दीष्टाब्जासनकेऽवटेऽस्त्रविहितोक्षादीन् क्रमात् तोरणान् ।
योगेयोगऋचाङ्घ्रियुग्भिरपि देवस्येति शूलैः सुयो-
ज्योत्तिष्ठेत्यधिदैवनामभिरपि न्यस्येच्छिवे मन्त्रवित् ॥ ६ ॥

तैरेवेषुभवेऽथ तैर्मुररिपौ स्योनापृथिव्या युतै-
र्वेदाद्यैर्महिषारिशास्तृगणपेष्वीशाच्युते तारतः ।
प्राग्द्वार्दक्षिणपार्श्वपूर्वविहितस्थानेषु संस्थापयेत्
केतूंश्च क्रमविद् द्वयेषु यजतामावाह्य तद्देवताः ॥ ७ ॥

---

स्थापनक्रियामाह — द्वारामिति । मन्त्रविद् मन्त्रविशेषज्ञो गुरुः शिवे द्वारां द्वाराणां पार्श्वयुगे पार्श्वद्वये कृतास्त्रखननादिक्षिप्तदर्भाक्षतादीष्टाब्जासनके कृतमस्त्रेण खननादि खननहरणगोमयजलोक्षणानि यत्र, क्षिप्तं दर्भाक्षतादि दर्भाक्षतगन्धपुष्पाणि च यत्र, इष्टं पूजितं 'पद्माय नमः' इति पीठं च यत्र, तस्मिन्नवटे गर्ते अस्त्रविहितोक्षादीन् अस्त्रेण कृतोक्षणादीन् । आदिशब्देन शोषणादिकं, स्वस्वनाममन्त्रेण प्राणायामः पूजनं चोच्यते । तोरणान् क्रमाद् योगे योगऋचा 'योगे योगे तवस्तरमि'ति मन्त्रेण अङ्घ्रियुग्भिः पादद्वयैः, 'देवस्य त्वे'ति मन्त्रेण शूलैरपि सुयोज्य 'उत्तिष्ठे'त्यृचा अधिदैवनामभिः 'प्रमोदाय नमः' इत्यादिनाममन्त्रैरपि न्यस्येत् स्थापयेत् ॥ ६ ॥

इषुभवे तैरेव अधिदैवनामभिरेव, अथ मुररिपौ स्योना पृथिव्या ऋचा युतैस्तैरधिदैवनामभिः, महिषारिशास्तृगणपेषु वेदाद्यैः 'अग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' 'शन्नो देवीः' इति चतुर्भिर्मन्त्रैः, ईशाच्युते तारतश्च न्यस्येत् । पुनः क्रमवित् स्थानक्रमं मन्त्रक्रमं च वेत्ता गुरुः प्राग्द्वार्दक्षिणपार्श्वपूर्वविहितस्थानेषु प्राग्द्वारस्य दक्षिणं पार्श्वं, दक्षिणद्वारस्य पश्चिमं पार्श्वमित्यादिविहितेषु स्थानेषु केतूंश्च तथा संस्थापयेत् । द्वयेषु तोरणेषु ध्वजेषु च तद्देवता आवाह्य यथोक्तरीत्या यजताम् ॥ ७ ॥

सुशोभनः शार्ङ्गधरे सुभद्रः सुकर्मनामा च तथा सुहोत्रः।
शिवे प्रमोदाभयशान्तसंज्ञा महांश्च चत्वार इति प्रदिष्टाः॥

सुमङ्गलः स्थाणुहरौ सुहोत्रस्तथैव कल्याणकभद्रकौ च।
यज्ञेशनामा महिषाभिमातौ प्रभाकरो मङ्गलसुप्रभौ च॥९॥

षाण्मातुरे स्युर्वरदो यशोदो द्वौ पुष्टिदश्रीप्रदसंज्ञितौ च।
विघ्ने सुपूर्णाह्वयपूर्णभद्रौ प्रशान्तनामा विजयाभिधश्च॥१०॥

आर्यः शास्ता गुहासन्नः सेनानीश्च प्रभापतौ।
इति सप्तसु संप्रोक्ताः क्रमात् तोरणदेवताः॥ ११॥

कुमुदकुमुदाक्षसंज्ञौ लक्ष्मीशे पुण्डरीकवामनकौ।
अथ शङ्कुकर्णसर्वादिकनेत्रौ सुमुखसुप्रतिष्ठितकौ॥१२॥

भृङ्गीशकार्त्तिकेयौ वृषनन्दीशौ शिवे महाकालः।
कुम्भोदरो महोदरनामाथो वीरभद्रको ब्रह्मा॥ १३॥

---

देवताः पठति—सुशोभन इत्यादिभिः। शार्ङ्गधरे सुशोभनः सुभद्रः सुकर्मनामा सुहोत्रश्च प्रदिष्टाः उक्ताः। अत्रत्या नामसंज्ञाभिधाह्वयादिकाः कप्रत्ययश्च स्वतोऽर्थविशेषाभावात् पद्याविरोधार्थमेव कल्पिताः। शिवे प्रमोदाभयशान्तसंज्ञा महांश्च इति चत्वारः॥ ८॥

स्थाणुहरौ सुमङ्गलः सुहोत्रः तथा कल्याणकभद्रकौ च। महिषाभिमातौ महिषशत्रौ यज्ञेशनामा प्रभाकरो मङ्गलसुप्रभौ च॥ ९॥

षाण्मातुरे वरदो यशोदः पुष्टिदश्रीप्रदसंज्ञितौ द्वौ च। विघ्ने सुपूर्णा[1]ह्वयपूर्णभद्रौ प्रशान्[2]तनामा विजयाभिधश्च॥ १०॥

प्रभापतौ आर्यः शास्ता गुहासन्[3]नः सेनानीश्च। इति सप्तसु देवेषु क्रमात् तोरणदेवताः संप्रोक्ताः॥ ११॥

लक्ष्मीशे कुमुदकुमुदाक्षाद्या ध्वजेशाः। सर्वादिकनेत्रः सर्वनेत्रः॥१२॥

शिवे भृङ्गीशाद्या नव॥ १३॥

---

१. 'ज्या' ख. पाठः. २. 'न्ति' क. पाठः. ३. 'नः' ख. पाठः.

शिवशार्ङ्गिणि गिरिशोत्सवविधास्यमानाः स्युरष्ट नन्द्याद्याः
भृङ्गीशाद्या नव वा कुमुदात्माद्यैस्तथाष्टभिः सहिताः ॥
काली कराली विरजा मन्दरा विन्ध्यवासिनी ।
सुप्रभा सिंहवक्त्रान्त्या दुर्गायां दैत्यमर्दिनी ॥ १५ ॥
गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ।
त्रिणेत्रशूलिनौ दक्षभीमरूपौ च शास्तरि ॥ १६ ॥
स्कन्ददन्तीन्द्रमुखयोरिन्द्राद्या दिगधीश्वराः ।
इति सप्तसु संप्रोक्ताः क्रमेण ध्वजदेवताः ॥ १७ ॥
इष्ट्वा बलिं तोरणदेवताभ्यो
ध्वजाधिपेभ्योऽपि च वाद्यहृद्यम् ।
दत्त्वा समाचम्य समेत्य चान्तः
समाचरेद् द्वारघटार्चनाद्यम् ॥ १८ ॥
प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्या चतुर्दिक्ष्वपि
द्वाःस्थान् पूर्णघटेषु विष्णुगुहविघ्नार्येश्वरेषु द्विशः ।

---

शिवशार्ङ्गिणि कुमुदात्माद्यैरष्टभिः सहिताः गिरिशोत्सवविधास्यमानाः शिवस्योत्सवे वक्ष्यमाणा नन्द्याद्या अष्ट स्युः 'नन्दिने कुमुदात्मने नम' इत्यादयः । तथा कुमुदात्माद्यैरष्टभिः सहिताः भृङ्गीशाद्या नव वा । 'भृङ्गीशाय कुमुदात्मने नम' इत्याद्यष्ट । नवमे 'ब्रह्मणे नम' इत्येव ॥ १४ ॥

दुर्गायां कालीकराल्याद्याः । अन्त्या दैत्यमर्दिनी च ॥ १५ ॥

शास्तरि गोप्त्रादयः ॥ १६ ॥

स्कन्ददन्तीन्द्रमुखयोः, दन्तीन्द्रमुखो गणपतिः, इन्द्राद्या दिगधीश्वराः लोकपाला एव । इति सप्तसु देवेषु क्रमेण ध्वजदेवताः संप्रोक्ताः ॥

एवमिष्ट्वा तोरणदेवताभ्यो ध्वजाधिपेभ्योऽपि च वाद्यहृद्यं वाद्यघोषैर्मनोहरं यथा भवति तथा बलिं दत्त्वा समाचम्य अन्तः समेत्य द्वारघटार्चनाद्यं समाचरेच्च ॥ १८ ॥

विष्णुगुहविघ्नार्येश्वरेषु पञ्चसु चतुर्दिक्ष्वपि द्विशः द्वौ द्वौ पूर्णघटेषु पूरितकलशेषु प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्या पूर्वद्वारस्य दक्षिणोत्तर-

द्वाःशाखासु यजेत वा शिवहरौ द्वाःस्थानिहाष्टासु दि-
क्ष्वाशेशान् कलशेषु केवलममून् वै तेषु सुम्भद्विषि ॥

पद्मरागं प्रवालं विडूरोद्भवं
पुष्यनीलाश्मगर्भाणि मुक्ताफलम् ।
स्फाटिकं च न्यसेद् विष्णुविष्वक्शयो-
र्द्वारकुम्भेषु हेमापि वा सर्वतः ॥ २० ॥

द्वारपाला हरौ पूर्णपुष्करानन्दनन्दनाः ।
वीरसेनसुषेणौ च सम्भवप्रभवौ क्रमात् ॥ २१ ॥

स्थाणौ महोदरमहाकायमहाकण्ठका महोरस्कः ।
अग्न्यादिजिह्वनेत्रौ तदनु विरूपाक्षको विशालाक्षः ॥२२॥
वीरमहाद्यौ स्वाद्यो भद्राद्यश्चारुपूर्वकः सेनाः ।
षष्ठो गुहे सुषेणः सेनावथ पूर्णचित्रपूर्वौ च ॥ २३ ॥
गणराजि वज्रदन्तो गजास्यको भीमनाममहिषास्यौ ।
अथ मेघनादकविरूपाक्षौ वरदश्च सर्वभक्षश्च ॥ २४ ॥

---

पार्श्वक्रमेण तथा दक्षिणस्य पश्चिमपूर्वक्रमेण तथान्ययोरपि तत्क्रमेणारभ्ये-त्यर्थः, द्वाःस्थान् यजेत । शिवहरौ, द्वाःशाखासु द्वाःस्थान् यजेत वा न वा । इह शिवहरौ अष्टासु दिक्षु कलशेषु आशेशान् लोकपालान् यजेत । सुम्भद्विषि तेषु कलशेषु केवलममून् आशेशान् वै यजेत ॥ १९ ॥

विष्णुविष्वक्शयोर्द्वारकुम्भेषु पद्मरागं प्रवालं विडूरोद्भवं वैडूर्यं पुष्यनीलाश्मगर्भाणि, अश्मगर्भं मरतकं, मुक्ताफलं स्फाटिकं च न्यसेत्, सर्वतः सर्वत्र हेम स्वर्णमपि वा ॥ २० ॥

हरौ पूर्णपुष्कराद्याः द्वारपालाः क्रमात् स्युः ॥ २१ ॥

स्थाणौ महोदराद्याः । अग्न्यादिजिह्वनेत्रौ अग्निजिह्वोऽग्निनेत्रश्च ॥

गुहे वीराद्याः सेनाः । वीरमहाद्यौ वीरसेनो महासेनश्च । स्वाद्यः सुसेनः । भद्राद्यो भद्रसेनः । चारुपूर्वकश्चारुसेनः । षष्ठः सुषेणश्च । अथ पूर्णचित्रपूर्वौ सेनौ पूर्णसेनश्चित्रसेनश्च ॥ २३ ॥

गणराजि वज्रदन्ताद्याः ॥ २४ ॥

---

१. 'वृष्णीश' ख. पाठः.

वीरबाहुमहावीरविद्युद्दन्तविलासिनः ।
आर्ये तीक्ष्णस्तीक्ष्णदन्तस्ताराक्षश्च भवोद्भवः ॥ २५ ॥

महोदरादयस्तेऽष्टौ पूर्णात्मादिभिरष्टभिः ।
संभेदिता हरिहरे द्वारपाला इतीरिताः ॥ २६ ॥

सहस्रवीची विमला शतादि-
धारा प्रमोदिन्यपि धूर्जटौ स्युः ।
अर्च्याश्चतुस्तोरणकुम्भकेषु
दिक्पा हरौ मन्त्रविदा स्वमन्त्रैः ॥ २७ ॥

कुम्भभद्रादिकौ कर्णौ श्वेतगोपूर्वकावपि ।
शिवशार्ङ्गीशयोर्द्वारमध्येऽर्च्या द्वारदेवताः ॥ २८ ॥

अग्न्यादीशदिगन्तमुक्तविधिना मुष्ट्यादिभिः शोधयेत्
सिद्धार्थादिभिरेव वा सशिखिकुण्डं मण्डपान्तःस्थलम् ।

---

आर्ये वीरबाह्वादयः ॥ २५ ॥

हरिहरे पूर्णात्मादिभिरष्टभिः सम्भेदिता युक्तास्ते महोदरादयोऽष्टौ । 'महोदराय पूर्णात्मने नमः' इत्यादयः । इति द्वारपाला ईरिताः ॥ २६ ॥

धूर्जटौ चतुस्तोरणकुम्भकेषु चतुर्षु तोरणमूलस्थकलशेषु सहस्रवीची विमला शतादिधारा शतधारा प्रमोदिन्यपि स्युः । हरौ तु तेषु मन्त्रविदा इन्द्रादीनां मन्त्रज्ञेन दिक्पा अर्च्याः स्युः ॥ २७ ॥

शिवशार्ङ्गीशयोर्द्वारमध्ये कुम्भभद्रादिकौ कर्णौ कुम्भकर्णो भद्रकर्णश्च, श्वेतगोपूर्वकावपि कर्णौ श्वेतकर्णो गोकर्णश्च द्वारदेवता अर्च्याः ॥ २८ ॥

क्रियाशेषमाह — अग्न्यादीति । मुष्ट्यादिभिः सिद्धार्थादिभिरेव वा, पक्षद्वयेऽपि सशिखिकुण्डम् अग्निकुण्डसहितं मण्डपान्तःस्थलं प्रासादशुद्धावुक्तविधिना अग्न्यादीशदिगन्तं शोधयेत् अग्निकोणादीशकोणान्तं प्रदक्षिणगत्या शोधयित्वा पुनरग्न्यादीशान्तमपि पूर्वभागं शोधयेदित्यर्थः । शक्त्या-

---

१. 'शसेनानीरर्च्याः स्युर्द्वार' ख. पाठः.

प्रागास्योऽञ्जलिना त्रिधात्र विकिरान्छक्त्यात्मनि प्रोत्क्रिरेत्
सिद्धार्थान् विकिरांश्च रक्षतु सशेषान् मार्जनोपार्जितान् ॥

मध्येवेदि समिष्टपीठनिजशक्त्यास्थापितं मूलतो
देवेशं दिगधीश्वरानपि दिशास्वभ्यर्च्य कृत्वा ततः ।
पुष्पास्त्रप्रविमोचनं च परितो धूपं प्रदीपं तथा
न्यस्यारक्षतु मण्डपात्मकममुं चास्त्रत्रितालादिना ॥

अथ शि[2]वदिशि पार्जन्यां[3]शके वा लिखित्वा
वसुदलकमलं तद्दक्षिणे स्वस्तिकं च ।
सरसिरुहि सशालीवस्त्रदर्भादिपीठे
न्यसतु कलशनाथं स्वस्तिके कर्करीं च ॥ ३१ ॥

---

त्मनि भुवनेश्वर्यां पूर्णपुष्पाञ्जलिं विधाय मण्डपं शक्तिमयं ध्यात्वा अत्र मण्डपे प्रागास्यो भूत्वा अञ्जलिना विकिरान् त्रिधा प्रोत्क्रिरेत् पूर्वं मध्ये पुनर्दक्षिणोत्तरपार्श्वयोश्च । मार्जनोपार्जितान् मार्जनेन स्वीकृतान् सशेषान् पात्रेऽवशेषितांश्च सिद्धार्थान् विकिरांश्च रक्षतु ॥ २९ ॥

मध्येवेदि वेदिमध्ये समिष्टपीठनिजशक्त्यास्थापितं समिष्टे पीठे निजायां शक्तावावाहितं देवं मूलतो दिशासु दिगधीश्वरानप्यभ्यर्च्य ततः पुष्पास्त्रप्रविमोचनं परितः पुष्पेणास्त्रमन्त्रेण क्षेपणं च कृत्वा तथा धूपं प्रदीपं च न्यस्य मण्डपात्मकममुं देवम् अस्त्रत्रितालादिना अस्त्रेण तालत्रयादिना आरक्षतु ॥ ३० ॥

कुम्भेशपूजामाह — अथेति । अथ तदनन्तरं शिवदिशि पार्जन्यांशके वास्तुगतपर्जन्यस्यांशे वा वसुदलकमलम् अष्टदलं पद्मं तद्दक्षिणे स्वस्तिकं च लिखित्वा सशालीवस्त्रदर्भादिपीठे शालीसहितवस्त्रदर्भतण्डुलादिभिः कृते पीठे सरसिरुहि पद्मे कलशनाथं कुम्भेशं, स्वस्तिके कर्करीं सनालं कुम्भं च न्यसतु ॥ ३१ ॥

---

१. 'देवं त्रि' इति मूलकोशपाठः. २. 'खलु शिवकोणे देशिकः कल्पयित्वा', ३. 'न्येऽपि वा कल्पयित्वा', ४. 'राजं स्व', ५. 'स्त्रं' ख. पाठः.

आराध्य योगासनमत्र तोयैः सिक्तं प्रसक्तं गुणगन्धधूपैः
सुसंस्कृतं न्यस्तकुशाद्यमिष्टं[1] घटं समुत्तानितमात्तकूर्चम् ॥
सहेमरत्नाक्षतगन्धपुष्पं सुधीः समापूर्य जलैश्च पूतैः ।
तत्रेष्टवर्णाम्बुरुहोपविष्टमूर्त्यन्तरुद्यत्सकलात्मतत्त्वे ॥३३॥
त्र्याधारपद्मेष्वभिवाह्य चात्मविद्यापराख्यान्यपि तत्त्वकानि
सर्वेषु संपूजयतु त्रिणेत्रे परांशसंपन्न[3]शिवानि मन्त्री ॥३४॥
तस्मिन् पल्लवचक्रिकादिघटिते तारोपचारादिना
देवेशं कलशेऽभिवाह्य निजमूलेनार्णतत्त्वादिभिः ।

---

तत्पूजाविधानं सूत्रयति— आराध्येत्यादिभिः । अत्र अष्टदलपद्मे पीठे योगासनमाराध्य तोयैः सिक्तं क्षालितं, गुणगन्धधूपैः प्रसक्तं गुणेन वेष्टितं गन्धेन लिप्तं धूपेन धूपितं च, सुसंस्कृतं धारणादिभिः शोधितं, न्यस्तकुशाद्यं कृतदर्भविन्यासगन्धजलोक्षणादिकम्, इष्टं पूजितं, समुत्तानितं यथाविधि स्थापितम्, आत्तकूर्चं, सहेमरत्नाक्षतगन्धपुष्पं हेमरत्नाक्षतगन्धपुष्पैर्योजितं घटं सुधीः मानसपूरणकृद् गुरुः पूतैर्गालितपूजितैर्जलैश्च समापूर्य इष्टवर्णाम्बुरुहोपविष्टमूर्त्यन्तरुद्यत्सकलात्मतत्त्वे इष्टे लिपिपङ्कजे उपविष्टाया मूर्तेरन्तः प्रकाश्यमानैः कलासहितैरात्मनस्तत्त्वैश्च युक्ते तत्र कलशे त्र्याधारपद्मेषु मूलाधारकलशगतमन्त्रमूर्तेर्मूलाधारहृदयभ्रूमध्येषु सर्वेषु देवेषु आत्मविद्यापराख्यानि तत्त्वानि 'ओं अं नमः परायात्मतत्त्वात्मने नमः' 'ओं उं नमः पराय विद्यातत्त्वात्मने नमः' 'ओं मं पराय परतत्त्वात्मने नमः' इति मन्त्रैस्तान्यावाह्य संपूजयतु च । त्रिणेत्रे परांशसम्पन्नशिवानि परांशे परतत्त्वस्थाने योजितशिवतत्त्वानि 'ओं मं नमः शिवाय शिवतत्त्वात्मने नमः' इति मन्त्रेण च । मन्त्रीत्यनेन वक्ष्यमाणाद् ब्रह्मकलशपूजनात् पूजाविधानं स्वीकर्तव्यमिति सूचितम् ॥ ३२, ३३, ३४ ॥

अथ गुरुः पल्लवचक्रिकादिघटिते पल्लवचक्रिकातण्डुलदर्भाक्षतफलगन्धपुष्पैर्युक्ते तस्मिन् कलशे तारोपचारादिना निजमूलेन देवेशमभिवाह्य अर्णतत्त्वादिभिः लिपितत्त्वमूलाक्षराङ्गादिभिः साकल्यं सकलत्वं परिकल्प्य कल्प-

---

१. 'समिष्ट', २. 'त्परचित्यमुष्मिन् ॥' ख. पाठः. ३. 'भि' क. पाठः.

साकल्यं परिकल्प्य कल्पविधिना दत्त्वोपहारान् क्रमात्
संपूज्याथ निवेद्य तोषणसपर्यां च प्रकुर्याद् गुरुः ॥ ३५ ॥
प्रक्लृप्तयोगासनपूजनादिकां
गलन्तिकां गालितवारिपूरिताम् ।
ततो निजास्त्रेण कृताभिवाहनां
प्रकल्पिताङ्गाममुना प्रपूजयेत् ॥ ३६ ॥
ततः करकधारया विहितकुड्यमूलोक्षया
प्रदक्षिणपरिभ्रमं वितनुयादलिन्देऽस्त्रतः ।
घटं नयतु पृष्ठतोऽप्यथ पुरार्जितान् सर्षपान्
विकीर्य करकं घटीं विकिरकांश्च पीठे न्यसेत् ॥ ३७ ॥
आधारत्रितये यथापुरमदः संपूज्य तत्त्वत्रयं
मूलेनात्र विभाव्य देवमणुना साङ्गं समभ्यर्चयेत् ।

---

विधिना पूजापटले वक्ष्यमाणविधानेनोपहारान् क्रमाद् दत्त्वा संपूज्य निवेद्य तोषसपर्यां प्रसन्नपूजां च प्रकुर्यात् ॥ ३५ ॥

ततः प्रक्लृप्तयोगासनपूजनादिकां कृतपीठपूजादिकां, गालितवारिपूरितां गालितैर्जलैः पूरितां, निजास्त्रेण कृताभिवाहनां स्वस्वास्त्रेण कृतावाहनां, प्रकल्पिताङ्गाम् अस्त्रमन्त्रस्याङ्गैः कृताङ्गां गलन्तिकां कर्करीम् अमुनास्त्रेण प्रपूजयेत् ॥ ३६ ॥

ततोऽलिन्दे विहितकुड्यमूलोक्षया विहितं विधीयमानं कुड्यमूलोक्षणं यया तया करकधारयास्त्रतोऽस्त्रमन्त्रं जपन् प्रदक्षिणपरिभ्रमम् ईशादीशपर्यन्तं प्रदक्षिणक्रमेण[1] परितो भ्रमणं वितनुयात् । पृष्ठतः तत्पृष्ठमार्गेण घटं कुम्भेशं नयतु । अथ पुरार्जितान् प्राङ् मण्डपशोधने गृहीतान् सर्षपान् विकीर्य करकं कर्करीं न्यसेत् । पीठे विकिरकांश्च विकीर्य घटीं कुम्भेशं न्यसेत् ॥ ३७ ॥

आधारत्रितये अदः एतत् तत्त्वत्रयं यथापुरं पूर्ववत् संपूज्य अत्र मूलेनाणुना देवं (परि ? वि)भाव्य आवाह्य साङ्गं सकलीकृतं तं समभ्यर्चयेत् ।

---

१. 'तो म' ङ. पाठः.

पूर्णीकृत्य गलन्तिकामपि यजेत् स्वास्त्रेण कृत्वा द्वयो-
नैवेद्यं परितोष्य रक्षतु घटौ द्व्येकांशुकावेष्टितौ ॥ ३८ ॥

स्विष्टात्मा परिमार्जनादिपरिशुद्धेऽस्त्रान्ततारोक्षिते
वाय्वग्न्यम्बुमहीवियद्दहनबीजैस्तत्त्वसंख्योदितैः ।
सन्धार्यासुमसौ विधाय परिशोषादिप्रदाहान्तिमं
तद्वैशेषिकशोधनं परिलिखेत् कुण्डे स्वके स्वोक्तवत् ॥

तारेणाजितसुम्भजिद्धरिहरे रेखामुदग्गामिनीं
प्रागग्रे च तदन्तयोर्विलिखतु द्वे ते च तिस्रोऽन्तरा ।

---

गलन्तिकां कर्करीमपि पूर्णीकृत्य स्वास्त्रेण यजेत् । द्वयोरपि नैवेद्यं कृत्वा परितोष्य प्रसन्नपूजां कृत्वा द्व्येकांशुकावेष्टितौ वस्त्रद्वयेन वस्त्रैकेन च वेष्टितौ कुम्भेशकर्करी घटौ रक्षतु ॥ ३८ ॥

अग्निजननमाह — स्विष्टात्मेति । असौ गुरुः स्विष्टात्मा सकलीकरणशङ्खपूरणानन्तरं कृतात्माराधनो भूत्वा गणेशमभ्यर्च्य परिमार्जनादिपरिशुद्धे । अत्र मण्डपशोधनेन सह कुण्डानामपि परिशोधनं क्रियते । अपरत्राप्यग्निजनने मुष्टयादिभिः स्थलशुद्धिः कार्येत्यभिप्रायः । अस्त्रान्ततारोक्षिते 'ओं हुं फडि'ति मन्त्रेण प्रोक्षिते स्वके (कुण्डे) आचार्यकुण्डे तत्त्वसंख्योदितैः प्रत्येकं पञ्चविंशतिसंख्यया जप्तैः वाय्वग्न्यम्बुमहीवियद्दहनबीजैः यं रं वं लं हं रं इति बीजैः असुं प्राणं सन्धार्य संयम्य परिशोषादिप्रदाहान्तिमं शोषणदहनप्लावनकाठिन्यसुषिरीकरणदहनात्मकं तद्वैशेषिकशोधनं तस्य कुण्डस्य विशेषशोधनं विधाय स्वोक्तवत् स्वस्वोक्तप्रकारेण परिलिखेत् ॥ ३९ ॥

कल्पविद् अजितसुम्भजिद्धरिहरे विष्णुदुर्गाशिवनारायणेषु तारेण उदग्गामिनीं पश्चिमभागे दक्षिणत आरभ्योदगग्रां रेखां विलिखतु, तदन्त-

---

१. 'नव्यसवनैरावेष्टय रक्षेद् घटौ ॥', २ 'कण्ठे स्वे कृतमार्जनादिपरिशोधे वायुवह्नयम्बुभूव्योमेरानलबीजमन्त्रशरकृत्यावृत्तिमात्रं क्रमात् । आयच्छन्ननिलं विधा', ३. 'गुरुरिति प्रोत्पादयेत् पावकम् ॥' ख. पाठः., 'प्रजनयेत्', ४. 'केऽथानलम् ॥' क. पाठः. ५. 'अस्त्राणुना विधिवदायतनं विलिख्य भूयः समुक्ष्य सलिलैः शकलं निरस्य । कृत्वा सगन्धकुसुमाक्षतवारिकूर्चैस्तारेण' ख. पाठः.

तच्छेषेष्वथ तिस्र एव विलिखेत् पाश्चात्यरेखोर्ध्वतो
याम्यादिक्रमतो महेशगुहयोस्ताः स्वास्त्रतः कल्पवित् ॥

स्कन्देशयोः कवचतो ध्रुवतः परेषु
भूयः समुक्ष्य सलिलैः शकलं निरस्य ।
न्यस्येत् सगन्धकुसुमाक्षतवारिकूर्चै-
स्तारेण विष्टरमिहार्हतु योगपीठम् ॥ ४१ ॥

श्रीबीजेन प्रकृतिमभिवाद्याजितेऽन्येषु शक्त्या
चेष्ट्वा दीर्घस्वरभिदुरबीजाङ्गसाङ्गीकृतां ताम् ।
पुत्रीयन्तीं शुचिमृतुमतीं प्राक्शिरस्कां रतोत्का-
मुत्तानाङ्गीमुदरकुहरीभूतकुण्डां स्मरेच्च ॥ ४२ ॥

---

योस्तस्या रेखायाः पार्श्वयोः (प्रागग्रे) द्वे रेखे च, ते अन्तरा तयोरन्तराले दक्षिणत आरभ्य तिस्रश्च । अथ तच्छेषेषु शिवस्कन्दगणपतिशास्तृषु पाश्चात्यरेखोर्ध्वतः पश्चिमरेखावसाने याम्यादिक्रमतस्तिस्र एव विलिखेत् । कल्पविदित्यनेन स्वचरणोक्ता रेखा लिखेद्वेति च सूचितम् । महेशगुहयोस्ता रेखाः स्वास्त्रतो विलिखेत् ॥ ४० ॥

भूयः स्कन्देशयोः कवचतः, परेषु ध्रुवतश्च सलिलैः समुक्ष्य शकलं निरस्य सगन्धकुसुमाक्षतवारिकूर्चैः गन्धसहितपुष्पाक्षतजलकूर्चैस्तारेण विष्टरमग्नेरुपवेशनयोग्यं पीठं न्यसेत् । इह विष्टरे योगपीठमर्हतु च ॥ ४१ ॥

अजिते श्रीबीजेन, अन्येषु शक्त्या भुवनेश्वर्या च प्रकृतिं जगत्कारणभूतां शक्तिमभिवाद्य दीर्घस्वरभिदुरबीजाङ्गसाङ्गीकृतां दीर्घस्वरभेदितेन श्रीबीजेन शक्तिबीजेन वा कृतैरङ्गैः सकलीकृतामिष्ट्वा तां प्रकृतिम् ऋतुमतीं संजातर्तुकालां, शुचिं शुद्धाम् । शुचिशब्द उभयथा योज्यः । शुचिमग्निं पुत्रीयन्तीम् अग्निमात्मनः पुत्रमिच्छन्तीं च, प्राक्छिरस्कां कुण्डस्य प्राग्भागगतशिरोभागयुक्तां पश्चिमगतपादां च, रतोत्कां सुरत उन्मनस्काम्, उत्तानाङ्गीम् उत्तानावयवाम्, उदरकुहरीभूतकुण्डाम् उदरकुहरत्वेन कल्पितकुण्डां च स्मरेत् ॥ ४२ ॥

---

१. 'चै तारे' क. पाठः.

विप्रावसथ्यं निभृतोपनीत-
 मर्काश्मजं वारणिसंभवं वा ।
हव्यादमादाय निधाय नाभौ
 क्रव्यादभागं निर्ऋतौ निरस्येत् ॥ ४३ ॥

उन्नीय वह्निचितिमात्मनि संविलाप्य
 कृत्वा प्रदाहचरमां परिशुद्धिमग्नौ ।
प्रत्यर्प्य तत्र चितिमात्मगतां निजेन
 बीजेन तारपुटितेन यजेच्च किञ्चित् ॥ ४४ ॥

उद्बुद्धमुद्धृतपिधानमुदर्चिषं त्रि-
 रास्थाय जानुयुगलेन परिभ्रमय्य ।
योन्यां ध्रुवेण विभुवीर्यमयं निदध्याद्
 गर्भाशयं समुपनीय समेधयेच्च ॥ ४५ ॥

---

विप्रावसथ्यं ब्राह्मणस्य महानसभवम्, अर्काश्मजं सूर्यकान्तातपे-योगाज्जातं वा, अरणिसंभवम् अरणिभ्यां मथनात् संभूतं वा निभृतोपनीतं गूढोपनीतं हव्यादमग्निमादाय नाभौ निधाय क्रव्यादभागं राक्षसांशं निर्ऋतौ बहिर्निर्ऋतिभागे निरस्येत् त्यजेत् ॥ ४३ ॥

वह्निचितिमग्निचैतन्यम् उन्नीयोर्ध्वं नीत्वा स्वात्मनि स्वस्य गुरोरात्मनि योजयित्वा प्राणायामेन संविलाप्याग्नौ प्रदाहचरमां परिशुद्धिं शोषणदहने स्व-स्वबीजेन कृत्वा 'ओं पद्माय नमः' इति पूजितपीठे तत्राग्नौ वा आत्मगतां पूर्वं योजितां चितिं चैतन्यकलां प्रत्यर्प्य आवाह्य तारपुटितेन निजेन बीजेन 'ओं रं ओं नमः' इत्यनेन किञ्चिद् यजेच्च ॥ ४४ ॥

ततः स्वयं जानुयुगलेनास्थाय जानुयुगलं भुवि स्पृष्टं यथा भवति त-थोपविश्य पात्रघट्टनेन उद्बुद्धमुद्धृतपिधानं त्यक्ताच्छादनम् उदर्चिषम् अग्नि-मायतेनोपरिभागे त्रिः परिभ्रमय्य विभुवीर्यमयं देवस्य बीजात्मकं ध्रुवेण प्रकृतेर्योन्यां निदध्यात् । पुनर्गर्भाशयं गर्भपात्रमिन्धनशकलेन समुपनीय समे-धयेत् ज्वालयेच्च ॥ ४५ ॥

---

१. 'पाभायो' क. ख. पाठः.

स्वस्वोक्तवत् परिसमूहपरिस्तराद्यं
सर्पिःस्रुवप्रभृतिसंस्करणं च कृत्वा ।
कल्याणरेतसमग्निं परिभूष्य गर्भा-
धानादिसंस्कृतिमथ क्रमशोऽस्य कुर्यात् ॥ ४६ ॥

तारेण प्रसमर्च्य कर्म करणीयं कल्पयित्वा धिया
हुत्वैकां समिधं घृतं प्रजुहुयात् स्वोक्ताणुनात्राष्टशः ।
तिष्ठन् सस्रुवया स्रुचा चतुरवत्ताज्याढ्यया होमयेत्
पूर्णां कर्म कृतं स्मरेत् तदधुना वा स्यात् स्रुवेणार्चनम् ॥

ईशे षोडश सेकपुंसवनसीमन्तोन्नया जातक-
र्माख्या निष्क्रमभुक्तिचौलमुपनीतिश्च व्रतानि क्रियाः ।

---

स्वस्वोक्तवत् स्वस्वगृह्योक्तक्रमेण परिसमूहपरिस्तराद्यं परिसमूहनपरिस्त-रणपर्युक्षणाद्यं सर्पिःस्रुवप्रभृतिसंस्करणमाज्यसंस्कारादिकं कृत्वा कल्याणरेत-समग्निं परिभूष्य गन्धपुष्पादिभिरलङ्कृत्य अथास्याग्नेः गर्भाधानादिसंस्कृतिं क्रमशः कुर्यात् ॥ ४६ ॥

तत्परिपाटीमाह — तारेणेति । पूर्वं तारेण प्रसमर्च्य करणीयं कर्म धिया कल्पयित्वा 'गर्भाधानं करिष्य' इत्यादिकमुपांशूच्चार्य एकां समिधममन्त्रकं हुत्वा अत्र अग्नौ स्वोक्ताणुना स्वस्वोक्तमन्त्रेणाष्टशो घृतं प्रजुहुयात् । चतुरवत्ताज्याढ्यया स्रुचि स्रुवेण चतुष्कृत्वः आज्यमवदाय पूरणं कृत्वा सस्रुवया स्रुवसहितया तया स्रुचा स्वयं तिष्ठन् पूर्णां होमयेत् । ततस्तत्कर्म कृतं स्मरेत् 'गर्भाधानं कृतमि'त्याद्युपांशूच्चरेत् । तत् स्रुवेणार्चनमधुना वा स्यात्, कर्मणः पूर्वमर्चनमिति केचित् कर्मण उपरीति केचिदित्यर्थः ॥ ४७ ॥

कर्माण्याह — ईश इति । ईशे सेकपुंसवनसीमन्तोन्नयाः सेको गर्भाधानं, पुंसवनं, सीमन्तोन्नयश्च, जातकर्म, आख्या नामकरणं, निष्क्रमभुक्तिचौलं निष्क्रामणमन्नप्राशनं चौलं च, उपनीतिरुपनयनं, व्रतानि माहानाम्न्यमहाव्रतौपनिषदगोदानानि । चरणवशादन्यथात्वेऽपि सर्वेषां चत्वार्येव व्रतानि

---

१. 'त्र' ग. पाठः. २. 'स्याद् ध्रुवे' क. पाठः. ३. 'कर्म कृ' ख. पाठः.

स्नानोद्वाहवितानवह्निकरणं शेषेष्वनिष्क्रान्तयः
सन्त्वष्टोपनयान्तिमा महिषहन्त्र्यां सप्त चौलान्तिमाः ॥
कुर्यात् सद्यादिपञ्चाननशिवनृशिवब्रह्मपङ्क्त्यर्णनादै-
रीशे श्रीशार्यदुर्गास्वपि मनुलिपिभिः स्वाङ्गबीजैर्गणेशे ।
संस्कारानन्त्यतस्त्रीन् स्मरमुरभिदि भूरादिभिः सत्यता द्वौ
श्रीशे वाङ्गैः षडास्ये षडणुमनुयुजार्येऽपि षण्मूलतारैः ॥
पूर्णेषु कर्मसु समर्चितयोगपीठे-
ऽत्रावाह्य मूलमनुना लिपितत्त्वमन्त्रान् ।

---

ग्राह्याणि । स्नानोद्वाहवितानवह्निकरणं स्नानं समावर्तनं, उद्वाहो विवाहः, वितानवह्निकरणमग्न्याधानम् इति षोडश क्रियाः सन्तु, शेषेषु देवेष्वनिष्क्रान्तयः निष्क्रामहीनाः उपनयान्तिमा अष्टौ । महिषहन्त्र्यामनिष्क्रान्तयश्चौलान्तिमाः सप्त[3] ॥ ४८ ॥

क्रियाणां होममन्त्रानाह — **कुर्यादिति** । ईशे सद्यादिपञ्चाननशिवनृशिवब्रह्मपङ्क्त्यर्णनादैः सद्यादिपञ्च 'सद्योजातं प्रपद्यामी'त्यादिपञ्चब्रह्माणि, आननं तत्पुरुषः, शिव ईशानः, नृशब्देन तत्पुरुष उक्तः, पुनरपि शिव ईशान एव, ब्रह्मेति सद्योजातादीशानान्तानि पञ्च ब्रह्माणि, पङ्क्त्यर्णं व्योमव्यापि दशाक्षरं, नादः प्रासादः, एतैः संस्कारान् कुर्यात् । श्रीशार्यदुर्गास्वपि मनुलिपिभिर्मूलमन्त्राक्षरैः, गणेशे स्वाङ्गबीजैरन्त्यतः अन्त्येण त्रीनपि, स्मरमुरभिदि शिवनारायणे भूरादिभिः सप्तव्याहृतिभिः, तत्र सत्यतो द्वावपि, श्रीशे अङ्गैः अष्टाङ्गैर्वा, षडास्ये षडणुमनुयुजा षण्मन्त्रैर्मूलमन्त्राभ्यां च । आर्येऽपीत्यपिशब्दो विकल्पार्थः, पूर्वं मूलार्णैरुक्तत्वात् । तत्र षण्मूलतारैः षण्मन्त्रमूलमन्त्रप्रणवैः संस्कारान् कुर्यात् । सर्वत्र होमे मन्त्राणां स्वाहान्तत्वमवगन्तव्यं, मन्त्राणां बीजानां व्याहृतीनां विभक्तिरहितत्वं च, पीठपरिवारादीनाममन्त्राणां स्वाहान्तविभक्तिसहितत्वं च ॥ ४९ ॥

क्रियाशेषमाह — **पूर्णेष्विति** । एवं पूर्णेषु कर्मसु सत्सु समर्चितयोगपीठेऽत्राग्नौ मूलमनुनावाह्य लिपितत्त्वमन्त्रान् विन्यस्य सकलीकृतं तं परिदी-

---

१. 'शर्वे स', २. 'रार्ये षण्मूलतारैश्वरतु षडणुमूलद्वयैर्बाहुलेये । भूराद्यैः सत्यतो द्वौ स्मरमुरदमने स्वाङ्गबीजैर्गणेशे संस्कारानन्त्यतस्त्रीन् हरिमहिषजितोर्मूलवर्णैश्च वह्नेः ॥', ३. 'प्त क्रियाः सन्तु ॥ तासां क्रि' ख. पाठः. ४. 'क्षितं' घ. पाठः.

विन्यस्य तं सकलितं परिदीप्तसप्त-
जिह्वादिकं प्रयजतामनुसन्दधानः ॥ ५० ॥

ताख्याहृतिभिः स्वपीठमनुभिस्तारोपचारस्वमू-
लाङ्गैरावरणाणुभिश्च सकृदावृत्त्या घृतं मूलतः ।
पूर्णान्ते प्रजुहोतु भूःप्रभृतितारास्यैः समाप्याच्यं तं
रक्षेन्निष्कलितं ततोऽत्र परिषेकान्तं विधिं चाचरेत् ॥५१॥

अथ सम्मृष्टलिप्तायां वेद्यां दक्षिणतो गुरुः ।
शय्याक्षेत्रं प्रकुर्वीत मूलप्रासादसम्मुखम् ॥ ५२॥

कृत्वा स्वस्तिकमत्र धान्यनिचयं द्रोणाष्टकाद्युन्मितं
मूलेनामलतण्डुलादिसहितं क्षिप्त्वा कुशाग्रोत्तरम् ।

---

प्तसप्तजिह्वादिकं परितो दीप्ताः सप्त जिह्वा ज्वालाभेदा यस्य तम् । एतेन पक्षान्तरे जिह्वाङ्गमूर्तिन्यासादिकं सूचितम् । एवंभूतं च तमनुसंदधानः ध्यायन् प्रयजताम् ॥ ५० ॥

ताख्याहृतिभिः तारेण व्याहृतिभिश्च स्वपीठमनुभिः स्वस्वपीठमन्त्रैः तारोपचारस्वमूलाङ्गैरावरणाणुभिः परिवारमन्त्रैश्च सकृद् मूलत आवृत्त्या अष्टशतमष्टाविंशतिवारमष्टवारं वा जुहोतु । पूर्णान्ते भूःप्रभृतितारास्यैर्व्याहृतिभिः प्रणवैश्च जहोतु । होमं समाप्याच्यं प्रसन्नपूजां कृत्वा निष्कालितं तं रक्षेत् । ततोऽत्र परिषेकान्तं विधिं चाचरेत् ॥ ५१ ॥

शय्याकल्पनादिकमाह — अथेति । अथ कुम्भेशपरिभ्रमणाभिजननयोरनन्तरं गुरुः स्वयं संमृष्टलिप्तायां विशेषतश्च कृतमार्जनानुलेपायां वेद्यां दक्षिणतो दक्षिणार्धे शय्याक्षेत्रं शय्यायाः स्थानकल्पनं मूलप्रासादसंमुखं यथा भवति तथा प्रकुर्वीत ॥ ५२ ॥

महत् स्वस्तिकं कृत्वात्र द्रोणाष्टकाद्युन्मितं धान्यनिचयं व्रीहिपुञ्जम् अमलतण्डुलादिसहितम् । आदिशब्देन सिद्धार्थो गृह्यते । कुशाग्रोत्तरं यथा भवति तथा मूलेन क्षिप्त्वा तत्रं और्णेयकतूलसंभृतपटीपट्टादिभिः और्णेयकः

---

१. 'कल्प्य देवं संपूजयेत् सुप रिवारवृतं जलाद्यैः ॥ ता', २. 'पीटमूलपरिवारैः स्वैर्जुहोत्वेकशः सर्पिः साष्टशतं स्वेमूलमनुना पूर्णान्वितं मन्त्रवित् । भूरादिप्रणवैः सकृत् सक्दथाराध्य प्रसाद्य प्रभुं र', ३. 'ततः परिसमूह्यावं वि' ख. पाठः. ४. 'प्रा' क. पाठः. ५. 'त्र पूर्वं औ' ख. पाठः.

तत्रौर्णेयकतूलसंभृतपटीपट्टादिभिः कल्पितां
शय्यां शार्ङ्गिणि संस्तृणातु मिहिरार्णेनान्यतो मूलतः ॥
पराध्यर्यवासोविहितोत्तरच्छदे
शिरोपधानादिमतीष्टविष्टरे ।
यजेत तत्पीठदृढाभिमानिनीं
स्वकीयशक्तिं निजबीजविद्यया ॥ ५४ ॥
आपोहीत्यणुभिः स्मरद्विषि शिरोदेशे कुमारे तथा-
पोदेवीरिति मूलतस्तदितरेष्वार्येऽथवैश्यां दिशि ।
निद्राकुम्भमथाभिपूर्य विधिवद् गन्धाम्भसा पूजये-
च्छय्यान्ते परितोऽष्टदिक्षु मनुविद् विघ्नेशकुम्भानपि ॥
विष्णौ विष्णुमुखाः समूललिपयो दिक्कोणगास्त्रीक्षणे-
ऽनन्ताद्या अपि[2] ते द्वये शिवहरौ गोप्त्राद्यः शास्तरि ।

कम्बलः तूलसंभृतपटी तूलैरन्तर्गृहीता पटी (कोडका.) । पट्टादीत्यादिशब्देन इन्द्रगोपादयः पट्टविशेषा गृह्यन्ते । तैः कल्पितां शय्यां शार्ङ्गिणि मिहिरार्णेन द्वादशाक्षरेण, अन्यतोऽन्यदेवेषु मूलेन च संस्तृणातु कल्पयेत् ॥ ५३ ॥

**पराध्यर्य**वासोविहितोत्तरच्छदे पराध्यैः श्रेष्ठैर्वासोभिर्विहितमुत्तरच्छदमुपरिगतवस्त्रं यस्मिंस्तस्मिन् । शिरोपधानादिमतीत्यादिशब्देन पादोपधानकपोलस्थलादिकं गृह्यते । इष्टविष्टरे कृतपीठार्चने तत्र तत्पीठदृढाभिमानिनीं तत्पीठरूपिण्यां शय्यायां स्थिराधिष्ठात्रीं रमोमाद्यां निजबीजविद्यया विष्णौ श्रीबीजेन अन्यत्र भुवनेश्वर्या चावाह्य यजेत ॥ ५४ ॥

**अथ** मनुवित् मन्त्रविशेषज्ञो गुरुः सर्वदेवेषु शय्यायाः शिरोदेशे आर्येऽथवैश्यां दिशि स्मरद्विषि आपोहीत्यणुभिः आपो हिष्ठादिमन्त्रैः, तथा कुमारे 'आपो देवीः' इति मन्त्रेण, तादितरेषु मूलतश्च (निद्राकुम्भं) गन्धाम्भसाभिपूर्य विधिवत् कलातत्त्वावाहनादिसंयुतं पूजयेत् । शय्यान्ते शय्यासमीपे परितोऽष्टदिक्षु विघ्नेशकुम्भानप्यभिपूर्य पूजयेत् ॥ ५५ ॥

**विष्णौ** तेषु घटेषु समूललिपयः मूलमन्त्राक्षरैः क्रमाद् युक्ता विष्णुमुखा विष्णुमधुसूदनाद्याश्च[3]क्रपूजायां वक्ष्यमाणाः पूर्वादिदिक्कोणगाः पूज्याः ।

१. 'स्मिञ्छयने समाहितः स्व' क. ग. पाठः. २. 'द्वितयेऽपि ते शि' इति मूलकोशपाठः. ३. 'श्च पू' ख. पाठः

**पूज्यास्तेषु घटेषु भाविपरिवारा मूर्तयः शक्तय-**
**श्चान्येषु त्रिषु मूलमेव चतसृष्वाशासु वा षण्मुखे ॥५६॥**
**मध्येवेदि विनिर्मिते रसदले कौमारके मण्डले**
**कौमारं कलशं प्रपूर्य विधिवत् संपूज्य तत्पूर्वतः ।**
**शय्यां दक्षिणसौम्यदिक्कृतसमायामां गुहे कल्पयेत्**
**स्वोद्यत्स्वापघटादिकामभिदधे कौमारकुम्भार्चनम् ॥५७॥**
**पीठान्ते ब्रह्माणं सभद्रकालीगणेशविष्णुं च ।**
**ईश्वरशास्तारावपि दलषट्के हरिदिगादि समभियजेत् ॥**
**पूर्णे हिरण्मयाम्बुजगजशिखिशक्तिस्वरून् निधायात्र ।**
**कलशे सार्णसरोजे गुहमावाह्यार्चयेत् सहावरणैः ॥ ५९ ॥**

---

त्राक्षणे अनन्ताद्याः अनन्तसूक्ष्माद्याः पूजायां वक्ष्यमाणाः । शिवहरौ ते द्वयेऽपि 'अनन्ताय विष्णवात्मने नमः' इत्याद्याः । शास्तरि गोप्त्रादयः गो-मृपिङ्गलाक्षादयो मण्डपसंस्कार उक्ताः । अन्येषु त्रिषु दुर्गास्कन्दगणेशेषु मूर्तयः शक्तयश्च भाविपरिवाराः पूजापटले वक्ष्यमाणाः । तत्र दुर्गायां जयाद्याः शक्तयः, स्कन्दे सनत्कुमाराद्या मूर्तयः, गणेशे गणञ्जयाद्या मूर्तयः पूज्याः । षण्मुखे चतसृष्वाशासु मूलमेव वा मन्त्रः ॥ ५६ ॥

कुमारे विशेषमाह — **मध्येवेदीति** । गुहे मध्येवेदि वेदिमध्ये रस-दले षड्दले विनिर्मिते द्वादशपटले वक्ष्यमाणविधिना संपादिते कौमारके मण्डले कौमारं कुमारदेवत्यं कलशं विधिवत् प्रपूर्य संपूज्य च तत्पूर्वतः तस्य पूर्वभागे दक्षिणसौम्यदिक्कृतसमायामां दक्षिणोत्तरदीर्घां स्वोद्यत्स्वापघटादिकां स्वस्वस्थानस्थितनिद्राकलशविघ्नेश्वरकलशयुक्तां शय्यां कल्पयेत् । कौमारकु-म्भार्चनमभिदधे वच्मि ॥ ५७ ॥

तत्पूजाविधिमाह — **पीठान्त इति** । सामान्यस्कन्दपीठपूजानन्तरं दलषट्के हरिदिगादि पूर्वदिग्दलमारभ्य ब्रह्माणं सभद्रकालीगणेशविष्णुं भद्र-कालीं गणेशं विष्णुं च ईश्वरशास्तारावपि स्वस्वनाममन्त्रैः 'ब्रह्मणे नम' इत्या-दिभिरभियजेत् ॥ ५८ ॥

**हिरण्मयाम्बुजगजशिखिशक्तिस्वरून्** सुवर्णमयपद्मगजमयूरशक्तिव-

---

१. 'ष्णुमिह ।' इति मूलकोशपाठः

प्राग्वज्रादेः प्रयजेदादित्यानश्विनौ पितृन् गणपम् ।
मात्रप्सरोवसूनिह रुद्रांश्चाभ्यन्तरे जयन्ताद्ये ॥ ६० ॥

गाङ्गेयरूप्यमयताम्रजकांस्यमृत्सा-
पात्राणि मौलिपदपार्श्वयुगाग्रभाञ्जि ।
विष्णौ क्रमेण घृतमाक्षिकदुग्धशान्ति-
वार्गव्यवन्त्यभिमृशेन्निजपञ्चतत्त्वैः ॥ ६१ ॥

न्यस्येत् तद्वत् पदपरिसरे पात्रयोरर्घ्यपाद्ये
क्षीरक्षौद्रे मदनदमने पार्श्वयोर्मूलतश्च ।
मूलेनार्यै घृतमधु शिरोङ्घ्रयोः कुमारेऽर्घ्यपाद्ये
पात्रद्वन्द्वे रजतरचिते स्वोपचाराणुनाङ्घ्र्योः[1] ॥ ६२ ॥

---

ज्ञान् निधाय पूर्णे कलशे सार्णसरोजे पूजितलिपिपङ्कजेऽत्र गुहमावाह्य आवरणैः परिवारैः सहार्चयेत् ॥ ५९ ॥

तत्र वज्रादेः प्राक् लोकपालपूजानन्तरं तदायुधपूजायाः प्राक् जयन्ताद्येऽभ्यन्तरे ईशेन्द्रयोर्मध्याद्यन्तरालेषु 'ओं आदित्येभ्यो नमः' 'ओं अश्विभ्यां नमः' इत्यादिमन्त्रैः आदित्यानश्विनौ पितृन् गणपं गणपतिं मात्रप्सरोवसून् मातॄरप्सरसो वसून् रुद्रांश्च प्रयजेत् ॥ ६० ॥

उपहारस्थापनमाह — गाङ्गेयेति । विष्णौ मौलिपदपार्श्वयुगाग्रभाञ्जि शिरोभागे पादयोः समीपे पार्श्वयोरग्रभागे च स्थितानि घृतमाक्षिकदुग्धशान्तिवार्गव्यवन्ति क्रमेण आज्यमधुक्षीरशान्तिजलपञ्चगव्यपूरितानि गाङ्गेयरूप्यमयताम्रजकांस्यमृत्सापात्राणि क्रमात् सुवर्णरजतताम्रकांस्यमृन्मयपात्राणि निजपञ्चतत्त्वैः क्रमेणाभिमृशेत् संस्थाप्य स्पृष्ट्वा जपेत् ॥ ६१ ॥

मदनदमने शिवे तद्वत् पदपरिसरे पादसमीपे पात्रयोरर्घ्यपाद्ये अर्घ्यं पाद्यं च, पार्श्वयोः पात्रयोः क्षीरक्षौद्रे क्षीरं मधु च मूलतो न्यस्येत् । आर्यै शिरोङ्घ्र्योः शिरस्समीपे पादसमीपे च मूलेन घृतमधु घृतं मधु च, कुमारे अङ्घ्र्योः पादयोः समीपे रजतरचिते पात्रद्वन्द्वे स्वोपचाराणुना 'ओं नमः षण्मुखाये'ति मन्त्रेणार्घ्यपाद्ये च न्यस्येत् । अत्रार्घ्यपाद्ययोर्द्रव्यं स्वस्वकलशादवगन्तव्यम् ॥ ६२ ॥

---

1. 'ङ्घ्रयोः ॥ मन्त्र' ख. पाठः.

हैमे न्यसेच्छिरसि कुम्भरिपाविवेत्त्वे-
त्याज्यं पदे मधु च मध्यिति रौप्यपात्रे ।
मूलेन पार्श्वयुजि कांस्यजलाब्जजेऽर्घ्य-
पाद्ये हरीशगणपेऽत्र हरीशवच्च ॥ ६३ ॥

मङ्गलान्यष्ट परितस्तथा मङ्गलपालिकाः ।
प्रदीपादींश्च विन्यस्य मण्डयेन्मण्डपोदरम् ॥ ६४ ॥

न्यस्येच्छङ्खारिकेतून् मुकुरवृषसृणींश्चामरं मत्स्ययुग्मं
दिक्ष्वीशे त्र्याद्यवत्सं मुकुरवृषझषद्वन्द्वकुम्भांस्त्रिधाम्नि ।
श्रीशेशे स्वस्तिकाब्जं दरघटमुकुरं सोत्पलावर्तवत्सं
वत्सं कुम्भं सभेरीमुकुरझषसृणीञ्छङ्खनन्द्यौ च चण्ड्याम् ॥

---

अत्र शिवनारायणदुर्गयोर्वैष्णवोक्तं ग्राह्यं गणपतेः शिवोक्तं च । स्वस्वस्थाने स्वस्तिकानि विलिख्य धान्यानि दर्भांश्च निक्षिप्यैतानि स्थाप्यानि च ॥ ६३ ॥

तथाष्टमङ्गलानि मङ्गलपालिकाः प्रदीपादींश्च परितो विन्यस्य मण्डपोदरं मण्डपान्तर्भागं मण्डयेत् अलङ्कुर्यात् ॥ ६४ ॥

अष्टमङ्गलानि विविच्याह — न्यस्येदिति । ईशे दिक्षु शङ्खारिकेतून् शङ्खं चक्रं ध्वजं च, मुकुरवृषसृणीन् आदर्शं वृषभम् अङ्कुशं च, चामरं मत्स्ययुग्मं, याज्ञिकवृक्षैः कृतानेतान् शय्याया अष्टसु दिक्षु स्वस्तिकस्थेषु तण्डुलपूर्णेषु पात्रेषु न्यस्येत् । त्रिधाम्नि त्र्याद्यवत्सम् उक्तेषु त्र्याद्यं शङ्खारिकेतून् श्रीवत्सं च, मुकुरवृषझषद्वन्द्वकुम्भान् आदर्शं वृषभं मत्स्यद्वन्द्वं पूर्णकुम्भं च । श्रीशेशे स्वस्तिकाब्जं स्वस्तिकं पद्मं च, दरघटमुकुरं शङ्खं पूर्णकुम्भमादर्शं च, सोत्पलावर्तवत्सम् उत्पलं नन्द्यावर्तं श्रीवत्सं च । चण्ड्यां दुर्गायां वत्सं श्रीवत्सं, कुम्भं, सभेरीमुकुरझषसृणीन् भेरीमादर्शं मत्स्यद्वयमङ्कुशं च, शङ्खनन्द्यौ च शङ्खं नन्द्यावर्तं च न्यस्येत् ॥ ६५ ॥

---

१. 'तु' क. पाठः.

पूर्णघटध्वजवज्रं स्वस्तिकशक्ती च चामरद्वितयम् ।
नागं मयूरमष्टौ स्कन्देऽपि करोतु मङ्गलान्यत्र[1] ॥ ६६ ॥

दर्पणं पूर्णकुम्भं च वृषभं चामरद्वयम् ।
श्रीवत्सं स्वस्तिकं शङ्खं दीपं विघ्ने च शास्तरि ॥ ६७ ॥

इति संस्कृतमण्डपोऽस्य[2] बाह्ये
शिवदिग्धाम्नि निधाय भद्रपीठम् ।
परिपूज्य कुशादिमान् प्रयायात्
प्रति तीर्थं[3] प्रतिमामिह प्रणेतुम् ॥ ६८ ॥

तद्रक्षणाय परितः कृतसन्निवेशं
संहृत्य दैवतगणं सलिलस्थबिम्बे ।
उद्धृत्य वारिण इदं प्रविसृज्य वासो
दर्भैर्विघृष्य सलिलेन विशोधयेच्च ॥ ६९ ॥

---

अत्र स्कन्दे पूर्णघटध्वजवज्रं पूर्णकुम्भं केतुं वज्रं च, स्वस्तिकशक्ती च स्वस्तिकं शक्तिं च, चामरद्वितयं, नागं गजं, मयूरमप्यष्टौ मङ्गलानि करोतु ॥ ६६ ॥

**गणपतिशास्त्रोरपि** शिवोक्तवदेवाष्टमङ्गलानि योज्यानि ॥ ६७ ॥

एवं मण्डपाश्रितं कर्माभिधाय प्रतिमाश्रितं कर्म प्रस्तौति — **इतीति** । एवं संस्कृतमण्डपः संपादितमण्डपाश्रितकर्मा गुरुः अस्य बाह्ये शिवदिग्धाम्नि तस्येशभागस्थापरमण्डपे भद्रपीठं निधाय परिपूज्य पीठपूजां कृत्वा कुशादिमान् दर्भपुष्पवस्त्रगन्धादिसहितः इह अल्पमण्डपस्थभद्रपीठे प्रतिमां प्रणेतुमानेतुं प्रति तीर्थं तीर्थाभिमुखं प्रयायाद् गच्छेत् ॥ ६८ ॥

**तद्रक्षणाय** तद्बिम्बरक्षणाय परितः कृतसन्निवेशं कृतावस्थानं दैवतगणं सलिलस्थबिम्बे संहृत्योद्वास्य इदं बिम्बं वारिण उद्धृत्य पूर्ववेष्टितं वासो विसृज्य दर्भैर्विघृष्य सलिलेन विशोधयेच्च ॥ ६९ ॥

---

१. 'त्र ॥ इ' ख. पाठः. २. 'पे' क. पाठः, ३. 'बिम्बं प्र' ख. पाठः,

कृत्वा तद्गतभूतसर्जनमिदं तन्मन्त्रसाङ्गीकृतं
गन्धाद्याहितचर्चनं प्रतिसरं तत्साम्प्रतिक्ये तथा ।
बद्ध्वा वस्त्रसुवेष्टितं द्विजरथेऽथारोप्य वाद्यादिभिः
साकं शाकुनजापकः स्नपनगेहं मन्त्रबिम्बं नयेत् ॥ ७० ॥

प्रासादसम्मुखतया विनिधाय भद्रं
कर्णेत्यृचं जपतु सर्वसुपर्वबिम्बम् ।
न्यस्येत् त्रिधाम्नि हरिदिङ्मुखमिष्टपीठे
त्रीणीत्यृचा जपतु भद्रमृचं तदग्रे ॥ ७१ ॥

श्रीशेशाजितयोर्घृतेन घृतवत्याङ्क्त्वा हरीशे नम-
स्ते रुद्रेति विशोधयेन्मुररिपौ मूलेन मासूरकैः ।

---

तद्गतभूतसर्जनं प्लावनादिकं भूतसृष्टिं च यथोक्तक्रमेण कृत्वा तन्मन्त्रसाङ्गीकृतं तत्तन्मन्त्रेण सकलीकृतं गन्धाद्याहितचर्चनं गन्धादिभिरलङ्कृतं कृतपूजनं च इदं मन्त्रबिम्बं तथा तत्सांप्रतिक्ये तत्सम्प्रतिभवे तदानीं कौतुकबन्धयोग्ये देवे प्रतिसरं कौतुकं बद्ध्वा अथ वस्त्रसुवेष्टितं द्विजरथे द्विजैः कल्पिते रथे आरोप्य वाद्यादिभिर्वाद्यघोषादिमङ्गलध्वनिभिः साकं शाकुनजापकः द्विजैः सह 'कनिक्रदादि'त्यादि जपन् स्नपनगेहं स्नानार्थं पूर्वं कल्पितं मण्डपं मन्त्रबिम्बं नयेत् प्रापयेत् ॥ ७० ॥

तत्र सर्वसुपर्व[1](णां) देवानां बिम्बम् इष्टपीठे पूर्वं पूजिते पीठे प्रासादसम्मुखतया मूलप्रासादाभिमुख्येन विनिधाय 'भद्रं कर्णेभि'रित्यृचं जपतु । त्रिधाम्नीष्टपीठे हरिदिङ्मुखं पूर्वाभिमुखं 'त्रीणि पदा विचक्रमे' इत्यृचा न्यस्येत् । तदग्रे स्थित्वा 'भद्रं कर्णेभिः' इत्यृचं जपतु च ॥ ७१ ॥

अथ श्रीशेशाजितयोर्घृतेन घृतवत्या 'घृतवती सवितुरि'त्यृचा अङ्क्त्वा अञ्जनं कृत्वा, हरीशे 'नमस्ते रुद्रमन्यव' इति, मुररिपौ मूलेन च मासूरकैः शोधयेत् । (മാസൂരകം=കടലക്കാപ്പൊടി.) अथवा हरौ 'तजोऽसी'ति मन्त्रेण

---

१. 'र्ववि' ख. पाठः.

तेजोऽसीति हरौ घृताक्तिरथवा कार्या द्वयं मूलतः
स्कन्देभाननयोः स्वकल्पविधिना शेषेष्वथैतच्चरेत् ॥

दर्भाद्यैः परिघृष्य शोधयतु दुर्गायां जलैस्त्वक्छकृ-
न्मृत्साभस्मभिरीश्वरे प्रमथपे मृत्त्वक्छकृद्भिः क्रमात् ।
मृत्त्वग्भ्यां गणपे गुहे स्वकलशोक्तद्रव्यकैः स्वाणुभि-
र्मृद्भिः श्रीशहरीशयोः स्वविहिताभिर्वक्ष्यमाणक्रमात् ॥

दुर्गा[2]गणेशशरजन्मसु बिम्बशुद्धि-
स्नानात् पुरो हरिहरीश्वरयोः करोतु ।
स्नानान्तरे नयनमोक्षणमार्यके तत्
प्राक् स्नानतः सलिलवासनकर्मतो वा ॥ ७४ ॥

---

घृताक्तिः घृतसेचना कार्या । स्कन्देभाननयोर्द्वयं घृतसेचनं शोधनं च मूलतः, शेषेषु एतद्द्वयं स्वस्वकल्पविधिना चरेत् ॥ ७२ ॥

ततो दुर्गायां दर्भाद्यैः दर्भमृत्त्वग्भिः क्रमात् परिघृष्य जलैः शोधयतु । ईश्वरे त्वक्छकृन्मृत्साभस्मभिः परिघृष्य शोधयतु । प्रमथपे मृत्त्वक्छकृद्भिः, गणपे मृत्त्वग्भ्यां, गुहे स्वकलशोक्तद्रव्यकैः सर्वैः सर्वैः स्वाणुभिश्च श्रीशहरीशयोः स्वविहिताभिर्मृद्भिः वक्ष्यमाणक्रमात् ॥ ७३ ॥

नेत्रोन्मीलनकालमाह — दुर्गेति । दुर्गागणेशशरजन्मसु बिम्बशुद्धिस्नानात् पुरः पूर्वं नयनमोक्षणं करोतु । हरिहरीश्वरयोः स्नानान्तरे स्नानमध्ये, आर्ये स्नपनतः प्राक् तद् नयनमोक्षणं, सलिलवासनकर्मतो जलाधिवासात् प्राग् वा ॥ ७४ ॥

---

१. 'वैशे मूलतः सर्पिषा क्षौद्रेणापि विलिप्य शोधयतु वा मासूरवार्भिः क्रमात् ॥ दीर्घायुत्वेत्यणुकृतघृतालेपमुद्वर्त्य विम्बं मासूरेण द्रुपदमनुना क्षालयेत् सुम्भहन्त्रयाम् । मूलेनैतद् गुहगणपयोराचरेत् सर्वमार्ये शैरीषैः शोधयतु घृतमर्घ्याक्तिकृन्मूलतोऽथ ॥ द' क. ग. पाठः. २. 'र्गायां गणपे च बिम्बकलशासेकात् पुरः प्राचरेन्नेत्रोल्लेखनमार्यके निगदितं तत्तोयवासात् पुरः । दुर्गावद् विदधीत पावकभवे भूतेशवद् वाथ तच्छ्रीशेशाजितयोस्तु बिम्बकलशस्नानकमस्यान्तरे ॥ है' ख. पाठः.

हैमे निषिच्य चषके मधुमन्त्रजप्तं
सूच्या प्रगृह्य घृतमाक्षिकमक्षिमोक्षम् ।
नेत्रेण शास्तृगणपेशुभवेषु मन्त्री
त्रिष्टुम्मयेन मनुना तनुयात् कुमार्याम् ॥ ७५ ॥

हिरण्यगर्भः समिति प्रगृह्य
मध्वाज्यकं चित्रमिति त्रिधाग्नि[1] ।
नेत्रं लिखेद् दक्षिणमन्यद[2]स्या-
प्यायस्वमन्त्रेण सतारकार्चिः[3] ॥ ७६ ॥

माध्वीदुग्धघृतं हिरण्यमनुना संगृह्य शार्ङ्गीश्वरे
वामं चित्रमृचोल्लिखेन्नयनमन्यद् विश्वतश्चक्षुषा ।
ललाटाक्षि हिरण्यगर्भमनुनाथापूर्य गामग्रगां
हृत्वा नेत्रपटं प्रदर्शयतु तां कर्ताथ तस्मै दिशेत् ॥ ७७ ॥

---

नेत्रोल्लेखनक्रियाविधानमाह — हैम इति । मन्त्री मन्त्रविशेषज्ञो गुरुः शास्तृगणपेशुभवेषु हैमे चषके घृतमाक्षिकं घृतं मधु च निषिच्य मधुमन्त्रजप्तं 'मधु वाता' इत्यादितृचेन जप्तं तत् सूच्या सुवर्णसूच्या प्रगृह्य नेत्रेण नेत्रमन्त्रेण अक्षिमोक्षं नयनोन्मीलनं सतारकार्चिः तारकार्चिर्भ्यां सह तारकं मूलेन तत्रस्थं तेजः प्रणवेन च तनुयात् । तारकार्चिर्लेखनं सर्वत्र समानम् । कुमार्यां त्रिष्टुम्मयेन 'जातवेदस' इत्यृचा ॥ ७५ ॥

त्रिधाग्नि 'हिरण्यगर्भः समवर्तते'ति मध्वाज्यकं प्रगृह्य दक्षिणं नेत्रं 'चित्रं देवानामि'त्यृचा, अत्रान्यन्नेत्रम् 'आप्यायस्व'मन्त्रेण च लिखेत् ॥ ७६॥

शार्ङ्गीश्वरे हैमे चषके निषिक्तं माध्वीदुग्धघृतं 'हिरण्यगर्भः समि'ति मनुना संगृह्य पूर्वं वामं नयनं 'चित्रं देवानामि'त्यृचोल्लिखेत् । अन्यद् दक्षिणं 'विश्वतश्चक्षुरि'त्यृचा । ललाटाक्षि ललाटनेत्रं 'हिरण्यगर्भ'मनुना चोल्लिखेत् । अथानन्तरवक्ष्यमाणं सर्वत्र समानम् । नेत्रमापूर्य नेत्रपटं हृत्वा नयनमोक्षणात् पूर्वं पुरोभागे वस्त्रं प्रसार्य तत्कर्म कृत्वा नेत्रपटं[5] हृत्वा अग्रगां गाम् अग्रे गामानीय तां प्रदर्शयतु । अथ कर्ता यजमानः तां गां तस्मै गुरवे दिशेत् ॥

---

१. 'वदिभास्यषडास्ययोश्च त्रि', २. 'म्नः', ३. 'म', ४. 'षम्' ख. पाठः.
५. 'टलं हृ' ए. पाठः.

आवाह्य साङ्गीकरणादि कृत्वा
दत्त्वोपहारान् स्नपनं करोतु ।
विघ्नार्यदुर्गाशरजेषु शेषेष्वा-
वाहनाद्यं स्नपने कृते तु ॥ ७८ ॥

लक्ष्मीशे स्वविहितसप्तमृत्तिकाभि-
र्मूर्धानं दिव इति मन्त्रतो विलिप्य ।
तन्मृत्सांसुभृतघटाम्भसा समुद्र-
ज्येष्ठा इत्यणुपरिजापकोऽभिषिञ्चेत् ॥ ७९ ॥

प्रागादिदिग्दलस्थैर्यज्ञा यज्ञा पयः पृथिव्यां च ।
याः फलिनीर्या दिव्या इत्यभिषिच्याक्षिणी विलिखेत् ॥
हंसः शुचिषद्विष्णोरराटमिति चानलादिदलकलशैः ।
सोमं राजानमृचा सविश्वतश्चक्षुषापि च स्नपयेत् ॥ ८१ ॥

---

विघ्नार्यदुर्गाशरजेषु मूलेनावाह्य साङ्गीकरणादि कृत्वा उपहारान् क्रमाद् दत्त्वा स्नपनं बिम्बशुद्धिस्नपनं करोतु । शेषेषु स्नपने कृते त्वावाहनाद्यं करोतु ॥ ७८ ॥

अथ बिम्बशुद्धिस्नपनकलशोपहारदानादिकं पृथक् पृथगेवाह —लक्ष्मीश इत्यादिभिः । लक्ष्मीशे स्वविहितसप्तमृत्तिकाभिः स्वकलशपूरण उक्ताभिः सप्तमृत्तिकाभिर्वल्मीकमृद्भिः 'मूर्धानं दिव' इति मन्त्रतो विलिप्य तन्मृत्साम्सुभृतघटाम्भसा तन्मृद्भिः पूर्णेन ब्रह्मकलशेन 'समुद्रज्येष्ठा' इत्यणुपरिजापको गुरुरभिषिञ्चेत् ॥ ७९ ॥

प्रागादिदिग्दलस्थैः कलशैः 'यज्ञा यज्ञा वः' 'पयः पृथिव्यां' 'याः फलिनीः' 'या दिव्या' इति चतुर्भिरभिषिच्याक्षिणी विलिखेत् । तदा नेत्रोल्लेखनमित्यर्थः ॥ ८० ॥

'हंसः शुचिषद्' 'विष्णोरराटं' 'सोमं राजानं' सविश्वतश्चक्षुषा 'विश्वतश्चक्षुरि'त्यनया चर्चा अनलादिदलकलशैः अग्न्यादिकोणदलकलशैश्च स्नपयेत् ॥ ८१ ॥

---

१. 'विस्पष्टतायै पृथगेव वच्मि विष्ण्वादिबिम्बस्नपनं समासात । मूलाणुसाङ्गीकरणोपहारादत्युत्तरं वैतादिह प्रयोज्यम् ॥ ल' ख. पाठः. २. 'स्ना' क. पाठः. ३. 'सब ङ. पाठः.

उद्वर्त्य द्रुपदादिनाशलतलान्मासूरपिष्टैस्तनौ
मानस्तोकऋचा च मूर्ध्नि मुरमांसीक्षीरपिष्टामलैः ।
आलिप्याथ बहिष्ठगन्धसलिलैर्विष्णोरराटाणुना
संसिञ्चेदिदमाप इत्युपघटैर्दिक्कोणसंस्थैः सह ॥ ८२ ॥

बिम्बकलशाभिषेकं कृत्वेत्येह्योहिपूर्वमन्त्रेण ।
आवाह्य विष्णुमेनं मूलाङ्गन्यासमाचरेन्मन्त्री ॥ ८३ ॥

एह्येहि भगवन्! विष्णो! लोकानुग्रहकारक! ।
यज्ञभागं गृहाणेमं वासुदेव! नमोऽस्तु ते ॥

इति ॥ ८४ ॥

अर्घ्यं रातु हिरण्मयादिमनुना तस्मै सपाद्योदकं
गायत्र्याचमनीयकं समधुपर्कं च स्वया मन्त्रवित् ।
मन्त्रेणाथ बृहस्पते अतियदित्याद्येन पीताम्बरं
वेदाहंमनुनोत्तरीयमुपवीतं हैममोङ्कारतः ॥ ८५ ॥

---

द्रुपदादिना 'द्रुपदा दिवेन्मुमुचान' इत्यादिना मासूरपिष्टैः आगलतलादाकण्ठपर्यन्तं तनौ देहे उद्वर्त्य मूर्ध्नि मुरमांसीक्षीरपिष्टामलैः मुरमांसीभ्यां क्षीरेण च सह पिष्टैरामलकैः 'मानस्तोके तनय' इत्यृचा चालिप्याथ बहिष्ठगन्धसलिलैर्दिक्कोणसंस्थैः 'विष्णोरराटा'णुना, तत्र तत्र दिक्कोणसंस्थैरुपघटैः इ-(मा ? द)माप' इति मनुना च सह संसिञ्चेत् ॥ ८२ ॥

इति बिम्बकलशाभिषेकं कृत्वा 'एह्येही'तिपूर्वमन्त्रेण मन्त्री आवाहने मन्त्रविशेषयोजनं कुर्वन् एनं विष्णुमावाह्य मूलाङ्गन्यासं मूलाङ्गन्यासव्यापकाङ्गन्यासादिकमाचरेत् ॥ ८३ ॥

आवाहनमन्त्रं पठति — एह्येहीति ॥ ८४ ॥

तस्मै विष्णवे हिरण्मयादिमनुनार्घ्यं सपाद्योदकं रातु दद्यात् । मन्त्रविदि[1]ति तत्तदुपहारदाने 'अर्घ्यमि'त्यादिमन्त्रयोगः सूचितः । स्वगायत्र्याचमनीयं समधुपर्कं च, 'बृहस्पते अति यदि'त्याद्येन मन्त्रेण पीताम्बरं पीतवस्त्रं च, 'वेदाहं'मनुनोत्तरीयम्, ओङ्कारतः प्रणवेन हैममुपवीतं च ॥ ८५ ॥

---

१. 'ते ॥ अ' ख. पाठः.

गन्धं च पुष्पं च पवित्रकं च
दद्यादिदंविष्णुऋचा क्रमेण ।
विश्वाणुनार्चिर्मयमादधीत
व्यापय्य तं सर्गविसर्गरीत्या ॥ ८६ ॥

पुष्पैरोषधयः समित्यवकिरेत् सन्धूपयेद् धूरसी-
त्येतेनोपहरेत् प्रदीपकमथो तेजोसिमन्त्रेण च ।
नेत्रे चाञ्जनरञ्जिते वितनुयाद् भूयः समिद्धोणुना
येनाकस्यमनुं जपन् वितनुयाद् गोरोचनाचित्रकम् ॥ ८७ ॥

वनस्पतेः पुष्प इति प्रजापी
माल्यं च मालां च समर्प्य तस्मै ।
दत्त्वोपहारान् पुनरर्घ्यधारां
मूलेन दत्त्वा विकिरेत् प्रसूनैः ॥ ८८ ॥

रथन्तरेण वैराजगायत्राभ्यां च सामभिः ।
स्वयोनिजैः पुरः स्थित्वा स्तुवन् संप्रीणयेद्धरिम् ॥ ८९ ॥

---

'इदं विष्णुरि'त्यृचा गन्धं च पुष्पं च हैमं पवित्रकं च क्रमेण दद्यात् । विश्वाणुना 'विश्वतश्चक्षुरि'त्यृचा तं सर्गविसर्गरीत्या सृष्टिसंहारक्रमेण व्यापय्य अर्चिर्मयं तेजोमयमादधीत ॥ ८६ ॥

'ओषधयः संवदन्त' इति पुष्पैरवकिरेत् । 'धूरसी'त्यनेन सन्धूपयेत् । अथो 'तेजोसि'मन्त्रेण प्रदीपकमुपहरेत् । अथो इत्यनेनान्तरान्तरा जलदानं सूचितम् । भूयः समिद्धोणुना 'समिद्धो अञ्जन्नि'ति मन्त्रेण नेत्रे द्वे अञ्जनरञ्जिते वितनुयात् । 'येन नाकस्य'मनुं जपन् गोरोचनाचित्रकं गोरोचनया तिलकं वितनुयात् ॥ ८७ ॥

वनस्पतेः पुष्प! इति प्रजापी माल्यं पुष्पं मालां च तस्मै समर्प्य पुनरुपहारान् अर्घ्यपाद्याचमनीयानि दत्त्वा अर्घ्यधारां मूलेन दत्त्वा प्रसूनैर्विकिरेत् ॥ ८८ ॥

रथन्तरेण, वैराजगायत्राभ्यां च, स्वयोनिजैः रथन्तरस्य 'अभित्वा

**शुद्धे तैजसपात्रके सुविमलैरापूरिते तण्डुलै-**
**र्मध्ये सान्द्रघृतं शरावमुपधायाभ्युज्ज्वलद्दीपकम् ।**
**स्वोद्यद्गोमयक्लृप्तचित्रितदिगीशास्त्रैः सदूर्वाग्रकै-**
**र्दिक्ष्वश्वत्थदलैर्विभूष्य रचयेन्नीराजनीयं शुभम् ॥ ९० ॥**

**दूर्वाक्षतं मूर्धनि पादयोश्च**
**तारेण कृत्वास्त्रसमर्च्चितेन ।**
**नीराजयेत् तेन निजास्त्रजापी**
**कुर्वीत पुण्याहमिति त्रिधाग्नि ॥ ९१ ॥**

---

शूरे'त्याद्येन. वैराजस्य 'पिबा सोममिन्द्र'त्याद्येन, गायत्रस्य 'अग्न आयूंषी'त्या-द्येन सामभिः स्तुवन् हरिं संप्रीणयेत् ॥ ८९ ॥

नीराजनीयसंपादनमाह — शुद्ध इति । शुद्धे सुविमलैस्तण्डुलैरापूरिते तैजसपात्रके लोहमयपात्रे मध्ये तन्मध्ये सान्द्रघृतं पूर्णघृतम् अभ्युज्ज्वलद्दी-पकम् अभितः परितः उज्ज्वलद्भिर्दीपैः उज्ज्वलद्वर्त्तिभिर्युतं शरावमुपधाय तस्य दिक्षु स्वोद्यद्गोमयक्लृप्तचित्रितदिगीशास्त्रैः स्वस्मिन्नुद्यतानि गोमयेन क्लृप्ता-नि श्वेतरक्तादिरजोभिश्चित्रितानि दिगीशास्त्राणि वज्रादीनि येषु तैः सदूर्वा-ग्रकैः दूर्वाग्रयुक्तैरश्वत्थदलैर्विभूष्य शुभं नीराजनीयं रचयेत् । तथा विष्णुसं-हितायां —

"शुभे तु तैजसे पात्रे शालितण्डुलपूरिते ।
अस्त्रैरश्वत्थपत्रस्थैर्नवगोमयकल्पितैः ॥
वर्णोज्ज्वलैर्यथाशोभं वर्धमानाज्यवर्त्तिभिः ।
उज्ज्वलाभिर्युतं मध्ये कुर्यान्नीराजनं त्विदम् ॥ "

इति ॥ ९० ॥

नीराजनीयविनियोजनादिक्रमाह — दूर्वाक्षतमिति । तारेण दूर्वाक्षत मूर्धनि पादयोश्च कृत्वा अस्त्रसमर्चितेन तेन नीराजनीयेन निजास्त्रजापी नीराजयेत् । 'ओं विष्णुः प्रीयताम्' इत्यादिविशेषयुक्तं पुण्याहं च कुर्वीत । इति त्रिधाग्नि बिम्बविशुद्धिविधिः स्यात् ॥ ९१ ॥

शार्ङ्गीश्वरे वृषविषाणनदीद्वितीर-
मृद्भिर्विलिप्य शिरसि प्रणवेन सिञ्चेत् ।
तद्वत् तनौ समुपलिप्य मृदा सनाकु-
क्षेत्रोत्थयाच्छसलिलैरपि तेन सिञ्चेत् ॥ ९२ ॥

एवं साधु विशोध्य तं स्नपितयेन्मृत्पूर्णकुम्भाम्भसा
मानस्तोकऋचा कषायपयसावोचाममन्त्रेण च ।
आज्यान्तैर्ध्रुवतः फलाद्भिरथ मूलेनान्तराब्लिङ्गकैः
सिञ्चेदच्छजलैस्ततो वितनुयान्नेत्रत्रयोन्मीलनम् ॥ ९३ ॥

नमः शम्भव इत्याद्यमिषे त्वाद्यं च सिञ्चतु ।
नमो वः किरिकेत्युक्त्वा सर्वौषधिजलेन तम् ॥ ९४ ॥

तत् त्वा यामीत्याद्ययर्चा समुद्रं
गच्छेत्यापोहीत्यणुभ्यां च मन्त्री ।

---

शार्ङ्गीश्वरे शिरासि प्रणवेन वृषविषाणनदीद्वितीरमृद्भिः वृषश्रृङ्गाद् नदीतीरद्वयाद् गृहीताभिर्मृद्भिर्विलिप्याच्छसलिलैः शुद्धजलैः सिञ्चेत् । तनौ तद्वत् सनाकुक्षेत्रोत्थया वल्मीकात् क्षेत्राच्च गृहीताभ्यां मृद्भ्यां तेन प्रणवेन समुपलिप्याच्छसलिलैः सिञ्चेत् ॥ ९२ ॥

एवं साधु विशोध्य मृत्पूर्णकुम्भाम्भसा मध्यकलशेन 'मानस्तोक' ऋचा तं शार्ङ्गीश्वरं स्नपितयेत् स्नपितं कुर्यात् । कषायपयसा पूर्वदलस्थकलशेन 'अवोचाम नम' इति मन्त्रेण च, आज्यान्तैः दक्षिणपश्चिमोत्तराग्नेयनिर्ऋतिदलस्थैः गोमूत्रगोमयक्षीरदध्याज्यपूर्णकलशैः ध्रुवतश्च, अथ मूलेन वायव्यदलस्थफलाद्भिश्च, अन्तरा मध्ये मध्ये अच्छजलैः अब्लिङ्गकैः 'आपो हि ष्ठा'दिभिः सिञ्चेत् । ततो नेत्रत्रयोन्मीलनं वितनुयात् ॥ ९३ ॥

ततः ईशदलस्थितेन सर्वौषधिजलेन तं देवं 'नमः शंभव' इत्याद्यम् 'इषे त्वाद्यं' 'नमो वः किरिकेभ्य' इत्याद्यं चोक्त्वा सिञ्चतु ॥ ९४ ॥

पुनः दिक्स्थखण्डैः दिक्खण्डस्थकलशैः 'तत् त्वा यामी'त्याद्ययर्चा, 'समुद्रं गच्छे'ति, 'आपो ही'त्यणुभ्यां गायत्र्या च स्नापयेत् । ओंरुद्धया तारपुटि-

---

१. 'चमानम इ' क. पाठः. २. 'णुभिश्च' ख. पाठः.

गायत्र्या च स्नापयेद् दिक्स्थखण्डै-
गायत्र्या चोरुद्धया कोणखण्डैः ॥ ९५ ॥

तारेणावाह्याहिताङ्गाय तस्मै
सोमारुद्रा वीति दत्त्वार्घ्यपाद्ये ।
गन्धं पुष्पं चापि तद्वत् पवित्रं
वस्त्रं संदद्याद् युवंवस्त्रजापी ॥ ९६ ॥

दत्त्वोत्तरीयं च बृहस्पते अती-
त्यृचाथ वेदाहमृचोपवीतकम् ।
स्वमूलतोऽलङ्करणानि धूरसी-
त्यनेन धूपं च तथा समर्पयेत् ॥ ९७ ॥

उद्दीप्यस्वेत्युपहरतु तस्मै प्रदीपं समिद्धो
अञ्जन्नित्यञ्जनमपि च गोरोचनां तारकेण ।
सोमारुद्रा युवमिति जपन् दर्पणं दर्शयित्वा-
ग्नाविष्णू इत्यपि मनुवरेण स्तुतिं चादधीत ॥ ९८ ॥

---

तया गायत्र्या कोणखण्डैः कोणखण्डस्थकलशैश्च । मन्त्रीति मन्त्राणामादिरे-वात्रोच्यते, मन्त्रं समस्तं विद्वानित्यर्थः ॥ ९५ ॥

तारेणावाह्याहिताङ्गाय तारेणैव कृताङ्गाय तस्मै 'सोमारुद्रा विवृहत'म-न्त्रेणार्घ्यपाद्ये द्वे गन्धं पुष्पं चापि तद्वत् पवित्रं दत्त्वा 'युवं वस्त्र'जापी वस्त्रं संदद्यात् ॥ ९६ ॥

अथ 'बृहस्पते अती'त्यृचा उत्तरीयं दत्त्वा 'वेदाहमृ'चोपवीतं समर्प-येत् । स्वमूलतोऽलङ्करणानि तथा 'धूरसी'त्यनेन धूपं च ॥ ९७ ॥

पुनस्तस्मा 'उद्दीप्यस्वे'ति प्रदीपमुपहरतु । 'समिद्धो अञ्जन्नि'त्यञ्ज-नमपि च । तारकेण गोरोचनां च। 'सोमारुद्रा युवमि'ति जपन् दर्पणं दर्श-यित्वा 'अग्नाविष्णू' इत्यपि मनुवरेण स्तुतिं चादधीत ॥ ९८ ॥

---

१. 'संस्थैः ॥' ख. पाठः.

युवमेतानीति प्रार्थ्यौषधय इति विकीर्य पुष्पमपि पुण्याहम् ।
कृत्वा दद्यात् पादुकसचामरच्छत्रयानमपि तारेण ॥ ९९ ॥

पूजाक्रमेण पुरुषादिचतुष्टयाङ्ग-
केशानसूक्तमनुभिः स्नपयेन्महेशे ।
दिक्कोणमध्यगतखण्डघटैस्तु बिम्ब-
शुद्धौ तदीयपरिकुम्भगणैः समेतम् ॥ १०० ॥

ध्यात्वा देवमघोरतो दिशतु गन्धं वामतश्चाम्बरं
पुष्पं चापि शिवेन तत्पुरुषतो धूपं सदीपार्घ्यकम् ।
आनम्याथ सुगन्धचर्चितकरो भागान् दिशास्वेकशो
वृत्तान्तान् विधिविष्णुरुद्रजिनवर्णैरालभेत क्रमात् ॥ १०१ ॥

"तत्पुरुषाय विद्महे पितामहाय धीमहे ।
तन्नो ब्रह्मा प्रचोदयात् ॥

---

पुनः 'युवमेतानी'ति प्रार्थ्य 'ओषधय' इति पुष्पं विकीर्य 'ओं शिव-नारायणः प्रीयताम्' इति विशेषयुक्तं पुण्याहमपि कृत्वा पादुकसचामरच्छत्रयानमपि पादुकं चामरं छत्रं स्ववाहनमपि तारेण दद्यात् ॥ ९९ ॥

महेशे तु बिम्बशुद्धौ दिक्कोणमध्यगतखण्डघटैः दिक्खण्डेषु कोणख-ण्डेषु[1] मध्यखण्डे च ब्रह्मकलशैः तदीयपरिकुम्भगणैः समेतं यथा भवति तथा पूजाक्रमेण स्वस्वदिक्प्राप्तैः पुरुषादिचतुष्टयाङ्गकेशानसूक्तमनुभिः तत्पुरुषादि-चतुष्टयेन पञ्चब्रह्माङ्गैः ईशानेन च मनुभिः तं स्नपयेत् ॥ १०० ॥

अथ देवं यथोक्तं ध्यात्वा आवाह्य सकलीकृत्य पाद्यमाचामं च दत्त्वा अघोरतो गन्धं दिशतु । वामतोऽम्बरं च । शिवेन ईशानेन पुष्पाणि च । तत्पुरुषतो धूपं सदीपार्घ्यकं दीपमर्घ्यं च । अथानम्य नमस्कृत्य सुगन्धचर्चित-करो भूत्वा वृत्तान्तान् भागान् चतुरश्राष्टाश्रवृत्तभागानेकशः प्रत्येकं दिशासु विधिविष्णुरुद्रजिनवर्णैः ब्रह्मविष्णुरुद्रगायत्रीभिः क्रमाद् आलभेत संस्पृ-शेत् ॥ १०१ ॥

तद्गायत्रीराह —तत्पुरुषायेति ॥

---

१. 'ण्डेषु च' ङ. पाठः.

तत्पुरुषाय विद्महे जनार्दनाय धीमहे ।
तन्नो विष्णुः प्रचोदयात् ॥
तत्पुरुषाय विद्महे महादेवाय धीमहे ।
तन्नो रुद्रः प्रचोदयात् ॥"

तद्गायत्र्य इति प्रोक्ताः सितमाल्यादिभिस्ततः ।
प्रार्च्य नीराज्य पुण्याहमाचरेन्मूर्तिपैः सह ॥ १०२॥

मूलेनावाह्य तस्मै सकलितमहसे स्थाणवे संप्रदद्यात्
पाद्याद्यं भूषणान्तं नवकमथ समर्प्योर्मिकाकर्णभूषाः ।
इष्ट्वा गन्धादिभिः पादुकमपि सहयानातपत्रं प्रदद्यात्
सादर्शं चाथ पुण्याहमपि चरतु नीराजनं चेति वेज्या ॥

दुर्गार्याद्यणुभिः क्रमात् स्नपितयेद् गन्धैर्मृदालिप्य मृ-
द्वारा वारुणपञ्चकेन महिषारौ पावमानाणुना ।
क्वाथोदैरथ शालितण्डुलक्षुवा चूर्णेन लिप्त्वा समा-
सिञ्चेदञ्चितरत्नगन्धकलशाभ्यां पञ्चदुर्गाणुभिः ॥ १०४॥

---

इति तद्गायत्र्यः प्रोक्ताः । ततः सितमाल्यादिभिः श्वेतपुष्पगन्धादिभिः प्रार्च्य नीराज्य मूर्तिपैः सह पुण्याहमाचरेत् ॥ १०२ ॥

पक्षान्तरमाह —**मूलेनेति** । मूलेनावाह्य सकलितमहसे सकलीकृततेजसे तस्मै स्थाणवे शिवाय पाद्याद्यं भूषणान्तं नवकं पाद्यार्घ्याचमनीयमधुपर्कपुनराचमनीयस्नानवस्त्रोपवीतभूषणानि संप्रदद्यात् । अथ ऊर्मिकाकर्णभूषाः अङ्गुलीयं कुण्डले च समर्प्य गन्धादिभिरिष्ट्वा पादुकमपि सहयानातपत्रं वाहनं छत्रं च सादर्शं दर्पणं च दद्यात् । अथ पुण्याहं नीराजनं चापि चरतु । इति वा· इज्या पूजा स्यात् ॥ १०३ ॥

**महिषारौ** मन्त्रोद्धारे वक्ष्यमाणैः 'दुर्गार्याद्य'णुभिः पृथक्स्थितैः पञ्चभिर्गन्धैः क्रमात् स्नापितयेत् । स्वकलशोक्तया मृदा आलिप्य मृद्वारा मृज्जलपूर्णकलशेन वारुणपञ्चकेन 'अव ते हेलो वरुणे'त्यादिवक्ष्यमाणेन च । पुनः क्वाथोदैः पावमानाणुना 'पावमानीः स्वस्त्ययनीरि'ति मन्त्रेण च । अथ शालित-

**पुण्याहं प्रविधाय शेषसलिलैस्तैरेव सिक्त्वांशुके**
**रक्ते द्वे परिधाप्य तैर्दिशतु गन्धं पुष्पधूपावपि ।**
**दीपाकल्पवितानचामरयुगच्छत्राणि नीराज्य दि-**
**क्ष्वेनां सम्यगयंपुरःप्रभृतिभिः स्वोक्तैः स्तुवीताणुभिः ॥**

**सेनान्यां कलशैः स्वपूरणसमुक्तेन क्रमेणाञ्चितैः**
**सिञ्चेन्मन्त्रिवरः स्वमूलमनुना स्वास्त्राणुना वर्मणा ।**
**मूलेनापि हृदाग्निमील इति पूर्वर्चा त्विषेत्वादिना**
**शन्नोदेव्यणुनोपचारमनुना कौशादिगन्धान्तिमैः ॥ १०६ ॥**
**संस्नाप्य स्वजिनार्णतो बहुजलैर्दत्त्वांशुके द्वे युवं**
**वस्त्राणीत्युपवीतगन्धकुसुमस्रग्धूपदीपान् क्रमात् ।**

---

ण्डुलभुवा चूर्णेनोद्वर्त्य अञ्चितरत्नगन्धकलशाभ्यां पूजिताभ्यां रत्नोदगन्धो-दाभ्यां पञ्चदुर्गाणुभिश्च स्नपितयेत् ॥ १०४ ॥

**पुनः** पुण्याहं 'ओं दुर्गा प्रीयताम्' इति विशेषयुक्तं विधाय शेषस-लिलैः तैरेव पञ्चदुर्गाणुभिः सिक्त्वा रक्ते द्वे अंशुके वस्त्रे परिधाप्य तैः पञ्च-दुर्गाणुभिर्गन्धं पुष्पधूपावपि दीपाकल्पवितानचामरयुगच्छत्राणि दीपमलङ्कारं वितानं चामरयुगं छत्रं च दिशतु । पुनरेनां दुर्गाम् अयंपुरःप्रभृतिभिः 'अयं पुरो हरिकेश' इत्यादिभिर्मन्त्रैर्दिक्षु सम्यक् प्रत्येकं नीराज्य स्वोक्तैरणुभिः स्वागमोक्तमन्त्रैः स्तुवीत च ॥ १०५ ॥

**सेनान्यां तु** मन्त्रिवरः मन्त्रक्रिययोरैक्यं विमृशन् गुरुः कौशादिग-न्धान्तिमैरञ्चितैर्नवसु खण्डेषु स्थितैः सपरिकलशैः कलशैः क्रमात् स्वमूल-मनुना स्वास्त्राणुना वर्मणा मूलेनापि हृदा 'अग्निमील' इति पूर्वर्चा 'इषे त्वा'-दिना 'शन्नो देव्य'णुना उपचारमनुना च नवभिर्मन्त्रैः स्वपूरणसमुक्तेन क्रमेण सिञ्चेत् ॥ १०६ ॥

**स्वजिनार्णतः** स्वगायत्र्या बहुजलैः संस्नाप्य तस्मै स्कन्दाय 'युवं वस्त्राणी'ति मन्त्रेणांशुके द्वे दत्त्वा उपवीतगन्धकुसुमस्रग्धूपदीपान् चामरं

---

१. 'सिक्त्वा बिम्बघटैर्विधाय विबुधैः पुण्याहमेतज्जलैः
सिक्त्वा रक्तनवांशुके च परिधाप्याभ्यर्च्य दुर्गाणुभिः ।
दत्त्वाकल्पवितानचामरयुगच्छत्राणि दिक्षु क्रमा-
न्मन्त्रैः सम्यगयंपुरःप्रभृतिभिर्नीराजयेत् पञ्चभिः ॥
से' क. पाठः.

दद्याच्चामरमातपत्रमुपचारेणाञ्जनं दर्पणं
तस्मै पादुकयुग्ममप्यथ चरेन्नीराज्य पुण्याहकम् ॥ १०७ ॥

स्वाष्टमूर्तिमनवः स्वकमूलं
चापि बिम्बकलशस्नपने स्युः ।
विघ्नराजि निजमूलकमार्ये
मध्यनिष्ठमुभयोः स्नपनं स्यात् ॥ १०८ ॥

पञ्चोपहारान् प्रददातु विघ्ने
मूलेन ताञ्छास्तरि दर्पणं च ।
नीराज्य पुण्याहमपि प्रकुर्या-
दितीरितात्राखिलबिम्बशुद्धिः ॥ १०९ ॥

दत्त्वार्घ्यमुत्तिष्ठमनुप्रजापी
प्रोत्थाप्य याने प्रविधाय बिम्बम् ।
प्रदक्षिणप्रक्रमतो नयेत
तन्मण्डपं शाकुनकादिजापी ॥ ११० ॥

---

चामरद्वयम् आतपत्रमञ्जनं दर्पणं पादुकयुग्ममपि क्रमादुपचारेण दद्यात् । अथ नीराज्य 'स्कन्दः प्रीयतामि'ति विशेषयुक्तं पुण्याहं चरेच्च ॥ १०७ ॥

विघ्नराजि बिम्बकलशस्नपने स्वाष्टमूर्तिमनवः 'गणञ्जया'द्याः स्वकमूलं चापि स्युः । आर्ये नवस्वपि निजमूलं च । अत्र विघ्ने बहिः प्रदक्षिणक्रमेण आर्ये दिग्विदिक्क्रमेणेति विशेषः । उभयोरपि मध्यनिष्ठं ब्रह्मकलशान्तं स्नपनं स्यात् ॥ १०८ ॥

विघ्ने पञ्चोपहारान् जलगन्धपुष्पधूपदीपान् मूलेन प्रददातु । शास्तरि तान् दर्पणं च । उभयोः नीराज्य पुण्याहमपि यथोक्तवत् कुर्यात् । अत्राखिलबिम्बशुद्धिरितीरिता ॥ १०९ ॥

अथ सर्वेष्वप्यर्घ्यं दत्त्वा उत्तिष्ठमनुप्रजापी 'उत्तिष्ठ ब्रह्मणस्पत' इति जपन् बिम्बं प्रोत्थाप्य रथादियाने प्रविधाय शाकुनकादिजापी 'कनिक्रदत्' 'स्वस्त्या'दिकं जपन् प्रदक्षिणप्रक्रमतस्तद् बिम्बं मण्डपं नयेत ॥ ११० ॥

---

१. 'न् दारुणं द' क. ख. घ. पाठः

रथारोपे रथे तिष्ठन्नखिलेऽणुः प्रदक्षिणे ।
उदु त्यमिति शार्ङ्गीशे पौरुषं च जपेद्धरौ ॥ १११ ॥

दत्त्वा द्वार्युपचारतोऽर्घ्यमखिलेषूदु त्यमित्युच्चर-
न्नाकृष्णेन युतं शिवे समवतार्यान्तर्नयेन्मन्त्रवित् ।
आसत्येनमनुं गुहे हरिहरे यस्मिन्नृचः पूर्वकं
मन्त्री मन्त्रमिनाक्षरं मुररिपौ शेषेषु मूलं निजम् ॥ ११२ ॥

वामाणुना त्रिणयनेऽथ नमो हिरण्य-
बाह्वादिना न्यसतु शार्ङ्गिशिवेऽधिशय्यम् ।
सत्रिष्टुभा महिषविद्विषि तारकेण
शेषेषु मूलत इनार्णत इन्दिरेशे ॥ ११३ ॥

विश्वत इति त्रिधाम्नि व्याप्यान्येषु स्वमूलतो बिम्बम् ।
शाययतु सकलयित्वा मन्त्रैः प्रासादसम्मुखमिहोक्तैः ॥

---

अखिले सर्वेषु देवेषु रथारोपे 'रथे तिष्ठन्नि'त्यणुः । शार्ङ्गीशे प्रदक्षिणे 'उदु त्यं जातवेदसमि'ति, हरौ पौरुषं पुरुषसूक्तं च जपेत् ॥ १११ ॥

अखिलेषु द्वार्युपचारतोऽर्घ्यं दत्त्वा शिवे 'उदु त्यम्' 'आकृष्णेन' युतमुच्चरन् यानात् समवतार्यान्तर्नयेत् । गुहे 'आसत्येन'मनुं, हरिहरे यस्मिन्नृचः पूर्वकं 'यस्मिन् वृक्ष' इत्यादिकं, मुररिपौ इनाक्षरं द्वादशाक्षरं मन्त्रं, शेषेषु निजमूलं चोच्चरन् बिम्बमन्तर्नयेत् । मन्त्रविन्मन्त्रीति च पदाभ्यां तत्र शोभनान् मन्त्रान् यथावकाशमुच्चरेदिति सूचितम् ॥ ११२ ॥

अथ त्रिणयने वामाणुना 'वामदेवेन' अधिशय्यं शय्यायां न्यसतु । शार्ङ्गिशिवे 'नमो हिरण्यबाह्वा'दिना, महिषविद्विषि सत्रिष्टुभा तारकेण, शेषेषु मूलतः, इन्दिरेशे विष्णौ इनार्णतो द्वादशाक्षरेण च न्यसतु ॥ ११३ ॥

त्रिधाम्नि 'विश्वतश्चक्षुरि'ति, अन्येषु स्वस्वमूलतश्च व्याप्य सकलयित्वा इहोक्तैः शय्यारोपणोक्तैर्मन्त्रैः प्रासादसम्मुखं शाययतु ॥ ११४ ॥

---

१. 'णुं' ख. पाठः.

**पीठे संस्थाप्योपचर्यार्घ्यनिष्ठैः**
**स्कन्दे बिम्बं शाययेच्चाधिशय्यम् ।**
**प्रासादे प्राग्द्वार्युदक्छीर्षकं च**
**प्रत्यग्द्वारे याम्यदिक्छीर्षकं च ॥ ११५ ॥**

**इति तन्त्रसमुच्चये तुरीयः पटलो**
**मण्डपसंस्क्रियाक्रमाढ्यः ।**
**कथितः कलशेशवह्निशय्या-**
**विधिमान् बिम्बविशुद्धिविध्युपेतः ॥ ११६ ॥**

इति तन्त्रसमुच्चये

**चतुर्थः पटलः ॥**

---

स्कन्दे तु पीठे संस्थाप्य अर्घ्यनिष्ठैः अर्घ्यावसानैरुपचारैरुपचर्य अधिशय्यं शय्यायां प्रासादे प्राग्द्वारि सत्युदक्छीर्षकमुत्तरशिरस्कं, प्रासादे प्रत्यग्द्वारे याम्यदिक्शीर्षकं दक्षिणशिरस्कं च बिम्बं शाययेत् ॥ ११५ ॥

पटलमुपसंहरति — इतीति । (इति) तन्त्रसमुच्चये ग्रन्थे तुरीयः चतुर्थः पटलः कथितः । कथंभूतः, मण्डपसंस्क्रियाक्रमाढ्यः मण्डपसंस्कारपरिपाट्या परिपूर्णः । कलशेशवह्निशय्याविधिमान् कुम्भेशपूजाग्निजननशय्यापूजादिभिश्च युक्तः। बिम्बविशुद्धिविध्युपेतः बिम्बशुद्धिकलशाभिषेकेण उपहारदानेन चोपेतः ॥ ११६ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

**चतुर्थः पटलः ॥**

---

## अथ पञ्चमः पटलः ।

स्नात्वा गुरुः कृतदिनान्तविधिः सुवासाः
स्वाचम्य नव्यवसनेन कृतोत्तरीयः ।
बिम्बाग्रतः समुपविश्य पवित्रपाणि-
र्वन्देत साञ्जलिरथो गुरुविघ्नराजान् ॥ १ ॥

दग्ध्वा स्वास्त्रहुताशक्लृप्ततलपृष्ठव्यापकेनाभितो
मूलव्यापकतोऽपरौ मनुमयौ हस्तौ समुत्पाद्य च ।
न्यस्तार्णाङ्गतरङ्गिताग्रपरिदीप्ताग्रेण हस्तद्वये-
नास्त्रेणातनुयात् त्रितालदशदिग्बन्धाग्निसालोदयान् ॥ २ ॥

---

अथ पञ्चमेन पटलेनाधिवासविधिमाह — स्नात्वेति । अथो गुरुः स्नात्वा तदर्थं विशेषतो मन्त्रस्नानं कृत्वा कृतदिनान्तविधिः कृतसायन्तनसन्ध्याविधिः सुवासाः नववस्त्रधारी स्वाचम्य विशेषतो मन्त्राचमनं कृत्वा नव्यवसनेन कृतोत्तरीयः नवेन वस्त्रेण कृतोत्तरीयश्च भूत्वा पवित्रपाणिः, पवित्रस्य विशेषतो विधानात् सौवर्णं पवित्रं गृह्यते, तत्करोऽपि भूत्वा देवाग्रत एव किञ्चिद् दक्षिणतः समुपविश्य सम्यगुपविश्य साञ्जलिरञ्जलिमुद्रासहितः सन् गुरुविघ्नराजान् गुरून् विघ्नराजं च वन्देत ॥ १ ॥

ततः स्वास्त्रहुताशक्लृप्ततलपृष्ठव्यापकेन स्वस्वास्त्रमयाग्निना कृतेन तले पृष्ठे च व्यापकेन प्राक्तनौ हस्तौ दग्ध्वा अभितो मूलव्यापकतोऽपरौ मनुमयौ हस्तौ च समुत्पाद्य न्यस्तार्णाङ्गतरङ्गिताग्रपरिदीप्ताग्रेण न्यस्तमूलमन्त्राक्षराङ्गत्वादुज्ज्वलितं न्यस्तास्त्रमन्त्राङ्गुल्यग्रत्वात् परिदीप्ताग्रं च यत् तेन हस्तद्वयेन अस्त्रेणास्त्रमन्त्रेण त्रितालदशदिग्बन्धाग्निसालोदयान् तालत्रयं दशदिग्बन्धमग्निप्राकाराणामुद्गमं चातनुयात् । अत्रायं प्रयोगविधिः — यथोक्तप्रकारेण स्वासन उपविश्य गुरुगणपतिवन्दनानन्तरं करयोर्दहनबुद्ध्या स्वस्वास्त्रेण तले पृष्ठे च व्याप्य उत्पादनबुद्ध्या तयोः परितश्च मूलेन व्याप्य मूलमन्त्रस्याक्षराण्यङ्गानि च यथास्थानं विन्यस्यास्त्रेणाङ्गुलीनामग्रेषु च प्रत्येकं विन्यस्य ताभ्यां कराभ्यां तालत्रयदिग्बन्धनाग्निप्राकारान् कुर्यादिति ॥ २ ॥

**मार्ताण्डावरतारजप्तपवनायामक्रमोन्मेषिते**
**स्वस्मिन् भूमनि नामरूपभुवनस्फूर्जासमष्ट्यात्मनि ।**
**आस्थायास्त्रसमीरयामविधिना संशोध्य नाडीत्रयं**
**तारांशत्रितयासुरोधविधिना वाथात्मशुद्धिं चरेत् ॥ ३ ॥**

**नाड्या दक्षिणया त्रिवारमुदितेनामा विमुच्यानिलं**
**षड्वारेण तया प्रपूर्य परिकुम्भ्य द्वादशावर्तिना ।**
**व्यामुञ्चेदिडया तथैव परिशोध्येडामुमा मारुतं**
**मुञ्चेत् पिङ्गलया ततस्तदुभयेनापूरयेदीरणम् ॥ ४ ॥**

**नाडीद्वन्द्वाभिपूर्णं मरुतमुभयमार्गानुरोधात् सुषुम्ना-**
**सुष्यामाकृष्य तद्वन्मामिति परिजपन्नङ्गवारं प्रपूर्य ।**

---

ततो मार्ताण्डावरतारजप्तपवनायामक्रमोन्मेषिते द्वादशसंख्यावरोऽधमो यस्य प्रणवजपप्राणायामस्य, तत्क्रमादुन्मेषिते प्रकाशिते नामरूपभुवनस्फूर्जासमष्ट्यात्मनि नामरूपमयस्य शब्दार्थमयस्य भुवनस्य स्फूर्जा वर्धनं तस्य समष्टिरूपे स्वस्मिन् भूमनि ऐश्वर्यातिशये आस्थाय, गुरुः द्वादशवारप्रणवप्राणायामेनाखिलभुवनसमष्ट्यात्मा देवो भूत्वेत्यर्थः । अस्त्रसमीरयामविधिना अस्त्रमन्त्रप्राणायामविधानेन वा तारांशत्रितयासुरोधविधिना प्रणवांशत्रयप्राणायामविधानेन वा स्वस्य नाडीत्रयं संशोध्याथात्मशुद्धिं जीवात्मनः परमात्मयोगेन शुद्धिं चरेत् ॥ ३ ॥

नाडीशुद्धिमाह — नाड्येति । त्रिवारमुदितेन जप्तेन अमा अंबीजेन दक्षिणया पिङ्गलया नाड्या अनिलं प्राणं विमुच्य रेचयित्वा, तया पिङ्गलयैव षड्वारेण अंबीजेन प्राणं प्रपूर्य, द्वादशावर्तिना तेनैव अंबीजेन पिङ्गलया परिकुम्भ्य, तं प्राणमिडया वामनाड्या व्यामुञ्चेद् रेचयेत् । तथैव पिङ्गलया प्रोक्तप्रकारेणैव उमा उंबीजेन इडामपि परिशोध्य पिङ्गलया मारुतं मुञ्चेत् । ततस्तदुभयेन तन्मार्गद्वयेन अं उं इति बीजद्वयेन च ईरणं वायुमापूरयेत् ॥

नाडीद्वन्द्वाभिपूर्णं नाडीद्वयेन पूरितं मरुतं वायुम् उभयमार्गानुरोधाद् मार्गद्वयानुसारेण सुषुम्नासुष्यां मध्यनाडीद्वारे आकृष्यानीय तद्वत् पूर्ववद्

---

१. 'जापप' इति मूलकोशपाठः.

सन्धार्यादित्यवारं विदलितनिखिलग्रन्थिकां ब्रह्मनाडी-
मप्येवं शोधयित्वा बहिरथ मरुतं रेचयेद् व्यत्ययेन ॥ ५ ॥

प्रभञ्जनं पिङ्गलया बहिस्त्यजेद्
विकारसंख्यैः प्रणवैरथेडया ।
प्रपूरयेत् तद्द्विगुणैश्चतुर्गुणैः
प्रपूरितं ब्रह्मपथे प्रकुम्भयेत् ॥ ६ ॥

शुद्धब्रह्मपथप्रसारिपरमात्मार्चिष्कलापाततो
जाग्रज्जीवपुनर्विमोहनमिषद्दुर्वासनापासनम् ।
कृत्वा रेचककर्म पूरकविधौ स्वस्थानमास्थाय चे-
त्येवं कुम्भककर्मणा स्वपरमैश्वर्यं सुधीर्भावयेत् ॥ ७ ॥

अङ्गवारं षड्वारं मं इति परिजपन् सुषुम्नां प्रपूर्य आदित्यवारं द्वादशवारं संधार्य विदलितनिखिलग्रन्थिकां भेदितपञ्चग्रन्थिं ब्रह्मनाडीं सुषुम्नामप्येवं शोधयित्वा-अथ मरुतं व्यत्ययेन पिङ्गलया पूरितमिडया, इडया पूरितमपि पिङ्गलया च बहिः रेचयेत् ॥ ५ ॥

रेचकादिना प्राणायामविशेषमाह — प्रभञ्जनमिति । अथ विकारसंख्यैः षोडशवारमावर्तितैः प्रणवैः पिङ्गलया प्रभञ्जनं वायुं बहिस्त्यजेत् । इडया तद्द्विगुणैः द्वात्रिंशत्संख्यैः प्रपूरयेत् । चतुर्गुणैश्चतुष्षष्टिसंख्यैः प्रपूरितं प्रभञ्जनं ब्रह्मपथे सुषुम्नायां प्रकुम्भयेत् ॥ ६ ॥

रेचकादेरभिसन्धिमाह — शुद्धेति । शुद्धब्रह्मपथप्रसारिपरमात्मार्चिष्कलापाततः शुद्धे ब्रह्मपथे सुषुम्नायां प्रसारिण्याः परमात्मनस्तेजस्कलाया आपाततः संस्पर्शनेन हेतुना जाग्रज्जीवपुनर्विमोहनमिषद्दुर्वासनापासनम् उद्बुध्यमानस्य जीवस्य पुनर्विमोहनाय मिषन्त्याः प्रेक्षन्त्या दुर्वासनाया दुष्टरूपिण्या वासनाया अपासनं निरसनं तद्रूपं रेचककर्म कृत्वा पूरकविधौ[2] स्वस्थानं वायोरन्तर्मुखत्वमास्थाय चेत्येवं रेचकं पूरकं च बुद्ध्या विमृश्य सुधीः प्रसन्नधीर्भूत्वा कुम्भककर्मणा स्वपरमैश्वर्यं स्वस्य जीवस्य परमात्मसमानमैश्वर्यं भावयेत् ॥ ७ ॥

१. 'जन्यात्मोद्बोधविरोधिमो', २. 'मपि ज्ञानादिसम्पादकं तच्चैवं विदधीत भूमनि सुधीरास्थापकं कुम्भकम् ॥ उ' क. पाठः

उन्नीय हंसमनुनाधरचक्रतस्त-
मर्काम्बुजस्थपरमात्मनि संगमय्य ।
व्याख्यास्यमानविधिना वसुधादितत्त्व-
जातं विलाप्य तनुयात् तनुशोषणाद्यम् ॥ ८ ॥

स्वस्वार्हनाड्या नृपदन्तवर्ण-
सङ्ख्यासमभ्यस्तनिजार्हबीजः ।
कुर्यात् क्रमाद् रेचकपूरकौ च
सकुम्भकौ शोषणपूर्वकेषु ॥ ९ ॥

इडामुखे नाभिसरोरुहे च
धूम्रं विचिन्त्यानिलमण्डले यम् ।
संयोज्य तद्योगजवायुनाङ्गं
संशोष्य तं पिङ्गलया प्रमुञ्चेत् ॥ १० ॥

---

अथात्मशुद्धिमाह — उन्नीयेति । हंसमनुना 'ओं हंसः' इति मन्त्रेण अधरचक्रतः मूलाधारात् तं जीवात्मानम् उन्नीयोर्ध्वं नीत्वा अर्काम्बुजस्थपरमात्मनि द्वादशान्तसहस्रदलपद्मस्थितपरमात्मनि संगमय्य संयोज्य व्याख्यास्यमानविधिना बिम्बशोधने वक्ष्यमाणरीत्या वसुधादितत्त्वजातं पृथिव्यादितत्त्वसमूहं विलाप्य स्वे स्वे कारणे संयोज्य तनुशोषणाद्यं शरीरस्य शोषणदहनाद्यं तनुयात् ॥ ८ ॥

शोषणादिष्वितिकर्तव्यतामाह — स्वस्वार्हेति । शोषणपूर्वकेषु स्वस्वार्हनाड्या स्वस्वयोग्यया नाड्या नृपदन्तवर्णसंख्यासमभ्यस्तनिजार्हबीजः षोडशद्वात्रिंशच्चतुःसंख्याभिरावर्तितेन निजनिजबीजेन युक्तः । अत्र वर्णशब्देन चतुष्षष्टिसंख्या वा विवक्षिता । मन्त्री क्रमाद् रेचकपूरकौ सकुम्भकौ कुर्यात् ॥ ९ ॥

इडामुखे नाभिसरोरुहे चानिलमण्डले षड्बिन्दुयुक्तवृत्तात्मके वायुमण्डले धूम्रं यंबीजं विचिन्त्य तन्मण्डलद्वयमन्योन्यं संयोज्य तद्योगजवायुना तद्योगाज्जातमहावायुना अङ्गं शरीरं संशोष्य तं वायुं पिङ्गलया प्रमुञ्चेत् ॥ १० ॥

---

१. 'जम् ।', २. 'ख्या वि' क. पाठः.

**एतन्मुखे हृत्कमले च वह्ने-**
**र्बिम्बेऽरुणं रं सुमतिर्विचिन्त्य ।**
**संयोज्य तद्योगजवह्निनाङ्गं**
**सन्दह्य मुञ्चेदिडया बहिस्तम् ॥ ११ ॥**
**इडामुखेऽर्काम्बुरुहे च बिम्बे**
**सौधार्चिषे वं परिचिन्त्य शुभ्रम् ।**
**संयोज्य तस्मात् परचित्सुधाम्बु-**
**पूरं प्रवर्षेद् भुवनाप्लवार्हम् ॥ १२ ॥**
**काठिन्यरन्ध्रीकरणे विधाय**
**स्वबीजतः सोऽहमिति ब्रुवाणः ।**
**आयोज्य जीवं तदुपाधितत्त्व-**
**सृष्ट्यब्दवृद्ध्यादिविधिं विदध्यात् ॥ १३ ॥**

---

**सुमतिः** शोषणदहनादिकाले तत्तदात्मयोगं ध्यातुं कुशलः एतन्मुखे पिङ्गलामुखे हृत्कमले च सस्वस्तिकत्रिकोणात्मके वह्नेर्बिम्बे अरुणं रंबीजं विचिन्त्य तदुभयं संयोज्य तद्योगजवह्निना अङ्गं शरीरं संदह्य तमग्निमिडया बहिर्मुञ्चेत् ॥ ११ ॥

इडामुखेऽर्काम्बुरुहे द्वादशान्तकमले च वृत्तात्मकचान्द्रे बिम्बे च शुभ्रं वंबीजं परिचिन्त्य संयोज्य तस्मादुभयमिलिताद् बिम्बाद् भुवनाप्लवार्हं सकलभुवनाप्लावनसमर्थं परचित्सुधाम्बुपूरं परचैतन्यामृतप्रवाहं प्रवर्षेत् ॥ १२ ॥

**स्वबीजतः** लं हं इति पृथिव्याकाशबीजाभ्यां काठिन्यरन्ध्रीकरणे काठिन्यकरणं सुषिरीकरणं च विधाय सोऽहमिति ब्रुवाणः सन् जीवमायोज्य हृदयं प्रापय्य तदुपाधितत्त्वसृष्ट्यब्दवृद्ध्यादिविधिं तस्य जीवस्योपाधिभूतस्य तत्त्वसमूहस्य सृष्टिसंवत्सरपरिपाकाण्डभेदादिकं च विदध्यात् । अत्रायं प्रयोगक्रमः— तालत्रयाद्यनन्तरं द्वादशप्रणवप्राणायामेन स्वयं प्रपञ्चस्वरूपो भूत्वा नाडीशोधनं रेचकादिकं च कृत्वा हंसमनुना जीवं परमात्मनि संयोज्य मूलप्राणायामेन सामरस्यं विधाय तत्त्वसंहारं शोषणाद्यं च कृत्वा सोऽहमिति जीवमायोज्य पुनस्तत्त्वसृष्टिं संवत्सरमपि पाकादिकं कुर्यादिति ॥

---

१. 'णे' इति मूलकोशपाठः. २. 'तया घ्या' ग. पाठः. ३. 'समारस्यं' ख. पाठः.

लिप्या नियम्यासुमिनाब्जमध्या-
दाद्यर्णरूपामृतवारिधाराम् ।
स्वस्योत्तमाङ्गे परिपात्य देह-
माप्लाव्य तन्वीत तया शरीरम् ॥ १४ ॥

भूतानि पञ्च परमात्मनि संविलाप्य
शोषादिपञ्चकविधिं प्रविधाय जीवम् ।
आयोज्य चात्मन इमानि वियन्मुखानि
सृष्ट्वा लिपिन्यसनपश्चिममाचरेद् वा ॥ १५ ॥

पूर्वोक्तरेचकमुखैः परमात्मभाव-
मालम्ब्य शोषदहनाप्लवनं यथोक्तम् ।
आधाय चिन्मयसुधाम्बुभिरात्मदेहं
कुर्वीत वा लिपिमयं लघुसंप्रयोगे ॥ १६ ॥

---

ततो लिपिभावनां प्रस्तौति — लिप्येति । लिप्या असुं प्राणं नियम्य इनाब्जमध्याद् द्वादशान्तकमलकर्णिकायाः आद्यर्णरूपामृतवारिधाराम् अकारादिक्षकारान्ताक्षररूपामृतजलधारां स्वस्योत्तमाङ्गे स्वशरीरस्य मूर्ध्नि परिपात्य परितः पातयित्वा देहमाप्लाव्य तया लिप्या शरीरं तन्वीत, लिपिन्यासं कुर्यादित्यर्थः ॥ १४ ॥

अथवा ततो न्यूने[1] पक्षे जीवात्मनः परमात्मयोजनानन्तरं पञ्चभूतान्यपि क्रमेण परमात्मनि संविलाप्य शोषादिपञ्चकविधिं शोषणदाहनप्लावनकाठिन्यसुषिरीकरणानि प्रविधाय जीवमायोज्य च आत्मन इमानि वियन्मुखान्याकाशादीनि सृष्ट्वा लिपिन्यसनपश्चिममाचरेत् ॥ १५ ॥

अथवा लघुसंप्रयोगे लघुक्रियायां पूर्वोक्तरेचकमुखैः 'प्रभञ्जनं पिङ्गलये'त्याद्युक्तैः रेचकमुखैः परमात्मभावं पारमात्म्यमालम्ब्य आश्रित्य यथोक्तं तथा शोषदहनाप्लवनमाधाय चिन्मयसुधाम्बुभिः चैतन्यमयामृतरसैः आत्मदेहं स्वशरीरं लिपिप्राणायामादिना लिपिमयं कुर्वीत, प्लावनानन्तरमेव लिपिप्राणायामादिकं कुर्यादित्यर्थः ॥ १६ ॥

---

१. 'न' ख. पाठः

षड्भिर्दोस्तलपृष्ठपार्श्वयुगले व्याप्य व्यतीहारतो
ज्येष्ठाद्यङ्गुलिषु स्वरैरपि परैः सव्यापसव्यक्रमात् ।
तर्जन्यादितदन्तिमं न्यसतु पर्वाग्रेषु कादीन् हल-
क्षार्णानि प्रथमायुगे युगपदङ्गानि प्रसिद्धक्रमात् ॥ १७ ॥
आभ्यां दोर्भ्यां स्वरस्पर्शव्यापकाख्यभिदाक्रमात् ।
आकेशादापदाम्भोजं लिप्या संव्यापयेत् तनौ ॥ १८ ॥
न्यस्येत् काननवृत्तदृक्छ्रवणनोगण्डोष्ठदन्तद्वयी-
मूर्धास्येषु कराङ्घ्रिसन्धिषु सहाग्रेषु क्रमान्मातृकाम् ।
पार्श्वद्वन्द्वसपृष्ठनाभिजठरे हृत्कक्षपश्चाद्गले
सव्ये कक्षतले हृदादिकरपादाद्यानने मन्त्रवित् ॥ १९ ॥

---

लिपिन्यासमाह — षड्भिरिति । दोस्तलपृष्ठपार्श्वयुगले करयोस्तले तत्पृष्ठे तत्पार्श्वयुगले च अकाराद्यूकारान्तैः षड्भिः स्वरैः व्यतीहारतः अन्योन्यतः सव्यापसव्यक्रमात् ह्रस्वैः सव्ये दक्षिणे दीर्घैः अपसव्ये वामे च क्रमाद् व्याप्य परैः ऋकारादिविसर्जनीयान्तैर्दशभिः स्वरैरपि तथा ज्येष्ठाद्यङ्गुलिषु च व्याप्य तर्जन्यादितदन्तिमं[2] तर्जन्यादितर्जन्यन्तं यथा तथा पर्वाग्रेषु पर्वस्वग्रेषु च कादीन् सान्तान् द्वात्रिंशद्वर्णान् न्यसतु । प्रथमायुगे अङ्गुष्ठद्वये पर्वद्वयाग्रेषु हलक्षार्णानि द्वयोरपि युगपन्न्यसतु, अङ्गानि मातृकाया अङ्गानि प्रसिद्धक्रमात् सामान्यन्यायेन च ॥ १७ ॥

आभ्यां दोर्भ्यां लिप्या स्वरस्पर्शव्यापकाख्यभिदाक्रमात् स्वरैः स्पर्शैः याद्यैश्च क्रमात् तनौ आकेशादापदाम्भोजं केशादारभ्य पदान्तं संव्यापयेत् ॥

काननवृत्तदृक्छ्रवणनोगण्डोष्ठदन्तद्वयीमूर्धास्येषु मूर्ध्न्याननवृत्ते दृशोः श्रोत्रयोर्नासिकयोर्गण्डयोरूर्ध्वाधरोष्ठयोस्तथा दन्तपङ्क्त्योर्मूर्ध्न्यास्ये च, पुनः कराङ्घ्रिसन्धिषु सहाग्रेषु करपादानां सन्धिष्वग्रेषु च, पार्श्वद्वन्द्वसपृष्ठनाभिजठरे पार्श्वद्वये पृष्ठे नाभिजठरयोश्च, हृत्कक्षपश्चाद्गले हृदये दक्षकक्षे गलपृष्ठे च, सव्ये कक्षतले वामकक्षे, हृदादिकरपादाद्यानने हृदयादिकरयोः पादयोर्गुह्य आनने च क्रमान्मातृकां न्यसेत् । मन्त्रविदित्यनेन 'ओं अं नमः' 'ओं आं नमः' इत्यादिमन्त्रयोजनं दक्षिणवामक्रमत्वं च सूचितम् ॥ १९ ॥

---

१. 'काः ।', २. 'मं य' क. पाठः.

अनपुंसकविषमसमस्वरषट्कयुगान्तरस्थषड्वर्गैः।
अङ्गानि ब्रह्मा गायत्र्यृष्याद्याः सरस्वती चास्याः ॥ २० ॥

निजविहितसरण्या न्यस्य साङ्गादिकां तां
प्रजपतु लिपिमेनां विघ्नबीजादिकं च ।
तदनु पवनयामाद्यर्चनाख्यास्यमान-
क्रमत इह मनूक्ता भावना भावयेत ॥ २१ ॥

अत्र सुम्भजिति विष्णुभावनां
चादधीत निजभावनोपरि ।
शङ्खपूरणमथात्मगुर्विभा-
स्यार्चनानि च करोतु सर्वतः ॥ २२ ॥

कृत्वा पाणितले जलं प्रणवमावर्त्याष्टशोऽथामुना
बिम्बं प्रोक्ष्य फडन्वितेन परिरक्ष्यास्त्रत्रितालादिना ।

---

अनपुंसकविषमसमस्वरषट्कयुगान्तरस्थषड्वर्गैः अनपुंसकाः ऋ ॠ ऌ ॡ इति रहिताः, विषमाः ओजस्वराः, समाः युग्मस्वराः, तेषां षड्द्वन्द्वानां मध्यस्थैः कचटतपयवर्गैरङ्गानि भवन्ति । 'अं क ख ग घ ङ आं हृदयाय नम' इत्यादीन्यङ्गानीत्यर्थः । ब्रह्मा गायत्री सरस्वती चास्या मातृकाया ऋष्याद्याः ऋषिच्छन्दोदेवताः ॥ २० ॥

निजविहितसरण्या स्वोक्तमार्गेण शुद्धबिन्दुविसर्गादिभेदयुक्तां साङ्गादिकाम् अङ्गर्ष्यादियुक्तां तां लिपिं न्यस्य एनां प्रजपतु च, विघ्नबीजादिकं च । आदिशब्देन 'गणानां त्वे'त्यृङ्मालामन्त्रश्च गृह्यते । तदन्विह पवनयामादि अर्चनाख्यास्यमानक्रमतः पूजापटले वक्ष्यमाणेन क्रमेण मन्त्रप्राणायामादि मनूक्ता भावना भावयेत ॥ २१ ॥

सुम्भजिति अत्राधिवासे निजभावनोपरि स्वमन्त्रभावनानन्तरं विष्णुभावनां वैष्णवाष्टाक्षरमन्त्रोक्तभावनां चादधीत । अथ सर्वतः सर्वदेवेषु शङ्खपूरणम् आत्मगुर्विभास्यार्चनानि आत्माराधनं गुरुगणपतिपूजां च करोतु ॥

अथ ध्यानाधिवासविधिमाह— कृत्वेति । अथ विद्वान् तत्तत्कर्मणि तत्तद्ध्यानकुशलो गुरुः पाणितले जलं कृत्वाष्टशः प्रणवमावर्त्य फडन्वितेनामुना

---

१. 'णक्र' ख. पाठः.

भूयः प्रोक्ष्य तथाभिमृश्य हृदये जप्त्वाष्टवारं ध्रुवं
जीवव्याप्तिमिहानयेदखिलतो विद्वान् विकृष्याङ्गतः ॥ २३ ॥
नाडीसन्धानकृत् स्वात्मनि कुसुमयुजा दोर्युजा ब्रह्मनाड्या
तच्चैतन्यं प्लुतेन प्रणयतु मपरेणोत्क्रमय्याणुबिम्बात् ।
तारेणायम्य वायुं समरसमिदमाकल्पयेत् तत्र तस्मिन्
बिम्बे स्वोपाधितत्त्वव्रजविलयविशुद्ध्यादिकं चादधीत ॥

पादाग्रनाभिहृदयाब्जशिरोधितालु-
देशास्थितानि पृथिवीप्रमुखानि पञ्च ।
तालूर्ध्वतश्च चतुरङ्गुलकादिक्लृप्त-
स्थानेषु कल्पयतु चात्र मनोमुखानि ॥ २५ ॥

---

प्रणवेन बिम्बं प्रोक्ष्य अस्त्रत्रितालादिना अस्त्रेण तालत्रयादिना परिरक्ष्य भूयश्च प्रोक्ष्य हृदयेऽभिमृश्य स्पृष्ट्वाष्टवारं ध्रुवं जप्त्वा जीवव्याप्तिं विम्बस्थस्य जीवस्य व्याप्तिमखिलतोऽङ्गतो विकृष्य आकृष्य इह हृदये आनयेत् ॥ २३ ॥

गुरुरुक्तक्रमेण स्वेन सह तद्बिम्बस्य नाडीसन्धानकृत् सन् कुसुमयुजा कुसुमयुक्तेन दोर्युजा करद्वयेन प्लुतेन मपरेण प्रणवेनाणुविम्बात् तच्चैतन्यं ब्रह्मनाड्या सुषुम्नया उत्क्रमय्य ऊर्ध्वं नीत्वा स्वात्मनि प्रणयतु । तारेण वायुमायम्य इदं चैतन्यं तत्र स्वात्मनि समरसम् एकत्वं प्राप्तमाकल्पयेत् । तस्मिन् बिम्बे स्वोपाधितत्त्वव्रजविलयविशुद्ध्यादिकं स्वस्याश्रयभूतस्य तत्त्वसमूहस्य संहारं शोषणादिकं चादधीत ॥ २४ ॥

तत् कथमित्याकाङ्क्षायामाह — पादाग्रेति । अत्र बिम्बे पादाग्रनाभिहृदयाब्जशिरोधितालुदेशास्थितानि, शिरोधिः कण्ठः, पादाग्रादितात्ल्वन्तदेशेषु स्थितानि पृथिवीप्रमुखानि पृथिव्यप्तेजोवाय्वाकाशानि पञ्चभूतानि, तालूर्ध्वतः तालूपरि चतुरङ्गुलकादिक्लृप्तस्थानेषु तालूपरि चतुरङ्गुलोर्ध्वे मनः तस्मात् किञ्चिदूनोर्ध्वभागेऽहङ्कारः इति क्रमेण मनोमुखानि मनोहङ्कारबुद्ध्यादीनि वक्ष्यमाणानि च कल्पयतु ॥ २५ ॥

---

१. 'चिल्लिमध्यस्थि', २. 'तत्त्वानि चिल्ल्युपरिषट्चतुरङ्गुलादिसंस्थानि क ख. पाठः.

**घ्राणोपस्थस्मरशरगुणाढ्यां धरित्रीं सजिह्वा-**
**पायूदन्वद्गुणमुदकमक्ष्यङ्घ्रिहव्याद्गुणाढ्यम् ।**
**तेजस्त्वग्दोर्द्विगुणसहितं मारुतं श्रोत्रवाग्भ्यां**
**युक्तं शब्दैकगुणमपि खं कल्पयेत् संजिहीर्षुः ॥ २६ ॥**
**पञ्च प्राञ्च्यथ पञ्चतत्त्वमनुबीजाद्यैः पृथिव्यात्मने-**
**हुंफट्पूर्वकमन्त्रकैः स्वगुणसङ्ख्यातो नियम्यानिलम् ।**
**तन्मात्रासु विलाप्य तत्त्वमनुभिस्तैर्व्याप्य संहारत-**[2][3]
**स्तन्मात्राश्च विलापयेत् स्वजनके तत्त्वे समुक्तक्रमात् ॥**[4]
**तत्तद्बीजोर्ध्वसंस्थप्रणतियुतपरायार्णवत्ताखिलेष्टा**
**तत्त्वावृत्तिप्रजप्तस्वमनुरभिहितैकासुयामक्रिया च ।**

---

कल्पनायां विशेषमाह — **घ्राणोपस्थेति** । सञ्जिहीर्षुः संहारेच्छायुक्तो गुरुः धरित्रीं पृथिवीं घ्राणोपस्थस्मरशरगुणाढ्यां, स्मरशराः पञ्च, घ्राणोपस्थाभ्यां शब्दस्पर्शरूपरसगन्धैः पञ्चभिर्गुणैश्च युक्तां कल्पयेत् । उदकं जलं सजिह्वापायूदन्वद्गुणम्, उदन्वन्तश्चत्वारः, जिह्वापायुभ्यां शब्दस्पर्शरूपरसैश्चतुर्भिर्गुणैर्युक्तं च । तेजः अक्ष्यङ्घ्रिहव्याद्गुणाढ्यं, हव्यादस्त्रयः, चक्षुःपादाभ्यां शब्दस्पर्शरूपैस्त्रिभिर्गुणैर्युक्तं च । मारुतं वायुं त्वग्दोर्द्विगुणसहितं त्वक्पाणिभ्यां शब्दस्पर्शाभ्यां गुणाभ्यां च युक्तम् । खमाकाशं श्रोत्रवाग्भ्यां शब्दैकगुणमपि कल्पयेत् ॥ २६ ॥

संहारक्रममाह — **पञ्चेति** । अथ प्राञ्चि प्राग्भवानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्च भूतानि पञ्चतत्त्वमनुबीजाद्यैः स्वस्वपञ्चतत्त्वमन्त्राणां बीजानि आदौ युक्तैः पृथिव्यात्मनेहुंफट्पूर्वकमन्त्रकैः 'पृथिव्यात्मने हुंफट्' 'अबात्मने हुंफट्' इत्यादिमन्त्रैः स्वगुणसंख्यातः स्वस्वगुणसंख्यया अनिलं प्राणं नियम्य तन्मात्रासु स्वस्वतन्मात्रासु विलाप्य तैः संहारक्रमेण स्थितैः स्वैः स्वैः पञ्चतत्त्वमनुभिः संहारतो व्याप्य तन्मात्राः समुक्तक्रमात् स्वजनके स्वस्वकारणभूते तत्त्वे विलापयेत् ॥ २७ ॥

मन्त्राणां प्राणायामादीनां च कॢप्तिमाह — **तत्तद्बीजेति** । अत्र सर्वत्र तत्तद्बीजोर्ध्वसंस्थप्रणतियुतपरायार्णवत्ता तत्तद्बीजानामूर्ध्वसंस्थिता नमोयुतपरा-

---

१. 'णतः संयम्य वायुं पृथक् ।' ख. पाठः. २. 'त्र', ३. 'भिः संहारतो व्याप्य स्त', ४. 'क्रमान्मन्त्रवित् ॥' क. पाठः.

तत्तत्तत्त्वास्पदस्पृक् प्रचरतु पवनायाममन्त्रोक्तक्लृप्त्या
तत्स्थानाद्यूर्ध्वतत्त्वास्पदचरममपि व्यापकं दोर्युगेन ॥ २८ ॥

विष्णौ सर्वनिवृत्तिविश्वपुरुषान् पञ्च प्रतीपक्रमा-
दाहुः परमेष्ठिनं च सचतुर्थ्यात्मानि तत्त्वानि तु ।
भूतार्णानि वियत्पदोल्लसितमज्जानि द्वितीयान्तिमा-
नन्ताद्यौज्ज्वलितानि तेषु सलवान्युक्तानि बीजानि च ॥

सर्वरूपा निवृत्तिन्यथो विश्वया
पौरुषी श्रेष्ठया चापि शक्त्यात्मना ।
विष्णुतत्त्वोक्तबीजैस्तथौमाँश्रितैः
संहृतौ पञ्च तत्त्वानि सुम्भद्विषि ॥ ३० ॥

---

याक्षरवचा बीजोपरि 'नमः परायै'ति योजना अखिलेष्टा अत्रत्याखिलेषु मन्त्रेष्विष्टा । तत्त्वावृत्तिप्रजपस्स्वमनुः पञ्चविंशत्यावृत्तितो जपः स्वस्वमन्त्रः एकासुयामक्रिया प्राणायामक्रिया अभिहिता उक्ता च । अत्र संहारादिषु तत्तत्तत्त्वास्पदस्पृक् पृथिव्यादितत्तत्तत्त्वानां पादाग्राद्यास्पदं स्थानं दर्भेण स्पृशन् पवनायाममुक्तक्लृप्त्या प्रचरतु । तत्स्थानाद्यूर्ध्वतत्त्वास्पदचरमं पादाग्रादि नाभ्यन्तं नाभ्यादि हृदयान्तमित्यादि तत्तत्स्थानाद्यूर्ध्वोर्ध्वपर्यन्तमपि व्यापकं दोर्युगेन प्रचरतु ॥ २८ ॥

संहारक्रमेण पञ्चतत्त्वान्युद्धरति — **विष्णाविति** । विष्णौ अत्र संहारे तु सर्वनिवृत्तिविश्वपुरुषान् परमेष्ठिनं च प्रतीपक्रमात् संहारक्रमात् स-चतुर्थ्यात्मानि चतुर्थीसहितात्मशब्दयुक्तानि पञ्चतत्त्वान्याहुः । बुधा इति शेषः । तेषु पञ्चतत्त्वमन्त्रेषु भूतार्णानि पञ्चभूतबीजार्णानि वियत्पदोल्लसितमज्जानि आकाशबीजस्थाने संभूतषकाराक्षरयुक्तानि । द्वितीयान्तिमानन्ताद्यौ-ज्ज्वलितानि द्वितीय आकारः अन्तिमो विसर्जनीयः अनन्त आकारः आद्योऽकारः तत ओकारः एतैः पञ्चभिरज्भिः क्रमेण भूषितानि सलवानि बिन्दुसहितानि तेषां बीजान्युक्तानि च स्युः ॥ २९ ॥

**अथो** सुम्भद्विषि संहृतौ सर्वरूपा निवृत्तिनी विश्वया युक्ता पौरुषी-श्रेष्ठया च सह । एताश्च शक्त्यात्मने इत्यनेन युक्ताः, तथाच औमाँश्रितैः

---

१· 'परतस्तत्त्वानि ह्रेन्तात्मना ।', २. 'द्यो' इति मूलकोशपाठः. ३. 'मि' क. पाठः. ४· 'ष' ङ. पाठः. ५· 'मि' ख. घ. पाठः.

हां ह्रीं हूं ह्रैं ह्रौं निवृत्तिः प्रतिष्ठा
विद्या शान्तिः शान्त्यतीतात्मनेन्ताः ।
ईशे बीजानीति तत्त्वान्यपीतौ
योज्यं चैतेषां परांशे शिवार्णम् ॥ ३१ ॥

मूलाणूदितबीजमज्भिरसमैर्विक्लीबकैर्भेदितं
बीजं शास्तृगणेशयोः शिवहरौ तत् साजितं कीर्तितम्[1] ।
मूलार्णानि गुहे महेशविहितान्येवैषु तत्त्वान्यथ
स्युः सद्यादिविभिन्नविष्णुविहितान्युक्तानि शर्वाच्युते ॥

चित्ताहङ्कृतिपूर्वकेषु कवचाक्रान्तो मनुस्तारको
हुंफट्कारयुताः स्वकीयमनवो वा वायुसंरोधने ।

---

औमिति सहितैः विष्णुतत्त्वोक्तबीजैः औंकारयुक्तैर्वैष्णवपञ्चतत्त्वोक्तबीजैर्युक्ताः पञ्चतत्त्वानि ॥ ३० ॥

ईशे अपीतौ संहारे हां ह्रीं हूं ह्रैं ह्रौं इति पञ्चतत्त्वानां बीजानि । आत्मनेन्ताः आत्मने इत्यन्ते युक्ताः निवृत्तिः प्रतिष्ठा विद्या शान्तिः शान्त्यतीता च पञ्चतत्त्वानि । एतेषां परांशे बीजानन्तरगतपरायाक्षरस्थाने शिवार्णं शिवायेत्यर्णं योज्यम् ॥ ३१ ॥

शास्तृगणेशयोः असमैः अयुग्मैः विक्लीबकैर्विगतनपुंसकैरज्भिर्भेदितं युक्तं मूलाणूदितबीजं मूलमन्त्रगतं बीजं पञ्चतत्त्वेषु बीजम् । शिवहरौ तद् मूलमन्त्रगतबीजं साजितं विष्णुपञ्चतत्त्वबीजैः सहितं कीर्तितम् । गुहे मूलार्णानि मूलमन्त्रस्यादित आरभ्य पञ्चाक्षराणि । एषु शास्तृगणेशशिवनारायणगुहेषु महेशविहितानि निवृत्त्यादीन्येव तत्त्वानि स्युः । अथ शर्वाच्युते सद्यादिविभिन्नविष्णुविहितानि सद्योजातादिभिर्युक्तानि विष्णुविहितानि सर्वादीनि पञ्चतत्त्वान्युक्तानि ॥ ३२ ॥

अथ मनस्तत्त्वादीनां संहारविधिमाह— चित्तेति । चित्ताहङ्कृतिपूर्वकेषु मनोहङ्कारबुद्धिप्राणतत्त्वेषु वायुसंरोधने प्राणायामे कवचाक्रान्तो हुंफड्-

---

१. 'तिथीप्रकृत्यणुषु आं भीं भूं पृथक् चापृथग् बीजं वायुनिरोधनेऽत्र परतो वा वक्ष्यमाणं निजम् । प्रा' ख. पाठः. २ 'औं' ङ. पाठ..

**प्राणायामविधिः सकृत् सकृदिह स्यान्मानसाद्यप्यये**
**सर्वस्मिन्निह हार्दमुद्रितविरामो व्यापके तारकः ॥ ३३ ॥**
**संहृत्यैवं भुवं वारि तदनल इमं मातरिश्वन्यमुं खे**
**तच्चित्ते तत्तु गर्वे तमु धियि धियमव्याकृते तत् परस्मिन् ।**
**प्राणायामैः क्रियादित्रयमपि निखिले संविलाप्यादिक्लृप्तै-**
**र्विश्वोत्तीर्णं प्रशान्तं पुरुषमपि तमानन्दरूपं विदध्यात् ॥३४॥**
**अव्याकृतान्ते पुरुषादितत्त्व-**
**जातं विलाप्याथ शिवे परस्मिन् ।**

---

न्तस्कारको मनुः 'ओं हुंफडि'ति मन्त्रः । हुंफट्कारयुताः स्वकीयमनवो वा वं नमः पराय मनआत्मने हुंफडि'त्यादयो वा। इह मानसाद्यप्यये मनस्तत्त्वादीनां संहारे सकृत् सकृत् प्राणायामविधिः स्यात् । इह सर्वस्मिन् व्यापके हार्दमुद्रितविरामः 'नम' इत्यनेन लक्षितावसानस्तारकः 'ओं नम' इति मन्त्रः स्यात् ॥ ३३ ॥

एवमुक्तप्रकारेण भुवं पृथिवीं वारि अप्सु, तदनले ता अपस्तेजसि, इमं मातरिश्वनि तेजो वायौ, अमुं खे वायुमाकाशे, तच्चित्ते आकाशं मनसि, तत्तु गर्वे मनोऽहङ्कारे, तमु धियि अहङ्कारं च बुद्धौ, धियमव्याकृते बुद्धिं प्राणतत्त्वे, तत् प्राणं परस्मिन् पुरुषाख्ये जीवतत्त्वे च क्रमेण संहृत्य आदिक्लृप्तैः आदिना प्रणवेन क्लृप्तैः प्राणायामैः क्रियादित्रयं क्रियां ज्ञानमिच्छामपि (निखिले) संविलाप्य तं पुरुषमपि विश्वोत्तीर्णं विश्वस्मादप्युत्तीर्णं प्रशान्तं प्रकर्षेण शान्तं निर्विकारतां प्राप्तम् आनन्दरूपं केवलानन्दस्वरूपं विदध्यात् ॥

**अथ** शिवे तु अव्याकृतान्ते प्राणाख्यगुणप्रकृतितत्त्वावसाने पुरुषादितत्त्वजातं पुरुषरागादितत्त्वसमूहं क्रमेण परस्मिन् जीवे विलाप्य प्राग्वत् प्रणवप्राणायामत्रयेण क्रियादित्रितयं च हृत्वा शिवं केवलं निर्विकारं निरतिशयानन्दं चादधीत । अत्र सर्वत्रायं संहारक्रियाक्रमः— गुरुः स्वस्य लिपिन्यासादिकं मन्त्रभावनां च कृत्वा शङ्खपूरणात्माराधनगुरुगणपतिपूजानन्तरं पाणितले

---

१. 'ते पुंस्यथैतत् ।' ग. पाठः. २. 'त्रितयमपि विलाप्यादिक्लृप्तैस्ततस्तं स्वात्मानं सुप्र' क. पाठः. ३. 'पि बुधो भावयेतात्मलेपु ॥' क. ग., 'पि पुनः कल्पयेत् तं यथावत् ॥' ख. पाठः. ४. 'लोमक्रमतः शिवे स्वम् । नीत्वा क्रि', ५. 'चं' ख. पाठः.

प्राग्वत् क्रियादित्रितयं[1] च हृत्वा
शिवे शिवं केवलमादधीत ॥ ३५ ॥
ईशेशाजितषण्मुखार्यगणपे संहृत्य तत्त्वानि ता-
न्येवं प्राङ् निजबीजवायुयमनैर्बिम्बे विसारे चरेत् ।

---

जलमादायाष्टशः प्रणवमावर्त्य 'ओं फडि'ति बिम्बं प्रोक्ष्य तालत्रयादि कृत्वा भूयः प्रोक्ष्य हृदयं स्पृष्ट्वा अष्टवारं प्रणवमावर्तयन् जीवव्याप्तिमेकीकृत्य नाडीसन्धानं कृत्वा पुष्पयुताभ्यां कराभ्यां तच्चैतन्यमात्मनि प्लुतप्रणवेनोद्वास्य प्रणवप्राणायामेन सामरस्यं विधाय तद्बिम्बस्य पादाग्रनाभिहृदयकण्ठतालुषु घ्राणादिभिर्ज्ञानेन्द्रियैरुपस्थादिभिः कर्मेन्द्रियैश्च पञ्चचतु(स्त्रि?स्त्रिद्व्ये)कक्रमेण शब्दादिगुणैः पृथग् युक्तानि पृथिव्यप्तेजोवाय्वाकाशानि क्रमेण कल्पयित्वा स्वस्वपञ्चतत्त्वबीजाद्यैः 'नमः पराय पृथिव्यात्मने हुंफट्' इत्यादिभिर्मन्त्रैः तत्तद्वर्णस्थाने दर्भं स्पृशन् स्वस्वगुणसंख्यातः प्राणायामान् कुर्वन् तानि भूतानि तत्तन्मात्रासु विलाप्य संहारक्रमेण स्थितैः स्वस्वपञ्चतत्त्वमन्त्रैस्तत्तत्स्थानाद्यूर्ध्वस्थानान्तं व्यापकं कुर्वन् तन्मात्राश्च विलापयेत् । एवं पञ्चभूतानि संहृत्य ताल्वूर्ध्वभागतश्चतुरङ्गुलमितस्थानगते मनसि शब्दतन्मात्राः संहृत्य 'ओं हुं फडि'ति सकृत् प्राणायामं कृत्वा 'ओं नम' इति व्यापयन् मनस्तदूर्ध्वगतेऽहङ्कारे एवमेव प्राणायामं व्यापकं च कुर्वन्नहङ्कारं बुद्धिं प्राणं च जीवसंज्ञे पुरुषे संहृत्य प्रणवेन त्रीन् प्राणायामान् कुर्वंस्तस्य क्रियाशक्तिं ज्ञानशक्तिमिच्छाशक्तिं च विलाप्य तमानन्दरूपं भावयेदिति सकलदेवेषु । अथ शिवे 'ह्रां नमः शिवाय पृथिव्यात्मने हुंफट्' इत्यादिभिर्मन्त्रैः प्राणायामः । 'ह्रां नमः शिवाय निवृत्त्यात्मने नम' इत्यादयो व्यापकमन्त्राः । एवं सामान्यप्रकारेण बुद्धितत्त्वान्तं संहृत्य बुद्धिं गुणप्रकृतौ, तां पुरुषे, पुरुषं रागतत्त्वे, तमशुद्धविद्यायां, तां कलायां, तां नियतितत्त्वे, तत् काले, तं मायायां, तां शुद्धविद्यायां, तामीश्वरे, तं सदाशिवे, तं शक्तौ, तां शिवे च संहृत्य प्रणवप्राणायामत्रयेण क्रियादित्रयमपि संहृत्य शिवं केवलानन्दस्वरूपं भावयेदिति ॥ ३५ ॥

एवं संहारमुक्त्वा शोषणादीनां क्रमभेदमाह — **ईशेशे**ति । ईशेशाजितषण्मुखार्यगणपे ईशादिषु पञ्चसु देवेषु तानि तत्त्वानि एवं प्राक् संहृत्य

---

१. 'यं विलाप्य शि', २. 'शुद्धतरं बिदध्यात् ॥' ख. पाठः.

शोषप्लोषसमाप्लवान् हरिकुमार्योस्तानि शोषादिभिः
शोधंशोधमनुक्रमेण परमे संयोजयेदात्मनि ॥ ३६ ॥

शोषप्लोषाप्लवनमवनेः[1] शोषदाहौ ततोऽपां
शोषं वह्नेस्तदनु सुषिरीकारमीरस्य[2] कुर्यात् ।
व्योमादीनां प्रणवपवनायामतः कारणेन
स्वेन स्वेन स्वहृतिसमये भावयेत् सामरस्यम् ॥ ३७ ॥

ततस्त्रिभिस्तारसमीररोधनै-
रिच्छामयीं ज्ञानमयीं क्रियामयीम् ।
तिस्रोऽस्य शक्तीरनयोर्विभावयेत्
परेषु ताः प्राङ्[3] निजसृष्ट्युपक्रमे ॥ ३८ ॥

---

विसारे बिम्बे निजबीजवायुयमनैः क्रमेण वाय्वग्न्यमृतबीजप्राणायामैः शोषप्लोषसमाप्लवान् शोषणदहनप्लावनानि चरेत् आचरेत् । हरिकुमार्योस्तानि भूतानि शोषादिभिः शोषणादिभिः शोधंशोधं शोधयित्वा शोधयित्वानुक्रमेण परमे आत्मनि संयोजयेत् ॥ ३६ ॥

तत्प्रकारमाह — शोषप्लोषेति । अवनेः पृथिव्याः शोषप्लोषाप्लवनं शोषणदहनप्लावनानि कुर्यात् । ततोऽपां शोषदाहौ च । वह्नेस्तेजसः शोषं च । तदनु ईरस्य वायोः सुषिरीकरणं च । व्योमादीनामाकाशादीनां स्वहृतिसमये स्वस्वसंहारकाले प्रणवपवनायामतः प्रणवप्राणायामेन स्वस्वकारणेनैक्यभावनं चावगन्तव्यम् ॥ ३७ ॥

ततः स्वसृष्ट्यारम्भे अनयोः विष्णुदुर्गयोः त्रिभिः तारसमीररोधनैः प्रणवप्राणायामैः अस्य आत्मनः इच्छामयीं ज्ञानमयीं क्रियामयीं च तिस्रः शक्तीर्विभावयेत् । परेषु शिवादिषु पञ्चसु ताः तिस्रः शक्तीः निजसृष्ट्युपक्रमे निजनिजसृष्ट्यारम्भे प्राक् जगदण्डकल्पनात् पूर्वं विभावयेत् विशेषेण भावयेत् ॥ ३८ ॥

---

१. 'षाप्लवनमथ कुर्याद् यथोक्तं स्वबीजैः शर्वस्कन्दादिषु हरिकुमार्योस्तु विद्वानपीतौ ॥', २. 'ष', ३. 'प्लवनकर्मतः परम् ॥' क. ग. पाठः.

एकद्वित्रिचतुःशिलीमुखमितान् प्राणानुरोधांश्चरन्
मूर्त्यन्तैरिषुतत्त्वकैः सृजतु मूर्तीर्वासुदेवादिकाः।
पूर्णज्ञानकृतेः प्रजापतिसमाख्यानात् तु नारायणा-
दम्भोऽपूर्वमयं सृजेत् प्रणवतो लक्ष्मीशसुम्भद्विषोः॥

तयोरपूर्वाम्भसि भूमिबीजतः
परेष्वपि प्लावनवारि भावयेत्।
तद्बुद्बुदाभं जगदण्डमुत्थितं
भूतात्मकं तद् द्युतिमद्धिरण्मयम्॥ ४०॥

तदेतदण्डं प्रणवेन बिम्बं
प्रकल्प्य तेनैव निजात्मनीताम्।
तज्जीवशक्तिं प्रतिसंक्रमय्य
सतारशक्त्या प्रणयेत् तदैक्यम्॥ ४१॥

---

लक्ष्मीशसुम्भद्विषोः मूर्त्यन्तैः वासुदेवादिमूर्त्यवसानैः इषुतत्त्वकैः पञ्चतत्त्वैः 'ओं षों नमः पराय परमेष्ठ्यात्मने नमः' इत्यादिभिः एकद्वित्रिचतुःशिलीमुखमितान् एकद्वित्रिचतुष्पञ्चसंख्याकान् प्राणानुरोधान् प्राणायामांश्चरन् वासुदेवादिकाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणाख्याः मूर्तीः सृजतु। पूर्णज्ञानकृतेः पूर्णज्ञानं क्रिया च यस्य तस्मात् प्रजापतिसमाख्यानात् प्रजापतिनाम्नः नारायणाद् अपूर्वमयं जगत्सृष्टेः कारणभूतम् अम्भः प्रणवतः प्रणवप्राणायामेन सृजेत्॥ ३९॥

तयोः विष्णुदुर्गयोः अपूर्वाम्भसि परेषु शिवादिपञ्चसु प्लावनवारि प्लावनजलेऽपि भूमिबीजतः पृथिवीबीजप्राणायामेन तद्बुद्बुदाभं तस्याम्भसो बुद्बुदाकारं जगदण्डमुत्थितं भावयेत्। तद् भूतात्मकं पञ्चभूतमयं द्युतिमत् कान्तिमत् हिरण्मयं च भावयेत् कल्पयेत्। भूतात्मकमित्यनेन क्वचित्पक्षे पार्थिवशक्तेरनुप्रवेशनात् पूर्वं सृष्टिक्रमात् स्वस्वपञ्चतत्त्वैर्गुणसंख्यातः प्राणायामैस्तस्य बुद्बुदस्य पञ्चभूतात्मकत्वं सम्पाद्यमिति सूचितम्॥ ४०॥

पुनः प्रणवप्राणायामेन तदेतज्जगदण्डं बिम्बं प्रकल्प्य तेनैव प्लुतप्रणवेन निजात्मनीतां गुरोः स्वस्यात्मनि प्राक् प्रापितां तज्जीवशक्तिं तस्य बिम्बस्य जीवशक्तिं प्रतिसंक्रमय्य प्रतियोज्य सतारशक्त्या सतारया भुवनेश्वर्या प्राणायामेन तदैक्यं तद्बिम्बेनैक्यं प्रणयेत्॥ ४१॥

जीवाद्यैः सकलेषु शूलिनि शिवाद्यैर्वक्ष्यमाणक्रमात्
तत्तत्सर्गधिया नियम्य मरुतं स्वैस्तत्त्वमन्त्रैः पृथक् ।
तत्स्थं जीवमवाप्तकार्यकरणोन्मेषं विभाव्याथ तं
षष्ट्याढ्यत्रिशतध्रुवासुयमनेनाब्दोषितं भावयेत् ॥ ४२॥
फट्कारान्तनिरञ्जनेन परिभिद्याण्डं स्मरेद् रोदसी
चोभे तच्छकले तदन्तरविराजन्तं प्रजानां पतिम् ।
एनं विश्वजनीनमेव पुरुषं ध्यात्वा नियम्यानिलं
लिप्या न्यस्य मनूदयादिनिजपीठन्यासनिष्ठं चरेत् ॥
मूलाणुनासुयमनं प्रविधाय तेन
व्यापय्य तारपुटितेन सुधीस्त्रिवारम् ।
न्यस्यार्णतत्त्वमनुवर्णतदङ्गकानि
योगासनार्चनमपि प्रकरोतु तस्मिन् ॥ ४४ ॥

---

**सकलेषु** जीवाद्यैः जीवतत्त्वाद्यैः शूलिनि शिवाद्यैः स्वैः स्वैरखिलैस्तत्त्वमन्त्रैर्वक्ष्यमाणक्रमात् सृष्टिक्रमेण तत्तत्सर्गधिया तत्तत्सृष्टिबुद्ध्या पृथङ् मरुतं प्राणं नियम्य तत्स्थं बिम्बस्थं जीवम् अवाप्तकार्यकरणोन्मेषं प्राप्तसर्वावयवोन्मेषं विभाव्य अथ (तं) षष्ट्याढ्यत्रिशतध्रुवासुयमनेन षष्ट्यधिकत्रिशतप्रणवप्राणायामेन अब्दोषितं प्राप्तसंवत्सरपरिपाकं च भावयेत् ॥ ४२ ॥

**फट्कारान्तनिरञ्जनेन** फडन्तप्रणवेन अण्डं परिभिद्य अण्डभेदं कृत्वा उभे तच्छकले च रोदसी द्यावापृथिव्यौ भावयेत् । तदन्तरविराजन्तं द्यावापृथिव्योरन्तर्भागे शोभमानमेनं प्रजानां पतिं विश्वजनीनं सर्वजनहितकारिणं पुरुषमेव ध्यात्वा लिप्यानिलं नियम्य लिपिं न्यस्य मनूदयादिनिजपीठन्यासनिष्ठं पूजापटले वक्ष्यमाणक्रमेण मन्त्रोदयादिपीठन्यासान्तमाचरेत् ॥

**मूलाणुना** असुयमनं प्राणायामं प्रविधाय तारपुटितेन तेन मूलेन त्रिवारं व्यापय्य ततः अर्णतत्त्वमनुवर्णतदङ्गकानि लिपितत्त्वमन्त्राक्षरतदङ्गानि च न्यस्य योगासनार्चनमपि पीठपूजामपि तस्मिन् बिम्बे प्रकरोतु । अत्रायं सृष्टिक्रमः — शिवादिषु पञ्चसु संहारानन्तरं वाय्वग्न्यमृतबीजैः शोषणादीनि

---

१. 'तनोतु' इति मूलकोशपाठः.

**बिम्बे स्वमूर्तियुजि तत्र पृथक् प्रसूनै-**
**स्तत्त्वानि तानि मनुवित् क्रमशोऽभिवाह्य।**
**व्यापय्य तत्त्वमनुना वितनोतु तेन**
**तेन प्रसूनयजनं सुसमाहितात्मा ॥ ४५ ॥**

**तत्त्वानि षट्कृतिमितानि शिवे शिवश्च**
**शक्तिः सदाशिवयुतेश्वरशुद्धविद्ये ।**

---

कृत्वा प्रणवप्राणायामत्रयेण शक्तित्रयं च सृजेत् । विष्णुदुर्गयोस्तु प्रागुक्तक्र-मेण शोषणादिभिः सहैव संहारानन्तरं शक्तित्रयं सृष्ट्वा मूर्त्यन्तैः पञ्चतत्त्वैः स्वस्वगुणसंख्यातः प्राणायामान् कुर्वन् मूर्तीः सृष्ट्वा नारायणादपूर्वाम्भः परिभावयेत् । एवं तयोरपूर्वाम्भसि परेषु प्लावनजले च पृथिवीबीजप्राणायामेन जगदण्डं स्मृत्वा तदण्डं बिम्बं परिकल्प्य प्लुतप्रणवेन निजात्मगतां जीवशक्तिं संयोज्य प्रणवशक्तिभ्यामैक्यं परिभाव्य सर्वेषु स्वैः स्वैः सकलैस्तत्त्वैः सकृ-त्सकृत् प्राणायामं कुर्वंस्तस्य सर्वावयवपरिपूर्णत्वं स्मृत्वा प्रोक्तक्रमात् संवत्सर-परिपाकं च कृत्वा फडन्तप्रणवेनाण्डं भित्त्वा तच्छकले द्यावापृथिव्यौ च क-ल्पयित्वा तदन्तः परिपूर्णं देवं संकल्प्य लिपिप्राणायामलिपिन्यासमन्त्रोदयादि पीठन्यासान्तं विधाय मूलप्राणायामं मूलव्यापकं च कृत्वा लिपितत्त्वमन्त्राक्ष-राङ्गानि न्यस्य पीठपूजां च कुर्यादिति ॥ ४४ ॥

अथ तत्त्वावाहनमाह — सुसमाहितात्मा मनुवित् तत्त्वमन्त्रविशेषज्ञः स्वयं समाहितो भूत्वा स्वमूर्तियुजि पीठपूजानन्तरं मूर्त्यावाहनं कृत्वा तत्र बिम्बे प्रसूनैस्तानि सर्वाणि तत्त्वानि क्रमशः सृष्टिक्रमेण पृथक् पृथगावाह्य तदा तदा तत्तत्तत्त्वमनुना व्यापय्य तदा तदा तत्तत्तत्त्वमन्त्रेण प्रसूनयजनं पुष्पाञ्जलिं च वितनोतु ॥ ४५ ॥

अथ तत्त्वमन्त्रानाह — तत्त्वानीति । शिवे षट्कृतिमितानि षट्त्रिं-शत्संख्यानि तत्त्वानि । कानि पुनस्तानि, शिवश्च शक्तिश्च सदाशिवयुतेश्वर-शुद्धविद्ये सदाशिवः ईश्वरः शुद्धविद्या च माया च कालनियती च कालो नि-

---

१. 'प्रोक्त', २. 'था तत्त' ख. पाठः.

माया च कालनियती च कलाप्यशुद्ध-
विद्या च रागपुरुषौ च गुणप्रकृत्या ॥ ४६ ॥

सबुद्ध्यहङ्कारमनांसि मात्रा-
ज्ञानक्रियार्थेन्द्रियपञ्चकानि।
भूतानि पञ्चेति समीरितानि
तानीह मात्रादिगणान् वदामि ॥ ४७ ॥

शब्दस्पर्शौ रूपं रसगन्धौ चापि पञ्च तन्मात्राः।
श्रोत्रं त्वक् चक्षुरथो जिह्वा घ्राणं च बुद्धिकरणानि ॥ ४८ ॥

वाक्पाणिपादपायूपस्थाख्यानीह कर्मकरणानि।
आकाशवायुतेजांस्यापः पृथिवी च पञ्च भूतानि ॥ ४९ ॥

नादं बिन्दुसदाशिवौ प्रथमतोऽतः शुद्धविद्याभिधं
तत्त्वं पञ्चममात्मतत्त्वमथ मायाकालतत्त्वे कलाम्।

---

यतिश्च कला अशुद्धविद्या च रागपुरुषौ रागः पुरुषश्च गुणप्रकृत्या गुणप्रकृतिश्च सबुद्ध्यहङ्कारमनांसि बुद्धिः अहङ्कारो मनश्च मात्राज्ञानक्रियार्थेन्द्रियपञ्चकानि पञ्चतन्मात्राः ज्ञानक्रियार्थानि ज्ञानार्थानि क्रियार्थानि च पञ्चपञ्चेन्द्रियाणि पञ्च भतानि चेति तानि तत्त्वानि समीरितानि। इह तत्त्वेषु मात्रादिगणान् वदामि ॥ ४६, ४७ ॥

शब्दस्पर्शौ द्वौ रूपं रसगन्धौ च द्वौ एताः पञ्च तन्मात्राः। अथो श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणं च बुद्धिकरणानि ज्ञानेन्द्रियाणि। वाक्पाणिपादपायूपस्थानि पञ्च कर्मकरणानि कर्मेन्द्रियाणि। आकाशवायुतेजांसि आपः पृथिवी च पञ्च भूतानि ॥ ४८, ४९ ॥

अथ परे आचार्याः अत्र प्रथमतो नादं बिन्दुसदाशिवौ च अतः शुद्धविद्याभिधं तत्त्वं पञ्चममात्मतत्त्वं मायाकालतत्त्वे मायातत्त्वं कालतत्त्वं च कलां

---

१. 'ज्ञाना' क. पाटः.

**तत्त्वान्यत्र समामनन्ति नियतिं चाशुद्धविद्यां परे**
**रागाव्यक्तगुणात्मकान्यथ च बुद्धयादित्रयोविंशतिम् ॥**

**नादः शिवे क्षादिकपश्चिमानि**
**शेषेषु बीजान्यथवाणुवर्णैः ।**
**शुद्धेषु हौं ह्रीमजपा हसौ च**
**षाद्यन्यतस्त्रैगुणिके त्रिदीर्घम् ॥ ५१ ॥**

**जीवप्राणौ पुंस्प्रकृत्यन्यसंज्ञौ**
**बुद्धयादीनि स्युस्त्रयोविंशतिश्च ।**
**तत्त्वानीत्यन्येषु तत्त्वोन्मितानि**
**बीजान्येषां मादिकान्ताक्षराणि ॥ ५२ ॥**

---

नियतिं च अशुद्धविद्यां रागाव्यक्तगुणात्मकानि रागमव्यक्तं गुणप्रकृतिं च अथ बुद्धयादित्रयोविंशतिं च तत्त्वानि समामनन्ति कल्पयन्ति ॥ ५० ॥

अथ पूर्वोक्तानां तत्त्वानां बीजान्याह — **नाद** इति । शिवे शिवतत्त्वे नादः प्रासादमन्त्रो बीजम् । शेषेषु शक्त्यादितत्त्वेषु क्षादिकपश्चिमानि क्षकारादिप्रातिलोम्येन ककारान्तानि बीजानि । अथवा शुद्धेषु शिवशक्तिसदाशिवेश्वरशुद्धविद्यासु अणुवर्णैः पञ्चाक्षराक्षरैरेकैकेन युक्तानि हौं ह्रीं अजपा हंस इति हसौ हकारः सकारश्च बीजानि । अन्यतो मायादिषु षादि षकारादिककारान्तानि बीजानि । त्रैगुणिके गुणप्रकृत्यां तु त्रिदीर्घं दीर्घत्रययुक्तो भकारः भां भीं भूं इति ॥ ५१ ॥

अन्येषु देवेषु पुंस्प्रकृत्यन्यसंज्ञौ पुरुषः प्रकृतिश्चेत्यन्ये संज्ञे ययोस्तौ जीवप्राणौ, बुद्धयादीनि त्रयोविंशतिश्चेति तत्त्वोन्मितानि पञ्चविंशतिसंख्यानि तत्त्वानि स्युः । एषां तत्त्वानां मादिकान्ताक्षराणि मकाराद्यानि ककारान्तानि अक्षराणि बीजानि ॥ ५२ ॥

---

१. 'तो ह्रामिति नाशिलेद्र ॥' ख. पाठः. २. 'ते' क. ख. पाठः.

हृत्पुण्डरीकमितशं हंसंरमितानि मण्डलान्यखिले ।
स्युः सूर्यसोमवह्न्यादीन्यर्कविकारदिक्कलावन्ति ॥ ५३ ॥
प्राञ्च्येव पञ्च परमेष्ठिमुखानि विष्णौ
सेशादिकानि शिवशाङ्गिणि तान्यथ स्युः ।
श्रेष्ठादिकानि महिषद्विषि शान्त्यतीता-
ख्यादीनि शेषविबुधेष्विह तत्त्वकानि ॥ ५४ ॥
साग्निमनुस्वरबिन्दुस्फुरितान्त्यार्णैकबीजमजितादौ ।
कुहचित् कोपमयं च स्यादन्ते नारसिंहमपि तत्त्वम् ॥ ५५ ॥

---

**अखिले** हृत्पुण्डरीकम् इतशं युक्तशं बीजं 'शं नमः पराय हृत्पुण्डरीकात्मने नमः' इत्यादि । मण्डलानि हंसंरमितानि हं सं रं इति बीजैरन्वितानि सूर्यसोमवह्न्यादीनि मण्डलशब्दात् प्राक् सूर्यसोमवह्निशब्दयुक्तानि अर्कविकारदिक्कलावन्ति द्वादशषोडशदशपदसहितानि । 'हं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने नमः' इत्यादयो मन्त्राः स्युरित्यर्थः ॥ ५३ ॥

**इह सृष्टौ** विष्णौ प्राञ्च्येव प्राग्भवान्येव पञ्च तत्त्वानि परमेष्ठिमुखानि 'षों नमः पराय परमेष्ठ्यात्मने नमः' इत्यादीनीति विशेषः । शिवशाङ्गिणि सेशादिकानि ईशानादियुक्तानि 'ओं हौं षों[1] नमः पराय ईशानाय परमेष्ठ्यात्मने नमः' इत्यादीनि । महिषद्विषि श्रेष्ठादिकानि 'षों[2] नमः पराय श्रेष्ठाशक्त्यात्मने नमः' इत्यादीनि । शेषविबुधेषु शिवादिषु शान्त्यतीताख्यादीनि 'ओं हौं नमः शिवाय शान्त्यतीतात्मने नमः' इत्यादीनि तत्त्वकानि स्युः ॥ ५४ ॥

**अजितादौ** कुहचिद् अन्ते अवसाने साग्निमनुस्वरबिन्दुस्फुरितान्त्यार्णैकबीजम् अग्निः रेफं मनुस्वर औकारः बिन्दुरनुस्वारः एतैः सह स्फुरितोऽन्त्यार्णः क्षकारः प्रधानबीजं यस्य 'क्ष्रौंम्' इति नारसिंहं नरसिंहदेवत्यं कोपमयं कोपस्वरूपं च तत्त्वं स्यात्, कोपतत्त्वमित्यर्थः ॥ ५५ ॥

---

१., २. 'षौं' क. पाठः,

स्वमूलषष्ठवर्णेन युक्तं क्षेत्रज्ञसंज्ञितम् ।
पञ्चतत्त्वान्ततो योज्यं तत्त्वं शरवणोद्भवे ॥ ५६ ॥

तत्त्वोपोद्बलकेन स्वकीयमहसा सुयोज्य मूलेन ।
त्रिर्व्याप्य तत्त्वकानि स्वमूलवर्णाङ्गकानि च न्यस्येत् ॥

सर्वाङ्गीणं प्रकृतिचरमं बुद्धिपूर्वं त्रयं हृ-
न्मध्ये शब्दादिकगुणगणं कास्यहृद्गुह्यपत्सु ।
स्वीये स्वीये न्यसतु च पदे श्रोत्रवागादिकाक्ष-
ग्रामं व्योमादिकमपि गणं कास्यहृद्गुह्यपत्सु ॥

हृत्पुण्डरीकादिचतुष्कमत्र
हृदीषुतत्त्वानि च कादिगानि ।
कोपाणुना व्यापकमेतदर्हे
क्षेत्रज्ञतत्त्वेन गुहे च कुर्यात् ॥ ५९ ॥

---

शरवणोद्भवे स्कन्दे सर्वत्रापि पञ्चतत्त्वान्ततः स्वमूलषष्ठवर्णेन स्वमूलस्य षष्ठाक्षरेण मकारेण युक्तं क्षेत्रज्ञसंज्ञितं तत्त्वं योज्यम् ॥ ५६ ॥

तत्त्वोपोद्बलकेन तत्त्वानां सामर्थ्ययोजकेन स्वकीयमहसा स्वीयस्वीयमूलमन्त्रवीर्येण सुयोज्य मूलेन त्रिर्व्याप्य तत्त्वकानि स्वमूलवर्णाङ्गकानि च न्यसेत् ॥ ५७ ॥

तत्त्वन्यासमाह — सर्वाङ्गीणमिति । प्रकृतिचरमं शिवे शिवतत्त्वादि गुणप्रकृत्यन्तं त्रयोदशकं, विष्ण्वादिषु जीवप्राणौ च सर्वाङ्गीणं सर्वाङ्गव्यापकत्वेन न्यसतु । बुद्धिपूर्वं त्रयं बुद्ध्यहंकारमनांसि हृन्मध्ये, शब्दादिकगुणगणं शब्दादितन्मात्रापञ्चकं कास्यहृद्गुह्यपत्सु मूर्धाननहृदयगुह्यपादेषु श्रोत्रवागादिकाक्षग्रामं श्रोत्रादिक वागादिकं चेन्द्रियगणं स्वीये स्वीये पदे स्थाने च व्योमादिकमपि गणं कास्यहृद्गुह्यपत्सु च न्यसतु ॥ ५८ ॥

अत्र तत्त्वन्यासे हृत्पुण्डरीकादिचतुष्कं हृदि न्यसतु, इषुतत्त्वानि पञ्चतत्त्वानि च कादिगानि कास्यहृद्गुह्यपत्सु गतानि च । एतदर्हे विष्ण्वादौ कोपाणुना कोपतत्त्वेन व्यापकं कुर्यात्, गुहे क्षेत्रज्ञतत्त्वेन च ॥ ५९ ॥

---

१. न्यस्येदितीहाखिलतात्त्विकोऽध्वा कोपाणुसंव्याप्त्यवधिस्तदर्हे ॥ स्वमूलषष्ठाक्षरबीजकेन क्षेत्रज्ञतत्त्वेन च तत्त्वक्लृप्तौ । स्वपञ्चतत्त्वन्यसनोपरिष्टात् षडानने व्यापकमादधीत ॥ गां गीं क. पाठः.

तस्मिन् व्याससमासात्मकैर्निजैः पञ्चमन्त्रकैर्मन्त्री ।
परिकल्प्य लिङ्गदेहं व्याप्य करोतु स्वमन्त्रमहितमपि ॥ ६० ॥

तारोपचारसहितेन निजेन मूले-
नावाह्य तत्र परिदर्श्य तदीयमुद्राः ।
व्याप्यामुना न्यसतु मूलषडध्वकाद्यं
संपूजयेच्च कथयामि षडध्वनोऽथ ॥ ६१ ॥

आर्थाः कलातत्त्वजगत्स्वरूपाः
शाब्दास्त्रयो वर्णपदाणुरूपाः ।
एते षडध्वान इहाखिलेष्व-
थैकैः स्मृतास्तत्त्वकलाक्रमात् ते ॥ ६२ ॥

हौमादीशेषुतत्त्वप्रथमकथितबीजैः क्रमाच्छान्त्यतीतां
शान्तिं विद्यां प्रतिष्ठां न्यसतु च सकलाद्यात्मनेहृन्निवृत्तिम् ।

---

तस्मिन् तत्त्वावाहनन्यासादिभिः कृतस्थूलाङ्गभावे देवे व्याससमासात्मकैः व्यष्टिसमष्ट्यात्मकैः निजैः पञ्चमन्त्रैः लिङ्गदेहं सूक्ष्मदेहं परिकल्प्य आवाह्य व्याप्य व्यापकमन्त्रैश्च व्याप्य स्वमन्त्रमहितमपि करोतु । मन्त्रीति व्यष्टिसमष्ट्यावाहनादिमन्त्रज्ञ इत्यर्थः ॥ ६० ॥

ततो मन्त्रावाहनं कुर्यादित्याह — तारोपचारेति । तारोपचारसहितेन निजेन मूलेनावाह्य तदीयमुद्राः आवाहनादिमुद्राः परिदर्श्य अमुना मूलेन व्याप्य मूलषडध्वकाद्यं मूलमन्त्रसम्बन्धि षडध्वकाद्यं न्यसतु । यथोक्तविधिना संपूजयेच्च । अथ षडध्वनः कथयामि ॥ ६१ ॥

इहाखिलेषु कलातत्त्वजगत्स्वरूपाः कलास्तत्त्वानि भुवनानि च स्वरूपाणि येषां ते त्रयः आर्थाः अर्थात्मकाः, वर्णपदाणुरूपाः वर्णाः पदानि मन्त्राश्च स्वरूपाणि येषां ते त्रयः शाब्दाः शब्दात्मकाः एते षडध्वानः स्मृताः । आचार्यैरिति शेषः । अथैकैस्तैः[२] ते षडध्वानः तत्त्वकलाक्रमात् स्मृताः ॥६२॥

तत्र कलाध्वनि अखिलसुरवरेषु कादिस्थाने मूर्धास्यहृद्गुह्यपादेषु हौमादीशेषुतत्त्वप्रथमकथितबीजैः ईशस्य पञ्चतत्त्वेषु प्रथमं कथितैः हौं हैं हूं

---

१. 'णु' इति मूलकोशपाठः. २. 'कैः ते' क. पाठः.

**कादिस्थाने कलाध्वन्यखिलसुरवरेषु क्रमात् पञ्चकं त-**
**न्नादात्माद्यैर्नतेः प्राङ् नरकजिति युतं वासुदेवादिभिश्च ॥**
**तत्त्वानां रसकृत्या शरकृत्या वात्र तत्त्वाध्वा ।**
**वर्णाध्वा च समिष्टः पञ्चाशद्वर्णविन्यासः ॥ ६४ ॥**
**गां गीं गूं गणराजि वह्निभुवि वां वीं वूं प्रभावल्लभे**
**घ्रां घ्रीं घ्रूमिति वर्णकैर्मपरजैरीशेऽखिले वाथ तैः ।**
**व्याप्त्या न्यस्यतु भूर्भुवःस्वरिति मन्त्रानत्र लोकात्मने-**
**हृद्युक्तांश्चरणान्तराधिवदनेष्वध्वैष लोकात्मकः ॥ ६५ ॥**

**न्यस्येत् कटिद्वयूरुसजानुजङ्घा-**
**गुल्फाङ्गुलीपादतलेष्वविभ्याम् ।**

---

ह्रीं ह्रां इति बीजैः सह क्रमात् शान्त्यतीतां शान्तिं विद्यां प्रतिष्ठां निवृत्तिं च, सकलाद्यात्मनेहृदिति क्रियाविशेषणं, कलाशब्दादिभिरात्मने इत्यक्षरैर्हृदा नमसा च युक्तं यथा तथा न्यस[तु] । 'ओं ह्रौं शान्त्यतीतकलात्मने नमः' इत्यादिभिर्मन्त्रैरित्यर्थः । नरकजिति [वि]ष्णौ तत् पञ्चकं नतेः प्राक् नमश्शब्दात् पूर्वं नादात्माद्यैः नादात्मने विश्वात्मने मकारात्मने उकारात्मने अकारात्मन इति पञ्चभिरादिभूतैर्वासुदेवादिभिर्युतं च न्यसतु । 'ओं ह्रौं शान्त्यतीतकलात्मने नादात्मने वासुदेवाय नमः' इत्यादिभिरित्यर्थः ॥ ६३ ॥

अत्र तत्त्वाध्वनि तत्त्वानां रसकृत्या षट्त्रिंशता शरकृत्या पञ्चविंशत्या वा, शिवे चेत् षट्त्रिंशता इतरेषु चेत् पञ्चविंशत्या, तत्त्वाध्वा समिष्टः। मातृकायाः पञ्चाशद्वर्णविन्यासो वर्णाध्वा च ॥ ६४ ॥

भुवनाध्वानमाह — **गां गीमिति** । गणराजि गां गीं गूं इति, वह्निभुवि वां वीं वूं इति, प्रभावल्लभे घ्रां घ्रीं घ्रूं इति, ईशे मपरजैः प्रणवस्याकारोकारमकारैः, अथवा अखिले तैर्वर्णकैरक्षरैः बीजैः सह लोकात्मनेहृद्युक्तान् लोकात्मने नम इति युक्तान् भूर्भुवःस्वरिति मन्त्रान् 'ओं अं भूर्लोकात्मने नम इत्यादिमन्त्रान् चरणान्तराधिवदनेषु व्याप्त्या पादादिकट्यन्तं तदादिकण्ठान्तं तदादिमूर्धान्तं च व्याप्य [न्यस्य]तु । एष लोकात्मकोऽध्वा ॥ ६५ ॥

अजिते अन्यतश्च दुर्गादिषु क्वचित् कटिद्वयूरुसजानुजङ्घागुल्फाङ्गुलीपादतलेषु कट्यादिसप्तस्थानेषु सप्ततलानि न्यस्येत् । अविभ्यां सह 'अतलाय

तथा सुनिभ्यां च महारसाभ्यां
तलानि पातालमपि क्रमेण ॥ ६६ ॥

भूरादिसत्यचरमानपि सप्तलोका-
नाधारनाभिहृदयेषु गलास्ययोश्च ।
मध्येभ्रु मूर्धनि च विन्यसतु द्विसप्त-
लोकाध्वकोऽयमजिते कैचिदन्यतश्च ॥ ६७ ॥

*स्वस्वमूलाणुपुटितैर्मातृकार्णैः प्रविन्यसेत् ।
यथास्थानमशेषेषु वर्णाध्वायमिहोदितः ॥ ६८ ॥

तुरीयपूर्वाणि हरावुमेशे व्योमाणुजातानि निसुम्भहन्त्याम् ।
जातादिजातानि पदाध्वनि स्युः पदानि शेषेषु जिनार्णजानि ॥

सात्माष्टाक्षरवर्णयुक् चरणतः कट्या हृदः कण्ठतो
जाग्रत्स्वप्नसुषुप्तिभिः सह तुरीयेणापि युक्तं क्रमात् ।

---

नमः' 'वितलाय नमः' तथा सुनिभ्यां च 'सुतलाय नमः' 'नितलाय नमः' महारसाभ्यां 'महातलाय नमः' 'रसातलाय नमः' पातालमपि 'पातालाय नमः' इति क्रमेणेत्यर्थः । पुनराधारनाभिहृदयेषु गलास्ययोश्च मध्येभ्रु भ्रूमध्ये मूर्धनि च भूरादिसत्यचरमान् सप्तलोकानपि विन्यसतु । अयं द्विसप्तलोकाध्वकः चतुर्दशलोकाध्वा उदितः ॥ ६६, ६७ ॥

पुनरुक्तवर्णाध्वानन्तरं पदाध्वानमाह — तुरीयपूर्वाणीति । पदाध्वनि हरौ तुरीयपूर्वाणि, उमेशे व्योमाणुजातानि, निसुम्भहन्त्र्यां जातादिजातानि 'जातवेदसे सुनवामे'त्यसाज्जातानि, शेषेषु जिनार्णजानि निजनिजगायत्रीसंभूतानि पदानि स्युः ॥ ६९ ॥

उक्तमेतद् विवृणोति — सात्माष्टाक्षरेत्यादिभिः । अत्र पदात्मनेर्णमिति विशेष्यपदम् । सात्माष्टाक्षरवर्णयुक्, 'ओं ह्रीं हंसः सोऽहं स्वाहा' इत्यात्माष्टाक्षरमन्त्रः, तस्य वर्णानां युग्भिर्युग्मैः सहितं, जाग्रत्स्वप्नसुषुप्तिभिः सह

---

१. 'गिरिहरौ विशेषात् ॥' ख. पाठः. २. 'श्च ॥ तुरी' क. पाठः. ३. 'हरौ तुरीयादिपदान्युमेशे' ख. पाठः. ४. 'पादाऊर्ध्वपरात्मशक्ति गमरं क' क. पाठः.

---

* अस्य श्लोकस्य व्याख्या मातृकासु नोपलभ्यते ।

न्यस्येद् व्याप्य पदात्मनेर्णमनिरुद्धाद्यैश्चतुर्थीनमो-
निष्ठैश्चेति लये तुरीयमनुपूर्वश्चोदयेऽयं क्रमः ॥ ७० ॥

के प्राच्यादिदिशासु फालचिबुकदृक्छ्रुन्नःकपोलास्यके
कास्यात्मान्धुपदद्वयेषु करपत्सन्ध्यग्रशाखासु च ।
वामे कश्रवणांसपार्श्वकटिषु व्युत्क्रामतोऽन्यत्र दोः-
पत्सूर्वोर्नसि.के च दोर्युजि पदैर्व्योमाणुजैर्विन्यसेत् ॥ ७१ ॥

मूर्धालिकाक्षियुगकर्णयुगोष्ठजिह्वा-
कण्ठेषु कक्षहृदि कुक्षिकटीतटे च ।
आद्यापदानि सशिखोरुसजानुजङ्घा-
पादेषु विन्यसतु मन्त्रितमः क्रमेण ॥ ७२ ॥

---

तुरीयेणापि च युक्तं, चतुर्थीनमोनिष्ठैः चतुर्थ्येकवचननमोन्तैः अनिरुद्धाद्यैः अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवैः सह पदात्मनेर्णं 'ओं ह्रीं जाग्रत्पदात्मने अनिरुद्धाय नमः' इत्यादिकं चरणतः कट्यन्तं, कट्या हृदन्तं, हृदः कण्ठान्तं, कण्ठतो मूर्धान्तं च क्रमाद् व्याप्य न्यस्येद् इति लये संहारन्यासे । उदये सृष्टौ तु तुरीयमनुपूर्वश्चायं क्रमः स्यात् ॥ ७० ॥

शिवे व्योमाणुजैः महाव्योमव्यापिमन्त्रजातैः पदैः के मूर्धनि प्राच्यादिदिशासु शिरसः प्रागादिदिक्षु फालचिबुकदृक्छ्रुन्नःकपोलास्यके फाले चिबुके दृशोः श्रवणयोर्नसोः कपोलयोरास्यके वक्त्रे च कास्यात्मान्धुपदद्वयेषु मूर्धास्यहृदयगुह्यपादद्वयेषु करपत्सन्ध्यग्रशाखासु च करयोः पदयोश्च सन्धिष्वग्रेषु शाखासु वामे वामभागे कश्रवणांसपार्श्वकटिषु पञ्चसु अन्यत्र दक्षिणे व्युत्क्रामतः कटिपार्श्वांसश्रवणशिरस्सु दोःपत्सु करद्वये पदद्वये च ऊर्वोः नसि के च दोर्युजि करयोश्च विन्यसेत् ॥ ७१ ॥

अथ दुर्गायां मन्त्रितमः त्रिष्टुभः पदच्छेदे प्रणवनमसोर्योजने च कुशलः आद्यापदानि त्रिष्टुभः पादानि क्रमेण मूर्धालिकाक्षियुगकर्णयुगोष्ठजिह्वाकण्ठेषु मूर्ध्नि फाले नेत्रयोः कर्णयोरोष्ठजिह्वाकण्ठेषु नव पदानि, कक्षहृदि कुक्षिकटीतटे च चत्वारि, सशिखोरुसजानुजङ्घापादेषु पञ्च इत्यष्टादशपदानि विन्यसतु ॥७२॥

---

१. 'मूर्ध्नि दोषि(?)णि च प' ग. पाठः.

के फालदेशे चिबुककण्ठनाभावूरुद्वये जानुपदद्वये च ।
न्यस्येत् पदान्यष्ट यथाक्रमेण तत्तज्जिनार्णाणुसमुद्भवानि ॥
कालिकपुष्करकर्णेष्वास्यगलांसात्मनाभिगुह्येषु ।
जानुद्वयाङ्घ्रिपृष्ठे ककुदि गणानां पदैर्न्यसेद् गणपे ॥ ७४ ॥
मन्त्राध्वा पौरुषैः स्यान्मुरजिति गिरिशे पञ्चभिर्ब्रह्मभिस्तैः
शार्ङ्गीशे जातपूर्वैर्महिषजिति तमर्वन्तमाद्यैः कुमारे ।
भूतेशे यात ऊत्यादिभिरथ गणराजे गणानामृचाथो
गायत्र्या मूर्तिमन्त्रैरपि पुरमुरजित्पूर्वकेषु स्वकीयैः ॥ ७५ ॥
वामाङ्गाद्यं करचरणजानूरुयुग्मेषु नाभौ
हृत्कण्ठांसद्वितयवदनाक्ष्युत्तमाङ्गेषु मन्त्री ।

---

सर्वेषु तत्तज्जिनार्णाणुसमुद्भवानि तस्य तस्य गायत्रीसंभूतानि अष्टपदानि के फालदेशे मुखकण्ठनाभिषु ऊरुद्वये जानुद्वये पादद्वये यथाक्रमेण न्यस्येत् ॥ ७३ ॥

गणपे 'गणानां त्वे'त्यृचः सप्तदशपदैः कालिकपुष्करकर्णेषु मूर्ध्नि ललाटे शुण्डायां च कर्णयोश्च आस्यगलांसात्मनाभिगुह्येषु आनने कण्ठे अंसयोर्हृदये नाभौ गुह्ये च जानुद्वयाङ्घ्रिपृष्ठे, जानुद्वयेति द्वयशब्दप्रयोगादेकमेव स्थानं, पुनरङ्घ्रियोः पृष्ठे च ककुदि च क्रमेण न्यसेत् ॥ ७४ ॥

मन्त्राध्वानमाह — मन्त्राध्वेति । मुरजिति पौरुषैः पुरुषसूक्तस्य ऋग्भिर्मन्त्राध्वा स्यात् । गिरिशे पञ्चभिर्ब्रह्मभिः, शार्ङ्गीशे तैः पञ्चब्रह्मभिः, महिषजिति जातपूर्वैः 'जातवेदस' इत्यादिपञ्चदुर्गाभिः, कुमारे तमर्वन्तमाद्यैः 'तमर्वन्तामि'त्यादिपञ्चभिः ऋग्भिः, भूतेशे 'यात ऊत्या'दिभिः पञ्चभिः ऋग्भिः, अथ गणराजे 'गणानामृ'चा, पुरमुरजित्पूर्वकेषु शिवनारायणादिषु गायत्र्या स्वस्वगायत्र्या स्वकीयैर्मूर्तिमन्त्रैरपि मन्त्राध्वा स्यात् ॥ ७५ ॥

तद् विवृणोति — वामाङ्गाद्यमित्यादिभिः । पुंसूक्तोत्थैः पुरुषसूक्तभवैः षोडशमन्त्रैः संहृतौ संहारन्यासे करचरणजानूरुयुग्मेष्वष्टसु नाभौ हृत्कण्ठांस-

---

१. 'मूर्ध्नीक्षणास्ये हृदि नाभिदेशे गुह्याह्वये जा' ख पाठः. २. 'थे' इति मूलकोशपाठः.
३. 'नां पुरोगैर्गौश्च' क. ग. पाठः.

पुंसूक्तोत्थैर्न्यसतु मनुभिः संहृतौ शीर्षपूर्वं
सृष्टौ नाभिप्रभृतिहृदयान्तं स्थितौ च क्रमेण ॥ ७६ ॥

न्यस्येन्निजान् वैदिकपञ्चमन्त्रान्
कास्यात्मगुह्याङ्घ्रियुगेष्वशेषे ।
केन्द्रार्किसोमाप्यमुखेष्वपीशा-
नादीञ्छिवेऽङ्गुष्ठमुखाङ्गुलीभिः ॥ ७७ ॥

दिक्षु प्राग्याम्यवारीड्वसुपनिजभुवामैन्द्रवारार्किराज्ञां
हृद्ग्रीवांसद्वयीनाभ्युदरचरमवक्षस्सु गुह्याण्डयोश्च ।
सोर्वोर्जान्वोः सजङ्घास्फिगुभयकटिपार्श्वेषु पद्मोस्तलेषु
घ्राणे कंबाहुयुग्मे न्यसतु च मनुवित् तत्कलाः स्वाङ्गुलीभिः॥

द्वितयवदनाक्ष्युत्तमाङ्गश्रेष्ठसु च, तत्राक्षिद्वये युगपदेव, वामाङ्गाद्यं सर्वत्र वामदक्षिणक्रमेण न्यस्तु, सृष्टौ शीर्षपूर्वं मूर्धादिवामकरान्तं, स्थितौ नाभिप्रभृतिहृदयान्तं च । मन्त्री क्रमेणेत्याभ्यां त्रिष्वपि न्यासेषु सहस्रशीर्षादिक्रमेणैव न्यास इति सूचितम् । तथाहि ऋग्विधाने —

"प्रथमां वामहस्ते तु द्वितीयां दक्षिणे तथा"

इत्यादिसंहारेऽपि तथा विधानात् ॥ ७६ ॥

**अशेषे** सर्वदेवेषु निजान् निजान् वैदिकपञ्चमन्त्रान् कास्यात्मगुह्याङ्घ्रियुगेषु मूर्धाननहृदयगुह्यपादेषु न्यसेत् । शिवे एवं सूत्रन्यासानन्तरं केन्द्रार्किसोमाप्यमुखेषु ऊर्ध्वप्राग्याम्यसौम्यपश्चिममुखेष्वपि अङ्गुष्ठमुखाङ्गुलीभिः ईशानादीनपि न्यस्येत् ॥ ७७ ॥

**अथ** मनुवित् द्वादशे पटले 'मातङ्गोरगविश्वे'त्यादिवक्ष्यमाणश्लोकभेदिताः कलाः शशिन्यादिशक्तीश्च जानन् तत्कलाः ईशानादिपञ्चब्रह्मभवाः कलाः अष्टात्रिंशत्कलाः स्वाङ्गुलीभिः ईशानादीनामङ्गुष्ठादिस्वस्वाङ्गुलीभिः प्राग्याम्यवारीड्वसुपनिजभुवां वारीड् वरुणः वसुपो वैश्रवणः निजभूर्ब्रह्मा शिरसः प्राग्याम्यप्रतीच्योदीच्योर्ध्वदिक्षु ईशानकलाः पञ्च, ऐन्द्रवारार्किराज्ञां वारू वरुणः आर्किर्यमः राजा सोमः इन्द्रवरुणयमसोमानां दिक्षु स्थितेषु वक्त्रेषु

१. 'भिः ॥ न्यस्येत् तत्तज्जिनार्णस्य त्रीन् पादान् मन्त्रवित् क्रमात् । मूलाधारे च हृदये भ्रूमध्ये वाथ मूर्ध्नि वा ॥ न्यस्त' क. पाठः.

न्यस्तब्रह्मणि तारहृद्भगवतेर्णैर्वासुदेवादिका
न्यस्याः कादिषु मूर्तयो हरिहरे ङेन्ता नमोन्ताः क्रमात् ।
कृत्वैकद्विचतुर्युतान् न्यसतु दन्तान् वज्रतुण्डं तथा
हेरम्बं च महाणुबीजपरतो विघ्नेऽपि वा केवलान् ॥ ७९ ॥

षड्द्वादशाह्वयमनुन्यसनाद्यमत्र
स्वाख्यास्यमानयजनक्रमतोऽवगम्यम् ।
अन्तेऽखिलेषु निजमूलमनूपदिष्टान्
न्यासान् समाचरतु चेति षडध्वक्लृप्तिः ॥ ८० ॥

---

तत्पुरुषकलाश्चतस्रः, हृद्ग्रीवांसद्वयीनाभ्युदरचरमवक्षस्सु चरमः पृष्ठभागः एतेष्वघोरकला अष्टौ, गुह्याण्डयोश्च सोर्वोर्जान्वोः ऊरुद्वये जानुद्वये च सजङ्घास्फिगुभयकटिपार्श्वेषु वामकलास्त्रयोदश, पद्दोस्तलेषु पादकरयोश्चतुर्षु तलेषु घ्राण इत्येकस्मिन् स्थाने कंठबाहुयुग्मे मूर्धनि बाह्वोश्च सद्योजातकला अष्टौ च एवमष्टात्रिंशत्कलाः न्यसतु ॥ ७८ ॥

न्यस्तब्रह्मणि कृतपञ्चब्रह्मन्यासे हरिहरे कादिषु मूर्धादिपञ्चस्थानेषु तारहृद्भगवतेर्णैः 'ओं नमो भगवते' इत्यक्षरैः सह ङेन्ताः चतुर्थ्येकवचनान्ताः नमोन्ताश्च वासुदेवादिका मूर्तयः क्रमेण न्यस्याः न्यस्तव्याः । विघ्ने महाणुबीजपरतः महागणपतिबीजानामन्ते कृत्वा स्थापयित्वा एकद्विचतुर्युतान् एकद्विचतुश्शब्दैः संयुतान् दन्तान् वज्रतुण्डं हेरम्बं च तथा मूर्धादिपञ्चस्थानेषु न्यसतु । 'ओं श्रीं ह्रीं क्लीं ग्लौं[२] गं एकदन्त गणपते वरवरद सर्वजनं मे वशमानय स्वाहे'त्यादयो मन्त्राः । केवलानपि वा 'एकदन्तगणपतये नमः' इत्यादयो वा ॥ ७९ ॥

अत्र षडध्वन्यासे षड्द्वादशाह्वयमनुन्यसनाद्यं वैष्णवादिषु षडक्षरद्वादशाक्षरादिमन्त्रभेदानां न्यासाद्यं स्वाख्यास्यमानयजनक्रमतः स्वस्वपूजायां वक्ष्यमाणक्रमतोऽवगम्यम् । अन्तेऽखिलेषु निजमूलमनूपदिष्टान् अष्टाक्षरे दशाङ्गादीन् षडक्षरे गोलकान्यासादींश्च समाचरतु च इति षडध्वक्लृप्तिः इति षडध्वनां स्थितिः ॥ ८० ॥

---

१. 'शेषेषु स्वविधास्यमानयजनाज्ज्ञेयक्रमं षड्द्विषण्मूर्त्यादिन्यसनं न्यसेच्च सकले मूलाङ्गकाद्यं ततः ॥ येन येन' ख. पाठः.　२. 'श्लौं' ह. पाठः.

येन येन मनुना मनुबिम्बे देवदेवयजनं कृतमत्र ।
तेन तेन तदुदक्परिकॢप्ते मण्डले स्वविहिते च यजेत् तम् ॥
चक्राब्जे प्रयजेद् विष्णौ दुर्गायां शक्तिदण्डके ।
भद्रकेऽन्येषु सेनान्यां प्रत्यक् प्रागुक्तषड्दले ॥ ८२ ॥
पद्मादर्वाक्तनमुदितकॢप्त्या स्वमभ्यर्च्य पीठं
चक्राम्भोजे तदनु परिकल्प्यात्र तत् कालचक्रम् ।
प्रागाद्येषु प्रधिषु यजतु प्राणपूर्वाणि तत्त्वा-
न्यन्तर्बाह्यक्रमविनिमयेनावनीपश्चिमानि ॥ ८३ ॥
मध्येरं विनपुंसकस्वरहमा स्वैर्यं समेतं क्रमा-
न्मेषाद्यात्मयुतं स्वधातुमुखमूर्त्युद्बोदितं वा यजेत् ।

---

अथ मण्डलपूजामाह — येन येनेति । अत्र मनुबिम्बे येन येन मनुना देवदेवयजनं देवानामपि देवस्य पूजनं कृतं, तेन तेन मनुना तदुदक्परिक्लृप्ते तस्योत्तरभागे कल्पिते स्वस्वविहिते मण्डले च तं[1] देवं यजेत् ॥ ८१ ॥

विष्णौ चक्राब्जे मण्डले तं प्रयजेत् । दुर्गायां शक्तिदण्डके भद्रके च । अन्येषु केवलभद्रके । सेनान्यां प्रत्यग्भागे प्रागुक्तषड्दले 'मध्येवेदि विनिर्मिते'त्यादिनोक्तषड्दले मण्डले । कौमारके मण्डले पूजैवात्र विवक्षिता ॥ ८२ ॥

चक्रपूजामाह — पद्मादिति । पद्मादर्वाक्तनं 'पद्माय नम' इत्यस्मात् पूर्वगतैर्मन्त्रैः उदितक्लृप्त्या पूजापटले वक्ष्यमाणक्लृप्त्या स्वं वैष्णवं पीठमभ्यर्च्य तदनु तद् मण्डलं कालचक्रं परिकल्प्य अत्र चक्राम्भोजे प्रागाद्येषु प्रधिषु नेमिषु प्राणपूर्वाणि 'भं नमः[2] पराय प्राणात्मने नमः' इत्यादीनि अवनीपश्चिमानि 'कं नमः पराय पृथिव्यात्मने नमः' इत्यन्तानि चतुर्विंशतितत्त्वानि अन्तर्बाह्यक्रमविनिमयेन पूर्वमन्तर्गतप्राङ्नेम्यां पुनस्तद्दक्षिणगतबहिर्नेम्यां पुनस्तद्दक्षिणगतान्तर्नेम्यां पुनस्तदनन्तरगतबहिर्नेम्यामित्यादिक्रमेण यजतु ॥ ८३ ॥

मध्येरम् अराणां मध्ये मध्ये विनपुंसकस्वरहमा विगतनपुंसकैः स्वरैर्द्वादशभिर्युतेन हंबीजेन समेतं युक्तं मेषाद्यात्मयुतं मेषादिशब्दैः सहात्मने-

---

1 'त तं दे', २. 'म', ३. 'मः ह' ख. पाठः.

**बीजान्तस्थनमःपरायपदपूर्वत्वं तथैवात्मने-**
**नत्यन्तत्वमशेषचक्रमनुषु ज्ञेयं बुधैस्तत्त्ववत् ॥ ८४ ॥**
**धात्रर्यममित्राख्या वरुणांशभगा विवस्वदिन्द्रयुताः ।**
**पूषाह्वयपर्जन्यौ त्वष्टा विष्णुश्च मूर्तयोऽत्र रवेः ॥ ८५ ॥**
**मूलाद्याग्रमचाद्यमन्तमनुवृत्त्याऽमूलमग्रादिकं**
**सर्गाद्यान्तमपक्रमेण च सता संबीजकेनान्वरम् ।**

---

पदयुक्तं सूर्यं क्रमाद् मेषादिराशिस्थाने क्रमाद् यजेत् । 'हं नमः पराय सूर्याय मेषात्मने नमः' इत्यादयो मन्त्राः । स्वधातृमुख्यमूर्त्युद्भेदितं वा स्वस्य सूर्यस्य धात्रादिभिर्मूर्तिभिर्भेदितं वा । तत्र 'हं नमः पराय सूर्याय मेषात्मने धात्रे नमः'(?)इत्यादयो मन्त्राः । बुधैरशेषचक्रमनुषु सकलचक्रपूजामन्त्रेषु तत्त्ववत् तत्त्वमन्त्रेष्विव बीजान्तस्थनमःपरायपदपूर्वत्वं स्वस्वबीजानामन्ते स्थितं 'नमः पराय इति पदद्वयं पूर्वं यथा भवति, तथैव आत्मनेनत्यन्तत्वम् 'आत्मने नमः' इति पदद्वयावसानत्वं च यथा भवति तथा ज्ञेयम् ॥ ८४ ॥

मूर्तीः पठति — **धात्रर्यममित्राख्याः** धाता अर्यमा मित्रश्च, **वरुणांशभगाः** वरुणोंऽशो भगश्च, **विवस्वदिन्द्रयुताः** विवस्वानिन्द्रश्च, **पूषाह्वयपर्जन्यौ** पूषा पर्जन्यश्च. त्वष्टा विष्णुश्चात्र रवेर्मूर्तयः स्युः ॥ ८५ ॥

तत्र प्रत्यरं सोममपि पूजयेदित्याह — **मूलाद्याग्रमिति** । तत्र अन्वरम् अरे अरे च उभयोरभितः उभयोः पार्श्वयोः मूलाद्याग्रम् अधोभागमारभ्याग्रभागान्तम् आद्यमन्तम् अकाराद्यनुस्वारपर्यन्तम् अनुवृत्त्या अनुलोमक्रमेण सता अचा, अग्रादिकमामूलम् अग्रभागाद्यधोभागपर्यन्तं सर्गाद्यान्तं विसर्गाद्याकारपर्यन्तम् अपक्रमेण प्रातिलोम्येन च सता अचा युक्तेन संबीजकेनान्वितं सितासितप्रतिपदाद्यात्मानं शुक्लप्रतिपदादिना कृष्णप्रतिपदादिना च आत्मशब्देन युक्तं सोमं 'सं नमः पराय सोमाय शुक्लप्रतिपदात्मने नमः' 'सां नमः पराय सोमाय शुक्लद्वितीयात्मने नमः' इत्यादि. 'सः नमः पराय सोमाय कृष्णप्रतिपदात्मने नमः' (इति मध्यस्थामन्त्य?) 'सं नमः पराय सोमाय कृष्णद्वितीयात्मने नमः' इत्यादिसहितमिष्ट्वा मध्येरम् अरमध्येषु

---

१. 'मायोजयन । गो' ग. पाठः.

सोमं तत्र सितासितप्रतिपदाद्यात्मानमिष्ट्वाभितो
मध्येरं तममाकलात्मकमचाद्येनान्वितं प्रार्चयेत् ॥ ८६ ॥

प्रातर्मोध्यन्दिनतृतीयाख्यानि सवनान्यथ ।
अन्तरादि यजेन्नाभित्रयेऽमाद्यक्षरैस्त्रिभिः ॥ ८७ ॥

ततः कोपतत्त्वं प्रपूज्याक्षदेशे
पुनस्तत्र पद्मादिकं पीठशेषम् ।
तथा जीवतत्त्वं च तत्कर्णिकाया-
मिहावाह्य मूलेन देवं यजेच्च ॥ ८८ ॥

अर्घ्यादि दत्त्वा सकलीकृताय
संपूज्य चाङ्गावरणावसानम् ।
विष्ण्वादिकास्तत्परितोऽरसंस्था
मूर्तीर्यजेद् द्वादशवर्णबीजैः ॥ ८९॥

विष्णुमधुसूदनौ च त्रिविक्रमो वामनाभिधानोऽथ ।
सश्रीधरो हृषीकेशाख्योऽतः पद्मनाभश्च ॥ ९० ॥

---

आद्येन अचा अकारेण अन्वितम् अमाकलात्मकम् अमाकलात्मशब्दयुक्तं च सोमं प्रार्चयेत् । 'सं नमः पराय सोमाय अमाकलात्मने नमः' इति मध्यस्थमन्त्र इत्यर्थः ॥ ८६ ॥

अथ नाभित्रयेऽन्तरादि क्रमेण अमाद्यक्षरैः अं उं मं इति त्रिभिरक्षरैर्बीजभूतैः सह प्रातर्माध्यन्दिनतृतीयाख्यानि (सवनानि) 'अं नमः पराय प्रातस्सवनात्मने नमः' इत्यादिमन्त्रैर्यजेत् ॥ ८७ ॥

ततः अक्षदेशे चक्रस्याक्षप्रदेशे कोपतत्त्वं प्रपूज्य पुनस्तत्र चक्रे पद्मादिकं पीठशेषं तथा तत्कर्णिकायां जीवतत्त्वं च प्रपूज्य इह मूलेन देवमावाह्य यजेच्च ॥ ८८ ॥

सकलीकृताय तस्मै अर्घ्यादि दत्त्वा अङ्गावरणावसानं च संपूज्य तत्परितः अरसंस्थाः अरेषु स्थिताः विष्ण्वादिका मूर्तीः द्वादशवर्णबीजैः द्वादशाक्षरमन्त्रस्य वर्णैर्बीजभूतैः सह यजेत् ॥ ८९ ॥

द्वादशमूर्तीः पठति — विष्ण्विति । विष्ण्वाद्या गोविन्दान्ता द्वादश-

---

१. 'भि' क. पाठः.

दामोदरोऽथ केशवनारायणमाधवाः सगोविन्दाः।
द्वादशमूर्तय उक्ता विद्येशास्त्वष्ट तासु पूर्वोक्ताः॥ ९१॥

भूयो यथोक्तं गरुडादिशेषा-
वृतिं समभ्यर्च्य निवेद्य तस्मै।
प्रसन्नपूजामपि संविदध्या-
दितीरिता चक्रिणि चक्रपूजा॥ ९२॥

पीठं ब्रह्मशिलायुतं कृतजलावासान्तमुक्तक्रमात्
सिक्त्वा गन्धजलाभिपूर्णकलशैर्न्यस्येच्च शय्यान्तरे।
संस्थाप्यैव यथास्थिति स्थपतिना गर्भालये गौरवे
सिञ्चेद् वारुणवारिणा सलिलवासोद्देशतो[2] देशिकः॥ ९३॥

ह्रामादिबीजपवनायमनादिकॢप्त्या
भूतानि पञ्च परमात्मनि संविलाप्य।

---

मूर्तय उक्ताः। तासु मूर्तिषु पूर्वोक्ता अष्ट विष्ण्वादिदामोदरान्ता विद्येशाः विद्येश्वरकलशपूजायामुक्ताः॥ ९०, ९१॥

भूयो गरुडादिशेषावृतिं यथोक्तं समभ्यर्च्य निवेद्य प्रसन्नपूजामपि संविदध्यात्। चक्रिणि विष्णौ चक्रपूजा इतीरिता॥ ९२॥

तस्यां रात्र्यामेव पीठनपुंसकशिलयोरप्यधिवासनं कर्तव्यमित्याह — पीठमिति। ब्रह्मशिलायुतं नपुंसकशिलया सह कृतजलावासान्तम् अनुष्ठित-जलाधिवासावसानसंस्कारं पीठं गन्धजलाभिपूर्णकलशैः उक्तक्रमाद् बिम्बोक्त-क्रमेण सिक्त्वा शय्यान्तरे अन्यस्मिन् शयने न्यस्येत्। चकारेण भूषणादिभिः पूजनमुक्तम्। गौरवे तयोर्गुरुत्वे गर्भालये स्थपतिना तक्ष्णा यथास्थिति यथा तत्र स्वस्थाने स्थिरा भवति तथा संस्थाप्यैव देशिकः जलाधिवासादिसंस्कार-मन्त्रानुसन्धातुं समर्थो गुरुः सलिलवासोद्देशतः जलाधिवासमुद्दिश्य वारुणवा-रिणा कटाहस्थे जले वरुणमावाह्य सपूज्य तज्जलेन सिञ्चेत्॥ ९३॥

ह्रामादिबीजपवनायमनादिक्लृप्त्या 'ह्रां हुंफडि'त्यादिभिः स्वगुणसं-ख्यया प्राणायामं तथा 'ह्रां नमः' इत्यादिभिर्व्यापकं च कुर्वन् पञ्चभूतानि

---

१. 'कां च बिम्बवदुभे तोयादिवासान्तया शुद्धयाशाध्य करोतु चान्यशयने गर्भालये पौरवे। संस्थाप्यैव यथातथं स्थपतिना संशोध्य दर्भादिभिः सि', २. 'वा द्वयम्॥', ३. 'न्त्रा' ख. पाठः.

शोषादिकं च सुविधाय धरावधीनि
सृष्ट्वाथ तानि तनुयाल्लिपिभावनां च ॥ ९४ ॥
मध्ये तारं स्वरान् षोडश तमु परितस्तद्बहिर्व्यञ्जनानि
न्यस्येत् पर्जन्यकोष्ठादिकमथ च हळक्षाक्षरं मध्यभागे ।
तत्तच्छक्त्युक्तबीजाहितपवननिरोधेन संपाद्य मान्त्रं
भावं पीठीयमन्त्रान् न्यसतु वितनुयात् तत्र तत्पीठपूजाम् ॥
आवाह्यास्मिञ्छक्तिबीजेन शक्तिं
स्वाङ्गैः साङ्गीकृत्य तेनार्चयेत ।
ब्रह्मग्राव्णो भूतशुद्ध्यादि कृत्वा
तारेणावाह्यामुना पूजयेत ॥ ९६ ॥
निवेद्यकाले विनिवेद्य चार्घ्यं प्रसन्नपूजामुभयोर्विधाय ।
आच्छाद्य नव्येन पटद्वयेन तथाधिवास्य द्वितयं सुरक्षेत् ॥

---

परमात्मनि संविलाप्य शोषादिकं शोषणदहनप्लावनकाठिन्यसुषिरीकरणानि विधाय धरावधीनि पृथिव्यन्तानि भूतानि सृष्ट्वाथ लिपिभावनां च तनुयात् ॥ ९४ ॥

लिपिन्यासे मध्ये तारं तमु परितः तस्यापि परितः षोडश स्वरान् तद्बहिः पर्जन्यकोष्ठादिकं द्वात्रिंशद्व्यञ्जनाक्षराणि अथ मध्ये हळक्षाक्षराणि च न्यस्येत् । तत्तच्छक्त्युक्तबीजाहितपवननिरोधेन तत्तत्पीठशक्तीनामुक्तेन बीजेन कृतप्राणायामेन मान्त्रं भावं मन्त्रदेवतात्मत्वं संपाद्य पीठीयमन्त्रान् पीठभवान् मन्त्रान् स्वस्वस्थाने न्यसतु । तत्र तत्पीठपूजां च वितनुयात् ॥९५॥

अस्मिन् पीठे शक्तिबीजेन शक्तिमावाह्य स्वाङ्गैः स्वस्वशक्तेरङ्गैः साङ्गीकृत्य सकलीकृत्य तेन स्वशक्तिबीजेन अर्चयेत । विष्णौ श्रीबीजेन अन्येषु भुवनेश्वर्येति बीजविभागः । ब्रह्मग्राव्णो नपुंसकशिलायाः भूतशुद्ध्यादि पीठवत् कृत्वा तारेणावाह्य अमुना पूजयेत ॥ ९६ ॥

उभयोरपि निवेद्यकालेऽर्घ्यं च विनिवेद्य प्रसन्नपूजां च विधाय नव्येन पटद्वयेनाच्छाद्य तथोक्तप्रकारेणाधिवास्य द्वितयं सुरक्षेत् ॥ ९७ ॥

---

१. 'रान् म' क. पाठः. २. 'पीठपूजां च पंठे ॥' ख. पाठः. ३. 'च' इति मूलकोशपाठः. ४. 'व' ख. पाठः.

कृत्वा स्वकल्पविधिनाग्निमुखं यथाश-
क्त्याज्याहुतिं वितनुयाज्जनिते कृशानौ ।
सृष्टिक्रमेण कथितैरथ तत्त्वमन्त्रै-
र्मन्त्री समित्प्रभृतिहोमविराममत्र ॥ ९८ ॥

तत्त्वहोमावसाने तत्संपातं मन्त्रबिम्बके ।
समर्प्य तन्मनुन्यासं कृत्वा पुष्पार्चनं चरेत् ॥ ९९ ॥

प्रागष्टोर्ध्वसहस्रमाज्यमधुदुग्धाक्तान् द्विजोदुम्बरा-
श्वत्थप्रोत्थसमित्तिलान् प्रजुहुयाद् भूरादिमन्त्रैः क्रमात् ।
गोसर्पिर्निजपीठमूलमनुभिः शर्वादिभिश्चाष्टभिः
शर्वे स्वावरणाणुभिश्च सकलैः संपातमप्यर्पयेत् ॥ १०० ॥

---

अथ गुरुः स्वकुण्डे तत्त्वहोमं कुर्यादित्याह — कृत्वेति । जनिते कृशानौ अग्नौ स्वकल्पविधिना स्वगृह्योक्तविधिनाग्निमुखं कृत्वाथ सृष्टिक्रमेण कथितैरखिलैस्तत्त्वमन्त्रैर्यथाशक्त्याज्याहुतिं समित्प्रभृतिहोमविरामं समिदादि-चतुर्द्रव्यं स्विष्टकृदादिहोमशेषं च वितनुयात् । मन्त्रीत्यनेन पूजामन्त्राज्याहुत्यनन्तरं संहारक्रमेणाज्यमेकैकशस्तत्त्वमन्त्रैर्हुत्वा तत्सम्पातं हृते मन्त्रबिम्बे योजनमपि सूचितम् ॥ ९८ ॥

पुनस्तत्त्वहोमावसाने तत्संपातं मन्त्रबिम्बे सृष्टितत्त्वन्यासस्थानेषु समर्प्य तन्मनुन्यासं तत्त्वमन्त्रन्यासं च कृत्वा पुष्पार्चनं च चरेत् ॥ ९९ ॥

शिवे प्रतिष्ठाहोमं च कुर्यादित्याह — प्रागिति । शर्वे आंधेवासहोमात् प्राग् आज्यमधुदुग्धाक्तान् त्रिमधुरसिक्तान् द्विजोदुम्बराश्वत्थप्रोत्थसमित्तिलान् पलाशोदुम्बराश्वत्थसमिधस्तिलांश्च भूरादिमन्त्रैः चतसृभिर्व्याहृतिभिः क्रमादष्टसहस्रं प्रजुहुयात् । निजपीठमूलमनुभिः स्वपीठमन्त्रैर्मूलेन च शर्वादिभिरष्टभिः स्वावरणाणुभिः सकलैः स्वपरिवारमन्त्रैश्च गोसर्पिर्जुहुयात् । गोसर्पिरिति सर्वहोमेष्वप्युपलक्षणमेव ॥ १०० ॥

---

'अष्टोपेतस' ख. पाठः.

**श्रीशेशाजितसुम्भजित्सु चतसृष्वाशासु षाण्मातुरे**
**षट्स्वग्नीशदिगन्वयात् तदितरेष्वष्टासु वा दिक्ष्वपि ।**
**कुर्वीरन् परितोऽधिवासहवनं विप्राः शिरःसन्निधा-**
**वाचार्यश्च स एव तत्र लघुकृत्ये मुख्यतो वा हुनेत् ॥ १०१ ॥**

**कुण्डानि श्रुतिकोणपिप्पलदलार्धेन्द्वाकृतित्र्यश्रिम-**
**द्वृत्ताकारषडश्रपङ्कजनिभाष्टाश्राणि पूर्वादितः ।**
**अष्टाशाविहितानि तेषु निजहोमार्हाणि कुर्यादिह**
**त्र्यश्रं सोमदिगाश्रितं निगदितं दुर्गाहरीशेषुजे ॥ १०२ ॥**

**शोषादि कृत्वा परिकल्पितोल्ले-**
**खाद्येषु तेष्वर्चितशक्तिकेषु ।**

---

अधिवासहोमविभागमाह — श्रीशेति । श्रीशेशाजितसुम्भजित्सु चतसृष्वाशासु, षाण्मातुरे अग्नीशदिगन्वयात् अग्नीशकोणयोर्योगात् षट्स्वाशासु, तदितरेषु देवेषु अष्टासु चतसृषु वा दिक्षु परितो विप्रा मूर्तिपाः, शिरस्सन्निधौ देवस्य शिरोभागसमीपस्थस्वकुण्डे मुख्यतो वा मुख्यपदस्थे स्वकुण्डे वा आचार्यश्चाधिवासहवनं कुर्वीरन् । लघुकृत्येऽल्पकर्मणि स आचार्य एव हुनेत् ॥ १०१ ॥

कुण्डानां नियममाह — कुण्डानीति । श्रुतिकोणपिप्पलदलार्धेन्द्वाकृतित्र्यश्रिमद्वृत्ताकारषडश्रपङ्कजनिभाष्टाश्राणि श्रुतिकोणं चतुष्कोणं पिप्पलदलम् अश्वत्थपत्राकारम् अर्धेन्द्वाकृति अर्धचन्द्राकारं त्र्यश्रिमत् त्रिकोणं वृत्ताकारं वृत्तं षडश्रं षट्कोणं पङ्कजनिभम् अष्टदलपद्माकारम् अष्टाश्रमष्टकोणम् एतानि कुण्डानि पूर्वादितः अष्टाशाविहितानि भवन्ति । तेषु कुण्डेषु निजहोमार्हाणि निजनिजयोग्यानि कुर्यात् । दुर्गाहरीशेषुजे दुर्गाहरीशस्कन्देषु इह कुण्डकरणे सोमदिगाश्रितं त्र्यश्रं कुण्डं निगदितं स्यात् ॥ १०२ ॥

अग्निविहरणं प्रस्तौति — शोषादीति । शोषादिपञ्चकं दहनं च स्वस्वबीजेन कृत्वा परिकल्पितोल्लेखाद्येषु उक्तविधिना कृतोल्लेखनप्रोक्षणाद्येषु

---

१. 'स्वोशाग्निदि' इति मूलकोशपाठः. २. 'कुर्युर्मूर्तिधराश्च होममधिवासाख्यं शि' क. ग. पाठः. ३. 'स्वगृह्यकॢप्त्या परि' ख. पाठः.

आचार्यकुण्डात् परिकुण्डकेषु
प्रागादि वह्निं प्रणयेत् क्रमेण ॥ १०३ ॥

अग्निंदूतमृचा निजानलमुपस्थायाग्निमीलेणुना
दुर्गायामजितेऽग्निनारयिमृचा प्राच्ये त्वमग्नेद्युभिः।
याम्येऽग्निं प्रणयेद् द्वयोर्वरुणदिक्संस्थेऽग्नआयाहृचा
कुण्डे सोमगतेऽग्निमग्निमिति शेषेषु स्वहोमाणुभिः॥

केचित् सप्त इत्युपस्थितिविधौ तार्तीयतुर्याष्टम-
न्यूनानादिमसूक्तगान् विहरणे मन्त्रान् षडाहुः क्रमात्।
अग्निंदूतमथाग्निमग्निमिति च स्थाणौ हरीशे स्मृत-
स्तारः शास्तरि चाग्निमील इति मन्त्रोऽग्न्याहृतौ व्याहृतिः॥

प्रारब्धाग्निमुखाः स्वगृह्यविहितेनाघारवद्वर्त्मना
प्रागिध्मात् सुसमिष्टविष्टरनिविष्टं देवमाराधनुयुः।

---

अर्चितशक्तिकेषु पीठपूजानन्तरमर्चितस्वस्वशक्तिषु तेषु कुण्डेषु आचार्य-कुण्डात् प्रागादि परिकुण्डेषु क्रमेणैव वह्निं प्रणयेत् ॥ १०३ ॥

**दुर्गायामजिते** च गुरुः 'अग्निंदूतमृ'चा निजानलमुपस्थाय प्राच्ये कुण्डे दुर्गायाम् 'अग्निमीले'णुना अजिते 'अग्निनारयिमृ'चा चाग्निं प्रणयेत्। पुनर्द्वयोरपि दुर्गाजितयोर्याम्ये कुण्डे 'त्वमग्नेद्युभिरि'ति, वरुणदिक्संस्थे 'अग्न आयाहृ'चा, सोमगते कुण्डे 'अग्निमग्निमि'ति च, शेषेषु स्वहोमाणुभिः स्वस्व-दिक्संस्थितैर्होमाणुभिश्च ॥ १०४ ॥

**स्थाणौ** केचिद् उपस्थितिविधौ उपस्थाने 'सप्त ते अग्न' इतिं, विहरणे तृतीयतुर्याष्टमन्यूनानादिमसूक्तगान् 'अग्निमील' इति सूक्तगान् मन्त्रान् क्रमात् षडाहुः। अथ 'अग्निं दूतमि'ति 'अग्निमग्निं हवीमभिरि'ति मन्त्रद्वयं चाहुः। हरीशे तारः सर्वत्र स्मृतः। शास्तरि च 'अग्निमील' इति विहरणे मन्त्रः। अग्न्याहृतौ अग्न्याधाने व्याहृतिर्मन्त्रः स्मृतः ॥ १०५ ॥

**अथ** विहरणानन्तरं ते गुरुमूर्तिपाः स्वगृह्यविहितेन स्वस्वगृह्योक्तक्र-मेण आघारवद्वर्त्मना आघारादिसहितेन मार्गेण प्रारब्धाग्निमुखाः इध्मात् प्राक् सुसमिष्टविष्टरनिविष्टं पूजितपीठ आवाहितं देवमाराधनुयुः। अथवा

निर्वृत्ते विधिनाज्यभागचरमे संपूज्य योगासनं
तत्तन्मूर्तिसमर्चनान्तमथवा कुर्वन्तु ते स्वाग्निषु ॥ १०६ ॥

तारव्याहृतियोगपीठमनुभिर्हुत्वाज्यमेकैकशः
पुंसा पक्वमुमापतौ महिषहन्त्र्यां जुह्वतु त्रिष्टुभा ।
गायत्र्या निजयेतरेषु सहभूराद्या प्रभेशेऽनया
सर्पिः स्वैर्यजनाणुभिश्च हवनेऽशेषे मतोऽयं क्रमः ॥ १०७ ॥

व्योमव्यापिदशाक्षरेण गिरिशे मन्त्रेण वौषड्वता
विष्णौ द्वादशवर्णकेन निजमूलेनान्यदेवेष्वपि ।
पूर्णां शास्तरि भूर्भुवःस्वरिति मन्त्रेणापि जुह्वत्वमी
तत्तद्द्रव्यमनुप्रभेदविरतौ होमेषु सर्वेष्विह ॥ १०८ ॥

पञ्चब्रह्मतदङ्गकैः पशुपतौ स्वेज्योदिताशाक्रमो-
पात्तैर्जुह्वतु ते समिद्घृतचरून् लाजान् सराजीतिलान् ।

---

ते सर्वे स्वाग्निष्वाज्यभागचरमे निर्वृत्ते आज्यभागहोमान्ते कर्माणि विधिना निर्वृत्ते सति योगासनं संपूज्य तत्तन्मूर्तिसमर्चनान्तं तत्तन्मूर्त्यावाहनपूजना-(नन्तरं ? न्तं) कुर्वन्तु ॥ १०६ ॥

पुनस्तारव्याहृतियोगपीठमनुभिरेकैकश आज्यं हुत्वा उमापतौ पुंसा तत्पुरुषेण पक्वं जुह्वतु । महिषहन्त्र्यां त्रिष्टुभा, इतरेषु निजनिजया गायत्र्या, प्रभेशे सहभूराद्यानया भूरादियुक्तया गायत्र्या च, स्वैः स्वैर्यजनाणुभिश्च सर्पिर्जुह्वतु । अशेषहवने सर्वेषु होमेष्वयं क्रमो मतः स्यात् ॥ १०७ ॥

अमी गुरुमूर्तिपाः इह होमकाले सर्वेषु होमेष्वपि तत्तद्द्रव्यमनुप्रभेद-विरतौ तत्तद्द्रव्याणां तत्तन्मन्त्राणां भेदेऽवसाने च गिरिशे वौषड्वता वौषट्कारा-न्तेन व्योमव्यापिदशाक्षरेण मन्त्रेण पूर्णां जुह्वतु । विष्णौ वौषड्वता द्वाद-शवर्णकेन, अन्यदेवेषु तथा निजनिजमूलेनापि, शास्तरि च तथा भूर्भुवःस्वरिति मन्त्रेण पूर्णां जुह्वतु ॥ १०८ ॥

पशुपतौ ते स्वेज्योदिताशाक्रमोपात्तैः स्वपूजायामुक्तदिक्क्रमात् प्राप्तैः पञ्चब्रह्मतदङ्गकैः पञ्चभिर्ब्रह्मभिर्वर्मान्तैस्तदङ्गैश्च मन्त्रैः समिद्घृतचरून्

वर्णान्तैर्यवशालिसक्तुघृतयुक्तान् वासुदेवादिभि-
र्मूलेनापि तिलं यवं च विनिमय्यैतावसक्तून् हरौ ॥१०९॥

दिक्षु स्युः समिधः पलाशखदिराश्वत्थोत्थिता धूर्जटौ
प्लाक्षी रोहिणजा च बिल्वतरुजा चौदुम्बरी काश्मरी ।
श्रीशे तोरणदारुजाश्च चतसृष्वाशासु वा ब्रह्मजा-
स्ता वा शूलिनि पञ्चहोमसमये ब्राह्मी सदान्तर्द्वयोः ॥११०॥

दिक्कुण्डेषु समिद्धवह्निषु ततो वेदादिमन्त्रैः क्रमात्
पालाशेध्मघृते चरुं च सघृतं हुत्वाथ भूरादिभिः ।
शार्ङ्गीशे तिलसर्षपान् सहयवान् लाजान् घृतं चान्ततः
सर्वे जुह्वतु मूलतस्तदखिलं मूलानले च स्वयम् ॥ १११ ॥

---

लाजान् सराजीतिलान् यवशालिसक्तुघृतयुक्तान् दश द्रव्याणि जुह्वतु । हरौ असक्तून् सक्तुरहितान् तिलं यवं च विनिमय्य व्यत्यासं कृत्वा नव द्रव्याणि वासुदेवादिभिर्दिक्षु मध्ये मूलेन चापि जुह्वतु ॥ १०९ ॥

तत्र समिद्भेदमाह — दिक्ष्विति । धूर्जटौ दिक्षु पलाशखदिराश्वत्थो-त्थिताः प्लाक्षी रोहिणजा च बिल्वतरुजा औदुम्बरी काश्मरी च समिधः स्युः । श्रीशे चतसृष्वाशासु तोरणदारुजाश्च समिधः, ब्रह्मजाः पालाश्यो वा समिधः । शूलिनि पञ्चहोमसमये ता वा तोरणदारुजा वा पालाश्यो वा । द्वयोः शिवविष्ण्वोः सदा सर्वदा अन्तराचार्यकुण्डे ब्राह्मी पालाशी समित् ॥ ११० ॥

शिवनारायणे होमानाह — दिक्कुण्डेष्विति । ततः शार्ङ्गीशे सर्वे मूर्तिपाः समिद्धवह्निषु दिक्कुण्डेषु पालाशेध्मघृते पलाशसमिधम् आज्यं चरुं सघृतं घृतेन सह चत्वारि द्रव्याणि वेदादिमन्त्रैः वेदानामादिभूतैर्मन्त्रैः 'अ-ग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' 'शन्नो देवीरि'त्येभिर्हुत्वाथ भूरादिभिश्चतु-र्भिर्मन्त्रैश्च तथा तिलसर्षपान् सहयवान् लाजान् अन्ततोऽवसाने मूलतो घृतं च जुह्वतु । मूलानले मध्याग्नौ तदखिलं द्रव्यनवकं स्वयं च जुहोतु । अत्र द्र-व्यसम्बन्धिनो मन्त्राः, न कुण्डसम्बन्धिनः ॥ १११ ॥

---

१. 'स्त्र' इति मूलकोशपाठः.

दुर्गाभिश्च सकृत् सकृद् घृतहुतिं कृत्वाद्यया मध्यतो
ब्राह्मीर्वेदमुखैर्दिशासु समिधो ब्रह्मोद्भवाः पैप्पलीः ।
तद्वत् खादिरबिल्वजाश्च जुहुयुस्ते त्रिष्टुभाज्यं चरुं
दुर्गायां सयवं सशालितिलसिद्धार्थं सदूर्वाग्रकम् ॥ ११२ ॥

षट्कृत्वोऽत्र सनत्कुमारकमुखैराज्यं गुहेऽर्चाक्रमाद्
दिक्कुण्डाधिकृतैः स्वमूलयुगषड्द्वन्द्वाह्वयैश्चैकशः ।
तत्तन्मूर्त्यणुना दिशासु जुहुयुर्मूलेन चान्तः समि-
त्सर्पिर्दीदिविलाजकांस्तिलयवान् सिद्धार्थकांश्च क्रमात् ॥

ब्रह्मद्रुखदिरबोधिप्लक्षवटोदुम्बरोद्भवाः समिधः ।
प्रागादिदिक्क्रमात् स्युः स्कन्दे बैल्व्यः कदम्बजा वान्तः ॥

---

दुर्गायां सर्वे गुरुमूर्तिपाः पञ्चभिर्दुर्गाभिश्च सकृत् सकृद् घृतहुतिं कृत्वा मध्यतः आचार्यकुण्डे आद्यया त्रिष्टुभा ब्राह्मीः समिधः, दिशासु वेदमुखैः 'अग्निमीळे' इत्यादिचतुर्मन्त्रैर्ब्रह्मोद्भवाः पैप्पलीः तद्वत् खादिरबिल्वजाश्च समिधो जुहुयुः । ते सर्वे त्रिष्टुभा आज्यं चरुं सयवं सशालितिलसिद्धार्थं सदूर्वाग्रकं च सप्त द्रव्याणि जुहुयुः ॥ ११२ ॥

गुहे अत्र अधिवासहोमे अर्चाक्रमाद् दिक्कुण्डाधिकृतैः पूजाक्रमात् प्रागादिक्रमेण दिक्कुण्डेष्ववस्थितैः सनत्कुमारकमुखैः सनत्कुमारभवपुत्रस्कन्दबाणहेमचूडभद्रसेनैर्मध्ये मूलेन च षट्कृत्वः आज्यं जुहुयुः । स्वमूलयुगषड्द्वन्द्वाह्वयैः मूलोपचारद्वादशनामभिः एकैकशः आज्यं जुहुयुः । पुनः दिशासु तत्तन्मूर्त्यणुना अन्तः मध्ये च समित्सर्पिर्दीदिविलाजकान्, दीदिवीति हविरुच्यते, तिलयवान् सिद्धार्थकांश्च सप्त द्रव्याणि क्रमाज्जुहुयुः ॥ ११३ ॥

तत्र समिध आह — ब्रह्मद्रुखदिरेति । ब्रह्मद्रुखदिरबोधिप्लक्षवटोदुम्बरोद्भवाः, बोधिरश्वत्थः, प्रागादिदिक्क्रमात् समिधः स्युः । अन्तर्बैल्व्यः कदम्बजा वा । (കദംബം=കടമ്പ്) ॥ ११४ ॥

**षण्मन्त्रैश्च सकृत् सकृद् घृताहुतिं कृत्वा गणेशो निजै-**
**रष्टाशाधिकृतैर्गणञ्जयमुखैर्मन्त्रैः समित्सर्पिषी ।**
**सर्वे जुह्वतु चान्नलाजपृथुकाख्यान् लड्डुकापूपकान्**
**शष्कुल्याज्यममूनि मूलमनुना द्रव्याणि मध्ये गुरुः ॥११५॥**

**पलाशखदिराश्वत्थशमीद्रुसमिधः स्मृताः ।**
**दिक्षु बिल्वभवा मध्ये विदिक्षु च गणेश्वरे ॥ ११६ ॥**

**षट्षड्विंशतिनाममन्त्रघृतहोमान्ते प्रभेशे समित्-**
**सर्पिर्दीधिविलाजशालियवसिद्धार्थांस्तिलान् जुह्वतु ।**
**सर्वे द्रव्यवशैः स्वमूलजिनवर्णाभ्यां हृदा शास्तृना-**
**म्नार्याख्येन भवाभिधेन शरमन्त्रेण स्वदिक्पाणुना ॥**

**अथ शास्तृगोप्तृभूताधिपतिपदं ङेनमोन्वितं च पृथक् ।**
**प्रणतिस्वाहान्तोऽयं शास्त्रणुरोमादिकैः समुद्दिष्टः ॥ ११८ ॥**

---

गणेशेऽधिवासहोममाह — गणेशे गुरुमूर्तिपाः षण्मन्त्रैः सकृत्सकृद् घृताहुतिं कृत्वा दिक्षु अष्टाशाधिकृतैः अष्टदिक्षु स्थितैर्गणञ्जयमुखैर्निजैर्मन्त्रैः समित्सर्पिषी अन्नलाजपृथुकाख्यान् लड्डुकापूपकान् शष्कुल्याज्यं च, (പൃഥുകം=അവൽ. ലഡ്ഡുകം=എള്ളുരുണ്ട. ശഷ്കുലി=അണ്ണാപ്പുലി.) नव द्रव्याणि जुह्वतु । मध्ये गुरुरमूनि द्रव्याणि मूलमनुना जुहोतु ॥ ११५ ॥

तत्र समिध आह — गणेश्वरे दिक्षु पलाशखदिराश्वत्थशमीद्रुसमिधः, मध्ये विदिक्षु च बिल्वभवाः समिधः स्मृताः ॥ ११६ ॥

शास्तरि होमानाह — षट्षड्विंशतीति । प्रभेशे सर्वे षट्षड्विंशतिनाममन्त्रघृतहोमान्ते षण्मन्त्रैः षड्विंशतिनाममन्त्रैश्च घृतहोमावसाने समित्सर्पिर्दीधिविलाजशालियवसिद्धार्थान् तिलांश्च द्रव्यवशैः द्रव्यवशादागतैर्मन्त्रैः स्वमूलजिनवर्णाभ्यां मूलेन गायत्र्या हृदा हृदयमन्त्रेण शास्तृमन्त्रेण आर्याख्येन आर्यमन्त्रेण भवाभिधेन भवमन्त्रेण शरमन्त्रेण स्वदिक्पाणुना स्वस्य दिक्पालमन्त्रेण इत्यष्टभिर्मन्त्रैरष्ट द्रव्याणि जुह्वतु ॥ ११७ ॥

शास्त्रादिमन्त्रानाह — अथेति । अथ शास्तृगोप्तृभूताधिपतिपदं शा-

---

१. 'माभिघृतमथार्यं मूलतोऽन्तः स', २. 'दिक्षु द्र' क. पाठः. ३. 'काम्न-सप्तार्णः ॥' ख. पाठः.

आर्याय विश्वगोप्त्रे सेनान्यै नतियुगाग्निजायाढ्यः ।
तारादिरार्यमन्त्रः संप्रोक्तो लिख्यतेऽथ भवमन्त्रः ॥ ११९ ॥

नमस्ते भवपुत्राय भवतुल्यबलाय च ।
वरदाय नमस्तेऽस्तु भक्तप्रियहिताय वै ॥ १२० ॥

स्वाहा इति ॥

ओं शराय नमस्तेऽस्तु नमः कुक्कुटकेतवे ।
नमस्ते नीलरूपाय नीलाम्बरधराय च ॥ १२१ ॥

सनतिद्वितयस्वाहान्तोऽयं स्याच्छरमन्त्रकः ।
वदामि प्राग्दिगीशाणुममुनान्यान् समुन्नयेत् ॥ १२२ ॥

ओमिन्द्राय सुराधिपतय इति संकीर्त्य सायुधार्णान्ते ।
वदतु सवाहनपरिवारायेति नमोन्तमिन्द्रमनुरुक्तः ॥ १२३ ॥

मध्ये पालाश्यः स्युः परितोऽथ पलाशखदिरचलदलजाः ।
प्लक्षवटोदुम्बरजाः समिधो बैल्वयश्च मार्गजाश्चात्र ॥१२४॥

---

स्तृपदं गोमृपदं भूताधिपतिपदं च पृथक् ङेनमोन्वितं चतुर्थ्येकवचनेन नमसा च युक्तं भवेत् । प्रणतिस्वाहान्तः नमःस्वाहान्तः ओमादिकः प्रणवादिकश्च एकविंशत्यक्षरः शास्त्रणुः समुद्दिष्टः ॥ ११८ ॥

तारादिः, आर्याय विश्वगोप्त्रे सेनान्यै इति स्वरूपं, नतियुगाग्निजायाढ्यः नमो नमः स्वाहेति युक्तः सप्तदशाक्षर आर्यमन्त्रः संप्रोक्तः । अथ भवमन्त्रो लिख्यते ॥ ११९ ॥

तं लिखति — नमस्त इति ॥ १२० ॥

शरमन्त्रं च पठति — ओं शरायेति ॥ १२१ ॥

सनतिद्वितयस्वाहान्तः नमो नमः स्वाहेत्यन्तोऽयं शरमन्त्रकः स्यात् । प्राग्दिगीशाणुम् इन्द्रमन्त्रं वदामि । अमुना इन्द्रमन्त्रेण अन्यान् अग्न्यादिमन्त्रान् समुन्नयेत् ॥ १२२ ॥

ओं इन्द्राय सुराधिपतय इति संकीर्त्य सायुधार्णान्ते सायुध इत्यक्षरान्ते सवाहनपरिवारायेति वर्णान् नमोन्तं वदतु । एष इन्द्रमनुरुक्तः ॥१२३॥

समिधः कथयति — मध्य इति । मध्ये पालाश्यः स्युः । अथ

मध्ये दिक्ष्वपि वा बहिश्च चतसृष्वार्ये समित्सर्पिषी
मूलेनौदनलाजसर्षपयवा होम्यास्तिलाश्चाज्यकम् ।
दिक्षु स्युः समिधोऽत्र पिप्पलवटप्लक्षाख्यशम्याकजा
लाजाद्येषु तिलान्तिमेषु मनवोऽत्रार्यादयो वा क्रमात् ॥

हुत्वेत्यष्टशतादिसंख्यमुदितांणुद्रव्यक्लृप्त्याखिले
संपातं मनुबिम्बके समुपसिच्य स्वस्वमन्त्रान् जपेत् ।
तत्तद्द्रव्यहुतौ क्रमेण शरजे पज्जानुनोर्गुह्यके
नाभीवत्सशिरःशिखासु विधिवत् संपातमप्यर्पयेत् ॥

त्र्यक्षे मृत्युजिता हुनेच्च दधिमध्वाज्यं गणानामृचा
विघ्नेशेऽष्टयुतं शतं मधुघृतक्षीराणि शेषेष्वथ ।

---

परितः पलाशखदिरचलदलजाः । चलदलोऽश्वत्थः । प्लक्षवटोदुम्बरजाः बैरूयः मार्गजाश्च समिधः स्युः ॥ १२४ ॥

पञ्चहोमपक्षे विकल्पमाह — मध्य इति । आर्ये मध्ये बहिश्चतसृषु दिक्षु च समित्सर्पिषी ओदनलाजसर्षपयवास्तिलाश्चाज्यकं च मूलेन होम्याः । अपि वा अत्र पक्षे दिक्षु पिप्पलवटप्लक्षाख्यशम्याकजाः समिधः स्युः । अत्र लाजाद्येषु तिलान्तिमेषु च द्रव्येषु चतुर्षु आर्यादयः 'आर्याय विश्व' 'नमस्ते' 'ओं शराय' 'ओमिन्द्रायै'त्यादि च चत्वारो मन्त्रा वा क्रमात् स्युः ॥ १२५॥

अथ सामान्येन क्रियाशेषमाह — हुत्वेति । अखिले इति एवम् उदिताणुद्रव्यक्लृप्त्या उक्तमन्त्रद्रव्यक्लृप्त्या। अष्टशतादिसंख्यमित्यादिशब्द उभयथा योजनीयः । अष्टसहस्रं वा अष्टविंशत्यादिकं वेति । उक्तसङ्ख्यं हुत्वा संपातं मनुबिम्बके समुपसिच्य स्वस्वमन्त्रान् स्वस्वहोममन्त्रान् जपेत् । शरजे तत्तद्द्रव्यहुतौ पज्जानुनोः गुह्यके नाभीवत्सशिरश्शिखासु, वत्सं हृदयम्, एषु स्थानेषु गुरुमूर्तिपाः क्रमेण संपातं विधिवत् तत्र तत्र स्रुवेण अर्पयेत् अर्पयेयुः ॥ १२६ ॥

शान्तिहोमं च तत्रैव स्विष्टकृतः प्राक् कुर्यादित्याह — त्र्यक्ष इति । त्र्यक्षे मृत्युजिता मृत्युंजयमन्त्रेण दधिमध्वाज्यं चाष्टशतं हुनेत् । विघ्नेशे

---

१. 'तं द्रव्याणुक्लृ' क., 'तद्द्रव्याणुक्लृ' ग. पाठः २. 'जुहोतु द' इति मूलकोशपाठः.

भूराद्यैः क्रमशो घृतं दधि पयो मध्वष्टशो मूलतः
सर्वं चापि गुहे पयोदधिमधून्याज्यं च भूरादिभिः ॥
पञ्चद्रव्यभवं स्रुवेण पदनाभीहृच्छिरस्स्वर्पयेत्
संपातं सकलाङ्गकेऽपि मनुबिम्बे स्वस्वहोमान्ततः ।
पद्गुह्यात्ममुखे क्रमेण च चतुर्द्रव्योद्भवं त्र्युद्भवं
त्रिस्थाने प्रयजेच्च किञ्चन पृथक् प्रक्षालयेच्च स्रुवम् ॥ १२८ ॥

सर्वेष्विह स्वोदितशक्तिबीजतः
शिवेऽथवोमावसुवर्णतो घृतम् ।
आहुत्य पीठेऽङ्घ्र्युपले स्रुवेण तत्
संपातमासिच्य तथाधिवासयेत् ॥ १२९ ॥

पक्वोपदिष्टमनुनाष्टशतादिसंख्यं
रत्नार्थमाज्यमिह वैव तथा जुहोतु ।

---

गणानामृचा मधुघृतक्षीराण्यष्टशतं हुनेत् । अथ शेषेषु भूराद्यैश्चतुर्भिः क्रमशः घृतं दधि पयो मधु च अष्टशो मूलतः सर्वं चापि गुहे भूरादिभिः पयोदधिमधून्याज्यं चाष्टशो हुनेत् । अयं शान्तिहोमः गुरुमूर्तिपैः सर्वैर्वा गुरुणैव वा होतव्यः ; उभयथा चागमेषु दर्शनात् ॥ १२७ ॥

तत्संपातस्पर्शनमाह — पञ्चद्रव्यभवमिति । पञ्चद्रव्यभवं संपातं मनुबिम्बके पदनाभीहृच्छिरस्सु पृथक् सकलाङ्गकेऽपि स्वस्वहोमान्ततः स्रुवेणार्पयेत् । चतुर्द्रव्योद्भवं पद्गुह्यात्ममुखेषु क्रमेण च त्र्युद्भवं त्रिस्थाने आधारहृद्भ्रूमध्येषु च । पृथक् किञ्चन प्रयजेच्च । पृथक् स्रुवं प्रक्षालयेच्च ॥ १२८ ॥

पुनः पीठाद्यधिवासनार्थं होमोऽप्यत्रैव कार्य इत्याह — सर्वेष्विति । इहैव सर्वेषु देवेषु स्वोदितशक्तिबीजतः स्वस्वशक्तिबीजेन, शिवे अथवा उमावसुवर्णतः औमेयेनाष्टाक्षरेण घृतमष्टशतादिसंख्यमाहुत्य पीठे स्रुवेण च घृतमाहुत्य अङ्घ्र्युपले नपुंसकशिलायां च तत्संपातं चासिच्य तथा तद्द्वयमधिवासयेत् ॥ १२९ ॥

अथाचार्यः इहैवाग्निमुखे वा पृथगग्निमुखं कृत्वा तत्र वा रत्नार्थं रत्नविन्यासार्थं पक्वोपदिष्टमनुना स्वस्वपक्वहोमार्थमुक्तेन मन्त्रेणाष्टशतादिसंख्य-

---

१. 'क् स्रुवेण स' क, 'क् स्रुवं स' घ. च. पाठः.

स्वैरष्टबन्धविधये नवशक्तिमन्त्रैः
संपातयुग्ममपि रक्षतु तद्धुतात्तम् ॥ १३० ॥

गायत्र्याज्यहुतान्ते गुहे हुनेद् ब्रह्मसोमवसुरुद्रान् ।
रत्नानि बीजलोहान् धातूनुक्त्वौषधीश्च रत्नहुतौ ॥ १३१ ॥

कृत्वा स्विष्टकृदाद्यं स्वकल्पविधिना प्रसाद्य विभुमन्ते ।
सर्वेऽपि परिसमूहनपर्युक्षणपूर्विकाः क्रियाः कुर्युः ॥ १३२ ॥
मण्डपबाह्येऽवाच्यां धेनूर्गङ्गाह्वयां तथा यमुनाम् ।
गोदावरीं सरस्वत्याख्यां चास्थाप्य नामभिः प्रयजेत् ॥ १३३ ॥

दुग्ध्वा गायत्र्या ताः श्रीरमणे तारकेण दुर्गायाम् ।
आभ्यामेव मनुभ्यामनयोः स्वाग्नौ पयश्चरुं श्रपयेत् ॥ १३४ ॥

इष्ट्वा तथैव बिम्बे निवेदयेन्मण्डले च हविरर्धम् ।
हुत्वांशेन निजाग्नौ सदक्षिणं भोजयेदुदग् विप्रान् ॥ १३५ ॥

---

माज्यं जुहोतु । तथा चाष्टबन्धविधये स्वैः स्वैर्नवशक्तिमन्त्रैराज्यं जुहोतु । तद्धुताच्च तद्धोमद्वयाद् गृहीतं संपातद्वयं रक्षतु ॥ १३० ॥

गुहे हुतौ गायत्र्याज्यहुतेरन्ते ब्रह्मसोमवसुरुद्रान् 'ब्रह्मणे स्वाहा' 'सोमाय स्वाहा' 'वसुभ्यः स्वाहा' 'रुद्रेभ्यः स्वाहा' रत्नानि 'रत्नेभ्यः स्वाहा' बीजलोहान् 'बीजेभ्यः स्वाहा' 'लोहेभ्यः स्वाहा' धातून् 'धातुभ्यः स्वाहा' ओषधीः 'ओषधिभ्यः स्वाहा' एतान् ब्रह्मादीनुक्त्वाज्यं हुनेत् ॥ १३१ ॥

एवं सर्वत्र होमानन्तरं स्विष्टकृदाद्यं स्वकल्पविधिना कृत्वा विभुं देवं प्रसाद्यान्ते सर्वेऽपि ते परिसमूहनपर्युक्षणपूर्विकाः[1] क्रियाः कुर्युः ॥ १३२ ॥

अथेह गोदोहनादिकमाह — मण्डपबाह्य इति । श्रीरमणे विष्णौ मण्डपबाह्ये अवाच्यां दक्षिणस्यां दिशि गङ्गाह्वयां तथा यमुनां गोदावरीं सरस्वत्याख्यां च धेनूरास्थाप्य नामभिः 'गङ्गायै नमः' इत्यादिभिः प्रयजेत् । पुनर्गायत्र्या दुग्ध्वा, दुर्गायामप्येवं संस्थाप्य संपूज्य तारकेण दुग्ध्वा, अनयोर्विष्णुदुर्गयोः स्वाग्नौ आचार्यकुण्डस्थाग्नौ आभ्यामेव गायत्रीप्रणवाभ्यां पयश्चरुं पायसं श्रपयेत् पाचयेत् ॥ १३३, १३४ ॥

बिम्बे मण्डले च तथैव गायत्र्या प्रणवेन वेष्ट्वा हविरर्धं हविषोऽर्ध-

---

1. 'नादिकाः' क. पाठः.

**आद्याश्चेति बहिर्दिक्षु वृक्षेष्विति विदिक्ष्वपि ।**
**विनायका इति हरेदष्टाशास्वनयोर्बलिम् ॥ १३६ ॥**

**आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः ।**
**प्रसन्नाः परितुष्टास्ते प्रतिगृह्णन्त्विमं बलिम् ॥ १३७ ॥**

**प्रागिति प्राक्पदेऽन्यासु दक्षिणे पश्चिमे पदे ।**
**उत्तरे च पदं प्रोच्य वाच्यो दिग्बलिमन्त्रकः ॥ १३८ ॥**

**वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः ।**
**भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णन्त्विमं बलिम् ॥ १३९ ॥**

**विनायकाः क्षेत्रपाला ये चान्ये बलिकाङ्क्षिणः ।**
**पूर्वाद्याः पार्षदाः सर्वे तेऽपि गृह्णन्त्विमं बलिम् ॥ १४० ॥**

**इति ।**

**सामान्यदुग्धसिद्धं पायसमन्येषु मूलमन्त्रेण ।**
**इष्ट्वा निवेद्य हुत्वा विप्रान् संभोज्य 'किरतु बलिमेवम् ॥**

---

मर्धं निवेदयेच्च । अंशेन निजाग्नौ हुत्वा मण्डपस्योदग्भागे विप्रान् सदक्षिणं दक्षिणादानसहितं भोजयेच्च ॥ १३५ ॥

**पुनरनयोर्विष्णुदुर्गयोर्मण्डपस्य बहिर्दिक्षु** 'आद्याश्चे'ति, विदिक्षु 'वृक्षेष्वि'ति, पुनरपि पूर्वाद्यष्टाशासु 'विनायका' इति च बलिं हरेत् ॥ १३६ ॥

दिग्गतान् मन्त्रानाह — **आद्याश्चेति** ॥ १३७ ॥

**प्रागिति** इति प्राग्गतो मन्त्रः। अन्यासु दिक्षु प्राक्पदे प्रागिति स्थाने दक्षिणे पश्चिमे उत्तरे च पदं प्रोच्य उक्त्वा दिग्बलिमन्त्रको वाच्यः ॥

कोणगतमन्त्रमाह — **वृक्षेषु** पर्वताग्रेष्विति ॥ १३९ ॥

अष्टाशागतं मन्त्रमाह — **विनायका** इति ॥ १४० ॥

**अन्येषु** देवेषु बिम्बे मण्डले च मूलेन देवमिष्ट्वा सामान्यदुग्धसिद्धं सामान्यक्षीरे सामान्याग्नौ श्रपितं पायसं निवेद्य स्वाग्नौ हुत्वा विप्रानपि संभोज्य एवं वक्ष्यमाणमन्त्रेण बलिं किरतु ॥ १४१ ॥

"देवं रुद्रं पुरस्कृत्येमं बलिं प्रतिगृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे ।"

अमुना मनुनाष्टाशास्वेकावृत्त्या बलिं करोतु शिवे ।
रुद्रपदस्थानगतस्वस्वपदेनापि तेन शेषेषु ॥ १४२ ॥

इमं स्कन्दं पुरस्कृत्य ये देवा ये च राक्षसाः ।
ये भूता ये सुराः सर्वे पिशाचाः किन्नरास्तथा ॥ १४३ ॥

गन्धर्वाः पन्नगा नागा ऋषयश्च खगा अपि ।
यक्षाश्च मातरः सर्वे चारकाः परमात्मनः ॥ १४४ ॥

ते सर्वे प्रतिगृह्णन्तु तेभ्यस्ताभ्यो नमो नमः ।
इत्यष्टदिक्षु विकिरेद् बलिं क्रौञ्चनिषूदने ॥ १४५ ॥

आचम्य नैवेद्यविसर्जनाद्यं सर्वत्र निर्वर्त्य समुक्तनीत्या ।
प्रसन्नपूजामपि संविधाय प्रजप्य मन्त्रान् प्रकरोतु रक्षाम् ॥

रत्नादिकं च शयने विनिधाय वायु-
वह्न्यादिबीजपवनायमनैर्विशोध्य ।

---

तन्मन्त्रं लिखति — देवं[1] रुद्रमिति ॥

शिवेऽमुना मनुनाष्टाशास्वेकावृत्त्या बलिं करोतु । शेषेषु देवेषु रुद्रपदस्थानगतस्वस्वपदेन तेन मन्त्रेण च ॥ १४२ ॥

क्रौञ्चनिषूदने स्कन्दे 'इमं स्कन्दं पुरस्कृत्य' इत्यादिमन्त्रेणाष्टदिक्षु बलिं विकिरेत् ॥ १४३, १४४, १४५ ॥

सर्वत्र क्रियाशेषमाह — आचम्येति । सर्वत्र देवेष्वाचम्यान्तः प्रविश्य नैवेद्यविसर्जनाद्यं समुक्तनीत्या निर्वर्त्य प्रसन्नपूजामपि संविधाय स्वीयान् मन्त्रान् प्रजप्य रक्षां प्रकरोतु ॥ १४६ ॥

**रत्नादिकं** रत्नन्यासद्रव्यगणं देवस्य शयन एव विनिधाय वायुवह्न्यादिबीजपवनायमनैः शोषणादिभिर्विशोध्य स्वहवनोदितमन्त्रकेण स्वस्वरत्नहोमो-

---

1. 'वा' ख. पाठः.

संपूज्य च स्वहवनोदितमन्त्रकेण
तारेण वैषु सकलेष्वधिवास्य रक्षेत् ॥ १४७ ॥

इतिहासपुराणनृत्तगीता-
दिभिराघोष्य महोत्सवं समन्तात् ।
रजनीमपि जाग्रदेव शेषां
गमयेत् तत्पदसंविमर्शिचेताः ॥ १४८ ॥

इति तन्त्रसमुच्चये समाप्तिं समवाप्तः पटलोऽत्र पञ्चमोऽभूत् ।
निजभावनमन्त्रबिम्बपीठाद्यधिवासार्चनतद्धुतादियुक्तः ॥

इति तन्त्रसमुच्चये

पञ्चमः पटलः ।

---

पदिष्टमन्त्रेण तारकेण वा संपूज्य एषु सकलेष्वेवमधिवास्य रक्षेत् ॥ १४७॥

मण्डपस्य समन्ताद् इतिहासपुराणनृत्तगीतादिभिर्महोत्सवमाघोष्य तत्पदसंविमर्शिचेताः तस्मिन् देवस्वरूपे सम्यग्विमर्शनशीलेन चेतसा युक्त आचार्यः शेषां रजनीं रात्रिमपि जाग्रद् अस्वप्न एव गमयेत् ॥ १४८ ॥

पटलमुपसंहरति — इतीति । इति तन्त्रसमुच्चये पञ्चमः पटलः समाप्तिं समवाप्तः प्राप्तोऽभूत् । कथंभूतः, निजभावनमन्त्रबिम्बपीठाद्यधिवासार्चनतद्धुतादियुक्तः निजभावना आचार्यस्य सकलीकरणादि मन्त्रबिम्बस्य पीठस्य आदिशब्देन नपुंसकाशिलादेश्चाधिवासनं तदर्चनं तद्धोमादि च यानि तैर्युक्तः ॥ १४९ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

पञ्चमः पटलः ।

---

१. 'तु ॥ प्रासाद परितोऽष्टदिक्षु सिकताक्लृप्तेष्वथ स्थण्डिलेष्वाधायाजितपावकं ।शखिमुखं कृत्वा सकुम्भार्चनम् । जुहुत्वष्टशतं पलाशसमिधो मूलेन तावद् घृतं पायत्र्या च हरित्क्रमादिह समिद्धेद्वोऽथवा गृह्यताम् ॥ एवं शार्ङ्गधरे विधाय परिहोमांस्ताम्रकुम्भं पंर तत्सम्पातघटोदकैः समभिपूर्याष्टार्णवर्णैः क्रमात् । एकीभूतचितिं स्वमूलमनुना सङ्कल्प्य तस्मिन् विभुं प्राच्यविष्टय नवांशुकेन करगुसं मण्डपान्तर्नयेत् ॥ इति' ख. पाठः.

## अथ षष्ठः पटलः ।

प्रत्यूष एव कृतसांप्रतिकक्रियोऽथ
पीठाधिवाससमये विहिताधिवासम् ।
संशोध्य गेहवपुषं पुरुषं विभूष्य
संस्थाप्य साधु महितं वितनोतु मन्त्री ॥ १ ॥

स्मराजिति मनुलिङ्गे मण्डले चार्चयित्वा
दधिमधुघृतमिश्रं पायसान्नं निवेद्य ।
बलिमपि परितोऽष्टाशाक्रमात् संप्रदाय
प्रचरतु गृहयागं देवदेवं प्रसाद्य ॥ २ ॥

देवभूतपिशाचाश्च गन्धर्वा यक्षसंज्ञकाः ।
पिशिताशाश्च नागाश्च काङ्क्षन्ते मातरो बलिम् ॥ ३ ॥

---

अथ षष्ठं प्रतिष्ठापटलमारभते —**प्रत्यूष** इति । अथ मन्त्री एवम-धिवासानन्तरमुत्तरेद्युः प्रत्यूष एव उषसः पूर्वमेवोत्थायावश्यकादिकं निर्वर्त्य स्नानादि कृत्वा कृतसाम्प्रतिकक्रियः कृतप्राभातिकविधिर्भूत्वा पीठाधिवाससमये विहिताधिवासं पूर्वेद्युः पीठाधिवासानन्तरं भूतसंहारादिभिः शोषणादिभिश्च संशोध्य भूतानि सृष्ट्वा मन्त्रन्यासादिभिः सकलीकृत्य संपूज्य संपातशेषं च समर्प्य वस्त्रेणाच्छाद्याधिवासितं प्रासादं सम्प्रति मुष्ट्यादिभिः संशोध्य गेहवपुषं प्रासादरूपिणं पुरुषं विभूष्य साधु यथोक्तविधिना संस्थाप्य महितं वितनोतु पूजां कुर्यात् ॥ १ ॥

शिवे क्रियाविशेषमाह —**स्मराजितीति** । स्मराजिति पूर्वं मनुलिङ्गे म-ण्डले चार्चयित्वा दधिमधुघृतमिश्रं पायसान्नं निवेद्य परितः पूर्वाद्यष्टाशाक्रमाद् बलिमपि संप्रदाय देवदेवं प्रसाद्य प्रसन्नपूजानन्तरं गृहयागं प्रासादस्थापना-दिकं प्रचरतु ॥ २ ॥

बलिमन्त्रानाह —**देवेति** । देवादिमातृपर्यन्ता ग्रहा बलिं काङ्क्षन्ते । तत्र 'देवग्रहेभ्यो नमः' इत्यादयो मन्त्राः ॥ ३ ॥

---

१. 'नामनन्त' ख. पाठः.

**आचार्योऽसौ नववसनधृग् गर्भगेहोपविष्टः**
**स्विष्टात्माभ्यर्चितगुरुगणाधीशनान्दीसुपर्वा ।**
**कृत्वा पुण्याहमिह कृतरत्नाष्टबन्धानुबन्धं**
**पीठप्रेज्यां चरतु रचिते पच्छिलास्थानगर्ते ॥ ४ ॥**
**इष्ट्वा ब्रह्मशिलां सुधीः प्रणवतो न्यस्यार्थयेत् त्वंस्थितं-**
**मन्त्राभ्यां प्रथमार्थितामवरतो न्यस्येत् तदा स्थापिताम् ।**
**मन्त्रेण प्रथमेन वार्थयतु तद्गर्तान् हरौ शोधयेद्**
**गव्यैर्गन्धजलैश्च वस्विनलिपिभ्यां मूलतोऽन्येष्वतः ॥ ५ ॥**
**त्वमेव परमा शक्तिस्त्वमेवासनधारिका ।**
**देवाज्ञया त्वया देवि! स्थातव्यमिह सर्वदा ॥ ६ ॥**
**स्थितं चराचरं यस्यां रत्नानां निधिरव्ययः ।**
**सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणी स्थिरा ॥ ७ ॥**

---

पुनः सामान्येन रत्नन्यासादिविधिमाह — **आचार्य** इति । असौ आचार्यः नववसनधृक् नववस्त्रधार्याचम्य गर्भगेहोपविष्टः प्रासादान्तर्गत्वा गर्भगृह उपविश्य गुरुगणपतिवन्दनादिसकलीकरणशङ्खपूरणानन्तरं स्विष्टात्मा कृतात्माराधनः अभ्यर्चितगुरुगणाधीशनान्दीसुपर्वा गुरून् गणपतिं च संपूज्य नान्दीमुखं च कृत्वा इह रत्नन्यासकर्मणि कृतरत्नाष्टबन्धानुबन्धं 'रत्नाष्टबन्धदेवताः प्रीयन्तामि'त्यादिविशेषयुक्तं पुण्याहं कृत्वा पच्छिलास्थानगर्ते नपुंसकशिलाया अधोभागे पीठप्रेज्यां प्रचरतु ॥ ४ ॥

ततो ब्रह्मशिलां नपुंसकशिलां प्रणवत इष्ट्वा सुधीः रत्नपीठबिम्बादेः सर्वस्याधारभूतां नपुंसकशिलां ध्यायन् प्रणवतो न्यस्य स्थापयित्वा 'त्वंस्थितं'-मन्त्राभ्यामर्थयेत् प्रार्थयेत् । प्रथमार्थितां 'त्वमेवे'त्यादिना प्रार्थनानन्तरम् अवरतः 'स्थितं चराचरमि'त्यनेन न्यस्येत् स्थापयेत् । तदा स्थापितां 'स्थितं चराचरमि'ति स्थापितां प्रथमेन मन्त्रेण 'त्वमेवे'त्यनेनार्थयतु प्रार्थयतु । पुनस्तद्गर्तान् नपुंसकशिलास्थितान् गर्तान् हरौ वस्विनलिपिभ्याम् अष्टाक्षरद्वादशाक्षरमन्त्राभ्यां गव्यैर्गन्धजलैश्च क्रमेण शोधयेत् क्षालयेत् । अतोऽन्येषु देवेषु मूलतश्च शोधयेत् ॥ ५ ॥

प्रस्तुतौ मन्त्रौ पठ्येते — **त्वमेव परमे**त्यादि **स्थितं चराचर**मित्यादि च ॥ ६, ७ ॥

इति।

परितोऽष्टसु दिक्षु तत्र गर्तान्
प्रविधायावरणक्रमात् तदन्तः।
अपरं च नपुंसकाश्मनीह
स्वहुताज्योज्ज्वलमर्पयेदमूनि ॥ ८ ॥

रत्नानीशहरौ सबीजमणिधातुस्वर्णपूर्वाण्यथो
दुर्गाशास्त्रजितेषु तानि गणनाथे रत्नबीजक्रमात्।
गौरीशे मणिधातुबीजसवृषास्त्रस्तोमलोहक्रमात्
सेनान्यां मणिधातुलोहगणबीजास्त्रक्रमाद् विन्यसेत् ॥ ९ ॥

श्रीशे मूलार्णमूलैर्न्यसतु नवसु दिक्षु क्रमादन्तरन्त-
स्तद्वत् तारेण तानि स्मरमुरदमने तेन संगृह्य विघ्ने।
मूलेनान्येषु तेनैव तु महिषरिपावाद्यया तत्र दिक्षु
द्रव्याणीशेतरेषु प्रथममथ शिवे द्रव्यमन्त्रांश्च वक्ष्ये ॥ १० ॥

---

तत्र नपुंसकाश्मनि परितोऽष्टसु दिक्ष्वावरणक्रमाद् द्रव्यसंख्यावरण-क्रमेण तदन्तः अपरं च गर्तान् प्रविधाय इह गर्तेष्वमूनि द्रव्याणि स्वहुताज्यो-ज्ज्वलं होमसिद्धेन सम्पातेनोज्ज्वलं यथा भवति तथार्पयेत् स्थापयेत् ॥ ८ ॥

द्रव्याणां क्रममाह — **रत्नानीति**। अथो ईशहरौ रत्नान्येव विन्य-सेत्। दुर्गाशास्त्रजितेषु सबीजमणिधातुस्वर्णपूर्वाणि बीजरत्नधातूनि सुवर्णा-दिलोहानि च, गणनाथे रत्नबीजक्रमात् तानि द्रव्याणि, गौरीशे मणिधातुबी-जसवृषास्त्रस्तोमलोहक्रमात् रत्नधातुबीजानि वृषसहितास्त्रसमूहांश्च लोहांश्च, सेनान्यां मणिधातुलोहगणबीजास्त्रक्रमात् रत्नधातुलोहबीजास्त्राणि क्रमाद् वि-न्यसेत् ॥ ९ ॥

न्यासमन्त्रानाह — **श्रीश इति**। श्रीशे मूलार्णमूलैः मूलाक्षरैर्मूलेन च नवसु दिक्ष्वन्तरन्तः क्रमात् तानि द्रव्याणि न्यसतु। स्मरमुरदमने शिव-नारायणे तारेण तद्वद् अन्तरन्तर्न्यसतु। विघ्ने तेन तारेण संगृह्य गृहीत्वा मूलेन न्यसतु। अन्येषु देवेषु तेन मूलेनैव, महिषरिपौ तु तत्र दिक्ष्वाद्यया त्रिष्टुभा मध्ये मूलेन च न्यसतु। प्रथममादौ ईशेतरेषु शिवादन्येषु द्रव्याणि वक्ष्ये। अथ शिवे द्रव्यमन्त्रांश्च द्रव्याणि मन्त्रांश्च वक्ष्ये ॥ १० ॥

दुर्गाशार्ङ्गभृतोर्न्यसेदिह यवव्रीही सनिष्पावकौ
बीजानि क्रमशः प्रियङ्गुतिलमाषांश्चापि नीवारकान् ।
शालीसर्षपशालिनास्तिलपदश्यामान् गणाधीश्वरे
शालीराजिमुचोऽथ वैणववतो मध्येऽखिलांश्चार्यके ॥ ११ ॥

रत्नधातुनवकं निजगर्भन्यासदिष्टमिह विष्णुगणेशे ।
रत्नकानि नव विष्णुसमुक्तान्येव शास्तरि च शुम्भरिपौ च ॥

पुलकं विद्रुममञ्जनसंज्ञं श्यामं ससीसकं न्यसतु ।
आर्यकुमार्योः समनश्शिलहरितालं सगैरिकं सरसम् ॥ १३ ॥

---

दुर्गाशार्ङ्गभृतोः इह द्रव्यन्यासे यवव्रीही सनिष्पावकौ निष्पावं च (നിഷ്പാവം=തുവര.) प्रियङ्गुतिलमाषान् (പ്രിയംഗു=തിന.) नीवारकांश्चापि (നീവാരം=വരിനെല്ല്.) शालीसर्षपशालिनः शालिभिः सर्षपैश्च युक्तान् । एवं बीजानि न्यसेत् । गणाधीश्वरे तिलपदश्यामान् तिलस्थाने (ശ്യാമം=ചാമ.) । आर्यके शालीराजिमुचः शालीसर्षपरहितान् वैणववतः वैणवयुक्तान् मध्येऽखिलान् अष्टबीजानि च सह न्यसेत् ॥ ११ ॥

विष्णुगणेशे विष्णुगणेशयोः इह रत्नधातुनवकं रत्ननवकं धातुनवकं च निजगर्भन्यासदिष्टं निजनिजगर्भन्यासे निर्दिष्टम् । शास्तरि च शुम्भरिपौ च विष्णुसमुक्तान्येव नवरत्नकानि ॥ १२ ॥

आर्यकुमार्योः पुलकं स्वयमेव (വിദ്രുമം=പവിഴം.) अञ्जनसंज्ञं स्वयमेव ससीसकं (സീസം=ഈയം.) समनश्शिलहरितालं (മനശ്ശില=മനയോല, ഹരിതാലം=അരിതാലം.) सगैरिकं (ഗൈരികം=ചെങ്കല്ല്.) सरसं रससहितं रसं स्वयमेव एतानि न्यसतु ॥ १३ ॥

---

१. 'वङ्कं च' ख. पाठः.

दुर्गार्यविघ्नबलिविद्विषि जातरूपं
रूप्यं च ताम्रकमयस्त्रपु पश्चिमान्तम् ।
न्यस्याजिते न्यसतु शेषदिशासु सीसं
स्वर्णोद्भवं कमठशङ्खपयोरुहं च ॥ १४ ॥

सीसं तार्क्ष्यारकूटावितरदिशि दरारीषुचापासिशूलं
पाशं दण्डं च मध्ये महिषजिति ससीसारकूटं च कांस्यम्।
स्वर्णं चार्येऽन्यदिक्षु द्विरदवरमुखेऽथारकूटं सुपित्थं
कांस्यं न्यस्येत् त्रिदिक्षु स्वरदकमठचाषाम्बुजं हैममन्तः॥
इन्द्रनीलमणिगारुडवैडूर्याख्यमौक्तिकसविद्रुमवज्रम् ।
पुष्यरागमपि दिक्षु हरीशे न्यस्य विन्यसतु काञ्चनमन्तः॥

---

दुर्गार्यविघ्नबलिविद्विषि दुर्गार्यविघ्नविष्णुषु (ജാതരൂപം=പൊൻ. രൂപ്യം=വെള്ളി.) ताम्रकं (അയഃ=ഇരിമ്പ്. ത്രപു=ചമ്പ്രാക്കൊട്ടി) एतानि पश्चिमान्तं न्यस्य अजिते शेषदिशासु सीसम् उक्तं स्वर्णोद्भवं सुवर्णकृतं 'कमठशङ्खपयोरुहं च कमठं कूर्मं शङ्खं मध्ये पद्मं च न्यसतु ॥ १४ ॥

महिषजिति इतरदिशि वाय्वादिदिक्षु सीसं तार्क्ष्यारकूटौ तार्क्ष्यं गारुडशिला आरकूटं स्वयमेव, मध्ये दरारीषुचापासिशूलं (ദരം=ശംഖം. അരി=ചക്രം. ഇഷു=ശരം. ചാപം=ധനസ്സ്. അസി=ഖഡ്ഗം. പാശം=കയറ്.) दण्डं स्वयमेव, हैमान्येतानि न्यस्येत् । आर्येऽन्यदिक्षु ससीसारकूटं सीसमारकूटं च, (കാംസ്യം=വെള്ളോട്.) 'स्वर्णं च मध्ये न्यस्येत् । अथ द्विरदवरमुखे गणपतौ त्रिदिक्षु वायुसोमेशानदिक्षु आरकूटं सुपित्थं (പിത്ഥം=പിച്ചള.) कांस्यं च न्यस्येत्। अन्तर्हैमं स्वरदकमठचाषाम्बुजं स्वरदं स्वदन्तं कमठं कूर्मं (ചാഷം=എലി.) पद्मं च न्यस्येत्॥१५॥

हरीशे पूर्वादिदिक्षु इन्द्रनीलं स्वयमेव (മണി=മാണിക്യം.) गारुडं गरुडशिला वैडूर्याख्यं स्वयमेव (മൌക്തികം=മുത്ത്. വിദ്രുമം=പവിഴം. വജ്രം=വൈരം.) पुष्यरागं स्वयमेव एतानि न्यस्यान्तः काञ्चनं विन्यसतु ॥ १६ ॥

न्यस्यतु रत्नानि गुहे वज्रं वैडूर्यमिन्द्रनीलं च ।
शङ्खं स्फटिकं पुष्यं मुक्ताफलविद्रुमाब्जरागं च ॥ १७ ॥

धातून् मनश्शिलामिह हरितालं चाञ्जनं तथा श्यामम् ।
सौराष्ट्रीं सह गोरोचनमाक्षिकगैरिकं न्यसेत् सरसम् ॥१८॥
स्वर्णं रजतं ताम्रं पित्तलसंज्ञं त्रपु न्यसेत् तद्वत् ।
सीसायसी सकांस्ये दिक्ष्वष्टास्वन्तरष्टलोहानि ॥ १९ ॥
यवगोधूमकमाषान् सह तिलमुद्गप्रियङ्गुसिद्धार्थान् ।
शालीमपि विन्यस्येद् दिक्ष्वष्टसु मध्यतोऽष्टबीजानि ॥२०॥
पद्मं गजं मयूरं शक्तिं वज्रं च कुक्कुटं चापि ।
अन्तर्न्यस्यतु हैमान् द्रव्यन्यसनं गुहे विधेयमिति ॥ २१ ॥
सद्योजातकलाभिरष्टभिरिहेन्द्रादीशनिष्ठं शिवे
वज्रं मौक्तिकपुष्यरागहरिनीलाख्यान्यथ स्फाटिकम् ।

---

गुहे प्रोक्तक्रमेणान्तरन्तः वज्रं वैडूर्यम् इन्द्रनीलं च शङ्खं स्वयमेव स्फटिकं च स्वयमेव (പുഷ്യം=പുഷ്യരാഗം.) मुक्ताफलं विद्रुमम् अब्जरागं पद्मरागम् एतानि रत्नानि न्यस्यतु ॥ १७ ॥

अथ धातूनपि तत्र तथा न्यसेत् । मनश्शिलां हरितालम् अञ्जनं श्यामं सौराष्ट्रीं (സൌരാഷ്ട്രി=തുവർച്ചിലക്കാരം.) गोरोचनं स्वयमेव (മാക്ഷികം=മാക്കീരം.) गैरिकं रसं च ॥ १८ ॥

तद्वदेवाष्टासु दिक्षु सुवर्णं रजतं ताम्रं पित्तलं त्रपु सीसम् अयः सकांस्यं च, अन्तर्मध्येऽष्टलोहानि सह न्यसेत् ॥ १९ ॥

पुनरष्टदिक्षु यवगोधूमकमाषान् (ഗോധൂമം=കോതമ്പ്.) तिलमुद्गप्रियङ्गुसिद्धार्थान् शालीमपि मध्यतो अष्टबीजानि सह न्यसेत् ॥ २० ॥

पुनरन्तः पद्मं गजं (മയൂരം=മയിൽ. ശക്തി=വേൽ.) वज्रं स्वयमेव (കുക്കുടം=കോഴി.) हैमान् हेमनिर्मितान् (न्यस्यतु) । गुहे इति द्रव्यन्यसनं विधेयम् ॥ २१ ॥

शिवे अष्टभिः सद्योजातकलाभिः इन्द्रादीशनिष्ठं पूर्वाद्यष्टदिक्षु वज्रं मौक्तिकपुष्यरागहरिनीलाख्यानि हरिनीलम् इन्द्रनीलं स्फाटिकं विद्रुजं

विन्यस्येच्च विडूरजं मरतकं नीलोत्पलं च क्रमा-
न्मध्ये न्यस्यतु पद्मरागमपि सद्योजातविद्यां जपन् ॥ २२ ॥

तथा मनोह्लां हरितालकं न्यसेत्
सौराष्ट्रिकां विद्रुमरोचने पुनः ।
प्रवालकं साञ्जनमाक्षिकं रसं
कलासमस्तात्मकवामविद्यया ॥ २३ ॥

शालियवौ गोधूमप्रियङ्गुमाषांस्तिलं च नीवारम् ।
निष्पावसर्षपौ च न्यसतु ततः सकलभीममन्त्रेण ॥ २४ ॥

कलाभिर्नारीभिर्वृषपरशुरुद्राक्षवलयं
त्रिशूलं दिक्ष्वन्तः कमलमपि पुंसा कनकजम् ।
विदिक्ष्वैशानीभिर्न्यसतु रजतायस्त्रपु यथा-
क्रमं ताम्रं मध्ये सकलमनुना काञ्चनमपि ॥ २५ ॥

---

वैडूर्यं मरतकं स्वयमेव नीलोपलं नीलरत्नं मध्ये सद्योजातविद्यां 'सद्योजात'मन्त्रं जपन् पद्मरागं विन्यसतु ॥ २२ ॥

पुनस्तथा कलासमस्तात्मकवामविद्यया वामदेवकलाभिर्वामदेवेन च (മനോഹ്വാ=മനയോല.) हरितालं सौराष्ट्रिकां विद्रुमरोचने विद्रुमं गो-रोचनां च (പ്രവാളകം=പവിഴം.) साञ्जनमाक्षिकम् अञ्जनं माक्षिकं च तथा इन्द्रादीशानिष्ठं न्यसेत् ॥ २३ ॥

ततः सकलभीममन्त्रेण कलासहितेन भीममन्त्रेण अघोरकलाभिः अ-घोरमन्त्रेण च शालियवौ गोधूमप्रियङ्गुमाषान् तिलं नीवारं च निष्पावसर्षपौ च तद्वदुक्तक्रमेण न्यसतु ॥ २४ ॥

ततो नारीभिः नरसम्बन्धिनीभिः तत्पुरुषकलाभिश्चतसृभिर्दिक्षु कन-कजं वृषपरशुरुद्राक्षवलयं (വൃഷം=കാള. പരശു=കോടാലി, രുദ്രാക്ഷവലയം=രുദ്രാക്ഷമാല.) त्रिशूलं च, पुनरन्तः कनकजं कमलं पुंसा तत्पुरुषेण

---

१. 'स', २. 'मात' क. पाठः.

संपातदोष्णा हवनाणुनाभि-
मृश्याणिमाद्यष्टकरूपमेतत् ।
इष्ट्वादिनास्योपरि पीठमिष्टं
संस्थापयेत् साशुगतत्त्वशक्त्या ॥ २६ ॥

शक्तिं स्वबीजकुसुमार्पणतोऽनुवेश्य
न्यस्यार्णपीठमनुबीजतदङ्गकानि ।
इष्ट्वा प्रतिष्ठितिकृते परिपूज्य पीठं
बीजार्चितं परिवृतं वसनेन रक्षेत् ॥ २७ ॥

रत्नन्यासक्रमसुमहिते स्थापिते स्थापनार्थं
ब्रह्मग्राण्णि प्रचरतु शिवे पीठपूजां यथोक्ताम् ।

---

च न्यसतु । ततो विदिक्षु ऐशानीभिः कलाभिः रजतम् अयः त्रपु ताम्रं च यथाक्रमं, मध्ये सकलमनुना समस्तेशानमन्त्रेण काञ्चनमपि न्यसतु ॥ २५ ॥

ततः सर्वेषु अणिमाद्यष्टकरूपं देवस्याणिमाद्यष्टैश्वर्यात्मकम् एतद् द्रव्यजातं संपातदोष्णा संपातलिप्तेन करेण हवनाणुना स्वस्वरत्नहोममन्त्रेण अभिमृश्य स्पृशन् जप्त्वा आदिना प्रणवेन इष्ट्वा अस्योपरि एवंभूताया नपुंसकशिलाया उपरि इष्टं पूजितं पीठं साशुगतत्त्वशक्त्या संस्थापयेत् । साशुगतत्त्वशक्त्येति पञ्चतत्त्वानां शक्तिपुटितत्वमुक्तम् । संस्थापयेदिति पञ्चतत्त्वानां पुरः[2] पीठमन्त्राणामुच्चारणं सूचितम् ॥ २६ ॥

पुनः[3] स्वबीजकुसुमार्पणतः शक्तिमनुवेश्य स्वस्वशक्तिबीजेन यथोपदेशमावाहनं कृत्वा अर्णपीठमनुबीजतदङ्गकानि पूर्वबल्लिपिपीठमन्त्रान् शक्तिबीजं तदङ्गकानि च न्यस्य इष्ट्वा तदनु प्रतिष्ठितिकृते बिम्बप्रतिष्ठार्थं पीठं परिपूज्य बीजार्चितं स्वशक्तिबीजेनार्चितं वसनेन वस्त्रेण परिवृतं पीठं रक्षेत् अस्त्रत्रितालादिना रक्षां कुर्यात् ॥ २७ ॥

शिवे तु पूर्वं स्थापिते पुनः रत्नन्यासक्रमसुमहिते रत्नन्यासपरिपाट्या सुतरां पूजिते ब्रह्मग्राण्णि नपुंसकशिलायां यथोक्तां स्थापनायोक्तां पीठपूजां

---

१. 'बीजाङ्गकैः समभिपूज्य समर्च्य पीठं बीजाणुना समभिबाध्य समर्च्य र',
२. 'र' ख. पाठः. ३. 'नः बी' ख. पाठः.

पीठे यन्त्रोपरि परिगते च स्वपीठीयशक्तिं
सङ्कल्प्यैतत्समुदितदिशा न्यस्य संपूज्य रक्षेत् ॥ २८ ॥

प्रासादं परितोऽष्टदिक्षु सिकताक्लृप्तेष्वथ स्थण्डिले-
ष्वाधायाजितपावकं शिखिमुखं कृत्वा सकुम्भार्चनम् ।
जुह्वत्वष्टशतं पलाशसमिधो मूलेन तावद् घृतं
गायत्र्या च हरित्क्रमादिह समिद्भेदोऽथवा गृह्यताम् ॥

एवं शार्ङ्गधरे विधाय परिहोमांस्ताम्रकुम्भं परं
तत्संपातघटोदकैः समभिपूर्याष्टार्णवर्णैः क्रमात् ।
एकीभूतचितिं स्वमूलमनुना सङ्कल्प्य तस्मिन् विभुं
प्राच्यर्यावेष्ट्य नवांशुकेन करगुप्तं मण्डपान्तर्नयेत् ॥ ३० ॥

---

प्रचरतु । यन्त्रोपरि परिगते स्थिते पीठे स्वपीठीयशक्तिं स्वपीठयोग्यां शक्तिम् एतत्समुदितदिशा पीठस्थापनोक्तमार्गेण संकल्प्यावाह्य न्यस्य संपूज्य रक्षेत् ॥

विष्णौ तु परिहोमाः कर्तव्या इत्याह — प्रासादमिति । शार्ङ्गधरे अथ रत्नन्यासानन्तरं प्रासादं परितः प्रासादस्य परितोऽष्टदिक्षु सिकताक्लृप्तेषु स्थण्डिलेषु स्थण्डिलानि कृत्वा तत्र सिकताश्च विन्यस्य तेषु अजितपावकं वैष्णवाग्निम् आधाय । अजितपावकमित्यनेन पक्षद्वयं द्योत्यते । तत्राग्रतोऽग्निं जनयित्वा तमग्निं विभज्याष्टसु स्थण्डिलेषु निधाय होमान् कुर्यादिति केचित् । उल्लेखादिक्रमेणाग्निमाधाय मूलेनावाह्य संपूज्य होमान् कुर्यादिति केचित् । शिखिमुखम् अग्निमुखं सकुम्भार्चनं दक्षिणतः कलशपूजासहितं कृत्वा मूलेनाष्टशतं पलाशसमिधो मूर्तिपा जुह्वतु, गायत्र्या तावद् घृतं च । अथेह परिहोमे समिद्भेदः हरित्क्रमाद् दिक्क्रमात् प्रायश्चित्तादिहोमवत् स्वस्वदिग्योग्याः समिधः गृह्यन्तां परिगृह्यन्तां वा ॥ २९ ॥

एवं परिहोमान् विधाय तत्संपातघटोदकैरष्टार्णवर्णैरष्टाक्षरस्याक्षरैः क्रमात् परमन्यं ताम्रकुम्भं संपूर्य तस्मिन् एकीभूतचितिं विभुं स्वमूलमनुना संकल्प्यावाह्य प्राच्यर्य नवांशुकेनावेष्ट्य करगुप्तं वामकरे स्थापितं दक्षिणकरेणाच्छादितं तं कलशं मण्डपान्तर्नयेद् आनीय क्वचित् स्थापयेत् ॥ ३० ॥

तत्राधिबिम्बं परिपूज्य पीठ-
मावाह्य मूलेन कृताङ्गक्लृप्तिः ।
अर्घ्यादि दत्त्वा परिहोमसिद्ध-
तोयेन सिञ्चेत् स्नपने ध्रुवेण ॥ ३१ ॥

सर्वेषु तत्तन्मनुभिः समुक्ष्य
विघेशकुम्भोपभृताभिरद्भिः ।
संस्नाप्य वा ताभिरथांशुकाद्यैः
संभूष्य संपूजयतूपहारैः ॥ ३२ ॥

ततो मण्डले दीप्यमाने च वह्नौ
विधाय प्रसूनाञ्जलिं प्रीणयित्वा ।
चितिं तोरणादिस्थितां कुण्डसंस्थां
समुद्वासयेन्मण्डलस्थां च बिम्बे ॥ ३३ ॥

कुम्भेशनिद्राघटयोर्विधाय
पुष्पाञ्जलिं तद्द्वयपीठशक्तिम् ।

---

तत्र अधिबिम्बं बिम्बे पीठं परिपूज्य मूलेनावाह्य कृताङ्गक्लृप्तिः सकलीकरणकृद् भूत्वा अर्घ्यादि दत्त्वा स्नपनकाले ध्रुवेण परिहोमसिद्धतोयेन सिञ्चेत् ॥ ३१ ॥

अथ सर्वेषु देवेषु विघेशकुम्भोपभृताभिरद्भिः स्वस्वविघेश्वरकलशैः तत्तन्मनुभिर्विघेशमन्त्रैः समुक्ष्य ताभिः संस्नाप्य वा अथ अंशुकाद्यैः संभूष्य उपहारैः संपूजयतु ॥ ३२ ॥

ततो निवेद्य प्रसन्नपूजानन्तरं मण्डले दीप्यमाने वह्नौ च प्रसूनाञ्जलिं विधाय प्रीणयित्वा तयोः स्थितं देवं प्रसाद्य तोरणादिस्थितां तोरणध्वजद्वारकलशादिषु गतां कुण्डसंस्थां कुण्डस्थाग्निगतां मण्डलस्थां च क्रमेण चितिं चैतन्यकलां बिम्बे समुद्वासयेत् ॥ ३३ ॥

कुम्भेशनिद्राघटयोः पुष्पाञ्जलिं विधाय तद्द्वयपीठशक्तिं कुम्भेशनिद्राघटयोः पीठशक्तिं तयोर्द्वयोः समुद्वास्य लयाङ्गकृद् भूत्वा नीराज्य मूर्तिपाभ्यां

---

१. 'अथाधि' इति मूलकोशपाठः.

द्वयोः समुद्धास्य लयाङ्गकृद् द्वौ
नीराज्य सूद्धार्य च मूर्तिपाभ्याम् ॥ ३४ ॥

घृतादिपात्राण्यपरैर्विधार्य च
द्विजैस्ततो मङ्गलवीजरोहजाम् ।
शय्यागतां चापि विलाप्य चेतनां
व्यापय्य बिम्बे विलयाङ्गमाचरेत् ॥ ३५ ॥

नीराज्यार्घ्यमपि प्रदाय शयनादुत्तिष्ठमन्त्रं जप-
न्नुत्थाप्य प्रतिमां निधाय मनुविद् याने विनिर्गत्य च ।
वाद्यैः शाकुनसूक्तके परिजपन् स्वस्त्यादियुक्ते तथा-
तोदेवादि निजं प्रदक्षिणगतिः प्रासादमासादयेत् ॥ ३६ ॥

स्यान्नीराजनमग्रतः करकधारार्घ्यं वहन् देशिको
बिम्बस्वापघटौ घटेशयजमानौ चेति याने क्रमः ।

---

द्वौ सूद्धार्य सुस्थिरं धारयित्वा अपरैर्द्विजैः घृतादिपात्राणि बिम्बस्य परितः स्थापितानि द्रव्याण्यपि विधार्य धारयित्वा ततो मङ्गलबीजरोहजां शय्यागतां च चेतनां बिम्बे विलाप्य विलयाङ्गमाचरेत् ॥ ३४, ३५ ॥

अथ नीराज्यार्घ्यमपि प्रदाय उत्तिष्ठमन्त्रं जपन् प्रतिमां शयनादुत्थाप्य मनुविद् 'रथे तिष्ठन्नि'त्यादिमन्त्रज्ञो गुरुः याने ब्राह्मणैः कल्पिते रथादिके निधाय तस्मान्मण्डपाद् विनिर्गत्य वाद्यैः शङ्खादिसर्ववाद्यैः सह शाकुनसूक्तके 'कनिक्रदत्' 'प्रदक्षिणीकृदि'ति सूक्ते स्वस्त्यादियुक्ते 'स्वस्ति नो मिमीताम्' इत्यादिभिर्युक्ते च, 'अतोदेवा'दि निजं निजं च सूक्तं तथा परिजपन् प्रदक्षिणगतिर्भूत्वा प्रतिमां प्रासादमासादयेत् प्रापयेत् ॥ ३६ ॥

याने गमने अग्रतो नीराजनं, पुनः करकधारा कर्करीधाराप्रसरः, पुनरर्घ्यं वहन् देशिकः, ततो बिम्बस्वापघटौ बिम्बं तत्पृष्ठतो निद्राकलशश्च, पुनः घटेशयजमानौ कुम्भेशस्तत्पृष्ठतः कर्ता च इति क्रमः स्यात् । द्वारि उप-

---

१. 'णि' क ग. पाठः. २. 'म' क ग. घ. पाठः.

दत्त्वा ह्यार्युपचारतोऽर्घ्यमुपनीय न्यस्य भद्रासने
पश्चात् त्रिः करकोदकेन परिषिञ्चेदू बिम्बतत्पीठके ॥

तत्रोपविश्य सकलीकृतचर्चितात्मा
संप्रीणितस्वगुरुवर्यगणाधिनाथः ।
विप्रान् प्रतर्प्य तपनीयगवादि दत्त्वा
मौहूर्तिकोत्तमसमुक्तविविक्तलग्ने ॥ ३८ ॥

मूलाभिहूतिलिपितत्त्वषडध्वकादि-
न्यासार्चनासुमहितं मनुबिम्बमेतत् ।
ध्यात्वा विराजमपि खं च तथैव पीठं
बीजार्चितं प्रकृतिरूपमिलात्मकं च ॥ ३९ ॥

---

चारतः स्वस्वोपचारमन्त्रेणार्घ्यं दत्त्वा उपनीय पीठसमीपं नीत्वा पश्चात् पीठस्य पृष्ठभागे भद्रासने भद्रपीठे विन्यस्य बिम्बतत्पीठके बिम्बं तत्पीठं च सह करकोदकेन त्रिः परिषिञ्चेत् ॥ ३७ ॥

'तत्रोपविश्ये'त्यादि 'स्वमूलमहितीकृतिजागरूकमि'त्यन्तमधोधकं श्लोकचतुष्कम् । न्यस्येदित्यन(योः ? या) क्रियया सहान्वयः कर्तव्यः । अथ गुरुस्तत्र गर्भगृह उपविश्य सकलीकृतचर्चितात्मा स्वस्य सकलीकरणाद्यात्माराधनपर्यन्तं कर्म विशेषतस्तदा कृत्वा संप्रीणितस्वगुरुवर्यगणाधिनाथः गुरून् गणपतिं च यथाविधि सम्पूज्य तपनीयगवादि दत्त्वा सुवर्णगोभूम्यादिदानैर्विप्रान् बहून् ब्राह्मणान् प्रतर्प्य प्रकर्षेण प्रीणयित्वा मौहूर्तिकोत्तमसमुक्तविविक्तलग्ने मुहूर्तदार्शिनां वरिष्ठेन मुहूर्तदक्षिणापरिग्रहानन्तरं सम्यक् सप्रसादमुक्ते निर्दोषे राश्युदये 'प्राक् प्रष्ठपार्ष्णिके'ति 'सूयदृशार्हे'ति च वक्ष्यमाणाभ्यां श्लोकार्धाभ्यां निर्दिश्यमानप्रकारेण कृतपरावाहनं कृतावस्थावाहनं च मूलाभिहूतिलिपितत्त्वषडध्वकादिन्यासार्चनासुमहितं मूलाभिहूत्यां मूलमन्त्रावाहने लिपिन्यासेन तत्त्वन्यासेन षडध्वकादिन्यासेन, आदिशब्दाद् मूलमन्त्रस्योक्तविशेषन्यासैश्च तथार्चनया तारोपचारमूलतदक्षराङ्गायुधभूषणादिभिर्विग्रहपूजया च सुमहितं सुतरां पञ्चोपहारैः पूजितम् एतद् मनुबिम्बं विराजं विराट्पुरुषाख्यस्थूलविग्रहं खम् आकाशात्मकं च ध्यात्वा तथैव

---

१. 'मनूत्तमादि' ख. पाठः. २. 'तापव' क. पाठः.

स्वेनौजसा तदुभयं व्यतिषज्य तिष्ठ-
न्नीराज्य चास्त्रहृतपीठपटोऽग्रसंस्थः ।
तत्तत्प्रतिष्ठितिसमुक्तमनुप्रजापी
कृत्वा परिभ्रमणमायतनोपरि त्रिः ॥ ४० ॥
दोर्भ्यां गृहीतमनुबिम्बमिदं स्वपीठे
न्यस्येन्नपुंसकशिलाकलिताब्जनालम् ।
प्राक् प्रष्ठपार्ष्णिकनिजाणुगुणादिहूति-
मूलाहितापघनभावितपारमात्म्यम् ॥ ४१ ॥
सूद्यद्दशार्हमनुपञ्चदशाभिवाह-
व्याप्तिस्वमूलमहितीकृतिजागरूकम् ।

---

बीजार्चितं स्वस्वशक्तिबीजेन आवाह्य न्यस्य संपूजितं पीठं प्रकृतिरूपं मूलप्रकृत्यात्मकम् इलात्मकं पृथिवीरूपं च ध्यात्वा तदुभयं बिम्बं पीठं च स्वेनौजसा व्यतिषज्य अन्योन्यं मेलयित्वा तिष्ठद् आप्रलयं स्थीयमानं च ध्यात्वा अग्रसंस्थः स्वयमग्रभागे स्थित्वा अस्त्रहृतपीठपटः अस्त्रमन्त्रेण त्यक्तपीठाच्छादनवस्त्रो भूत्वा उभयत्र नीराज्य तत्तत्प्रतिष्ठितिसमुक्तमनुप्रजापी तत्तद्देवस्य प्रतिष्ठायां स्वस्वागमोक्तमन्त्रप्रजापी भवन् आयतनोपरि प्रतिष्ठास्थानस्योपरिभागे त्रिः परिभ्रमणं कृत्वा दोर्भ्यां गृहीतमिदं मनुबिम्बं स्वपीठे नपुंसकशिलाकलिताब्जनालं नपुंसकशिलया सम्बद्धं पद्मनालं यथा भवति तथा न्यस्येत् प्रतिष्ठां कुर्यात् । प्राक् प्रष्ठेत्यादिना पूर्वप्राप्तं मनुबिम्बं विशिनष्टि । प्राक् (मूल?) 'मूलाभिहूतिलिपी'त्याद्युक्तमूलमन्त्रावाहनात् प्राक् प्रष्ठपार्ष्णिकनिजाणुगुणादिहूतिमूलाहितापघनभावितपारमात्म्यं प्रष्ठोऽग्रगतः पार्ष्णिकः पृष्ठगतः निजाणुः निजमूलमन्त्रः आद्यन्तगतेन निजमूलमन्त्रेणोपलक्षितः गुणादिः गुणसंख्य आदिः गुणास्त्रयः आदिः प्रणवः तेन हूतिरावाहनं तेन मूलाहितापघनेन च अपघनोऽङ्गं मूलकृताङ्गन्यासेन च भावितपारमात्म्यं प्रापितपरमात्मभावम् । मूलपुटितप्रणवत्रयेण परावाहनं मूलाङ्गन्यासं च कृत्वेत्यर्थः । सूद्यद्दशार्हमनुपञ्चदशाभिवाहव्याप्तिस्वमूलमहितीकृतिजागरूकं च म-

---

१. 'भिध्याय भक्तजनताग्रजिघृक्षयात्र । तत्त' ख. पाठः. १. 'स्वम्' क. पाठः.

तारोपचारमनुतत्त्वमुखः प्रतिष्ठा-
मन्त्रोऽणुरुद्धशरतत्त्वमनुध्रुवान्तः ॥ ४२ ॥
तारादिपञ्चनिजतत्त्वकङेन्तमूर्त्या-
त्मान्तस्थशान्तमुखबीजपरध्रुवांशैः ।
ङेन्तस्वरूपिमनुशिष्ट नमोन्ततुर्या-
तीतादिजागरपरैश्च दशाणवः स्युः ॥ ४३ ॥

---

नुबिम्बमिति सम्बन्धः। सूद्यन्तः शोभनमुद्यन्तः तुरीयातीतादि क्रमेणोद्गच्छन्तो दशार्हा अवस्थावाहनयोग्या मनवः तेषां पञ्चकेन दशाभिवाहः अवस्थावाहनं तेनावस्थावाहनेन तत्तदनन्तरं तैस्तैर्मन्त्रैः व्याप्त्या व्यापकेन च तत्तदनन्तरं स्वस्वमूलमन्त्रेण महितीकृत्या पूजया च जागरूकम् उद्बुद्धम् । अत्र प्रतिष्ठानुष्ठानग्रन्थस्य क्रमव्यत्यासः स्वगुरुमुखादेव तत्क्रमोऽवगन्तव्य इति ज्ञापनार्थम्। पुनः प्रतिष्ठामन्त्रं विशिनष्टि — तारेति। तारोपचारमनुतत्त्वमुखः तारोपचारमूलमन्त्राः अखिलतत्त्वमन्त्राश्च मुखे आदौ यस्य स तथोक्तः, अणुरुद्धशरतत्त्वमनुध्रुवान्तः मूलपुटितानि पञ्चतत्त्वानि मूलमन्त्रः प्रणवश्चान्ते यस्य प्रतिष्ठामन्त्रस्य स तथोक्तः प्रतिष्ठामन्त्रः 'यज्ञायज्ञादिपुंसूक्तमि'त्यादिश्लोकेन वक्ष्यमाणो मन्त्रः ॥ ३८—४२ ॥

अवस्थावाहनमन्त्रानुद्धरति — तारादीति । तारादिपञ्चनिजतत्त्वकङेन्तमूर्त्यात्मान्तस्थशान्तमुखबीजपरध्रुवांशैः तारादि मूलमन्त्रस्य तारादिबीजानि, ततः सृष्टिक्रमात् प्राप्तानि निजनिजपञ्चतत्त्वानि, तेषां के मूर्धन्यूर्ध्वभागे ङेन्ताश्चतुर्थ्येकवचनान्ताः स्वस्वमूर्तयः, ततः आत्मान्तस्थाः आत्मने इत्यन्ते स्थिताः शान्तमुखाः शान्तादिकाः बीजपराः बीजशब्दावसानाः ध्रुवांशाः ध्रुवस्य प्रणवस्यांशाः शान्तशक्तिनादबिन्दुबीजशब्दा ये तैरुपलक्षिताः । तथाच ङेन्तस्वरूपिमनुशिष्टनमोन्ततुर्यातीतादिजागरपरैश्च ङेन्तस्वरूपि चतुर्थ्येकवचनान्तं स्वरूपीति पदं मनुशिष्टं मूलमन्त्रस्य बीजोपरिगतं शिष्टं नमश्शब्दश्चान्ते येषां तुरीयातीतादिजागरपराणां तुरीयातीततुरीयसुषुप्तिस्वप्नजाग्रत्पदानां ते तथोक्ताः, तैश्चोपलक्षिता दशाणवः अवस्थामन्त्राः । 'ओं षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय शान्तात्मने तुरीयातीतस्वरूपिणे नमो नारायणाय

**यज्ञायज्ञादिपुंसूक्तकमपि शिवनारायणे पौरुषाख्यं**
**त्रैलोक्याणुर्जिनार्णादिरपि मुररिपौ तारकारौ ध्रुवाणुः ।**
**दुर्गासूक्तं कुमार्यां द्विरदवरमुखे बीजमृक् च प्रतिष्ठा-**
**मन्त्रो ब्रह्माणि पञ्च स्मरजिति विहितो गोप्तृसंज्ञः प्रभेशे ॥**

**आदायाञ्चितमन्त्रलिङ्गकमजेनास्थाप्य वामाणुना**
**ब्रह्मग्राण्यथ तन्निरोधविधिमप्याधाय घोराणुना ।**
**सान्निध्यं प्रणमन् समर्थ्य पुरुषेणेशेन सूनार्चनं**
**कुर्याच्चेति शिवप्रतिष्ठितिविधौ कर्मक्रमः कीर्तितः ॥**

---

नमः', 'ओं यं नमः पराय पुरुषात्मने संकर्षणाय शक्त्यात्मने तुरीयस्वरूपिणे नमो नारायणाय नमः' इत्यादयो वैष्णवावस्थावाहनमन्त्राः । तथा शैवेऽपि 'ओं हौं नमः शिवाय शान्त्यतीतात्मने ईशानाय शान्तात्मने तुरीयातीतस्व-रूपिणे नमः शिवाय नमः' इत्यादि । तथा शिवनारायणादिष्वप्यूह्यम् ॥ ४३ ॥

प्रतिष्ठामन्त्रानाह — **यज्ञायज्ञादीति** । शिवनारायणे यज्ञायज्ञादिपुं-सूक्त(क)मपि 'यज्ञा यज्ञा वः' इत्यादि पुरुषसूक्तं च प्रतिष्ठामन्त्रो विहितः । मुररिपौ पौरुषाख्यं पुरुषसूक्तं त्रैलोक्याणुः 'ओं त्रैलोक्ये'त्यादि वक्ष्यति । जिनार्णादिः गायत्रीद्वादशाक्षराष्टाक्षरषडक्षरादिः । तारकारौ ध्रुवाणुः । ध्रुवाणुः प्रणवः 'ध्रुवा द्यौरि'त्यपि । कुमार्यां दुर्गासूक्तं पञ्चदुर्गाः । द्विरदवरमुखे बीजमृक् च बीजं स्वबीजं 'गणानां त्वे'त्यृक् च । स्मरजिति पञ्चब्रह्माणि । प्रभेशे गोप्तृसंज्ञः 'गोप्तारमि'त्यादि 'तारोपचा(रादी'?रे) त्यादिश्लोकार्धोक्तमन्त्रैः पुटितश्च ॥ ४४ ॥

'ब्रह्माणि पञ्च स्मरजिती'ति शिवोक्ते विशेषमाह — **आदायेति** । अञ्चित(मन्त्र)लि(ङ्ग ? ङ्गकं) यथोक्तन्यासेन सकलीकृतं यथोक्तप्रकारेण पूजि-तं च शिवलिङ्गम् अजेन 'सद्योजात'मन्त्रेणादाय वामाणुना 'वामदेव'मन्त्रेण ब्रह्मग्राण्णि नपुंसकशिलायामास्थाप्य । आस्थाप्येत्यनेन प्रतिष्ठायाः सामान्य-कर्माणि मन्त्राश्च सूचिताः । घोराणुना 'अघोरेण' तन्निरोधनविधिं स्थि-रीकरणमप्याधाय निरोधनमुद्रां च दर्शयित्वा प्रणमन् पुरुषेण 'तत्पुरुषेण' -सा-न्निध्यं प्रार्थ्य सान्निध्यमुद्रां च दर्शयित्वा ईशेन सूनार्चनं पुष्पाञ्जलिं च कुर्यात् । शिवप्रतिष्ठितिविधौ इति विशेषात् कर्मक्रमः कीर्तितः ॥ ४५ ॥

**ओं त्रैलोक्यविक्रान्ताय त्रिविक्रमाय विष्णवे नमः ।**
**गोप्तारं विश्वगोप्तारं शास्तारं शाम्भवं प्रभुम् ।**
**अमेयमद्भुतं शान्तं स्थापयाम्यहमच्युतम् ॥ ४६ ॥**

**इति ।**

**तल्लम्बसूत्रेण समं प्रकल्प्य**
**दोर्भ्यां स्पृशन् बिम्बपदाब्जपीठम् ।**
**जपन् ध्रुवाद्यौरिति सुप्रतिष्ठं**
**कृत्वाग्रतो विश्वमनुं पठेच्च ॥ ४७ ॥**

**ब्रह्मग्राण्णि स्थापयित्वोक्तनीत्या**
**लिङ्गं स्थाणौ स्थापयेच्च स्वपीठम् ।**
**तत्रोमा शक्तीषुतत्त्वादिनाष्टा-**
**र्णेनौमेयेनान्तवामध्रुवेण ॥ ४८ ॥**

---

ततः प्रस्तुतं त्रैलोक्याणुं गोप्तृसंज्ञाणुं च पठति — **ओं त्रैलोक्येति गोप्तारमित्यादि** च ॥ ४६ ॥

ततः सामान्येन क्रियाशेषमाह — **तल्लम्बसूत्रेणेति** । तद् बिम्बं लम्बसूत्रेण बिम्बस्य नासिकाग्रे पीठस्य पुरोभागकोणद्वये च स्थापितं सूत्रं लम्बसूत्रं तेन समं यथा भवति तथा वलनं परिहृत्य प्रकल्प्य दोर्भ्यां बिम्बपदाब्जपीठं बिम्बपदाम्बुजं पीठं च स्पृशन् 'ध्रुवा द्यौरि'त्यादि जपन् सुप्रति-(ष्ठितं ? ष्ठं) निश्चलं कृत्वाग्रतः स्थित्वा विश्वमनुं 'विश्वतश्चक्षुरि'ति मन्त्रं पठेद् उच्चरेत् ॥ ४७ ॥

ततः शिवे विशेषमाह — **ब्रह्मग्राण्णीति** । स्थाणावुक्तनीत्या ब्रह्मग्राण्णि लिङ्गं स्थापयित्वा तत्र ओमा ओंकारेण शक्तीषुतत्त्वादिना भुवनेश्वरीपञ्चतत्त्वानि चादौ युक्तेन अन्तवामध्रुवेण अवसाने 'वामदेवेन' 'ध्रुवा द्यौरि'-[3]ति प्रणवेन च औमेयेन उमायाः अष्टाक्षरेण स्वपीठं स्थापयेत् ॥ ४८ ॥

---

१. 'अथ मूलेन कृत्वा कुसुमाञ्जलिं च ।', २. 'जप्त्वा ध्रुवाद्यौः सुदृढीकरोतु ॥ ब्र' ख. पाठः. ३. 'ति वक्त्र ओ प्र' क. च. पाठः.

**सद्येन स्वहृदम्बुजादथ समादाय प्रसूनाञ्जलिं**
**कुर्वंस्थापितलिङ्गके शिवमहः प्रावेश्य वामाणुना ।**
**मुद्रामाकलयन् निरोधनमघोराख्याणुना सन्निधिं**
**पुंसाधाय शिवात्मकेन मनुना मन्त्री समभ्यर्चयेत् ॥**

**बीजेन पीठं प्रकृतिस्वरूपं मूलेन बिम्बं पुरुषात्मकं च ।**
**इष्टाष्टबन्धं सकलेषु कुर्यात् स्थेम्ने मिथः सङ्कलनस्य धाम्नोः ॥**

**संपातं नवशक्तिजं सुमहिते सिक्त्वाष्टबन्धे तथा**
**रत्नैस्तद्विवरं सहेमसिकतैरापूर्य तत्रापि च ।**
**वस्त्राद्यैः परिभूष्य शक्तिपुरुषौ तारोपचारासना-**
**भीज्याशक्तिमनुध्रुवेण कलयेत् तत्राष्टबन्धं दृढम् ॥७१॥**

---

अथ मन्त्री आवाहनोपदेशज्ञः स्वहृदम्बुजात् 'सद्येन' शिवमहः शिवमयं तेजः आदाय 'वामा'णुना स्थापितलिङ्गके प्रसूनाञ्जलिं कुर्वन् प्रावेश्य योजयित्वा 'अघोरा'ख्याणुना निरोधनमुद्रामाकलयन् बन्धयन् निरोधनं स्थिरीकरणं चाधाय पुंसा 'तत्पुरुषेण' सन्निधिं तन्मुद्रया आधाय शिवात्मकेन 'ईशानेन' मनुना समभ्यर्चयेत् ॥ ४९ ॥

ततः सर्वतोऽष्टबन्धं स्थापयेदित्याह — बीजेनेति । सकलेषु प्रकृतिस्वरूपं पीठं बीजेन स्वस्वशक्तिबीजेन पुरुषात्मकं बिम्बं मूलेन चेष्टा धाम्नोस्तेजसोः मिथोऽन्योन्यं संकलनस्य सम्मेलनस्य स्थेम्ने स्थिरतायै अष्टबन्धं कुर्यात् ॥ ५० ॥

तत्क्रियाप्रकारमाह — सम्पातमिति । नवशक्तिजं पूर्वं नवशक्तिहोमेन गृहीतं संपातं सुमहिते नवशक्तिभिः पूजितेऽष्टबन्धे सिक्त्वा तथा सहेमसिकतैः हेम्ना सिकतादिभिश्च युक्तै रत्नैः तद्विवरं तन्नालरन्ध्रमापूर्य तत्रापि च सिक्त्वा शक्तिपुरुषौ शक्तिपुरुषात्मकौ पीठदेवौ वस्त्राद्यैः परिभूष्य तारोपचारासनाभीज्याशक्तिमनुध्रुवेण प्रणवोपचारपीठमन्त्रपूजामन्त्रशक्तिमन्त्रमूलमन्त्रप्रणवैः तत्र पीठबिम्बसन्धौ दृढं तदुभयं निश्चलं यथा भवति तथाष्टबन्धं कलयेत् बन्धयेत् ॥ ५१ ॥

कृत्वा ध्रुवात्ममनुमर्शनमादिनाभि-
व्याप्य द्विधा प्रकृतिपूरुषयोर्विभाव्य ।
अन्योन्यसङ्कलनमातनुयात् स्वमूल-
मन्त्राभिवाहनसहावयविक्रियाद्यम् ॥ ५२ ॥

नीराज्य मूर्ध्नि कृतहेम्नि घटेश्वरेणा-
सिच्य त्रितत्त्वमनुभिर्न्यसनं च कृत्वा ।
निद्राघटेन च तथाखिलतत्त्वमन्त्रै-
रासिच्य तन्न्यसनचर्चितमातनोतु ॥ ५३ ॥

ततो मधुक्षीरसुसंभृताभ्यां
नीराजयेन्मूर्ध्नि शिवे घटाभ्याम् ।
दूर्वाङ्कुरैः कादिषु सर्पिरादीन्
समर्पयेत् तन्मनुभिर्मुरारौ ॥ ५४ ॥

---

ध्रुवात्ममनुमर्शनं 'ध्रुवा द्यौरि'त्यादिमन्त्रैरभिमर्शनं स्थिरीकरणं च कृत्वा आदिना प्रणवेन द्विधा पीठमूलादिबिम्बाग्रान्तं बिम्बाग्रादिपीठमूलपर्यन्तं च अभिव्याप्य प्रकृतिपूरुषयोरन्योन्यसङ्कलनं विभाव्य ध्यात्वा स्वमूलमन्त्रा-भिवाहनसहावयविक्रियाद्यं मूलमन्त्रेणावाहनं सकलीकरणम् आद्यशब्देनोपहा-रदानपूजां च आतनुयात् ॥ ५२ ॥

पुनर्नीराज्य कृतहेम्नि मूर्ध्नि बिम्बमूर्ध्नि हिरण्यं न्यस्य त्रितत्त्वमनुभिः घटेश्वरेण कुम्भेशेनासिच्य सिक्त्वा तन्न्यसनं च चकारेण पूजां च कृत्वा तथा नीराजनादिपुरस्सरमखिलतत्त्वमन्त्रैर्निद्राघटेन चासिच्य तन्न्यसनचर्चितं तच्च-न्न्यासं मूलमन्त्रसम्बन्धिनो न्यासांश्च तथा पूजां च आतनोतु ॥ ५३ ॥

ततः शिवे मधुक्षीरसुसंभृताभ्यां घटाभ्यां मूर्ध्नि नीराजयेत् । मुरारौ सर्पिरादीन् पूर्वं शय्यानिकटस्थापितान् कादिषु पञ्चस्थानेषु तन्मनुभिः पञ्चतत्त्वैर्दूर्वाङ्कुरैः समर्पयेत् । तथेतरेष्वपि स्वस्वस्थाननिहितैरुपहारैः स्व-स्वमन्त्रैः समर्पयेत् ॥ ५४ ॥

१. 'ण सिक्त्वा त्रि', २. 'मूलैरा' इति मूलकोशपाठः.

स्थूलात्मकं त्रितनुसंपुटितेन रूप-
मावाह्य मूलमनुना मनुबिम्बकेऽथ ।
विन्यस्य तत्तदणुसिद्धषडध्वकाद्यं
स्वस्वाणुना सुमहितीकृतमातनोतु ॥ ५५ ॥

स्तोत्रावाहनमाचरेदथ शिवे यस्येतिपूर्वाणुना
सेनान्यामपि शीघ्रमादिमनुनोमावाहयाम्यन्वितम् ।
आयात्वित्युदितप्रतिष्ठितिविधेः प्रागेव वेहार्यके
श्रीशे बिम्बविशुद्धिविध्यवसितौ वावाहयाम्यादिना ॥

यस्य सिंहा रथे युक्ता व्याघ्रभूतास्तथानुगाः ।
ऋषयो लोकपालाश्च देवस्कन्दस्तथा वृषः ॥ ५७ ॥

प्रिया गणो मातरश्च सोमो विष्णुः पितामहः ।
नागा यक्षाः सगन्धर्वा ये च दिव्या नभश्चराः ॥ ५८ ॥

तमहं त्र्यक्षमीशानं देवं स्थाणुमुमापतिम् ।
आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥ ५९ ॥

आगच्छागच्छ भगवंस्थिरो भव शिवो भव । ध्रुवो भव प्रसन्नो भव नमोऽस्तु ते । ओं हौं नमः शिवाय । ओं जूं सः । शिव शर्व सर्वदात्र सान्निध्यं कुरु कुरु । अधिष्ठाय तिष्ठ स्वाहा । निरोधनं च नो भव पूजां प्रति-

---

स्थूलावाहनमाह — स्थूलात्मकमिति । अथ 'स्थूलात्मकोन्मेषविधायिका चिदावाहनासुन्यसनादि कृत्वा' इति द्वादशपटलान्ते सूचयिष्यमाणं जीवावाहनं प्राणन्यासादिकं च कृत्वा तदनन्तरं त्रितनुसंपुटितेन त्रितनुः प्रणवस्तत्पुटितेन मूलमनुना मूलमन्त्रेण स्थूलात्मकं रूपं मनुबिम्ब आवाह्य तत्तदणुसिद्धषडध्वकाद्यं तत्तन्मन्त्रोक्तषडध्वादिकं विन्यस्य स्वस्वाणुना सुमहितीकृतं पूजितमातनोतु ॥ ५५ ॥

अथ स्तोत्रावाहनं कुर्यादित्याह — स्तोत्रावाहनमिति । अथ स्थूलावाहनानन्तरं शिवे यस्येतिपूर्वाणुना 'यस्य सिंहा रथे युक्ता' इत्यादिना मन्त्रेण

गृह्णातु भवान् । मन्त्रपूतमिदमर्घ्यमिदं पाद्यम् इदमाचमनीयम् एतदासनं ब्रह्मणा विहितं स्वर्थं स्वाहा । इति ।

शीघ्रमायातु भद्रं ते सुकुमार! सुपद्मज! ।
मयूररथयुक्तश्च वारणानुचरो गुहः ॥ ६० ॥

अन्नाद्यप्रियशीलस्तु शक्तितोमरवज्रधृक् ।
कार्त्तिकेय! सुरश्रेष्ठ! असुरेन्द्रप्रमर्दन! ॥ ६१ ॥

ओमावाहयामि ॥

आयातु शास्ता सगणो मुदे नो
हयेन नागानुचरेण शीघ्रम् ।
भवात्मजो वारिनिधीश्वरोऽयं
स्वकेतुना कृष्णनिभेन गोप्ता! ॥ ६२ ॥

ओमावाहयामि ॥

आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिं भुवनकारणमप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्रभासम् ॥ ६३ ॥

ध्येयं परं सकलतत्त्वविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं
कौमोदकीकमलशङ्खरथाङ्गहस्तम् ॥ ६४ ॥

---

स्तोत्रावाहनमाचरेत् । सेनान्यां शीघ्रमादिमनुना 'शीघ्रमायातु भद्रं त' इत्यादिमनुनापि ओमावाहयाम्यन्वितम् 'ओमावाहयामी'त्यवसाने युक्तं यथा भवति तथा । आर्यके उदितप्रतिष्ठितिविधेः प्राग्वा इदानीं वा आयात्विति 'आयातु शास्ता सगण' इत्यादिना । अथ श्रीशे बिम्बविशुद्धिविध्यवसितौ वा बिम्बशुद्धिविधानानन्तरं वा संप्रति वा आवाहयाम्यादिना 'ओं आवाह-

---

१. 'स', २. 'रसहस्रहुताशभा' क. पाठः.

सर्वत्रगोऽसि भगवन्! किल यद्यपि त्वा-
मावाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथनादुपैति
त्वावाहितोऽपि हि तथा त्वमुपैषि चार्चाम् ॥ ६५ ॥

मालाधराच्युत! विभो! परमार्थमूर्ते!
सर्वज्ञ! नाथ! परमेश्वर! सर्वशक्ते! ।
आगच्छ मे कुरु दयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य ॥ ६६ ॥

इति संस्थाप्य विश्वेषु विश्वतश्चक्षुरादिभिः ।
उपतिष्ठेत लोकादिमन्त्रैश्च स्वागमोदितैः ॥ ६७ ॥

लोकानुग्रहहेत्वर्थं स्थिरीभव सुखाय नः ।
सान्निध्यं च तथा देव! प्रत्यहं परिवर्धय ॥ ६८ ॥

मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृद्ध्यताम् ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥ ६९ ॥

क्षेमेण वृद्धिमतुलां सुखमक्षयमश्नुताम् ।
पूजां गृहाण सततं मामुद्धर नमोऽस्तु ते ॥ ७० ॥

इति ।

सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र लिङ्गे महादेव! सन्निधौ भव सर्वदा ॥ ७१ ॥

---

याम्यमरवृन्दनते'त्यादिना च । इतरेषु स्वस्वागमेऽन्वेष्टव्याः स्तोत्रावाहनमन्त्राः ॥ ५१—६६ ॥

इति विश्वेषु देवेषु संस्थाप्य सम्यक् प्रतिष्ठां कृत्वा विश्वतश्चक्षुरादिभिः स्वस्वागमोदितैर्लोकादिमन्त्रैः 'लोकानुग्रहहेत्वर्थमि'त्यादिमन्त्रैरुपतिष्ठेत उप-

---

१. 'स्य', २. 'रिव्वृचा।' ख. पाठः.

**यावच्चन्द्रश्च सूर्यश्च यावत् तिष्ठति मेदिनी ।**
**तावत् त्वयात्र लोकेश ! स्थातव्यं सर्वदा विभो! ॥ ७२ ॥**

**इति ।**

**श्रीसूक्तं त्रिष्टुबृचं पुंसूक्तरथन्तराख्यगायत्राणि ।**
**शाक्करशिवसङ्कल्पौ दुर्गायां पाठयेत् प्रतिष्ठासियुतम् ॥७३॥**

**मूलेनोङ्कारोपचारान्वितेन**
**मन्त्री मन्त्रावाहनं संविधाय ।**
**तत्साकल्यं मातृकातत्त्वमन्त्र-**
**वर्णाङ्गन्यासादिभिः कल्पयेच्च ॥ ७४ ॥**

**ततः क्रमेण प्रसमर्प्य मन्त्री**
**पाद्यादितत्तद्विहितोपहारान् ।**

---

स्थानं कुर्यात् । शिवोपस्थाने 'सर्वमन्त्रादिसंयुक्त' इति मन्त्राभ्यां चोपस्थानं कुर्यात् ॥ ६७—७१ ॥

उपस्थाने दुर्गायां विशेषमाह — **श्रीसूक्तमिति** । श्रीसूक्तं त्रिष्टुबृचमिति 'तामग्निवर्णामि'त्यादीनामप्युपलक्षणम् । पुंसूक्तरथन्तराख्यगायत्राणि पुरुषसूक्तं रथन्तरं गायत्रं च सामनी शाक्करशिवसङ्कल्पौ शाक्करं साम शिवसंकल्पः 'येनेदं भूतमि'त्यादिसूक्तं प्रतिष्ठासियुतं 'प्रतिष्ठासि प्रतिष्ठां गच्छेदि'त्यादियजुषा युतम् एतान् मन्त्रान् स्वयं पठेत् मूर्तिपैः पाठयेच्च ॥ ७३ ॥

ततो मन्त्रावाहनं कुर्यादित्याह — **मूलेनेति** । मन्त्री मन्त्रचैतन्यानुप्रवेशकुशलो गुरुः ओङ्कारोपचारान्वितेन मूलेन मन्त्रावाहनं संविधाय मातृकातत्त्वमन्त्रवर्णाङ्गन्यासादिभिस्तत्साकल्यं तस्य देवस्य साकल्यं सकलभावं कल्पयेच्च ॥ ७४ ॥

ततो मन्त्री पूजापटले वक्ष्यमाणं पूजाविधिं पूजासम्बन्धं च जानन्

---

१. 'प्रार्थये' क. पाठः. २. 'लिप्यः सार्धं तत्त्वमन्त्राक्षराङ्गन्यासं कृत्वाथोपहारान् प्रदद्यात् ॥ दूर्वाङ्कुरैः कादिषु सर्पिरादीन् समाहृतांस्तन्मनुभिः समर्प्य । समर्च्य' ख, पाठः.

समर्च्य देवं परमान्नमस्मै
निवेद्य भक्त्या परितोषयेच्च ॥ ७५ ॥
आराध्य योगकमलं नियमार्चनार्थ-
मावाह्य मूलमनुना सकलं विभाव्य ।
देवं समस्तपरिवारसमेतमेतं
भक्त्या स्वकल्पकथितक्रमतो यजेत ॥ ७६ ॥
निवेद्य हव्यं बहु पायसाद्यं
देवाय सन्तर्प्य तमग्निरूपम् ।
द्वास्थादिकांस्तत्परिवारमुख्या-
नभ्यर्च्य तेभ्यो विकिरेद् बलिं च ॥ ७७ ॥
तत्तद्वारपवाहनद्विपमुखेशाशेशमात्रार्यकान्
दुर्गाषण्मुखशेषभुङ्निजसभाद्वास्थान् समर्च्य क्रमात् ।
इष्ट्वाष्टध्वजनायकानथ महापीठे तदीयावृती-
ज्यान्ते पारिषदाधिपं च धिनुयादेषात्र लघ्वी विधा ॥

---

गुरुः पाद्यादितत्तद्विहितोपहारान् क्रमेण स्वस्वोक्तक्रमेण (प्र)समर्प्य देवं समर्च्यास्मै परमान्नं पायसं निवेद्य भक्त्या सहितस्तं परितोषयेच्च ॥ ७५ ॥

अथ नियमार्चनार्थं नित्यपूजायै योगकमलं योगपद्मपीठमाराध्य मूलमनुना तमावाह्य सकलं विभाव्य समस्तपरिवारसमेतमेतं देवं स्वकल्पकथितक्रमतः पूजापटले वक्ष्यमाणक्रमेण भक्त्या सह यजेत ॥ ७६ ॥

**पायसाद्यं** हव्यं बहु निवेद्यं देवाय निवेद्य अग्निरूपं तं सन्तर्प्य द्वास्थादिकान् तत्परिवारमुख्यान् तत्परिवारेषु मुख्यान् प्रधानभूतानभ्यर्च्य तेभ्यो बलिं विकिरेच्च ॥ ७७ ॥

तत्क्रममाह — तत्तादिति । तत्तद्वारपवाहनद्विपमुखेशाशेशमात्रार्यकान् द्वारपाः द्वास्थाः वाहनं गरुडादि द्विपमुखो गणपतिः ईशो दक्षिणामूर्तिः आशेशाः लोकपालाः तान् दुर्गाषण्मुखशेषभुङ्निजसभाद्वास्थान् शेषभुक् निर्माल्यधारी निजनिजसभागता द्वास्थाश्च तानपि क्रमात् समर्च्य

---

१. 'क्रिया' क. पाठः.

प्रदक्षिणीकृत्य कृतप्रणामः
संप्रार्थ्य यावन्मनुनाग्रसंस्थः ।
आचम्य सर्वान् परिवारमुख्या-
नन्तः प्रविष्टो विसृजेन्निवेद्यम् ॥ ७९ ॥

यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति ।
तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा ॥ ८० ॥

इति ।

ततोऽस्य गण्डूषसमर्पणाद्यं
कृत्वार्चयित्वा परितोष्य देवम् ।
संस्पृश्य तन्मूर्धनि मन्त्रदोष्णा
स्वकल्पसिद्धान् प्रजपेच्च मन्त्रान् ॥ ८१ ॥

सूक्तं पौरुषमैन्दिरं शरमनून् मूलत्रयं चाजिते
सश्रीरुद्रनृसूक्तकं हरिहरे मूलं जिनार्णं गुहे ।
श्रीसूक्तादिकमुक्तमेव महिषारातौ यथाशक्त्यथ
स्वं स्वं मूलमनुं समाहितमना मन्त्री जपेत् सर्वतः ॥

---

अष्टध्वजनायकान् कुमुदादीन् ध्वजेशानपि इष्ट्वा महापीठे महाबलिपीठे तदीयावृतीज्यान्ते तदीयावरणपूजानन्तरं पारिषदाधिपं हरिसेनादिकं धिनुयात् । एषा अत्र लघ्वी अल्पा, विधा क्लृप्तिः ॥ ७८ ॥

**पुनः** प्रदक्षिणीकृत्य कृतप्रणामः अग्रसंस्थः सन् यावन्मनुना 'यावदत्रे'त्यादिमन्त्रेण सर्वान् परिवारमुख्यान् प्राथ्यचिम्यान्तः प्रविष्टो निवेद्यं विसृजेत् ॥ ७९, ८० ॥

ततोऽस्य देवस्य गण्डूषसमर्पणाद्यं कृत्वा अर्चयित्वा देवं परितोष्य तन्मूर्धनि मन्त्रदोष्णा न्यस्तमन्त्रेण करेण संस्पृश्य स्वकल्पसिद्धान् मन्त्रान् प्रजपेच्च ॥ ८१ ॥

जप्तव्यान् मन्त्रानाह — **सूक्तमिति** । तत्र जपे अजिते पौरुषं सूक्तम् ऐन्दिरं श्रीसूक्तं शरमनून् पञ्चतत्त्वानि मूलत्रयं द्वादशा(क्षरा)ष्टाक्षरषडक्षराणि समाहितमना मन्त्री जपेत् । हरिहरे सश्रीरुद्रनृसूक्तकं श्रीरुद्रं पुरुषसूक्तं च । गुहे मूलं जिनार्णं गायत्रीम् । महिषारातौ श्रीसूक्तादिकं 'श्रीसूक्तं त्रिष्टुब्नृचम्'

आवृत्याङ्गसमन्वितं प्रजपतु प्रासादपञ्चाक्षर-
ब्रह्मव्योममनून् समृत्युजिदनुष्टुब्रुद्रकं चास्त्रकम् ।
श्रीकण्ठीयमघोरवज्रकरमासूक्तं पुनः शाकुन-
स्वस्त्याख्यानि समाहितः सशिवसङ्कल्पं समूलं शिवे ॥
द्विद्व्येकोद्विदुरेषुतत्त्वमनुभिर्व्यापय्य मन्त्री चिद-
र्चार्चाविष्टरपीठिकायतनसंयोगं विभाव्य क्रमात् ।
ब्रह्माध्वेद्धचितादिनोदवपरिव्याप्त्याभिपूर्याखिलं
काण्डं तत् परिकल्पयेदथ महासालात्मनावस्थितम् ॥

---

(श्लो० ७२) इत्यादिश्लोकोक्तमेव । अथ सर्वतः मन्त्री स्वस्वागमोक्तमन्त्रज्ञः स्वं स्वं मूलमनुं च यथाशक्ति जपेत् ॥ ८२ ॥

अथ शिवे मन्त्री शैवागमोक्तमन्त्रविशेषज्ञः समाहितो भूत्वा प्रासाद-पञ्चाक्षरब्रह्मव्योममनून् प्रासादं पञ्चाक्षरं पञ्चब्रह्म व्योमव्यापि दशाक्षरं चतु-श्शताक्षरं च अङ्गसमन्वितं स्वस्वाङ्गैः सहितमावृत्य जपतु । समृत्युजिदनुष्टु-ब्रुद्रकं मृत्युञ्जयेन त्र्यम्बकानुष्टुभा श्रीरुद्रेण च सहितमस्त्रकं पाशुपतम् । श्री-कण्ठीयं प्रोमिति बीजम् । अघोरवज्रकरमासूक्तम् अघोरास्त्रं प्रणवपुटितहुंफट्-कारं वज्रमन्त्रं रमासूक्तम् । पुनः शाकुनस्वस्त्याख्यानि शाकुनं 'कनिक्रदा'दि 'स्वस्ति नो मिमीतामि'त्यादि । सशिवसंकल्पं 'येनेदं भूतमि'त्यादि । समूलं, मूलमन्त्रैस्या[2]वृत्त्यै[3] जप उक्तः ॥ ८३ ॥

अथ चिद्बिम्बादीनामैक्यस्वरूपं रहस्योपदेशमाह — द्विद्व्येकेति । अथ मन्त्री द्विद्व्येकोद्विदुरेषुतत्त्वमनुभिः द्विद्व्येकक्रमेण भेदितैः पञ्चतत्त्वमन्त्रैः चिदर्चार्चाविष्टरपीठिकायतनसंयोगं चिदर्चयोः चैतन्यबिम्बयोः अर्चाविष्टरयोः प्रतिमापीठयोः पीठिकायतनयोः पीठतद्गतस्थानयोश्च संयोगं सम्यगन्योन्यमे-लनं क्रमाद् विभाव्य विशेषेण भावयन् व्यापय्य पुनः आदिना प्रणवेन उदवप-रिव्याप्त्या ऊर्ध्वगतेनाधोगतेन च व्यापकेन हेतुना ब्रह्माध्वेद्धचिता ब्रह्मा-ध्वनि सुषुम्नायां दीप्तेन चैतन्येन अखिलं काण्डं ब्रह्माण्डमपि तत्प्रसरेणाभिपूर्य

---

१. 'नुसंव्याप्यात्र चिन्मन्त्रबिम्बार्चावि', २. 'न्त्रै' ख. पाठः. ३. 'त्त्या' क. पाठः.

**कृत्वा चिद्बिम्बसम्मेलनमिति सुदृढं तल्लयाङ्गादि कृत्वा**
**संरक्ष्याक्षय्यदीपाक्षतकुसुमजलाद्यं समापाद्य चान्तः ।**
**गत्वा द्वारं च बद्ध्वा बहिरथ नियतार्चास्थितिः स्थापकेन**
**प्रादक्षिण्यप्रणामादिकृदभिमतमाराध्नुयाद् देवमेवम् ॥**

**स्वर्णानां शतकं ददातु गुरवे सद्यः प्रतिष्ठाकृते**
**दात्रादातृमनःप्रसादजननी या दक्षिणा सोत्तमा ।**
**गोभूम्यादिसमर्पणप्रमुखतोऽप्येनं समाराध्नुया-**
**न्मूर्तीशानपि तद्दशांशपरिदत्त्यान्यांश्च तद्भागतः ॥**

---

तद् ब्रह्माण्डमप्यथ महासालात्मना महामर्यादारूपेणावस्थितं च परिकल्पयेत् ॥ ८४ ॥

इति उक्तेन प्रकारेण चिद्बिम्बसम्मेलनं चैतन्यबिम्बयोः सम्मेलनमैक्यं सुदृढं कृत्वा तल्लयाङ्गादि तस्य लयाङ्गादि कृत्वा संरक्ष्य अक्षय्यदीपाक्षतकुसुमजलाद्यम् अनश्वरं दीपम् अक्षतकुसुमजलगन्धादि च पूजासाधनं चान्तः समापाद्य बहिर्गत्वा द्वारं च बद्ध्वा संवटय्य अथ स्थापकेन यजमानेन सह नियतार्चास्थितिः नित्यपूजार्थं क्षेत्रधनादिकल्पनाकृद् भूत्वा प्रादक्षिण्यप्रणामादिकृद् भवेत् । एवं पटलषट्कोक्तप्रकारेणाभिमतं विष्ण्वादिस्वेष्टदेवं प्रतिष्ठाप्याराध्नुयात् निजपूजादिकं कुर्यात् ॥ ८५ ॥

ततः कर्ता गुरवे दक्षिणां दद्यादित्याह — **स्वर्णानामिति** । स्वर्णकर्षाणां शतकं प्रतिष्ठाकृते गुरवे सद्यस्तदानीमेव ददातु । या दात्रादातृमनःप्रसादजननी दातुः प्रतिग्रहीतुश्च मनःप्रसादसम्पादनी सा उत्तमा दक्षिणा स्यात् । गोभूम्यादिसमर्पणप्रमुखतः, आदिशब्देन रत्नपट्टवस्त्रादिकं गृह्यते, समर्पणप्रमुखतः पादशुश्रूषात्मनिवेदनादिनाप्येनं समाराध्नुयात् । मूर्तीशानपि तद्दशांशपरिदत्त्या गुरुदक्षिणाया दशांशप्रमाणेन । अन्यान् परिकर्मिणश्च तद्भागतः तद्दशांशेन ॥ ८६ ॥

---

१. 'यावद्दातृपरिग्रहीतृपरितुष्टिष्टोत्तरा दक्षिणा । गो' ख. पाठः. २. 'पाक्ष' क. पाठः. ३. 'दिस्वेन यजमानेन सह नियतार्चास्थितिमिष्ट' क ख. पाठः.

कृत्वा त्रेधा स्वसम्पादितवसुनिचयं नित्यपूजादिसिद्ध्यै
भागं देवाय भागं प्रदिशतु गुरवे दक्षिणां स्थापनार्हाम् ।
तस्मै तत्रोपयुक्तं सकलमपि समर्प्याथ तार्तीयमंशं
तत्कर्ता पुत्रभार्याद्यनुगतपरिपुष्ट्यै स्वयं चाददीत ॥

होमादिकर्तॄन् परिकर्मिणश्च
सदस्यपारायणिकादिकांश्च ।
स्वदक्षिणांशैरथ गायकादीन्
वस्त्रादिनान्यानपि सन्धिनोतु ॥ ८८ ॥

नोद्धाटयेद् द्वारमहस्त्रयेऽत्र
कृत्वाग्रतः स्थण्डिलमादधीत ।
नित्यार्चनं स्वार्हहुतादियुक्तं
संस्नाप्य तुर्येऽह्नि यजेच्च बिम्बे ॥ ८९ ॥

---

प्रकारान्तरेण दक्षिणायाः क्लृप्तिमाह — कृत्वेति । स्वसम्पादितवसुनिचयं स्वेनार्जितमर्थसमूहं त्रेधा कृत्वा भागमेकमंशं देवाय नित्यपूजादिसिद्ध्यै । आदीति विशेषपूजोत्सवादिकं गृह्यते । तत् साधयितुं प्रदिशतु । भागं द्वितीयमंशं गुरवे स्थापनार्हां प्रतिष्ठायां योग्यां दक्षिणां प्रदिशतु । तस्मै गुरवे तत्रोपयुक्तं सकलं धनमपि समर्प्य अथ तार्तीयमंशं तत्कर्ता स्वयं पुत्रभार्याद्यनुगतपरिपुष्ट्यै पुत्रभार्याभ्रात्रादीनामनुगतानां परिपोषणाय आददीत परिगृह्णीयात् ॥ ८७ ॥

तत्पक्षे गुरुः स्वदक्षिणांशैः होमादिकर्तॄन् परिकर्मिणः आदेशकारिणश्च सदस्यपारायणिकादिकांश्च सदस्याः साक्षिणः पारायणिकाः वेदादिजपकारिणः आदिशब्देन मन्त्रजापकाश्च तान् सन्धिनोतु प्रसादयेत् । अथ गायकादीन् अन्यांश्च वस्त्रादिनापि ॥ ८८ ॥

कृत्यशेषमाह — नोद्धाटयेदिति । अत्र प्रतिष्ठानन्तरम् अहस्त्रये दिवसत्रये द्वारं नोद्धाटयेद् न विवृतं कुर्यात् । अग्रतः स्थण्डिलं कृत्वा स्वार्हहुतादियुक्तं स्वयोग्यपूजाहोमादिना सह नित्यार्चनमादधीत । तुर्येऽह्नि चतुर्थे दिवसे संस्नाप्य वक्ष्यमाणविधिना कलशैरभिषिच्य बिम्बे यजेच्च ॥ ८९ ॥

इत्यवोचाम विश्वेशमन्त्रबिम्बप्रतिष्ठितिम् ।
अथ तत्परिवाराणां प्रतिष्ठां संप्रचक्ष्महे ॥ ९० ॥

इन्द्रादिदिङ्नायकपीठिकाः प्राक्
सदर्भमृत्त्वक्सलिलैर्विशोध्य ।
संक्षाल्य संशोध्य च धारणाभिः
स्वमन्त्रतादात्म्यमपि प्रकुर्यात् ॥ ९१ ॥

स्वस्वोत्तरे स्थण्डिलमारचय्य
सोल्लेखनाद्यत्र निधाय वह्निम् ।
तद्दक्षिणे पूर्णघटे[1] स्वमन्त्रै-[2]
स्तं तं यजेत् स्वाङ्गदिगीशयुक्तम् ॥ ९२ ॥

स्वगृह्यक्लृप्त्याग्निमुखं विधाय
पक्वं च पञ्चप्रणवादिकेन ।

इति उक्तप्रकारेण विश्वेशमन्त्रबिम्बप्रतिष्ठितिं विश्वेशानां सप्तानामपि देवानां मन्त्रबिम्बस्य प्रतिष्ठामवोचाम उक्तवन्तो वयम् । अथ तत्परिवाराणाम् इन्द्रादिलोकपालादीनां प्रतिष्ठां संप्रचक्ष्महे ब्रूमहे । परिवारप्रतिष्ठा चतुर्थदिवसात् प्रागेव कर्तव्येत्यभिप्रायः ॥ ९० ॥

तत्र प्राक् प्रथमम् इन्द्रादिदिङ्नायकपीठिकाः पूर्वद्वारेऽन्यदिग्द्वारेऽपीन्द्रादीनाम्- इन्द्र एवादिभूतानां(?) दिङ्नायकानां दिगीशानां पीठिकाः कारयित्वा परिगृह्य ताः सदर्भमृत्त्वक्सलिलैर्विशोध्य संघृष्य संक्षाल्य धारणाभिः प्राणायामैश्च संशोध्य स्वमन्त्रतादात्म्यमपि स्वस्वमन्त्रेण प्राणायामाङ्गन्यासादिकमपि प्रकुर्यात् ॥ ९१ ॥

ततः स्वस्वोत्तरे स्वस्य स्वस्य स्थानस्योत्तरे स्थण्डिलमारचय्यात्र सोल्लेखनादि उल्लेखनादिभिः सहितं यथा तथा वह्निं निधाय तद्दक्षिणे पूर्णघटे पीठपूजापुरस्सरं पूर्णे कलशे स्वमन्त्रैः स्वस्वमन्त्रेण तं तं लोकपालं स्वाङ्गदिगीशयुक्तं स्वस्वाङ्गैर्लोकपालैस्तदस्त्रैश्च[3] परिवृतं यजेत ॥ ९२ ॥

पुनः स्वगृह्यक्लृप्त्या परिधिस्थापनाद्यग्निमुखं विधाय ततः पञ्चप्रण-

1. 'संस्थाप्य तद्दक्षिणतो घटं च सम्पूर्य तत्तन्मनुना यजेत ॥' ख. पाठः. 2. 'टैः' क. पाठः. 3. 'दङ्ग' क., 'ताङ्ग' ग. पाठः.

इन्द्रक्रतुंनःप्रमुखेन तत्त-
द्दिश्येन मन्त्रेण ततो जुहोतु ॥ ९३ ॥

प्राचीन्द्रक्रतुमाश्रयाशादिशि चाग्निदूतमर्कोद्भवे
नाकेपूर्वसुपर्णमाशरधुरीणे मोषुणःपूर्वकः ।
यंरक्षन्ति जलाधिराजि पवमाने वायवायाह्यणुः
सोमंराजपुरःसरो हिमरुचौ स्यात् त्र्यम्बकं त्र्यम्बके ॥

द्रव्याणि तत्तदधिवाससमीरितानि
चत्वारि वात्र जुहुयुर्दिगधीशमन्त्रैः ।
पूर्णां च तत्तदणुभिः समिधोऽत्र होम्याः
शर्वाधिवासविहिता द्विजवृक्षजा वा ॥ ९५ ॥

---

वादिकेन पञ्चप्रणवादौ योजितेन तत्तद्दिश्येन तत्तद्दिग्भवेन इन्द्रक्रतुंनःप्रमुखेन 'इन्द्रक्रतुं न आभरे'त्याद्येन मन्त्रेण पक्वं जुहोतु ॥ ९३ ॥

दिग्भवान् पक्वमन्त्रानाह — प्राचीति । प्राचि प्राग्गते होमे तु 'इन्द्रक्रतुं' मनुः स्यात् । आश्रयाशदिशि अग्निदिशि 'अग्निं दूतमि'ति च । अर्कोद्भवे यमे नाकेपूर्वसुपर्णं 'नाके सुपर्णमि'ति । आशरधुरीणे राक्षसश्रेष्ठे निर्ऋतौ मोषुणःपूर्वकः 'मोषुणः परापरे'ति । जलाधिराजि वरुणे 'यं रक्षन्ती'ति । पवमाने वायौ 'वायवायाहि दर्शते'ति । हिमरुचौ सोमे सोमंराजपुरस्सरः 'सोमं राजानमि'त्याद्यः । त्र्यम्बके ईशाने 'त्र्यम्बकं यजामह' इति च ॥९४॥

पूजाहोमान्ते अत्र[3] तत्तदधिवाससमीरितानि तस्य तस्य देवस्याधिवासोक्तानि वा चत्वारि समिदाज्यचरुराज्यानि(?) वा द्रव्याणि दिगधीशमन्त्रैरुत्सवे वक्ष्यमाणैः इन्द्रादीनां मन्त्रैर्मूर्तिपा जुहुयुः । तत्तदणुभिः तस्य तस्य देवस्य पूर्णाहुत्युक्तैर्मन्त्रैः पूर्णां च जुहुयुः । अत्र सर्वदेवेषु शर्वाधिवासविहिताः शिवस्याधिवासोक्ता वा द्विजवृक्षजाः पालाश्यो वा समिधो होम्याः ॥ ९५ ॥

---

१. 'ईशाधिवासविहिताः समिधोऽत्र होम्याः प्रागादिदिक्षु निखिलेषु पलाशजा वा ॥ हो' २. 'पा', ३. 'त' ख. पाठः.

**होमान्ते बलिपीठमर्चितपयोजान्तासने स्वे पदे**
**संस्थाप्य स्वदिगीशनाममनुनात्रावाह्य तेनाथ तम् ।**
**ताराङ्गैः सकलीकृतं स्नपितयेत् संपातकुम्भाम्भसा**
**न्यस्याङ्गानि समर्च्य शेषहविषा दत्त्वा बलिं तोषयेत् ॥**

**संशोध्य संस्थाप्य च वीरभद्र-**
**विघ्नेशमातॄरपि पीठिकासु ।**
**मध्यादिकुम्भैर्नवभिः स्वमन्त्रैः**
**सिक्त्वार्चयित्वा विकिरेद् बलिं च ॥ ९७ ॥**

**ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही ।**
**इन्द्राणी चामुण्डी शिवगणपत्योस्तु मातरो मध्ये ॥ ९८ ॥**

**निर्माल्यभाजमुदवासयुतोक्तशुद्धि-**
**शुद्धं स्वमन्त्रमयमुत्तरनालपीठम् ।**

---

होमान्ते 'दण्डेऽर्धेऽन्तर्गतं मण्डलम्' (श्लो० ७३) इत्यादिद्वितीयपटलोक्ते स्वे पदे स्थाने अर्चितपयोजान्तासने पद्मपर्यन्तं पूजिते पीठे स्वदिगीशनाममनुना संस्थाप्याथात्र तेनैव मनुना तमावाह्य ताराङ्गैः प्रणवविहिताङ्गैः सकलीकृतं तं सम्पातकुम्भाम्भसा स्नपितयेत् स्नपितं कुर्यात् । पुनरङ्गानि न्यस्य समर्च्य शेषहविषा स्विष्टकृदवदानानन्तरं पात्रान्तरस्थापितेन हविषा बलिं दत्त्वा तोषयेत् प्रसन्नपूजां कुर्यात् ॥ ९६ ॥

मातॄणां क्रियामाह — संशोध्येति । वीरभद्रविघ्नेशमातॄरपि संशोध्य इन्द्रादीनामुक्तक्रमेणैव संशोध्याग्निमाधाय तद्दक्षिणे नवकं वीरभद्रगणपतिब्रह्माण्यादिभिः मध्यादिक्रमेणावाह्य संपूज्याग्नौ वीरभद्रगायत्र्या पक्वहोमानन्तरं वीरभद्रादितत्तन्मन्त्रैरष्टाष्टशश्चतुर्द्रव्यं पृथक् पृथग् हुत्वा तत्तत्संपातं तत्तत्कलशे सिक्त्वा होमान्ते पीठिकासु च स्वस्वहोममन्त्रैः संस्थाप्य नवभिर्मध्यादिकलशैः स्वस्वमन्त्रैः सिक्त्वा अर्चयित्वा बलिं च विकिरेत् ॥ ९७ ॥

ता मातॄः पठति — ब्रह्माणीति । शिवगणपत्योर्वीरभद्रगणपत्योर्मध्ये ब्रह्माण्याद्या मातरः स्युः ॥ ९८ ॥

निर्माल्यधारिणो विधिमाह— निर्माल्यभाजमिति । देवस्य निर्माल्यं भजतीति निर्माल्यभाक् तं मन्त्रीति मन्त्राणां क्रियाणां च तारतम्यं विद्वान्

हुत्वा घृतं स्वमनुना समिदादियुक्तं
मन्त्री स्वपीठ उदितौ कृतसंप्रतिष्ठः[1] ॥ ९९ ॥
सिक्त्वा स्वसिद्धकलशेन समर्प्य देव-
पूजावशिष्टकुसुमप्रमुखैर्निवेद्य ।
दत्त्वा बलिं च परितोष्य समर्प्य तस्मै
देवोपभुक्तमखिलं पुनरर्थयेत ॥ १०० ॥
यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति ।
तावदत्रैव रक्षार्थं त्वं तिष्ठ स्वप्रतर्दन[2]! ॥ १०१ ॥
इति ।
विष्वक्सेनो नरकदमने धूर्तसेनः कुमारे
शर्वे चण्डेश्वर इह पुनर्मुण्डिनी चण्डिकायाम् ।
विघ्ने कुम्भोदरसमभिधश्चण्डसेनो हरीशे
भूताधीशे पुनरभिहितो घोषवाञ्छेषभोगी[3] ॥ १०२ ॥

गुरुः उदवासयुतोक्तशुद्धिशुद्धं जलाधिवाससहितैरुक्तैः बिम्बशुद्धिभिः शुद्धं भूतसंहारशोषणाद्यनन्तरं स्वमन्त्रमयं स्वमन्त्रप्राणायामपूजनादिभिः कृताधिवासं[4] स्वमनुना समिदादिचतुर्द्रव्ययुतं घृतं हुत्वा पुनरुदितौ प्रासादस्योदितिवास्तुस्थाने उत्तरनालपीठम् उत्तरभागे नालोऽम्बुमार्गो यथा भवति तथा कृतसंप्रतिष्ठः कृतप्रतिष्ठाविधिर्भूत्वा स्वसिद्धकलशेन स्वस्वमन्त्रसाधितकलशेन सिक्त्वा देवपूजावशिष्टकुसुमप्रमुखैः देवस्य पूजाया अवशिष्टैः पुष्पगन्धादिभिः समर्च्य निवेद्य बलिं च दत्त्वा परितोष्य तस्मै निर्माल्यधारिणे देवोपभुक्तमखिलं समर्प्य पुनः अर्थयेत प्रार्थयेत् ॥ ९९, १०० ॥

प्रार्थनामन्त्रः — यावदत्रेति ॥ १०१ ॥

विष्ण्वादौ निर्माल्यधारिणां नामानि कथयति — **विष्वक्सेन** इति । नरकदमने विष्णौ विष्वक्सेनः शेषभोगी निर्माल्यधारी । कुमारे धूर्तसेनः । इह शर्वे चण्डेश्वरः । चण्डिकायां दुर्गायां पुनर्मुण्डिनी शेषभोगिनी । विघ्ने कुम्भोदरसमभिधः कुम्भोदरः । हरीशे चण्डसेनः । भूताधीशे घोषवांश्च ॥ १०२ ॥

१. 'ष्ठम्' इति मूलकोशपाठः. २. 'तर्जन' ग. पाठः. ३. 'जी' क. पाठः. ४. 'सं स्वं स्वं' ख. पाठः.

प्राक् पञ्चगव्यं परिपूज्य ताम्र-
पात्रे स्वपीठाधिपमन्त्रकेण ।
हुत्वाष्टयुक्तं शतमाज्यमस्मिन्
संपातमायोज्य सवह्निवीर्यम् ॥ १०३ ॥

तत्पीठमध्ये भुवि शक्तिगर्भे
गर्भं निशि न्यस्य तदीशमस्मिन् ।
आवाह्य संपूज्य ततः प्रसाद्य
संरक्ष्य तक्ष्णा रचयेच्च पीठम् ॥ १०४ ॥

आदायारचितं विशोध्य बलिपीठं दर्भमृत्सादिकै-
राज्याभ्यक्त्यभिषिक्तिकृत् सलिलवासे स्नापयित्वाम्बुभिः
कृत्वा शुद्धिघटाभिषेकमपि पुण्याहावसानं तत-
स्तद्भूतप्रलयोदयादि निजमन्त्र[1]न्यासनिष्ठं चरेत् ॥ १०५ ॥

---

अथ महाबलिपीठप्रतिष्ठामाह — प्रागिति । महापीठरचनात् पूर्वं ताम्रपात्रे पञ्चगव्यं स्वपीठाधिपमन्त्रकेण परिपूज्य तथाग्निमाधाय तथाष्टयुक्तं शतमाज्यं च तेनैव हुत्वा अस्मिन् गर्भपात्रे सवह्निवीर्यमग्निगतचैतन्येन सह संपातमायोज्य तत्पीठमध्ये महापीठस्य मध्यस्थाने भुवि शक्तिगर्भे पीठपूजानन्तरं शक्तिमावाह्य संपूज्य तस्या गर्भस्थाने निशि गर्भं गर्भपात्रं यथोपदेशं न्यस्य तदीशं तत्पीठाधिपं तस्मिन् आवाह्य संपूज्य ततो निवेद्य अनन्तरं प्रसाद्य संरक्ष्य तक्ष्णा पीठं रचयेत् कारयेच्च ॥ १०३, १०४ ॥

पुनरारचितं यथावन्निर्मितं बलिपीठमादाय परिगृह्य दर्भमृत्सादिकैः दर्भमृत्त्वग्भिर्विशोध्य आज्याभ्यक्त्यभिषिक्तिकृद् आज्येनाभ्यज्य चूर्णैरुद्वर्त्याभिषेककृच्च भूत्वा सलिलवासे जलाधिवासकाले अम्बुभिः स्नापयित्वा शुद्धिघटाभिषेकं सप्तशुद्धिभिः बिम्बशुद्धिकलशैर्वाभिषेकमपि पुण्याहावसानं कृत्वा ततस्तद्भूतप्रल(योद)यादि तत्स्थभूतसंहारादिकं निजमन्त्रन्यासनिष्ठं निजेन मन्त्रेणावाहनन्यासादिनिष्ठं चरेत् ॥ १०५ ॥

---

1. 'न्त्रं' क ख. पाठः.

आस्थाप्यार्चितविष्टरे परिषदध्यक्षं स्वनामाणुना
प्रागाद्यैः समसंस्कृतैः स्वपरिवारैरर्चयित्वावृतम् ।
अन्नाद्यं विनिवेद्य तत्र विकिरेत् तस्मै च तेभ्यो बलिं
नैवेद्यं प्रविसृज्य साधु परिशोध्याराध्य संरक्षतु ॥ १०६ ॥
उत्पाद्यानलमग्रतो नवघटांस्तद्दक्षिणे सर्पिषा
धान्यैर्गन्धजलेन वा स्वमनुभिः संपूर्य संपूज्य तान् ।
गायत्र्या निजया विधाय विधिवत् पक्वं तदीशाणुना
सर्पिः साष्टशतं जुहोतु परिपीठेशाणुभिश्चाष्टशः ॥
तन्मन्त्रेण समिद्घृतचरुलाजान् सर्षपान् ससक्तुयवान् ।
सतिलदधिदुग्धमाध्वीपुष्पफलान् पाञ्चरात्रिकेऽत्र विधौ ॥

---

पुनरर्चितविष्टरे पूजिते पीठे स्वनामाणुना स्वनाममन्त्रेण परिषद्ध्यक्षं बलिपीठाधिपम् आस्थाप्यावाह्य प्रागाद्यैः समसंस्कृतैः पीठाधिपसमकालं संस्कृतैः स्वपरिवारैरावृतं तमर्चयित्वा अन्नाद्यमन्नं विनिवेद्य तत्र तदनन्तरं तस्मै तेभ्यश्च बलिं विकिरेत् । पुनर्नैवेद्यं प्रविसृज्य साधु निर्माल्यं परिशोध्य आराध्य प्रसन्नपूजां कृत्वा संरक्षतु ॥ १०६ ॥

तस्याग्रतः कुण्डेऽनलमुत्पाद्य जनयित्वा तद्दक्षिणे नवघटान् सर्पिषा वा धान्यैर्वा गन्धजलेन वा स्वमनुभिः स्वस्वाधिपमन्त्रेण परिवारमन्त्रैश्च संपूर्य तथा तान् संपूज्य निजया पीठाधिपगायत्र्या विधिवत् (विधाय) पक्वं जुहोतु । पुनस्तदीशाणुना साष्टशतं परिपीठेशाणुभिः परिवारपीठेशमन्त्रैरष्टशश्च सर्पिर्जुहोतु ॥ १०७ ॥

अत्र पाञ्चरात्रिके विधौ । अत्र विष्णुशिवभेदेन द्विविधा तन्त्रपद्धतिः । तत्र पाञ्चरात्रादयो वैष्णवागमाः पाशुपतादयः शैवागमाश्च । तयोर्मार्गयोर्मध्ये पञ्चरात्रसम्बन्धिनि विधौ तन्मन्त्रेण पीठाधिपमन्त्रेण समिद्घृतचरुलाजान् सर्षपान् ससक्तुयवान् सक्तुसहितयवांश्च सतिलदधिदुग्धमाध्वीपुष्पफलान् दधीनि क्षीराणि मधूनि, पुष्पे पद्मानि गृह्यन्ते फले कदलीफलानीति संप्रदायः । एतेषां संख्यानुक्तितः पूर्वोक्तप्रकारेण पीठाधिपमन्त्रेणाष्टशतं तत्परिवारमन्त्रैरष्टशश्चेत्यायाति ॥ १०८ ॥

---

1. 'दिश्येभ्यश्च विशोध्य सम्यगभिपूज्याच्छादयेदंशुकैः ॥ ओं नम आ' ख. पाठः,

पाशुपते समिदन्नं घृतधानालाजतिलफलीकरणम् ।
दधिमधुघृतान्युडुम्बापूपान् पृथुकान् पयश्च तत्र हुनेत् ॥

बलिपीठतद्धटेषु प्रसमर्प्याज्यं प्रपूज्य भूतेशम् ।
सावरणं तं बलिमपि दद्यात् तस्मै च दिग्गणेभ्यश्च ॥ ११० ॥

ओंनमआद्याश्चतसृषु हरौ हरेऽष्टासु दिक्षु बलिमन्त्राः[1] ।
दशमूर्त्त्याद्या द्वितये येभूताद्यास्तु वेह सकलेषु ॥ १११ ॥

ओं नमः प्राच्येभ्यो भूतेभ्यो विश्वभूतेभ्यो नमोऽस्तु विश्वरूपेभ्यो विविधरूपेभ्यश्च वो नमो नमः । ओं नमो दक्षिणेभ्यश्च शार्ङ्गधन्वनो हाहाभ्यश्च सर्वेभ्यो भूतेभ्यो नमो नमः । ओं नमः पाश्चात्येभ्यो भूतेभ्यो भैरवेभ्यो विष्णुपालकेभ्यो वियद्गृहोदरवर्तिभ्यो हुं फट् गच्छत स्वाहा । विष्णुगणानामतो बलिमुपहरामि भद्रं नो ददत प्रीणयत स्वाहा । ओं नमो विष्णुभूतेभ्य उदीच्येभ्यः सकलजन्तुहितकरेभ्यः स्वाहा इति ।

दशमूर्तिपार्षदेभ्यः सद्भ्यो[2]ऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा । प्राग्गणेभ्यो बहुरूपेभ्यो विरू[3]-

---

तत्र पाशुपते विधौ संमिदन्नं घृतधानालाजतिलफलीकरणं, फलीकरणं पूपविशेषः दधिमधुघृतानि उडुम्बापूपकान् पयश्च एतानि पूर्वं व्याख्यातानि यथोक्तसङ्ख्यं हुनेच्चं ॥ १०९ ॥

बलिपीठतद्धटेषु बलिपीठेषु तत्कलशेषु च संपाताज्यं प्रसमर्प्य बलिपीठे सावरणं भूतेशं प्रपूज्य तस्मै च दिग्गणेभ्यश्च बलिमपि दद्यात् ॥ ११० ॥

तत्र हरौ चतसृषु दिक्षु ओंनमआद्याश्चत्वारो बलिमन्त्राः । हरे अष्टासु दिक्षु दशमूर्त्याद्याः द्वितये द्विविधाः । इह सकलेष्वपि देवेषु येभूताद्या वा । प्रथममत्र हरौ चतुरो मन्त्रान् पठति । पुनः शिवे दशमूर्त्यादिद्वितयं मन्त्रं पठति । 'ये भूताद्या' इत्युत्सवबलौ वक्ष्यते च ॥ १११ ॥

---

१. 'विष्णौ चतसृषु दिक्ष्वश्विरे स्युरष्टासु । द', २. 'द्भ्या' ख. पाठः.
३. 'विश्वरू' क. ग. पाठः. ४. 'वा । दिग्गणेभ्य इत्येतत् सर्वसमानम् । प्र' ग. पाठः.

पेभ्यो विश्वरूपेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा । आग्नेय्यां गणेभ्य इत्यादि * ।
निर्माल्यं व्यपनीय प्राच्याच्छाद्याधिवासयेद् रात्रौ ।
प्रातस्तनार्चनान्ते देवं तत्स्थापनाय चार्थयतु ॥ ११२ ॥

निर्माल्यं व्यपनीय सम्यगभिषिच्येष्ट्वाम्बुजान्तासनं
मन्त्री मन्त्रमयं प्रकल्प्य बलिपीठं तत्र तन्मन्त्रतः ।
संस्थाप्य ध्रुवमन्त्रजापमपि कृत्वावाह्य साङ्गीकृतं
मध्यस्थास्नुघटाम्भसा समभिषिच्याद्यङ्गकानि न्यसेत् ॥

मूर्तीरष्ट यथाक्रमं स्वकलशैः संस्थाप्य संस्नाप्य ताः
प्राग्वत् प्राच्यं तदावृतं तदधिपं तस्मै निवेद्याग्रतः ।
पीठोपर्युपपीठकेषु च बलिं दत्त्वा विशोध्याखिलं
संपूज्य प्रणिपत्य यावदिति संप्रार्थ्याभिरक्षां चरेत् ॥

---

ततः क्रियाशेषमाह — निर्माल्यमिति । निर्माल्यं पीठगतं निर्माल्यं व्यपनीय प्राच्यं वस्त्रेणाच्छाद्य रात्रावधिवासयेत् । प्रातस्तनार्चनान्ते देवस्य प्रातःकालपूजान्ते तत्स्थापनाय बलिपीठप्रतिष्ठायै देवम् अर्थयतु प्रार्थयेत् ॥

पुनर्निर्माल्यं व्यपनीय सम्यगभिषिच्य अम्बुजान्तासनं 'पद्माय नमः' इति पर्यन्तं पीठमिष्ट्वा मन्त्री प्रतिष्ठाकर्मणः तन्मन्त्राणामतिदेशं जानन् बलिपीठं मन्त्रमयं प्रकल्प्य तत्र पूजिते पीठे तन्मन्त्रतः संस्थाप्य ध्रुवमन्त्रजापं 'ध्रुवा द्यौरि'ति मन्त्रजपं कृत्वावाह्य साङ्गीकृतं तद् मध्यस्थास्नुघटाम्भसा पूजितनवकमध्यस्थब्रह्मकलशेन समभिषिच्य च आद्यङ्गकानि प्रणवेनाङ्गानि च चरेत् ॥ ११३ ॥

पुनः परितः स्थिता अष्ट मूर्तीर्यथाक्रमं प्रागादिप्रादक्षिण्येन स्वस्वमन्त्रैः संस्थाप्य स्वस्वकलशैः संस्नाप्य तदावृतं तं प्राग्वत् प्राच्यं तस्मा अग्रतः पूर्वं निवेद्य पीठोपरिभागे उपपीठकेषु च बलिं स्वस्वमन्त्रतो दत्त्वा अखिलं निर्माल्यं विशोध्य सम्पूज्य प्रसाद्य प्रणिपत्य 'यावदत्र जगन्नाथ' इति प्रार्थ्याभिरक्षां तालत्रयादिकं चरेत् ॥ ११४ ॥

---

* 'एतदनन्तरं ख. पुस्तके 'उत्पाद्ये'त्यादिश्लोकचतुष्टयं दृश्यते । तत्रापि क्वचित् क्वचित् पाठो भिन्नाः ।

तुर्येऽहन्यभिषिच्य देवमभिपूज्यावस्रुतप्रोक्षणं
कृत्वा स्थापितपीठिकास्थपरिवारेभ्यः प्रदद्याद् बलिम् ।
कुर्यात् तुर्यदिनात्यये यदि महापीठप्रतिष्ठापनं
तत्तुर्येऽह्न्यभिषिच्य देवमिह तच्छेषोक्षणाद्यं चरेत् ॥

वक्ष्ये ध्वजप्रतिष्ठामङ्कुररोपं तदर्थमत्रादौ ।
कृत्वा तदर्हकाले वाहनमावासयेज्जले लौहम् ॥ ११६ ॥
मण्डपमपि च यथोक्तं कृत्वा संस्कृत्य तत्र शय्यां च ।
निद्राकलशसमेतां कृत्वा परिपूजयेद् विधिवत् ॥ ११७ ॥

विष्णौ तु वज्रगारुडमौक्तिकशङ्खाब्जरागकलशेषु ।
दिक्पतिविपतीन् प्रयजेच्छयनचतुर्दिङ्महेशदिक्स्थेषु ॥ ११८

---

तुर्येऽहनि देवप्रतिष्ठायाश्चतुर्थे दिवसे देवं यथोक्तकलशैरभिषिच्या-भिपूज्यावस्रुतप्रोक्षणं देवस्य कलशाभिषेके तच्छिष्टमवस्राव्य तेन अवस्रुतेन प्रो-क्षणं कृत्वा स्थापितपीठिकास्थपरिवारेभ्यः स्थापितासु पीठिकासु स्थितेभ्यः परिवारेभ्यो बलिं प्रदद्यात् । महापीठप्रतिष्ठापनं तुर्यदिनात्यये चतुर्थदिवसा-दूर्ध्वमेव कुर्याद् यदि तत्तुर्येऽह्नि तस्यापि चतुर्थदिवसे देवं यथोक्तकलशैरभिषि-च्य इह महापीठे तच्छेषोक्षणाद्यं तच्छेषेणोक्षणं बलिं चाचरेत् ॥ ११५ ॥

परिवाराणां प्रधानभूतस्य बलिपीठस्य प्रतिष्ठामुक्त्वा तादृशस्य ध्वज-स्यापि प्रतिष्ठामाह — वक्ष्य इति । ध्वजप्रतिष्ठां वक्ष्ये, अहमिति शेषः । तदर्थं ध्वजप्रतिष्ठां कर्तुम् आदौ यथोक्तदिने अङ्कुररोपं बीजवापं कृत्वा लौहं लोहमयं वाहनं तदर्हकाले

"त्रिरात्रमश्मनो लोहमेकरात्रं मणिं निशाम्"

इत्येकरात्रस्यैव लौहस्य विधानाद् अधिवासदिवसात् पूर्वेद्युर्गृहीत्वा जले आ-वासयेत् ॥ ११६ ॥

मण्डपमपि यथोक्तं देवाधिवासमण्डपवत् कृत्वा संस्कृत्य तत्र निद्रा-कलशसमेतां शय्यां च कृत्वा विधिवत् पीठपूजानन्तरं प्रकृतिमप्यावाह्य पूज-येत् ॥ ११७ ॥

कलशपूजायां विष्णौ विशेषमाह — विष्णाविति । तुर्विशेषद्योतकः ।

शय्याग्रे नवकलशानापूर्य सहेमरत्नगन्धोदैः ।
वाहनमन्तस्थघटे परितः शर्वे तु दिक्पतींश्च यजेत् ॥११९॥

संस्थाप्य पञ्चापरधाम्नि कुम्भान्
काथोदमृद्धान्यकगव्यगन्धैः ।
मध्याद्युदङ्निष्ठतया प्रपूर्य
यजेत विष्णौ नवकं परेषु ॥ १२० ॥

बिम्बं बिम्बवदम्बुनः समुपनीयास्थाप्य पीठेऽक्षिकृद्
गोदः क्षालनपूर्वकृत् कलशतोयैः स्नापयेत् स्वोदितैः ।
पुण्याहावधिकं विधाय शयने विन्यस्य तत्त्वाप्ययं
कृत्वा धारणया विशोध्य तनुयात् तत्तत्त्वसृष्ट्यादिकम् ॥

---

शयनचतुर्दिक्षमहेशदिक्स्थेषु शयनस्य चतसृषु दिक्ष्वीशकोणस्थिते च वज्र-गारुडमौक्तिकशङ्खाब्जरागकलशेषु वज्रेण गरुडशिलया मौक्तिकेन शङ्खाख्य-रत्नेन पद्मरागेण च क्रमाद् युक्तेषु कलशेषु पञ्चसु क्रमेण दिक्पतिविपतीन् इन्द्रादिदिक्पालान् गरुडं चावाह्य पूजयेत् ॥ ११८ ॥

शिवे विशेषमाह — शय्याग्र इति । शर्वे तु शय्याग्रे सहेमर-त्नगन्धोदैः हेमरत्नगन्धसहितैर्जलैः नवकलशानापूर्य अन्तस्थघटे मध्यकलशे वाह-नमृषभं परितो घटेषु दिक्पतीनिन्द्रादीनष्टौ च यजेत् ॥ ११९ ॥

वाहनस्य बिम्बशुद्धिकलशपूजामाह — संस्थाप्येति । अपरधाम्नि अन्यस्मिन् गृहे विष्णौ पञ्च कुम्भान् संस्थाप्य काथोदमृद्धान्यकगव्यगन्धैः कषायेण मृज्जलेन धान्यजलेन गव्येन गन्धजलेन च मध्याद्युदङ्निष्ठतया क्रमात् परिपूर्य यजेत । परेषु देवेषु यथोक्तप्रकारेण नवकं च प्रपूर्य यजेत ॥

बिम्बं वाहनबिम्बं बिम्बवद् देवबिम्बवद् अम्बुनो जलात् समुपनीय स्नानमण्डपं नीत्वा पूजिते पीठे आस्थाप्याक्षिकृद् यथोक्तक्रमेण नेत्रोल्लेखनं कृत्वा गोदः नेत्रपटं हृत्वा गामपि दर्शयित्वा दत्त्वा क्षालनपूर्वकृत् स्वस्वद्र-व्यैः स्वस्वोक्तक्रमेण क्षालनं कृत्वा पुनः स्वोदितैः 'संस्थाप्य पञ्चापरधाम्नि' इत्यादिश्लोकोक्तैः कलशतोयैः संस्नापयेत् । पुनरुपहारसमर्पणमपि पुण्याहाव-धिकं विधाय ततो मण्डपं नीत्वा शयने विन्यस्य शाययित्वा तत्त्वाप्ययं प्रोक्तक्रमेण तत्त्वसंहारं कृत्वा धारणया शोषणादिभिर्विशोध्य तत्तत्त्वसृष्ट्या-दिकं तत्त्वसृष्टिमन्त्रप्राणायामादिकं तनुयात् ॥ १२१ ॥

**तत्तद्वाहनमन्त्रतः समभिवाद्याराध्य गत्वा बहिः**
**सम्मृष्ट्यादिविशुद्धतत्स्थललसत्पीठादिकं पूर्ववत् ।**
**संस्कृत्य ध्वजदण्डघर्षणमपि प्राधाय दर्भादिभिः**
**संक्षाल्य ध्वजदण्डपीठदृषदोः पुण्याहमप्याचरेत् ॥ १२२॥**

**दण्डं धारणया विशोध्य महितीकृत्यादिना मूलम-**
**ध्याग्रस्थान् वृषषण्मुखौ च निजनाम्ना मारुतं चाञ्चतु ।**
**पीठाद्यं च तथा विशोध्य महितीकृत्य स्वशक्त्यादितः**
**संरक्ष्याखिलमन्तरेत्य तनुयात् तत्तत्त्वहोमादिकम् ॥१२३॥**

**स्वस्वेशोदितपञ्चतत्त्वमनुभिर्हुत्वा निजोक्तक्रमात्**
**सर्पिः प्राप्र्य ततोऽधिवासहवनाद्यं कल्पयेत् कल्पवित् ।**

---

ततः पूजिते पीठे तत्तद्वाहनमन्त्रतः समभिवाद्याराध्य बहिर्गत्वा संमृष्ट्यादिविशुद्धतत्स्थललसत्पीठादिकं मृष्ट्यादिभिः शोधिते ध्वजस्थाने प्रकाशमानं पीठादिकं पीठं नपुंसकशिलां च पूर्ववत् पूर्वोक्तक्रमेण संस्कृत्य दर्भादिभिः दर्भमृत्त्वग्भिर्ध्वजदण्डघर्षणं ध्वजदण्डस्य शोधनमपि प्राधाय संक्षाल्य ध्वजदण्डपीठदृषदोः ध्वजदण्डस्य पीठस्य च पुण्याहमप्याचरेत् ॥ १२२ ॥

दण्डं धारणया शोषणादिभिर्विशोध्य आदिना प्रणवेन महितीकृत्य संपूज्य तस्य मूलमध्याग्रस्थान् मूलमध्याग्रेषु वृषषण्मुखौ मारुतं च निजनाम्ना 'ओं ऋषभाय नमः' 'ओं स्कन्दाय नमः' 'ओं वायवे नमः' इति नाममन्त्रैः अञ्चतु पूजयेत् । पुनः पीठाद्यं च तथा शोषणादिभिः संशोध्य स्वस्वशक्त्या महितीकृत्य आदितः प्रणवेन नपुंसकशिलां च तथा महितीकृत्य अखिलं संरक्ष्य मण्डपान्तरेत्य गत्वा तत्तत्त्वहोमादिकं तनुयात् ॥ १२३ ॥

स्वस्वेशोदितपञ्चतत्त्वमनुभिः स्वस्वदेवस्योक्तैः पञ्चतत्त्वमन्त्रैः निजनिजोक्तक्रमात् हुत्वा सर्पिःसंपातं वाहनबिम्बे प्राप्र्य ततः कल्पवित् स्वस्वागमोक्तं कर्मविशेषं विद्वानाचार्यः अधिवासहवनाद्यम् अधिवासहोमशान्तिहोमाद्यं कल्पयेत् कुर्यात् । ततः वाहनमण्डलादिषु, आदिशब्देन ब्राह्मणभोजनं विवक्षितं,

---

१. 'प्र' ख. पाठः. २. 'कैः' क. पाठः. ३. 'मु' क. ह. पाठः.

इष्ट्वा वाहनमण्डलादिषु बलिं दत्त्वा प्रसाद्य स्तुतिं
कुर्याद् देवमपि प्रपूज्य धिनुयात् प्रासादसंस्थं ततः॥१२४॥

वह्निं विहृत्य जुहुयुर्गुरुमूर्तिपालाः
पक्वं जिनार्णमनुना ध्वजवाहनस्य ।
देवस्य वाथ सकलेषु समिद्धृताद्यं
वाहाणुना स्वभुवि दिग्भिदुरेण तेन ॥ १२५ ॥

पूर्वादिमध्यान्तिमपञ्चकुण्ड-
क्रमोदितैः कादिकपञ्चवर्गैः ।
स्याद् वैनतेयायपदं द्विठान्तं
मन्त्रः समुक्तो मधुकैटभारौ ॥ १२६ ॥

ध्वजवासिभ्यो भूतेभ्यो नम इत्यष्टदिक्षु बलिमन्त्रः ।
ध्वजवाहनभूत इति श्रीरमणे वाहनस्य नुतिमन्त्रः ॥

---

तेष्विष्ट्वा बहिर्बलिं दत्त्वा अन्तः प्रविश्य प्रसाद्य स्तुतिं कुर्यात् । ततः प्रासादसंस्थं देवमपि प्रपूज्य धिनुयात् प्रीणयेत् ॥ १२४ ॥

अधिवासहोमादौ विशेषमाह — वह्निं विहृत्येति । गुरुमूर्तिपालाश्च यथोक्तक्रमेण वह्निं विहृत्य ध्वजवाहनस्य देवस्य वा जिनार्णमनुना गायत्र्या पक्वं जुहुयुः । अथ सकलेषु देवेषु समिद्घृताद्यं द्रव्यं स्वस्ववाहाणुना जुहुयुः । स्वभुवि विष्णौ दिग्भिदुरेण अनन्तरवक्ष्यमाणदिग्भेदयुक्तेन तेन वाहाणुना जुहुयुः ॥ १२५ ॥

'दिग्भिदुरेणे'त्युक्तमेवाह — पूर्वादीति । मधुकैटभारौ विष्णौ पूर्वादिमध्यान्तिमपञ्चकुण्डक्रमोदितैः पूर्वादिचतुर्दिक्षु मध्ये च पञ्चसु कुण्डेषु क्रमेणोक्तैः कादिकपञ्चवर्गैः कचटतपवर्गैः सहितं द्विठान्तं स्वाहान्तं वैनतेयायेति पदं वाहनमन्त्रः समुक्तः स्यात् । 'ओं कं खं गं घं ङं वैनतेयाय स्वाहा' इत्यादयो मन्त्राः ॥ १२६ ॥

श्रीरमणे विष्णौ अष्टदिक्ष्वपि 'ध्वजवासिभ्यो भूतेभ्यो नमः' इति बलिमन्त्रः स्यात् । 'ध्वजवाहनभूतोऽसावि'ति नुतिमन्त्रः स्तुतिमन्त्रः स्यात् ॥ १२७ ॥

ध्वजवाहनभूतोऽसौ विष्णोर्विष्णुपराक्रमः ।
सुपर्णः प्रीयतां मह्यं विनताकुलनन्दनः ॥ १२८ ॥
इति ।

प्रातः प्रसाद्य भगवन्तमुपेत्य केतुं
नान्दीमुखादिसहितं विहितक्रमेण ।
संस्थाप्य पादद्दषदं प्रसमर्प्य सर्पिः
सर्वत्र विन्यसतु तत्र सहेमरत्नम् ॥ १२९ ॥

पूर्वादिमध्यनिष्ठं काद्यैर्वर्गैः क्रमेण विन्यस्येत् ।
वैडूर्यपुष्यमौक्तिकगारुडमाणिक्यसंज्ञितानि हरौ ॥ १३० ॥
गत्वा मण्डपमखिलं प्रोद्वास्य न्यस्य तण्डुलसुपूर्णे ।
पात्रे सपताकाद्यं वाहनबिम्बं समस्तमानाय्य ॥ १३१ ॥
गर्भालयं समेत्य प्रसाद्य देवं तदग्रसन्निहितात् ।
वाहनतः सपताके वाहनमावाह्य वाहने मन्त्री ॥ १३२ ॥

---

तमेव पठति — ध्वजेति ॥ १२८ ॥

एवमधिवासं कृत्वोत्तरेद्युः प्रातर्भगवन्तं देवं परिपूज्य प्रसाद्य केतुं केतुस्थानमुपेत्य विहितक्रमेण देवप्रतिष्ठायामुक्तक्रमेण नान्दीमुखादिसहितं नान्दीमुखपुण्याहादिभिः सह पादद्दषदं नपुंसकशिलां संस्थाप्य सर्पिः संपातं (प्र) समर्प्य सर्वत्र देवेषु तत्र नपुंसकशिलायां सहेमरत्नं सुवर्णसहितरत्नानि विन्यसतु ॥ १२९ ॥

तत्र हरौ तु वैडूर्यपुष्यमौक्तिकगारुडमाणिक्यसंज्ञितानि पञ्चरत्नानि काद्यैर्वर्गैः 'ओं कं खं गं घं ङं नम' इत्यादिमन्त्रैः पूर्वादिमध्यनिष्ठं क्रमेण विन्यस्येत् ॥ १३० ॥

पुनः सर्वेषु देवेष्वपि मण्डपं गत्वा अखिलं तत्रत्यं तोरणध्वजादिकं प्रोद्वास्य तण्डुलसुपूर्णे पात्रे सपताकाद्यं पताकाघण्टास्रक्सहितं वाहनबिम्बं न्यस्य तत् समस्तं मूर्तिपैरानाय्य देवस्य गर्भालयं समेत्य देवं संपूज्य प्रसाद्य मन्त्री आवाहनमन्त्रज्ञो गुरुः (देवा[1] तद)ग्रसन्निहितात् देवस्य परिवारत्वेनाग्रतः स्थिताद् वाहनतो वाहनात् सपताके वाहने पताकासहिते वाहनबिम्बे वाहनं स्ववाहनमावाह्य संपूज्य पुनः ध्वजकलशाद्यैर्निद्राकलशकुम्भेशादिभिः सकलैः

---

१. 'क' इति मूलकोशपाठः. २. 'रकत्वे' क. पाठः.

केतुस्थानमुपेत्य ध्वजकलशाद्यैः समन्वितं सकलैः ।
प्राज्ञान् प्रसाद्य विप्रांस्तदाज्ञया स्थापनं प्रकुर्वीत ॥ १३३ ॥

तत्र ध्वजाग्रेऽर्चितयोगविष्टरे
तद्वाहनं क्लसपराभिवाहनम् ।
संस्थापयेदाद्युपचारमूलतः
सपञ्चतत्त्वाणुनिजाणुतारतः ॥ १३४ ॥

विन्यस्तमन्त्रमभिपूज्य निजाणुना त-
मासिच्य वाहनघटीभृतवारिणाथ ।
कृत्वा सजीवकरणं प्रविधाय मन्त्र-
न्यासार्चनाद्यमिह सुस्थितमारचय्य ॥ १३५ ॥

संस्थाप्य सम्मुखमदक्षिणपार्श्वलम्बि-
घण्टास्रगुज्ज्वलपताकमभीष्टपीठे ।

---

समन्वितं यथा भवति तथा केतुस्थानमुपेत्य प्राज्ञान् विदुषो विप्रान् प्रसाद्य तदाज्ञया तेषामनुज्ञया स्थापनं च प्रकुर्वीत ॥ १३१ — १३३ ॥

तत्र स्थापनकाले अर्चितयोगविष्टरे ध्वजाग्रे केतोरग्रे पीठपूजानन्तरं क्लसपराभिवाहनं कृतपरावाहनादिकं तद्वाहनम् आद्युपचारमूलतः, आदिशब्द उभयथा योज्यः, आदौ प्रणवोपचारमूलानन्तरं सपञ्चतत्त्वाणुनिजाणुतारतः, निजाणुशब्दश्च द्विधा योज्यः, निजाणुपुटितपञ्चतत्त्वानन्तरं निजाणुप्रणवेन संस्थापयेत् । निजाणुरिति वाहनमन्त्रो मूलमन्त्रश्च गृह्यते ॥ १३४ ॥

विन्यस्तमन्त्रं मन्त्रन्यासानन्तरमभिपूज्य वाहनघटीभृतवारिणा वाहनकलशस्थजलैः निजाणुना स्वमन्त्रेण तमासिच्याथ सजीवकरणं जीवावाहनाद्यं च कृत्वा मन्त्रन्यासार्चनाद्यं मन्त्रावाहनन्यासपूजाद्यं प्रविधाय इह ध्वजाग्रे सुस्थितं कीलस्थापनादिना सुस्थिरमारचय्य अभीष्टपीठे पूजितपीठे गर्ते अदक्षिण-पार्श्वलम्बिघण्टास्रगुज्ज्वलपताकम् अदक्षिणे उत्तरे वामे वा पार्श्वे लम्बिन्यो घण्टा

---

'टान्वितमा' ख. पाठः

तत्केतुदण्डमभिक्लृप्तसमनुप्रतिष्ठं
संभाव्य साध्वभिमृशन् प्रजपेद् ध्रुवाणुम् ॥

विन्यस्तवाहनमनुं[1] दिगधीशकुम्भैः
सिक्त्वाग्रतस्तमधिवेदि तदीयमन्त्रैः ।
अस्त्रोदकेन परिषिच्य घटेशनिद्रा-
कुम्भाम्भसा समभिषिञ्चतु च क्रमेण ॥१३७॥

तत्तन्मनुन्यसनपूर्वकमर्चयित्वा
तस्मै निवेद्य च हविर्विकिरेद् बलिं च ।
अन्नं विसृज्य परिशोध्य भुवं प्रसाद्य
बद्धाञ्जलिः स्वमनुना स्तुतिमादधीत ॥ १३८ ॥

ओं नमोऽष्टकुलनागभूषणाय नागशोणितलिप्ताङ्गाय समस्तपातालवासिजनविक्षोभणकराय देवदानवगन्धर्वोरगमथनाय मातुरर्थे नागमोहनाय हन हन विघ्नं नाशय स्वाहा ॥

नमस्तेऽस्तु त्रिणेत्राय ध्वजाधिपतये नमः ।
नन्दिने तु नमस्तुभ्यमुत्सवस्य प्रसिद्धये ॥ १३९ ॥

---

स्रगुज्ज्वलपताका च यस्मिंस्तत् केतुदण्डं देवस्य संमुखं यथा भवति तथा संस्थाप्य अभिक्लृप्तमनुप्रतिष्ठं पूर्वोक्तमन्त्रैः प्रतिष्ठितं साधु संभाव्य ध्यात्वा तदभिमृशन् ध्रुवाणुं 'ध्रुवा द्यौरि'त्याद्यान् मन्त्रान् प्रजपेत् ॥ १३५,१३६ ॥

विन्यस्तवाहनमनुं वाहनमन्त्रावाहनविन्यासानन्तरं (तं) दिगधीशकुम्भैः विष्णौ चतुर्भिरन्येष्वष्टभिश्च तदीयमन्त्रैः अधिवेदि वेद्यामेवाग्रतः सिक्त्वा पुनः अस्त्रोदकेन कर्करी[2]जलेन परिषिच्य परितः सेचयित्वा क्रमेण घटेशनिद्राकुम्भाम्भसा च समभिषिञ्चतु ॥ १३७ ॥

तदा तदा तत्तन्मनुन्यसनपूर्वकमर्चयित्वा तस्मै हविर्निवेद्य बलिं च विकिरेत् । अन्नं निर्माल्यं विसृज्य भुवं परिशोध्य प्रसाद्य प्रसन्नपूजानन्तरं स्वस्वमनुना स्तुतिं चादधीत ॥ १३८ ॥

विष्णौ वाहनस्य स्तुतिमन्त्रं वदति — ओं नम इत्यादि ॥

---

१. 'मुं' क. पाठः. २. 'त्तं' ख. पाठः.

इति ।

गत्वा गर्भगृहं यथोचितविभूत्याराध्य देवं स्वयं
कुर्वीत ध्वजवाहनाढ्यपरिवाराणां समन्ताद् बलिम् ।
नीत्वा त्रीणि दिनानि तुर्यदिवसे संस्नाप्य देवं सुधीः
कुर्यादेतदवस्रुतोक्षणबली चैवं ध्वजस्थापनम् ॥ १४० ॥

इति तन्त्रसमुच्चये रहस्या-
गमसारः पटलः समापि षष्ठः ।
प्रकटीकृतपादपीठपीठ-
प्रतिमावारकपीठिकाप्रतिष्ठः ॥ १४१ ॥

इति तन्त्रसमुच्चये
षष्ठः पटलः ।

---

शिवे च पठति — नमस्त इत्यादि ॥ १३९ ॥

पुनर्गर्भगृहं गत्वा यथोचितविभूत्या स्वशक्तियोग्येन विभवेन देवं स्वयं, स्वयंशब्दस्याव्ययत्वादत्र द्वितीयाविभक्त्यन्तत्वमवगन्तव्यम्, आराध्य ध्वजवाहनाढ्यपरिवाराणां ध्वजवाहनसहितानां परिवाराणां पूर्ववत् समन्ताद् बलिं कृत्वा त्रीणि दिनानि नीत्वा गमयित्वा सुधीः कलशानां युक्तिविशेषं जानन्नाचार्यः तुर्यदिवसे चतुर्थे[3] दिवसेऽहनि देवं संस्नाप्य एतदवस्रुतोक्षणबली अवस्रावप्रोक्षणं भूतबलिं च कुर्यात् । एवं ध्वजस्थापनम्, उक्तमिति शेषः ॥

पटलमुपसंहरति — इतीति । (इति) एवं तन्त्रसमुच्चये षष्ठः पटलः समापि समाप्तोऽभूत् । कथंभूतः, रहस्यागमसारः रहस्यानामागमानां सारभूतः प्रतिष्ठाकथनात् । प्रकटीकृतपादपीठपीठप्रतिमावारकपीठिकाप्रतिष्ठः प्रकाशीकृतया नपुंसकशिलापीठप्रतिमानां तदावरणपीठानां च प्रतिष्ठया युक्तः ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
षष्ठः पटलः ।

---

शुभं भूयात् ।

---

१. 'थाविभवमाराध्य प्रसाद्येश्वरं कु' ख. पाठः. २. 'स्था', ३. 'थेऽह्', ४. 'वयप्रो' क. पाठः.

# तन्त्रसमुच्चयः

श्रीनारायणप्रणीतः

शङ्करप्रणीतया विमर्शिन्याख्यया व्याख्यया समेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

महामहोपाध्यायेन

न. गणपतिशास्त्रिणा

संशोधितः ।

---

द्वितीयः सम्पुटः ।

## विषयानुक्रमणी।

| विषयः. | पृष्ठम्. |
|---|---|
| दिक्पालमन्त्रलक्षणम् | १३७ |
| सुरादिजातयः | ,, |
| नमोभूतादिमालामन्त्रद्वयं, तत्र दिगादिविशेषयोजनप्रकारश्च | १३७, १३८ |
| तृतीयो मालामन्त्रः, तत्र दिग्योजनप्रकारश्च | १३९ |
| ऋषभमन्त्रस्तद्गायत्री च | ,, |
| स्कन्दाद्यावरणमन्त्राः, वीरभद्रादीनां गायत्र्यश्च | १४० |
| दिक्षूर्ध्वतश्च मातृभ्यो वलिदाने मन्त्राः | १४१ |
| शास्त्रर्चने मन्त्रा गायत्री च | ,, |
| सूर्यादियजनमन्त्रः, स्कन्दगायत्री, वागीश्वर्यादिमातरस्तद्बीजानि च | १४२ |
| शिवनिर्माल्यधारिणोर्यजनमन्त्रः | ,, |
| भूतवलेरुत्सववलावुपादेया विशेषाः | १४३, १४४ |
| दुर्गायामष्टविधाः सदुर्गायाः शक्तयस्तद्यजनमन्त्रोद्धारश्च | १४५, १४६ |
| शिवे दशविधा महाकालादयो विंशतिर्भूतगणास्तद्यजनमन्त्राश्च | १४६—१४८ |
| स्कन्दे येभूतादिमन्त्रद्वयम् | १४८ |
| शास्तरि चाम्बादिमन्त्रचतुष्कं, तत्र तृतीये मन्त्रे विशेषश्च | १४८, १४९ |
| विघ्ने उत्सवार्थामल्यादिमन्त्रः | १४९ |
| महाबलिपीठे भूतबलेर्विशेषः | ,, |
| तदुपयुक्ता हरिसेनगायत्र्यादयः | १४९, १५० |

| विषयः. | पृष्ठम्. |
|---|---|
| उभयवल्योरपि क्रियाक्रमे पक्षभेदः | १५० |
| वलिसमापनकृत्यम् | १५१ |
| उत्सवस्य विशेषतः सादरकर्तव्यत्वोपदेशः | ,, |
| तीर्थस्नानात् पूर्वेद्युः कर्तव्यस्य मृगयाप्रकारस्य विधिर्ग्रामवलिमन्त्राश्च | १५१—१५३ |
| ग्रामवलिदानानन्तरकृत्यम् | १५३ |
| तीर्थयात्रार्थे प्रार्थनमन्त्रः | १५४ |
| घृतारोपणविधिः | ,, |
| तदनन्तरभावि देवस्य कौतुकवन्धनादि | १५५ |
| कर्मार्चायामावाहनविधिः | ,, |
| आवाहितमूर्तेः कर्मार्चायाः पूजादिमूलधामप्रापणान्तं कर्म | १५५—१५८ |
| पुनर्मूलार्चाभिषेकादि | १५८ |
| तीर्थयात्राहोमः | ,, |
| पुनः कर्मार्चायाः स्नापनोद्वर्तनादिकं, तीर्थयात्राप्रार्थनमन्त्रद्वयं च | १५९ |
| तीर्थयात्राप्रस्थानपरिपाटी | १६०, १६१ |
| देवस्य तीर्थस्नापनम् | १६२ |
| पुनः स्वस्थानप्रतिप्रापणप्रार्थनामन्त्रः | १६३ |
| प्रतिप्रापणसमनन्तरकृत्यम् | ,, |
| शुद्ध्यर्थाभिषेको भूतवलिकिरणं च | ,, |
| नवमपटलोपसंहारः | १६४ |

## दशमः पटलः ।

| | |
|---|---|
| अथ निष्कृतिप्रस्तावः | १६५ |
| अशुद्धिनिमित्तानां परिगणनम् | १६५, १६६ |

॥ श्रीः ॥

नारायणप्रणीतः

# तन्त्रसमुच्चयः

शङ्करप्रणीतया विमर्शिन्याख्यया व्याख्यया समेतः ।

(द्वितीयो भागः ।)

---

## अथ सप्तमः पटलः ।

अथाखिलेशार्चनमुच्यतेऽधुना
पुमर्थसर्वस्वविधायि यज्वनाम् ।
तदीयसंस्थापनकर्म यत्कृते
समीरितं स्वागमसारसङ्ग्रहात् ॥ १ ॥

स्नात्वाचम्य विधानतः सुरगृहं संप्राप्य संपूज्य च
द्वास्थावन्तरुपेत्य देवमभिवन्द्यापास्य निर्माल्यकम् ।

---

प्रतिष्ठितस्य देवस्य पूजाया अवश्यकर्तव्यत्वात् प्रतिष्ठानन्तरमेव पूजाविधानं सप्तमेन पटलेनाभिदधानस्तत्सङ्गतिं योजयति — अथाखिलेति । अथ प्रतिष्ठाकथनानन्तरम् अधुना इदानीं प्राप्तकालत्वाद् अखिलेशार्चनम् अखिलेशानां विष्ण्वादिकानां सप्तानां देवानामर्चनमुच्यते । अस्माभिरिति शेषः । तदर्चनं यज्वनां यजमानानां पुमर्थसर्वस्वविधायि पुरुषार्थचतुष्टयस्यापि सम्पादनस्वभावम् । यत्कृते यस्यार्चनस्यापेक्षया तदीयसंस्थापनकर्म तत्प्रतिमानां सम्यक् प्रतिष्ठाकर्म स्वागमसारसंग्रहात् स्वस्वागमानां सारं संगृह्य समीरितं सम्यग्विभज्योक्तम् ॥ १ ॥

नित्यपूजारम्भे परिपाटीमाह — स्नात्वेति । विधानतः स्नात्वा विधानत आचम्येति मन्त्रस्नानं मन्त्राचमनं चोक्तम् । सुरगृहं देवालयं सम्प्राप्य द्वास्थौ स्वस्वमन्त्रेण संपूज्य चकारात् तदनुज्ञां गृहीत्वान्तरुपेत्य देवमभिवन्द्य

G. P. T. 67. 500. 12-9-19. B

बिम्बाद्यं मनुविद् विशोध्य सलिलैराराध्य पुष्पैर्लिपि-
न्यासान्तं विदधीत दर्शितादिशासीनः स्वयं दक्षिणे ॥ २ ॥

प्रत्यक्चितिं परिजपन्नहहेति मूल-
चक्रादुदस्य परमात्मनि संविलाप्य ।
मन्त्रात्मना परिणमय्य सुधीर्हृदब्ज-
मध्ये सुयोजयतु सादिमनुप्रजापी ॥ ३ ॥

तस्यैशलैङ्गिकविराण्मयविग्रहात्म-
भावक्रमात् परिणतिं विदधद् विधाय ।
मूलेन वायुयमनत्रितयं तदाधा-
रार्थं प्रविन्यसतु चात्मनि योगपीठम् ॥ ४ ॥

न्यस्येद् गुरून् मूर्धनि मूलचक्रे
गणेश्वरं चाहृदयं तदादि ।

---

मनुविद् निर्माल्यापासनादिमन्त्रज्ञो गुरुः निर्माल्यमपास्य बिम्बाद्यं बिम्बपीठ-गर्भगृहादिकं सलिलैर्विशोध्य पुष्पैराराध्य स्वयं दक्षिणे भाग आसीनः दर्शित-दिशा अधिवासपटलोक्तमार्गेण लिपिन्यासान्तं विदधीत ॥ २ ॥

सुधीः बुद्धिकौशलयुक्तो गुरुः अहहेति परिजपन् प्रत्यक्चितिं जीवा-त्मानं मूलचक्राद् मूलाधाराद् उदस्य ऊर्ध्वं नीत्वा परमात्मनि संविलाप्य म-न्त्रात्मना परिणमय्य मूलप्राणायामेन मन्त्रमूर्तिरूपत्वं भावयित्वा सादिमनु-प्रजापी आदिः प्रणवः मनुः मूलमन्त्रः प्रणवसहितमूलं जपन् हृदब्जमध्ये हृदयकमलकर्णिकायां सुयोजयतु सुस्थितं यथा भवति तथा योजयेत् ॥ ३ ॥

तस्य आत्मनः ऐशलैङ्गिकविराण्मयविग्रहात्मभावक्रमात् परसूक्ष्मस्थू-लस्वरूपमूर्तित्वेन परिणतिं परिणामं विदधत् कुर्वाणो मूलेन वायुयमनत्रितय प्राणायामत्रयं विधाय तदाधारार्थं तस्योपाधिसिद्धये चात्मनि स्वशरीरे योगपीठं प्रविन्यसतु । इह पीठन्यासे मन्त्रा वक्ष्यमाणायाः पीठपूजाया अवगन्तव्याः ॥

गुरून् मूर्धनि न्यस्येत् । मूलचक्रे मूलाधारे गणेश्वरं च तदादि

---

१. 'सलिलैर्विशोध्य कुसुमं चाराध्य तद्दक्षिणे स्वासीनः कथितक्रमेण लिपिविं न्यासान्तिमं प्राचरेत् ॥ प्र', २. 'तत्तादृगात्मतनुतत्परिषत्प्रपञ्चभावेन तत्परि' ख. पाठ.

आधारशक्त्यादि गणं क्रमेण
तथा पृथिव्यन्तिममूर्ध्वमूर्ध्वम् ॥ ५ ॥
ऊर्वंसयुग्मोरुषु नाभिमूल-
पार्श्वास्यपार्श्वेषु च दक्षिणादि ।
अष्टौ प्रविन्यस्यतु धर्मपूर्वान्
सत्त्वादिकं व्यापितयेह मध्ये ॥ ६ ॥
हृत्पुण्डरीकेऽर्चनवक्ष्यमाण-
न्यायेन पद्मादिसमष्टिनिष्ठम् ।
विन्यस्य तस्मिन् परिकल्पयेच्च
मान्त्रं चिदानन्दघनं महस्तत् ॥ ७ ॥
तत् तेजः प्रियदर्शनं विभुमभिध्यायार्चयित्वा धिया
सञ्जप्याप्ययवर्त्मना मनुममुं तेजोमयं भावयेत् ।

---

मूलाधारादि आहृदयं हृदयान्तम् ऊर्ध्वमूर्ध्वमाधारशक्त्यादि पृथिव्यन्तिमं गणं च क्रमेण न्यस्येत् ॥ ५ ॥

ऊर्वंसयुग्मोरुषु ऊरावंसयुग्मे ऊरौ च नाभिमूलपार्श्वास्यपार्श्वेषु नाभिमूले पार्श्वे आस्ये पार्श्वे च दक्षिणादिक्रमेण धर्मपूर्वान् धर्मज्ञानादीनष्टौ प्रविन्यस्यतु, सत्त्वादिकं व्यापितया व्यापकत्वेन इह मध्ये धर्माद्यष्टानां मध्यप्रदेशे च ॥ ६ ॥

हृत्पुण्डरीके हृदयपद्मे अर्चनवक्ष्यमाणन्यायेन पूजायां वक्ष्यमाणरीत्या पद्मादिसमष्टिनिष्ठं पद्मादिसमष्टिपर्यन्तं सर्वं विन्यस्य तस्मिन् मान्त्रं मन्त्रसम्बन्धि चिदानन्दघनं घृतकाठिन्यवच्चैतन्यामृतसान्द्ररूपं तत् प्रस्तुतं महस्तेजः परिकल्पयेच्च ॥ ७ ॥

तदेव तेजः प्रियदर्शनं मनोहररूपं विभुं देवम् अभिध्याय ध्यात्वा धियार्चयित्वा मानसपूजां कृत्वा । मानसपूजामन्त्रास्तन्मुद्राश्च द्वादशात् पटलाद् ग्राह्याः । अमुं मनुम् अप्ययवर्त्मना प्रातिलोम्येन संजप्य अमुं देवं

---

१. 'य स्वयं मन्त्रवित् कर्मात्मा हृदयाम्बुजाग्रदलसंस्थः कर्णिकासंस्थितम् । ?ारोच्चारपरिस्रवद्भिरमृतै रक्तारविन्दोदरादभ्यर्हैरुपहारकैर्निजमहाभूतात्मकैस्तं यजेत् ॥ यो ?ह्मायणुना समर्प्य परमायात्मानमप्यात्मने सञ्ज' ख. पाठः.

धाम्नोऽस्मात् परचित्सुधाद्रवमयात् तेजःकणं स्वाञ्जलौ
मन्त्री पिङ्गलया निपात्य करयोस्तद्भावनां प्राचरेत् ॥

व्यापय्य तारपुटितेन मनूत्तमेन
दोष्णोः क्रमेण तलपृष्ठकपार्श्वकेषु ।
ताराभिरुद्धमनुवर्णगणं सहार्दं
न्यस्येत् स्वकल्पकथितक्रमतोऽङ्गुलीषु ॥ ९ ॥

सृष्टिर्दक्षिणतर्जनीप्रभृतिवामैतद्विरामा स्थिति-
स्तर्जन्यादिकनिष्ठिकाद्वितयनिष्ठाष्टाक्षरे संहृतिः ।
सृष्टिन्यासविपर्यया त्रयमिदं सृष्टिस्थितिभ्यां युतं
न्यस्येत् सृष्टिवदष्ट पञ्च युगपज्ज्येष्ठाद्यमङ्गानि च ॥

---

तेजोमयं भावयेत् । मन्त्री मन्त्रतेजसोरेकरूपत्वं जानन् परचित्सुधाद्रवमयात् परचैतन्यामृतद्रवरूपाद् अस्माद् धाम्नः तेजसः तेजःकणं तेजोलेशं स्वाञ्जलौ पिङ्गलया पिङ्गलाद्वारेण निपात्य पातयित्वा करयोः तद्भावनां मन्त्रभावनां प्राचरेत् ॥ ८ ॥

तारपुटितेन मनूत्तमेन मूलेन दोष्णोः करयोस्तलपृष्ठकपार्श्वकेषु क्रमेण व्यापय्य ताराभिरुद्धमनुवर्णगणं प्रणवपुटितान् मूलमन्त्राक्षरान् सहार्दम् अन्ते नमोयुक्तानङ्गुलीषु स्वस्वकल्पकथितक्रमतो न्यस्येत् ॥ ९ ॥

तद् विवृणोति — सृष्टिरिति । हरावित्यध्याहर्तव्यम् । हरावष्टाक्षरे मन्त्रे दक्षिणतर्जनीप्रभृतिवामैतद्विरामा दक्षिणतर्जन्यादिवामतर्जन्यन्ता सृष्टिः । तर्जन्यादिकनिष्ठिकाद्वितयनिष्ठा दक्षिणतर्जन्यादितत्कनिष्ठान्ता वामतर्जन्यादितत्कनिष्ठान्ता च स्थितिः । सृष्टिन्यासविपर्यया वामतर्जन्यादिदक्षिणतर्जन्यन्ता संहृतिः । इदं त्रयं सृष्टिस्थितिसंहारान् पुनरपि सृष्टिस्थितिभ्यां युतं न्यस्येत् । अष्टाङ्गानि सृष्टिवत् सृष्टिन्यासस्थानेषु पञ्चाङ्गानि ज्येष्ठाद्यं युगपद न्यस्येत् ॥ १० ॥

पञ्चार्णे युगपच्छिवे पुरुषघोरौ सद्यवामेशकां-
स्तर्जामध्यमयोर्न्यसेत् सहकनिष्ठानामिकाङ्गुष्ठयोः ।
मन्त्रार्णानिषुजेऽग्रजादितलनिष्ठं सार्यविघ्ने गुहे
षण्मन्त्रानपि वेति सुम्भजिति दुर्गापञ्चकं चातलम् ॥

अङ्गुष्ठादितलान्तं न्यसतु षडङ्गानि दोर्युगे युगपत् ।
दोर्भावनेत्यभाषि प्रायः सर्वत्र मूलमन्त्रविधौ ॥ १२ ॥

आभ्यां कराभ्यां निजमूलतस्त्रि-
र्व्यापय्य देहे सकलीकरोतु ।
षडध्वभिर्वा लिपितत्त्वमन्त्रैः
स्वमन्त्रविन्यासमिह ब्रवीमि ॥ १३ ॥

---

**शिवे पञ्चार्णे** पञ्चाक्षरविधाने **पुरुषघोरौ सद्यवामेशकांश्च** तत्पुरुषाघोरसद्योजातवामदेवेशानसंज्ञा मूर्तीः 'मं तत्पुरुषाय नम' इत्यादिभिः 'मं तत्पुरुषतर्जनीभ्यां नम' इत्यादिभिर्वा मन्त्रैः **तर्जामध्यमयोः सहकनिष्ठानामिकाङ्गुष्ठयोश्च** तर्जनीमध्यमाकनिष्ठानामिकाङ्गुष्ठानां युग्मेषु युगपन्न्यस्येत् । **इषुजे** मन्त्रार्णान् मन्त्रस्य षडक्षरान् **अग्रजादितलनिष्ठम्** अङ्गुष्ठाद्यङ्गुलीषु तले च । **सार्यविघ्ने गुहे षण्मन्त्रानपि** इति वा, स्कन्दस्य मूलाक्षरवद् न्यस्येद् वा । **वेति** समुच्चयार्थः । **सुम्भजिति दुर्गापञ्चकं** पञ्चदुर्गाश्च **अतलं** तलरहितम् अङ्गुष्ठाद्यङ्गुलीष्वेव ॥ ११ ॥

**सर्वत्र षडङ्गानि दोर्युगे** करद्वये **युगपद् अङ्गुष्ठादितलान्तं न्यसतु । सर्वत्र मूलमन्त्रविधौ दोर्भावना** करभावना इति एवं **प्रायः** समभाषि उक्तम् ॥ १२ ॥

**आभ्यां कराभ्यां निजमूलतो देहे त्रिर्व्यापय्य षडध्वभिर्वा** पूर्वोक्तैः षडध्वन्यासैर्वा **लिपितत्त्वमन्त्रैरेव** वा **सकलीकरोतु । इह** पूजायां **स्वमन्त्रविन्यासमेवाहं ब्रवीमि** ॥ १३ ॥

श्रीशश्रीशशिवार्यकेषु मनुवित् काक्ष्यास्यहृन्नाभिषु
न्यस्येत् सध्वजजानुपत्सु मनुवर्णांस्ताररुद्धान् क्रमात् ।
नत्यन्तानिति सृष्टिरत्र हृदयान्ता नाभिपूर्वा स्थितिः
संहारश्चरणादिकस्त्रयमिदं न्यस्येत् ससृष्टिस्थिति ॥ १४ ॥

योज्या मूर्धनि मध्यमा नयनयुग्मे तर्जनीमध्यमे
साङ्गुष्ठोपकनिष्ठिका वचसि हृद्यङ्गुष्ठयुक्तर्जनी ।
नाभौ सावरजाग्रजा प्रथमजान्या वा शिवे जानुनो-
र्व्यग्र्या वा व्यनुजा तु वा पदयुगेऽङ्गुल्यः समस्ताः सदा ॥

---

श्रीशश्रीशशिवार्यकेषु विष्णौ शिवनारायणे शास्तरि च काक्ष्यास्यहृन्नाभिषु मूर्धनेत्राननहृदयनाभिषु सध्वजजानुपत्सु लिङ्गे जानुनोः पादयोश्च ताररुद्धान् प्रत्यक्षरं प्रणवपुटितान् नत्यन्तान् नमोन्तांश्च मनुवर्णान् मन्त्राक्षरान् न्यस्येद् इति सृष्टिः । अत्र एषु स्थानेषु नाभिपूर्वा नाभ्यादिपादान्ता मूर्धादिहृदयान्ता च स्थितिः । चरणादिकः पादादिमूर्धान्तः संहारः । इदं त्रयं सृष्टिस्थितिसंहाररूपं ससृष्टिस्थिति पुनरपि सृष्टिस्थितिभ्यां सहितं यथा तथा न्यस्येत् । क्रमादिति सृष्ट्यादित्रयेऽपि क्रमेणैव मन्त्राक्षरा न्यस्तव्या इत्यर्थः । मनुविदित्यस्यायमभिप्रायः —वैष्णवाष्टाक्षरेऽष्टावेव वर्णाः । शिवनारायणे वेकादशाक्षरे मूले आदिमं प्रणवम् अन्तस्थं[3] नमस्कारं च हित्वा अष्टौ वर्णा ग्राह्याः । शास्तरि पुनर्नवाक्षरे मूले आदिमं प्रणवं वर्जयित्वाष्टौ ग्राह्या इति ॥ १४ ॥

उक्ते न्यासेऽङ्गुलिनियममाह —योज्येति । मूर्धनि मध्यमाङ्गुली योज्या । मध्यमाङ्गुल्या मूर्धनि न्यस्येदित्यर्थः । नयनयुग्मे तर्जनीमध्यमे योज्ये । वचसि आस्ये साङ्गुष्ठोपकनिष्ठिका अङ्गुष्ठानामिके । हृदि अङ्गुष्ठयुक्तर्जनी अङ्गुष्ठतर्जन्यौ । नाभौ सावरजाग्रजा कनिष्ठाज्येष्ठे । शिवे लिङ्गे प्रथमजा वा अन्या अङ्गुष्ठरहिता वा, जानुनोः व्यग्र्या अङ्गुष्ठरहिता वा व्यनुजा कनिष्ठिकारहिता वा पदयुगेऽपि समस्ता अङ्गुल्यो योज्याः । सदा स्थितिसंहारयोरपि तथा स्थानेष्वङ्गुल्यो योज्या इत्यर्थः ॥ १५ ॥

---

१. 'सशिरोदृग्वक्त्रहृन्ना' ख. पाठः. २. 'स्तु' इति मूलकोशपाठः ३. 'जं' ख. पाठः.

मूर्धेक्षणास्ये हृदि नाभिगुह्य-
पादेषु सुम्भद्विषि मन्त्रवर्णान् ।
निर्बीजके सप्त सबीजकेऽष्टौ
मन्त्रे न्यसेज्जानुयुतेषु तेषु ॥ १६ ॥
आस्ये हृदङ्घ्रिध्वजमूर्धसु प्रा-
ग्याम्याप्यसौम्योर्ध्वमुखेष्वपीशे ।
न्यस्येत् षडर्णे नरघोरसद्य-
वामेशकान् स्वाक्षरतत्पदाढ्यान् ॥ १७ ॥
ईशानादिषु योज्या ज्येष्ठाद्याः केवलाः स्युरङ्गुलयः ।
ज्येष्ठोपगृहीता वा सोपग्राह्या तु तर्जन्या ॥ १८ ॥

---

दुर्गायां मन्त्राक्षरस्थानान्याह — मूर्धेति । सुम्भद्विषि निर्बीजके दुम्बी-जेन रहिते मन्त्रे सप्त मन्त्रवर्णान् मूर्धेक्षणास्ये मूर्धनेत्राननेषु हृदि नाभिगुह्य-पादेषु न्यस्येत् । सबीजके दुम्बीजसहिते मन्त्रे अष्टौ वर्णान् गुह्यानन्तरं जानु-युतेषु तेषु न्यस्येत् ॥ १६ ॥

ईशे षडर्णे नरघोरसद्यवामेशकान् तत्पुरुषाघोरसद्योजातवामदेवेशानान् स्वाक्षरतत्पदाढ्यान् स्वाक्षरैर्मूलमन्त्रस्य स्वीयैः स्वीयैरक्षरैः तत्पदैस्तत्तत्पुरुषा-दिपदैर्वक्त्रादिपदैश्च युक्तान् आस्ये वक्त्रे हृदङ्घ्रिध्वजमूर्धसु हृदयपादगुह्य-मूर्धसु प्राग्याम्याप्यसौम्योर्ध्वमुखेषु पूर्वदक्षिणपश्चिमोत्तरोर्ध्ववक्त्रेष्वपि न्यस्येत् । अयमत्र न्यासक्रमः — सूत्रन्यासे 'मं तत्पुरुषवक्त्राय नमः' 'शिं अघोरहृ-दयाय[2] नमः' 'यं सद्योजातपादाभ्यां नमः' 'वां वामदेवगुह्याय नमः' 'नं ई-शानमूर्ध्ने नमः' इति । वक्त्रन्यासे 'मं तत्पुरुषपूर्ववक्त्राय नमः' 'शिं अघो-रदक्षिणवक्त्राय नमः' 'यं सद्योजातपश्चिमवक्त्राय नमः' 'वां वामदेवोत्तरव-क्त्राय नमः' 'नं ईशानोर्ध्ववक्त्राय नमः' इति[1]॥ १७ ॥

तत्राङ्गुलीनियममाह — ईशानादिष्विति । ईशानादिषु ईशानतत्पुरु-

---

१. 'कास्यात्मान्धुपदे द्वये तुकेन्द्रयमसोमाप्याननेष्वप्यमून् ईशादीनथ वा न्यसेत् स्मररिपौ स्कन्देऽथ कास्यात्मसु । गुह्ये जानुपदाग्रकोश्च मनुवर्णान् षण्मनूंश्च न्यसेत् षण्म-न्त्रान् गणपेऽप्यजानुषु सनाभिष्वेषु तानार्यके ॥ स्वमूलमन्त्रन्यसनं समासादित्युक्तमष्टा-र्णदशाङ्ककायम् । कल्पान्तरोद्दिष्टविधिप्रपञ्चदिङ्मात्रसिद्ध्यै कथयामि किञ्चित् ॥ आ',

२. 'य पर्ववक्त्राय नमः' ख. पाठः.

**ईशाङ्गुष्ठादिक्लृप्त्या करयुजि वपुषीशानमूर्धाभिक्लृप्त्या न्यस्येद्वा पञ्चमूर्तीः स्मरजिति महिषारौ तथा पञ्चदुर्गाम् । कास्ये हृद्गुह्यजान्वङ्घ्रिषु च मनुलिपीः षण्मुखे षण्मनून् स-द्वैपास्येऽस्मिन्नथार्ये न्यसतु विगतजानुष्वमून् नाभिमत्सु ॥**

**आधारहृद्वदनदोःपदमूलनाभौ**
**कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।**
**कास्येक्षणश्रवणगन्धवहे च दोःप-**
**त्सन्ध्यङ्गुलीषु हृदि धातुषु सानिलेषु ॥ २० ॥**

---

षाघोरवामदेवसद्योजातेषु ज्येष्ठाद्याः अङ्गुष्ठतर्जनीमध्यमानामिकाकनिष्ठिका- अङ्गुलयः केवलाः स्युः । ज्येष्ठोपगृहीता वा अङ्गुष्ठेन युक्तास्तर्जन्याद्या वा । सा तु ज्येष्ठा पुनस्तर्जन्योपग्राह्या योज्या ॥ १८ ॥

शिवे पक्षभेदमाह — **ईशाङ्गुष्ठेति** । स्मरजिति उक्ताः पञ्चमूर्तीः क-रयुजि करयोर्न्यासे ईशाङ्गुष्ठादिकप्त्या च क्रमेण वपुषि देहे सूत्रन्यासे वक्त्रन्या-से च ईशानमूर्धाभिक्लृप्त्या 'नं ईशानमूर्ध्ने नमः' इत्यादि 'नं ईशानोर्ध्वव-क्त्राय नम' इत्यादिक्लृप्त्या च न्यस्येद्वा । महिषारौ तथा मूर्धादिक्रमेण पञ्चदुर्गा न्यस्येत् । षण्मुखे कास्ये मूर्धाननयोर्हृद्गुह्यजान्वङ्घ्रिषु च मनुलि-पीः मन्त्राक्षरान् न्यस्येत् । सद्वैपास्येऽस्मिन् गणपतिस्कन्दयोः षण्मन्त्रांश्च उक्तेषु[1] षट्सु स्थानेषु न्यस्येत् । अथार्ये अमून् स्वषण्मन्त्रान् विगतजानुषु ना-भिमत्सु षट्सु स्थानेषु न्यसतु ॥ १९ ॥

विष्णावष्टाक्षरवर्णैर्दशावृत्तिन्यासमाह — **आधारेति** । आधारहृद्वदन दोःपदमूलनाभौ मूलाधारे हृदये वदने च करचरणयोर्मूलेषु चतुर्षु नाभौ च अष्टाक्षरस्य लिपिशः अक्षरशः क्रमेण न्यसतु इति प्रथमावृत्तिः । कण्ठे सनाभि-हृदयस्तनपार्श्वपृष्ठे नाभौ हृदये स्तनयोः पार्श्वयोः पृष्ठे च इति द्वितीया । कास्येक्षणश्रवणगन्धवहे च मूर्ध्नि आस्ये नेत्रयोः श्रोत्रयोः नासिकयोश्च इति तृतीया । दोःपत्सन्ध्यङ्गुलीषु करयोः पदयोश्च प्रत्येकं सन्धित्रये पञ्चस्वङ्गुली-षु चतस्र आवृत्तयः एवं सप्तावृत्तयो गताः करयोः हृदि हृदये एवं धातुषु त्वग-सृङ्मांसमेदोऽस्थिमज्जाशुक्रेषु सानिलेषु अनिलसहितेषु, प्राणे चेत्यर्थः । अत्र तु 'ओं ओं ओं त्वगात्मने नमः' 'ओं नं ओं असृगात्मने नमः'. इत्यादयो

---

१. 'षु च च' क. पाठः.

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्ख-
श्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ २१ ॥

न्यस्याष्टार्णदशाङ्गमित्यलिककुक्ष्योर्हृद्गलेऽर्काक्षरै-
र्न्यस्येद् दक्षिणपार्श्वकांसगलवामैतत्त्रयीपृष्ठके ।
मूर्तीः केशवपूर्विकाः ककुदि चार्कार्णं च के विन्यसेत्
तद्भावप्रतिपत्तये परिजपेन्मन्त्रं किरीटात्मकम् ॥ २२ ॥

आत्मास्यांसोरुयुग्मे षडथ सगलनाभिद्विपार्श्वाख्यपृष्ठा-
त्मोद्देशे कास्यदृङ्नोयुजि करपदसन्ध्यग्रकेषु स्मरारौ ।

---

मन्त्रा ऊहनीयाः । इत्यष्टम्यावृत्तिः । मूर्धेक्षणास्यहृदयोदरसोरुजङ्घापादद्वयेषु मूर्ध्नि नेत्रद्वये वक्त्रे हृदये जठरे ऊरुद्वये जङ्घाद्वये पादद्वये च नवम्यावृत्तिः । गण्डांसकोरुचरणेषु गण्डद्वयेंऽसद्वये ऊरुद्वये चरणद्वये च चतुरो वर्णान् न्यस्य रथाङ्गशङ्खश्रीमद्गदाम्बुजपदेषु रथाङ्गादिस्थानेषु चक्रे शङ्खे कौमोदक्यां पद्मे च स्वस्वमुद्राभिः सह चतुरो वर्णान् न्यस्येत् । एषा दशम्यावृत्तिः । समाहितात्मा अष्टार्णद्वादशार्णयोर्मन्त्रयोर्योगं,

"ततोऽष्टाक्षरपूर्त्यर्थं स्मर्तव्यो द्वादशाक्षरः"

इति प्रपञ्चसारोक्तस्थितिं जानन्नित्यर्थः ॥ २०, २१ ॥

इत्यष्टार्णदशाङ्गम् अष्टार्णस्य दशाङ्गाभिधानं न्यासं न्यस्य अलिककुक्ष्योः फालजठरयोः हृद्गले हृदये गले च दक्षिणपार्श्वकांसगलवामैतत्त्रयीपृष्ठके दक्षिणभागगतपार्श्वांसगलेषु वामत एतत्त्रय्यां पार्श्वांसगलेषु च पृष्ठे च ककुदि गलपृष्ठे च अर्काक्षरैः द्वादशाक्षरस्य द्वादशभिरक्षरैः बीजभूतैः सह केशवपूर्विका मूर्तीः चक्रपूजायां प्रोक्ताः क्रमेण न्यस्येत् । के मूर्ध्नि अर्कार्णं द्वादशाक्षरं स्वयं च विन्यसेत् । तद्भावप्रतिपत्तये विष्णोस्तादात्म्यप्राप्तये किरीटात्मकं मन्त्रोद्धारे वक्ष्यमाणं मन्त्रं परिजपेत् ॥ २२ ॥

शिवे गोलकान्यासमाह — आत्मेति । अथ स्मरारौ षण्मन्त्रवर्णान् आत्मास्यांसोरुयुग्मे हृदये वक्त्रे अंसयोरूर्वोः न्यस्येदिति प्रथमावृत्तिः । सगलनाभिद्विपार्श्वाख्यपृष्ठात्मोद्देशे गले नाभौ पार्श्वयोः पृष्ठे हृदये च

---

१. 'ये पादद्वये च' क. पाठः.

न्यस्येत् कास्यात्मकुक्ष्यूरुपदसरसिजे हृत्प्रदेशास्यटङ्कै-
णाभीतीष्टे मुखांसात्मपदसरसिजोरूदरे मन्त्रवर्णान् ॥

मूलेनोर्ध्वाधःक्रमाद् गोलकावद्
व्याप्य न्यस्येत् पूरुषाघोरवामान् ।
सद्येशौ फालांसयुक्कुक्षिहृत्स्व-
प्येतत्स्फूर्त्यै स्थाणुमन्त्रं जपेत् त्रिः ॥ २४ ॥

हृत्फालान्तशिखासु बाहुयुगमध्ये लोचने दोस्तले
सर्वेषु स्वषडङ्गकानि विनिमय्याक्ष्यस्त्रयोस्तु क्रमम् ।
लक्ष्मीनाथषडास्यसुम्भरिपुमूलेष्वेषु निर्नेत्रकं
पञ्चाङ्गानि पिचण्डपृष्ठसहितेष्वष्टाङ्गकानि न्यसेत् ॥

---

द्वितीयावृत्तिः । कास्यदृङ्नोयुजि मूर्ध्नि आस्ये नेत्रयोर्नासिकयोश्च तृतीया । करपदसन्ध्यग्रकेषु करयोः पदयोः सन्धिपञ्चकेष्वग्रेषु च चतस्र आवृत्तयः । एवं सप्तावृत्तयो गताः । कास्यात्मकुक्ष्यूरुपदसरसिजे मूर्ध्नि आस्ये हृदये जठरे ऊरुद्वये पादद्वये चाष्टमी । हृत्प्रदेशास्यटङ्कैणाभीतीष्टे हृदये आस्ये कुठारे मृगी अभीतौ वरदे च नवमी । तत्रायुधचतुष्के तत्तन्मुद्राभिः सह न्यासः कर्तव्यः । मुखांसात्मपदसरसिजोरूदरे मुखे अंसद्वये हृदये पादद्वये ऊरुद्वये जठरे च दशमी चावृत्तिः ॥ २३ ॥

पुनर्मूलेन ऊर्ध्वाधःक्रमात् ऊर्ध्वमुखमधोमुखं च गोलकावत् गोलकास्थापनवद् व्याप्य फालांसयुक्कुक्षिहृत्सु फाले अंसयोः कुक्षौ हृदये च पूरुषाघोरवामान् सद्येशौ च न्यस्येत् । एतत्स्फूर्त्यै एतन्मन्त्रमूर्तिस्फुरणाय स्थाणुमन्त्रं 'नमोऽस्तु स्थाणुभूताये'ति मन्त्रं त्रिः त्रिकृत्वो जपेत् ॥ २४ ॥

अथ सामान्येनाङ्गन्यासमाह — हृदिति । हृत्फालान्तशिखासु हृदये फालान्ते शिखायां च बाहुयुगमध्ये लोचने दोस्तले च सर्वेषु देवेषु स्वस्वषडङ्गकानि न्यस्येद् । लक्ष्मीनाथषडास्यसुम्भरिपुमूलेषु विष्णुस्कन्ददुर्गाणां मूलमन्त्रेषु तु अक्ष्यस्त्रयोः नेत्रास्त्रयोः क्रमं विनिमय्य व्यत्यासं कृत्वा । अस्त्रानन्तरमेव नेत्रं न्यसेदित्यर्थः । पञ्चाङ्गानि एषु स्थानेषु मध्ये निर्नेत्रकं नेत्ररहितं

---

१. 'रसद्यान् । वामेशौ' ख. पाठः.	२. 'स्फू' क. पाठः.

भूषायुधादिन्यसनं यथार्हं
 कृत्वा धियेष्ट्वा हृदये प्रकल्प्य ।
जप्त्वा यथाशक्ति मनूत्तमं स्वं
 बहिःसपर्यादिकमारभेत ॥ २६ ॥

कृत्वा गोमयवारिणा सुचतुरश्रं स्थण्डिलं तारतो
निक्षिप्याक्षतगन्धपुष्पकममुष्मिन्नस्त्रसंशोधितम् ।
शङ्खाङ्घ्रिं प्रणिधाय शङ्खमपि तत्तन्मन्त्रतो मन्त्रवि-
च्छङ्खे न्यस्य हृदात्मकेन मनुना गन्धप्रसूनाक्षतम् ॥ २७॥

सक्षायेन शिखाणुना शुचिजलैरापूर्य गन्धार्तवं
न्यस्याग्न्यर्कसुधांशुबिम्बमनुभिः प्राच्यांघ्रिशङ्खोदकम् ।

---

न्यसेत्[2] । अष्टाङ्गकानि पिचण्डपृष्ठसहितेषु हृदयादिषट्सु[3] उदरे पृष्ठे च न्यसेत् । अङ्गानां मन्त्रा मुद्राश्च द्वादशात् पटलादवगन्तव्याः ॥ २५ ॥

भूषायुधादिन्यसनं यथार्हं स्वस्वध्यानश्लोकादवगम्य कृत्वा हृदये प्रकल्प्य धियेष्ट्वेति योजना । हृदि मन्त्रमूर्तिं प्रकल्प्य मानसपूजां कृत्वे-त्यर्थः । मानसपूजामन्त्राश्च द्वादशे पटले वक्ष्यन्ते । पुनः स्वं स्वं मनूत्तमं यथाशक्ति जप्त्वा बहिःसपर्यादिकं बाह्यपूजाया आदिभूतं शङ्खपूरणमार-भेत ॥ २६ ॥

शङ्खपूरणक्रममाह — कृत्वेति । मन्त्रविदित्यनेन शङ्खपूरणस्य सारांशो गुरुमुखादवगन्तव्य इति सूचितम् । मन्त्रसहिता एव सर्वाः क्रियाः कार्या इति च सूचितम् । गोमयवारिणा स्वस्याग्रतः सुचतुरश्रं स्थण्डिलं कृत्वा अमुष्मिन् तारतोऽक्षतगन्धपुष्पकं निक्षिप्य तत्र अस्त्रसंशोधितम् अस्त्रमन्त्रेण क्षालितं शङ्खाङ्घ्रिं शङ्खमपि तत्तन्मन्त्रतः स्वस्वमूलमन्त्रेण वा वह्निसूर्यमण्डल-मन्त्राभ्यां वा प्रणिधाय शङ्खे हृदात्मकेन मनुना हृदयमनुना गन्धप्रसूना-क्षतं न्यस्य सक्षायेन [1]लिपिप्रतिलोमसहितेन शिखाणुना शुचिजलैः पूर्वमेव गालितैः वर्धनीपात्रे पूरितैः क्षिप्तगन्धाक्षतपुष्पैः

---

१. 'रो' इति मूलकोशपाठः. २. 'स्ये' ख. पाठः. ३. 'षूदरे' क. पाठः.

गालिन्या शिखयोत्प्रपूय विविषीकृत्यामृतीकृत्य तत्
तोयं नेत्रनिरीक्षितम् करयुजा प्रच्छाद्य वर्माणुना ॥ २८ ॥
बद्ध्वास्त्रेण दिशोऽथ तीर्थमनुना तीर्थं रवेर्मण्डला-
दावाह्यार्चितपीठके स्वहृदयाद् देवं च मूलाणुना ।
आवाह्याङ्गयुतं समर्च्य परमीकृत्य प्रजप्याष्टशो
वर्धन्यां प्रतिषिच्य किञ्चिदमुनात्मान्तं त्रिरभ्युक्षतु ॥ २९ ॥

न्यासक्रमान्निजतनौ [1]प्रयजेत पीठं
हृद्वारिजन्मनि समर्च्य परं महस्तत् ।

"इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः ।
पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः ॥"

इति जतैर्जलैरापूर्य गन्धार्तवं गन्धपुष्पाक्षतं न्यस्य अग्न्यर्कसुधांशुबिम्बमनुभिः 'मं वह्निमण्डलाय नमः' 'अं सूर्यमण्डलाय नमः' 'उं सोममण्डलाय नमः' इति मन्त्रैः अङ्घ्रिशङ्खोदकं शङ्खपादं शङ्खजलं च क्रमेण प्रार्च्य गालिन्या मुद्रया शिखया मन्त्रेण च उत्प्रपूय उत्पवनं कृत्वा विविषीकृत्य गरुडमुद्रया सह निर्विषीभवेति निर्विषीकरणं कृत्वा अमृतीकृत्य सुरभिमुद्रया सहामृती-भवेति अमृतमुद्रयामृतीकरणं च कृत्वा नेत्रनिरीक्षितं नेत्रमन्त्रेणावलोकितं तत् तोयं करयुजा हस्तद्वयेन व(र्मणा ? र्माणुना) कवचमन्त्रेण प्रच्छाद्यास्त्रेण दिशो बद्ध्वाथ रवेर्मण्डलात् तीर्थमनुना

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥"

इति मनुना वा 'ओं ह्रीं गङ्गायै विश्वमुख्यै शिवामृतायै नारायण्यै नमो नमः' इति मनुना वा तीर्थमावाह्य अर्चितपीठके 'ओं पद्माय नमः' इति पीठमिष्ट्वा स्वहृदयाद् मूलाणुना देवं चावाह्य अङ्गयुतम् अङ्गं कृत्वा मूलेन समर्च्य प्रण-वेन परमीकृत्य निष्कलीकृत्याष्टशो मूलं प्रजप्य वर्धन्यां वर्धनीपात्रे किञ्चित् प्रतिषिच्य अमुना जलेन आत्मान्तं पूजासाधनान्यात्मानं च त्रिः त्रिकृत्वो-ऽभ्युक्षतु ॥ २७, २८, २९ ॥

अथात्माराधनमाह— न्यासक्रमादिति । निजतनौ न्यासक्रमात्

---

१. '-रिपूज्य पी', २. 'मन्त्री विभावयतु तत्र परं च तेजः । न्या' ख. पाठः.

त्र्याधारभाञ्ज्यणुमहांसि निरञ्जनांशै-
रिष्ट्वा[1] नयेत् प्रणवतः क्रमवित् तदैक्यम्[2] ॥ ३० ॥
आयम्य वायुमणुना सकलीक्रियां च
कृत्वासनाद्युपहृतिं[3] क्रमशः समर्प्य ।
तारोपचारनिजमूलतदक्षराद्यै-
र्न्यासक्रमादभियजेज्जलगन्धपूर्वैः ॥ ३१ ॥
मूलेन गन्धरसलिप्ततनुर्मुरारौ
स्वैर्मूर्तिपञ्जरपदेष्वणुभिर्द्विषड्भिः ।
फाले गलेंऽसयुगले हृदि पञ्चमन्त्रै-
रीशेऽनुलिम्पतु परेष्विति मूलतोऽथ ॥ ३२ ॥
मूलेन मूर्ध्नि मनुना निखिलेषु पञ्च-
कृत्वः किरीटमनुना च रथाङ्गपाणौ ।

---

पीठन्यासक्रमेण पीठं प्रयजेत । हृद्वारिजन्मनि हृदयकमले तद् मूलमन्त्रात्मकं परं परमात्मरूपं महस्तेजो मूलेन समर्च्य आवाहनादिपूर्वं सम्यगर्चयित्वा त्र्याधारभाञ्जि मूलाधारहृदयभ्रूमध्यस्थानि अणुमहांसि आत्मान्तरात्मपरमात्मभूतानि मन्त्रतेजांसि निरञ्जनांशैः 'अं नमः' 'उं नमः' 'मं नमः' इति मन्त्रैरिष्ट्वा प्रणवतः पुष्पाराधनेन तदैक्यं नयेत् । क्रमविदित्यनेनात्माराधने केषाञ्चित् पक्षे क्रमव्यत्यासः सूचितः ॥ ३० ॥

मूलेनाणुना वायुमायम्य सकलीक्रियां च कृत्वा आसनाद्युपहृतिं क्रमशः समर्प्य जलगन्धपूर्वैरुपहारैस्तारोपचारनिजमूलतदक्षराद्यैर्न्यासक्रमादभियजेत् ॥ ३१ ॥

अथ मूलेन गन्धरसलिप्ततनुः अष्टगन्धरसेनानुलिप्ताङ्गो भूत्वा मुरारौ मूर्तिपञ्जरपदेषु मूर्तिपञ्जरन्यासस्थानेषु स्वैः केशवादिभिः द्विषड्भिः (अणुभिः) द्वादशमन्त्रैरूर्ध्वपुण्ड्राण्यनुलिम्पतु । ईशे फाले गलेंऽसयुगले हृदि च पञ्चमन्त्रैस्तिर्यक्पुण्ड्राण्यनुलिम्पतु । परेष्विति पञ्चस्थानेषु मूलतश्च ॥ ३२ ॥

पुष्पपूरणमाह — मूलेनेति । निखिलेषु देवेषु मूलेन मनुना, रथाङ्ग-

---

१. 'प्लुतम्', २. 'परिकल्प्य चैक्यम्' ख. पाठः. ३. 'र्ताः' इति मूलकोशपाठः

स्थाण्वात्मकेन कुसुमाञ्जलिमीश्वरे च
कृत्वा यजेद् द्विविधसूनवरैरथेति ॥ ३३ ॥

श्वेतारुणक्रमकृतोभयपार्श्वयोगान्
कुर्याद्धरौ द्वितुलसीकणवीरपद्मान् ।
नाभ्यात्मचिल्ल्यवधि के षडशेषमङ्गे
शेषे शिवेऽर्कयुगपूर्वकमेतदिष्टम् ॥ ३४ ॥

धूपं च दीपं च समर्प्य तस्मै
निवेद्यबुद्ध्या परचित्सुधार्घ्यम् ।
दत्त्वार्चयित्वा परितोष्य चैनं
लयाङ्गनिष्ठं च समादधीत ॥ ३५ ॥

---

पाणौ किरीटमनुना, ईश्वरे स्थाण्वात्मकेन स्थाणुमन्त्रेण च मूर्ध्नि पञ्चकृत्वः पञ्चावृत्त्या कुसुमाञ्जलिं पूर्णपुष्पाञ्जलिं कृत्वाथ द्विविधसूनवरैः श्वेतारुणवर्णविशिष्टपुष्पैः इति वक्ष्यमाणक्रमेण यजेत् ॥ ३३ ॥

तदेव वक्ति — श्वेतेति । हरौ द्वितुलसीकणवीरपद्मान् द्विविधान् श्वेतरक्तवर्णविशिष्टान् तुलसीकणवीरपद्मान् नाभ्यात्मचिल्ल्यवधि नाभिहृदयभ्रूमध्यावधि यथा भवति तथा श्वेतारुणक्रमकृतोभयपार्श्वयोगान् सितरक्तक्रमेण संपादितं दक्षिणं वामं च पार्श्वं यथा भवति तथा योगमाश्रितांस्तान् कुर्यात् संपादयेत् । के मूर्धनि षट् उक्तानि षट् कुसुमानि, शेषेऽङ्गे अशेषं कुसुमं कुर्यात् । शिवे एतत् पुष्पपूरणम् अर्कयुगपूर्वकम् अर्ककणवीरपद्मक्रमेणेष्टं स्यात् । अन्यदेवेष्वनयोर्मार्गयोः सदृशं कुर्यात् ॥ ३४ ॥

धूपं च दीपं च तत्तन्मुद्रया समर्प्य तस्मै देवाय निवेद्यबुद्ध्या निवेद्यसमर्पणबुद्ध्या परचित्सुधार्घ्यं परचैतन्यामृतरूपमर्घ्यं दत्त्वार्चयित्वा चैनं परितोष्य लयाङ्गनिष्ठं च समादधीत ॥ ३५ ॥

---

१. 'बि' इति मूलकोशपाठः. २. 'संभिदुरं त', ३. 'ब्रह्मार्पणाय च समातनोतु ॥', ४. 'णप्रक' ख. पाठः.

कृत्वात्मयागमिति तत्त्वनिवेशितात्मा
शङ्खादिकं च परिशोध्य भृतार्घ्यकाद्यः ।
पीठार्चयोः प्रविकिरेत् कुसुमं स्वबीज-
मूलाणुतश्चरतु चानलसालनिष्ठम् ॥ ३६ ॥
गुरूनुदग् दक्षिणतो गणेशं
प्रपूज्य पीठस्य यजेदधस्तात् ।
आधारशक्तिं प्रकृतिं च कूर्मं
स्वमन्त्रतोऽनन्तवसुन्धरे च ॥ ३७ ॥
अग्न्यादिपीठाङ्घ्रिषु धर्मसंज्ञं
सज्ञानवैराग्यकमर्चयेत ।
ऐश्वर्यसंज्ञं च चतुष्कमेतत्
प्रागादिगात्रेषु च नञ्विशिष्टम् ॥ ३८ ॥

---

इति उक्तप्रकारेण आत्मयागं कृत्वा तत्त्वनिवेशितात्मा स्वयं कालस्व-रूपी देवोऽहमिति भावयुक्तः पूजां कुर्यात् । तत्र पूजायां प्रथमं शङ्खादिकं च परिशोध्य भृतार्घ्यकाद्यः संभृतार्घ्यपाद्याद्युपहारो भूत्वा पीठार्चयोः पीठे प्रति-मायां च स्वबीजमूलाणुतः स्वशक्तिबीजेन स्वमूलेन च क्रमात् कुसुमं प्रवि-किरेत् । अनलसालनिष्ठं तालत्रयदिग्बन्धाग्निप्राकारान् चरतु च ॥ ३६ ॥

पीठपूजामाह—गुरूनित्यादिभिः । पीठस्योदग्भागे 'गुं गुरुभ्यो नमः' इति मन्त्रेण गुरून्, दक्षिणतो 'गं गणपतये नमः' इति मन्त्रेण गणेशं च प्रपूज्य अधस्तात् अधोभागे आधारशक्तिं प्रकृतिं कूर्मं चानन्तवसुन्धरे च स्वमन्त्रतः 'ओं आधारशक्त्यै नमः' 'ओं मूलप्रकृत्यै नमः' 'ओं आदिकूर्माय नमः' 'ओं अनन्ताय नमः' 'ओं पृथिव्यै नमः' इति मन्त्रैर्यजेत् ॥ ३७ ॥

पुनरग्न्यादिपीठाङ्घ्रिषु पीठस्याग्निकोणादिपादेषु धर्मसंज्ञं सज्ञानवैरा-ग्यकमैश्वर्यसंज्ञं च । स्वमन्त्रत इति सर्वत्र पूर्वस्मादायाति । 'ओं धर्माय नमः' 'ओं ज्ञानाय नमः' 'ओं वैराग्याय नमः' 'ओं ऐश्वर्याय नमः' इत्यर्चयेत । एतद् धर्मादिकं चतुष्कं नञ्विशिष्टं नञ्समासेन युक्तं प्रागादिगात्रेषु पादो-परिस्थप्रागादिगात्रेषु 'अधर्माय नमः' इत्यादिमन्त्रैरर्चयेत ॥ ३८ ॥

---

१. 'लयाङ्गकमसौ सुसमाहितात्मा' ख पाठः.

स्वाद्यक्षरैः सत्त्वरजस्तमांसि
संपूज्य सूत्रत्रितयेऽथ मायाम् ।
विद्यां च तच्छादनवस्त्रयुग्मे
तन्मध्यभागे प्रयजेच्च पद्मम् ॥ ३९ ॥

साद्यक्षराणि दलकेसरकर्णिकासु
विष्वग् दिनेशशशिपावकमण्डलानि ।
आत्मान्तरात्मपरमात्मन एवमेव
ज्ञानात्मकं यजतु चोपरि शक्तियुक्तम् ॥ ४० ॥

प्रागादि तत्केसरकर्णिकासु
शक्तीर्नवाराध्य निजाः क्रमेण ।
समष्टिमन्त्रेण यजेन्निजेन
समीरिता पीठसमर्चनेति ॥ ४१ ॥

---

सूत्रत्रितये गात्रगतसूत्रत्रये सत्त्वरजस्तमांसि स्वाद्यक्षरैः सह 'सं सत्त्वाय नमः' 'रं रजसे नमः' 'तं तमसे नमः' इति सम्पूज्य अथ तच्छादनवस्त्रयुग्मे सूत्रोपरि संस्तीर्णवस्त्रद्वये 'मं मायायै नमः' 'विं विद्यायै नमः' इति सम्पूज्य तन्मध्यभागे पीठमध्ये 'पं पद्माय नमः' इति पद्मं प्रयजेच्च ॥ ३९ ॥

दलकेसरकर्णिकासु पद्मस्य दलेषु केसरेषु कर्णिकायां च विष्वक् परितः साद्यक्षराणि आदिः प्रणवः तस्याक्षरैर्युक्तानि दिनेशशशिपावकमण्डलानि 'अं सूर्यमण्डलाय नमः' 'उं सोममण्डलाय नमः' 'मं वह्निमण्डलाय नमः' इति यजतु । आत्मान्तरात्मपरमात्मन एवमेव दलकेसरकर्णिकासु साद्यक्षराणि 'अं आत्मने नमः' 'उं अन्तरात्मने नमः' 'मं परमात्मने नमः' इति यजतु । तेषामुपरि शक्तियुक्तं शक्तिबीजेन युक्तं ज्ञानात्मकम् 'ओं ह्रीं ज्ञानात्मने नमः' इतिं यजतु च ॥ ४० ॥

ततः तत्केसरकर्णिकासु पद्मस्य केसरेषु कर्णिकायां च प्रागादि यथा तथा निजाः निजनिजाः नव शक्तीः क्रमादाराध्य निजेन निजनिजेन समष्टिमन्त्रेण च यजेदिति सामान्येन पीठसमर्चना समीरिता ॥ ४१ ॥

---

१. 'सा' क. ख. पाठः.

पीठं पङ्कजपश्चिमं महिषजिद्वर्जं समानक्रमं
प्रायः प्रागपि पङ्कजादिदमहीन्द्राढ्यं रमावल्लभे ।
बिम्बात्मोपरिपर्युपेतनवशक्त्येतत् कुमारीहरि-
श्रीशेशेषु ततः परेषु नवशक्त्यूर्ध्वस्थबिम्बात्मकम् ॥

मायाब्रह्मयुतावधः प्रकृतिकूर्मौ पीठके केवलैः
स्वाद्यर्णैरपि गात्रगाः सलवकैः सौम्यां च भद्रां जयाम् ।
इष्ट्वार्यां च पुनर्बलप्रबलकौ क्लीबार्णसंभिन्नभं-
बीजाढ्यान् सुबलं महाबलमपीहाग्न्यादिपीठाङ्घ्रिगान् ॥

सत्त्वादीनि यथोदितं यजतु कन्दं नालपद्मौ क्रमाद्
बिन्द्वन्तैः क्लनलाक्षरैर्विगतबिन्द्वोबीजयुक्ते क्रमात् ।

---

महिषजिद्वर्जं दुर्गां वर्जयित्वान्येषु पङ्कजपश्चिमं पद्मान्तम् इदं पीठं प्रायः समानक्रमम् । रमावल्लभे इदं पीठं पङ्कजात् प्रागपि अहीन्द्राढ्यम् 'अनन्ताय नमः' इत्यनेन युक्तं भवति । कुमारीहरिश्रीशेशेषु दुर्गाविष्णुशङ्करनारायणेषु एतत् पीठं बिम्बात्मोपरिपर्युपेतनवशक्ति मण्डलानामात्मनां चोपरिभागस्थिताभिर्नवशक्तिभिर्युतं, ततः परेषु नवशक्त्यूर्ध्वस्थबिम्बात्मकं नवशक्तीनामूर्ध्वस्थितेन मण्डलत्रयेणात्मत्रयेण च युक्तं स्यात् ॥ ४२ ॥

दुर्गायाः पीठे भेदमाह —— मायेति । दुर्गायाः पीठके अधः अधोभागस्थौ प्रकृतिकूर्मौ मायाब्रह्मयुतौ भुवनेश्वर्या ककारेण च क्रमाद् युक्तौ 'ह्रीं प्रकृत्यै नमः' 'कं कूर्माय नमः' इतीष्ट्वा गात्रगाः गात्रस्थाः सौम्यां भद्रां जयाम् आर्यां च केवलैः स्वाद्यर्णैः स्वस्वाद्यक्षरैः सल(वैः।वकैः) बिन्दुसहितैरपि बीजैः सह 'सं सौम्यायै नमः' इत्याद्यैर्मन्त्रैरिष्ट्वा पुनरिह गात्रार्चनानन्तरम् अग्न्यादिपीठाङ्घ्रिगान् अग्न्यादिपीठपादगतान् क्लीबार्णसंभिन्नभंबीजाढ्यान् नपुंसकाक्षरैः संभिन्नेन युक्तेन भमिति बीजेन युक्तान् बलप्रबलकौ सुबलं महाबलमपि 'भृं बलाय नमः' 'भॄं प्रबलाय नमः' इत्यादिमन्त्रैरिष्ट्वा सत्त्वादीनि सत्त्वरजस्तमांसि मायाविधे च यथोदितं यथोक्तं यजतु । कन्दं नालपद्मौ च क्रमात् बिन्द्वन्तैः क्लनलाक्षरैः सह 'क्लं कन्दाय नमः' 'नं नालाय नमः' 'लां

---

१. 'शुक्रवदेव पद्मकमतः कन्दं च नालं यजेत् पद्मं च क्लनलाक्षरैः सलवकैः निर्मुक्तबिन्द्वोयुते । भा' ख. पाठः. २. 'ध्ये' इति मूलकोशपाठः.

**भास्वच्छीतगुमण्डले हुतभुजो बिम्बं सरंबीजकं**
**दुर्गायामियती भिदात्र नवशक्त्याद्यं पृथक् प्रोच्यते ॥**
**विमलोत्कर्षिण्यौ च ज्ञानाख्याना क्रिया च योगा च ।**
**प्रह्वी सत्येशानुग्रहाश्च नवशक्तयो हरिहरीशे ॥ ४५ ॥**
**वामा ज्येष्ठा रौद्री काली कलबलपदादिविकलिन्यौ ।**
**सबलप्रमथिन्यौ सर्वभूतदमनी मनोन्मनी च शिवे ॥ ४६ ॥**
**प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।**
**सुप्रभा विजया सर्वसिद्धिदा च यथाक्रमम् ॥ ४७ ॥**
**आदित्रिदीर्घैर्बिन्द्वन्तैः सन्ध्यर्णैश्च समन्विताः ।**
**एता बिन्दुविसर्गाभ्यामपि स्युर्महिषद्विषि ॥ ४८ ॥**

---

पद्माय नमः' इति मन्त्रैर्यजतु । भास्वच्छीतगुमण्डले सूर्यमण्डलं सोममण्डलं च क्रमाद् विगतबिन्द्वोबीजयुक्ते बिन्दुरहिताभ्याम् अ उ इति बीजाभ्यां सह 'अ सूर्यमण्डलाय नमः' 'उ सोममण्डलाय नमः' इति मन्त्राभ्यां यजतु । हुतभुजो वह्नेः बिम्बं सरंबीजकं 'रं वह्निमण्डलाय नमः' इति मन्त्रेण यजतु । दुर्गायामियती भिदा एतावान् भेदः । अथ नवशक्त्याद्यं पृथक् प्रोच्यते । अस्माभिरिति शेषः ॥ ४३, ४४ ॥

**हरिहरीशे** हरिहरीशयोः विमलाद्या नव शक्तयः । सर्वासां नवशक्तीनां ताराद्याश्चतुर्थीनत्यन्ता एव मन्त्राः । ज्ञानाख्याना ज्ञानेत्याख्यानयुक्ता ॥ ४५ ॥

**शिवे** वामाद्या नव शक्तयः । कलबलपदादिविकलिन्यौ कलबल इति पदाद्यौ विकलिन्यौ कलविकलिनी बलविकलिनी चेत्यर्थः । सबलप्रमथिन्यौ बलप्रमथिनी चेत्यर्थः ॥ ४६ ॥

**महिषद्विषि** प्रभाद्या नव शक्तयः । एता यथाक्रमं बिन्द्वन्तैः आदित्रिदीर्घैः आं ईं ऊं इत्येतैः, सन्ध्यर्णैश्च एं ऐं ओं औं इत्येतैश्च, बिन्दुविसर्गाभ्यां अं अः इत्येताभ्यां च समन्विताः 'आं प्रभायै नमः' 'ईं मायायै नमः' इत्याद्या इत्यर्थः ॥ ४७, ४८ ॥

---

१. 'मापिताः' ख. पाठः.

विद्या शान्तिः स्मृतिर्मेधा प्रज्ञा कान्तिर्द्युतिर्धृतिः ।
व्यापिन्यपि कुमारे स्युरामन्तव्यापकाक्षरैः ॥ ४९ ॥

तीव्राख्या ज्वालिनी नन्दा भोगदा कामरूपिणी ।
उग्रा तेजोवती सत्या विघ्नेऽन्त्या विघ्ननाशिनी ॥ ५० ॥

दीप्तिः सत्या प्रभा कान्तिर्विभूतिर्मालिनी पुनः ।
संसृष्टिः पुष्टिरप्यार्ये नवमी कामरूपिणी ॥ ५१ ॥

इति सप्तसु देवेषु समुक्ता नव शक्तयः ।
तत्तत्समष्टिमन्त्रांश्च तत्पूर्त्यै कीर्तयाम्यहम् ॥ ५२ ॥

अत्रोंनमोभगवतेविष्णवेवर्णकान् क्रमात् ।
सर्वभूतात्मने वासुदेवायेति च कीर्तयेत् ॥ ५३ ॥

सर्वात्मसंयोगयोगपद्मपीठात्मने नमः ।
इत्ययं स्यात् समष्ट्यात्ममनुर्हरिहरीशयोः ॥ ५४ ॥

कुमारे आमन्तव्यापकाक्षरैः आं इत्यन्तैः यरलवादिभिरक्षरैः सह विद्यादयो नव शक्तयः । 'यां विद्यायै नमः' इत्याद्या इत्यर्थः ॥ ४९ ॥

विघ्ने तीव्राख्या तीव्रेत्याख्यायुक्ता । ज्वालिनी इत्याद्या नव शक्तयः । अन्त्या विघ्ननाशिनी अवसाने विघ्ननाशिनीत्यर्थः ॥ ५० ॥

आर्ये दीप्त्याद्या नव शक्तयः । नवमी अन्त्या कामरूपिणीत्यर्थः ॥

इति सप्तसु देवेषु नवशक्तयः समुक्ताः । तत्पूर्त्यै तस्य पीठस्य पूर्णतायै तत्तत्समष्टिमन्त्रांश्चाहं कीर्तयामि ॥ ५२ ॥

अत्र हरिहरीशयोः 'ओं नमो भगवते विष्णवे' इति वर्णकान् क्रमात् कीर्तयेत् । 'सर्वभूतात्मने वासुदेवाय' इति च कीर्तयेत् उच्चरेत् । 'सर्वात्मसंयोगयोगपद्मपीठात्मने नमः' इति च कीर्तयेत् । अयं समष्ट्यात्ममनुः समष्टिस्वरूपो मन्त्रः स्यात् ॥ ५३, ५४ ॥

**प्रणवनतिभगवतेयुतसकलगुणात्मादिशक्तियुक्ताय ।**
**ङेन्तानन्तादिकयोगान्ते पीठात्मने च नमश्च शिवे ॥ ५५ ॥**
**तारादि वज्रनखदंष्ट्रायुधपदमायसंयुतं वदतु ।**
**समहासिंहायार्णं हूं नम इत्यपि च महिषमर्दिन्याम् ॥ ५६ ॥**
**ओङ्कारशक्तिगणपतिबीजयुतं वदतु सर्वशक्त्यर्णम् ।**
**कमलासनायवर्णं प्रणतियुतं विघ्नराजे च ॥ ५७ ॥**
**तारं प्रभूतसिंहासनायसर्वाक्षराणि शक्त्यर्णम् ।**
**ब्रूयान्मयाय पद्मायेति नमोन्तं पुनः प्रभानाथे ॥ ५८ ॥**

---

**शिवे** प्रणवनतिभगवतेयुतसकलगुणात्मादिशक्तियुक्ताय प्रणवेन नत्या भगवते इत्यनेन च युतानि सकलगुणात्म इत्यक्षराण्यादौ युक्तानि शक्तियुक्तायेत्यक्षराणि ङेन्तानन्तादिकयोगान्ते चतुर्थ्येकवचनान्तानन्तशब्दादिकस्य योगशब्दस्यान्ते पीठात्मने नम इति 'ओं नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः' इत्यर्थः ॥ ५५ ॥

**महिषमर्दिन्यां** तारादि प्रणवादि वज्रनखदंष्ट्रायुधपदं वज्रनखदंष्ट्रायुध इति पदम् आयसंयुतम् आय इत्यनेन युक्तं वदतु । समहासिंहायार्णं महासिंहायेत्यक्षरैः सह हूं नम इत्यपि च वदतु । 'ओं वज्रनखदंष्ट्रायुधाय महासिंहाय हूं नम' इत्यर्थः । अपिचेत्यनेन 'महासिंहाय हुं फट् नमः' इति पक्षान्तरः सूचितः ॥ ५६ ॥

**विघ्नराजे** ओङ्कारशक्तिगणपतिबीजयुतम् ओं ह्रीं गं इति बीजैर्युतं सर्वशक्त्यर्णं सर्वशक्तीत्यक्षरान्, पुनः. कमलासनायवर्णं कमलासनाय इति वर्णान् प्रणतियुतं नम इत्यनेन युतं वदतु । 'ओं ह्रीं गं सर्वशक्तिकमलासनाय नमः' इत्यर्थः ॥ ५७ ॥

**प्रभानाथे** तारं प्रभूतसिंहासनायसर्वाक्षराणि प्रभूतसिंहासनाय सर्व इत्यक्षराणि पुनः शक्त्यर्णं शक्तीत्यक्षरद्वयं पुनर्मयाय पद्मायेति स्वरूपम् एतन्नमोन्तं ब्रूयात् । 'ओं प्रभूतसिंहासनाय सर्वशक्तिमयाय पद्माय नम' इत्यर्थः ॥ ५८ ॥

---

१. 'कलश' क. पाठः.

ओंसर्वशक्तियुक्तेत्यादि मयूराक्षरादिकं वदतु ।
कमलासनायनम इति गुहे च ते कीर्तिताः समष्टयणवः ॥

तत्तत्समुक्तविधिनेति समर्च्य पीठं
तोयादिभिस्तदुपधां प्रकृतिं प्रतर्प्य ।
मूर्तिं च तत्र मनुबिम्बमयीं प्रकल्प्य
तत्राभिवाहयतु मन्त्रचितिं च मन्त्री ॥ ६० ॥

तारत्रयं चलनसङ्ग्रहणोद्गमार्थ-
मुक्त्वोपचारनुतिकृन्निजहृत्सरोजात् ।
उन्नीय चेतनकलां विरहय्य बन्धात्
तारेण चात्मनि परे ध्रुवतो विलाप्य ॥ ६१ ॥

---

गुहे च ओंसर्वशक्तियुक्तेत्यादि यथा तथा मयूराक्षरादिकं मयूर इत्यक्षरत्रयादिकं कमलासनायनम इति वदतु । 'ओं सर्वशक्तियुक्तमयूर-कमलासनाय नमः' इत्यर्थः । ते समष्ट्यणवः समष्टिमन्त्राः कीर्तिताः ॥

इति तत्तत्समुक्तविधिना तत्रतत्रोक्तविधिनानेन पीठं तोयादिभिरुपहारैः समर्च्य तदुपधां पीठोपाधौ स्फुरन्तीं प्रकृतिम् अर्घ्यदानेन प्रतर्प्य तत्र पीठे मनुबिम्बमयीं मूर्तिं च स्वस्वमूलमन्त्रपूर्वं 'विष्णुमूर्तये नम' इत्यादिमन्त्रैः पुष्पाञ्जलिना प्रकल्प्य तत्र मन्त्री मन्त्रचैतन्यावाहनविधिज्ञः मन्त्रचितिं मन्त्र-चैतन्यमावाहयतु ॥ ६० ॥

आवाहनविधिमाह—तारेति । तारत्रयं चलनसंग्रहणोद्गमार्थं तत्र प्रथमप्रणवेन चलनं स्वस्थानाद् भेदनं द्वितीयेन संग्रहणं स्वीकरणं तृतीयेनो-द्गमः ऊर्ध्वं गमनम् एतत्त्रयार्थमुक्त्वा उपचारनुतिकृत् उपचारेण स्तुतिं कु-र्वन् निजहृत्सरोजात् चेतनकलां चैतन्यांशम् उन्नीय ऊर्ध्वं नीत्वा तारेण बन्धाद् विरहय्य स्वस्मात् पृथक् कृत्वा ध्रुवतः परे आत्मनि विलाप्य मूलमुच्चरन्

---

१. 'न्त्री ॥ स्था(ण्व(?)ण्वात्म)कः स्मररिपावुपचारमन्त्रो विष्णौ जितन्त इति सेवाहरौ कुमार्याम् । शक्तिध्रुवाभिपुटितं स्वजिनार्गमायें स्यात् षण्मुखाणुरिभुजे गणपे गणानाम् ॥ ता' क. पाठः.

मन्त्रात्मना परिणमय्य सुधीः ससंबु-
दूध्यागच्छयुग्ममभिधाय ततोऽञ्जलिस्थे ।
आवाहयामिमनुना भृतगन्धपुष्प-
तोयेऽवतार्य तनुयादथ मन्त्रमूर्तौ ॥ ६२ ॥

आवाहितोभवमुखैरभिवाहनी च
संस्थापनी समुपरिस्थनिरोधनी च ।
कार्याः समादिकनिधापनिका प्रसाद-
न्याख्या च पञ्च मनुभिः क्रमशोऽत्र मुद्राः ॥ ६३ ॥

केशादिपादचरमं मनुवर्यजापी
व्यापय्य गन्धरसचर्चितदोर्युगेन ।

मन्त्रात्मना परिणमय्य मन्त्रस्वरूपितां संपाद्य ससंबुद्धि सम्बुद्ध्या सह, सुधीरिति सम्बुद्धौ भगवच्छब्दोपादानञ्च इत्यर्थः, आगच्छयुग्मं 'भगवन्नागच्छागच्छ' इत्यभिधाय ततस्तस्मात् अञ्जलिस्थे भृतगन्धपुष्पतोये गन्धजलाभ्यां सह भृते पुष्पे आवाहयामिमनुनावतार्याथ मन्त्रमूर्तौ तनुयात् योजयेत् ॥ ६१, ६२ ॥

तदनन्तरमेव तन्मुद्राश्च प्रदर्शयेदित्याह — आवाहितोभवमुखैरिति । आवाहितोभवमुखैः 'आवाहितो भव' 'संस्थापितो भव' 'सन्निरुद्धो भव' सान्निध्यं कुरु कुरु' 'प्रसीद' इति मन्त्रैः क्रमशः पञ्च मुद्राः कार्याः । कास्ताः, अभिवाहनी आवाहनीत्यर्थः । संस्थापनी च समुपरिस्थनिरोधनी च सन्निरोधनी चेत्यर्थः । समादिकनिधापनिका सान्निधापनीत्यर्थः । प्रसादन्याख्या प्रसादनी च । अत्र मुद्रा इति पक्षान्तरे मुद्राणां[6] तन्मन्त्राणां च बहुविधत्वमुक्तम् ॥ ६३ ॥

ततः क्रियाशेषमाह — केशादीति । गन्धरसचर्चितदोर्युगेन गन्धरस-

१. 'हि', २. 'पि' क. पाठः. ३. 'धि' इति मूलकोशपाठः. ४. 'दि' क. पाठः. ५. 'द्धुक्तां त', ६. 'णां मन्त्रा' ख. पाठः.

विन्यस्य सर्वमिह सायुधभूषणान्तं
देवं विभावयतु तत्तदणूपपत्त्या ॥ ६४ ॥

भास्वद्भास्वत्सहस्रप्रभमरिदरकौमोदकीपङ्कजानि
द्राघिष्ठैर्बाहुदण्डैर्दधतमजितमापीतवासो वसानम् ।
ध्यायेत् स्फायत्किरीटोज्ज्वलमकुटमहाकुण्डलं वन्यमाला-
वत्सश्रीकौस्तुभाढ्यं स्मितमधुरमुखं श्रीधराश्लिष्टपार्श्वम् ॥

---

लिप्तकरद्वयेन मनुवर्यजापी मूलमन्त्रं जपन् केशादिपादचरमं व्यापय्य इह देवे सायुधभूषणान्तं सर्वं लिपितत्त्वमन्त्राक्षराङ्गायुधभूषणादीनि विन्यस्य तत्तदणूपपत्त्या तत्तन्मन्त्रस्य योग्यया प्रतिपत्त्या देवं विभावयतु ध्यायतु ॥ ६४ ॥

ध्यानानि पृथक् पृथगाह — भास्वदित्यादिभिः । अजितं ध्यायेत् । कथंभूतं, भास्वद्भास्वत्सहस्रप्रभं भास्वतां दीप्तिमतां भास्वतामादित्यानां सहस्रस्य प्रभया तुल्यप्रभम् । द्राघिष्ठैः दीर्घतरैर्बाहुदण्डैः अरिदरकौमोदकीपङ्कजानि चक्रशङ्खगदापद्मानि दधतं धारयन्तम् । आपीतवासो वसानम् आपीतं वासो वस्त्रं वासयन्तम् । स्फायत्किरीटोज्ज्वलमकुटमहाकुण्डलं प्रकाशयता किरीटेनोज्ज्वलानि मकुटमहाकुण्डलानि यस्य तम् । वन्यमालावत्सश्रीकौस्तुभाढ्यं वनमालया श्रीवत्सेन श्रीकौस्तुभेन च परिपूर्णम् । स्मितमधुरमुखं स्मितेन माधुर्ययुक्तवक्त्रं श्रीधराश्लिष्टपार्श्वं लक्ष्म्या भूम्या चाश्लिष्टपार्श्वद्वयम् । अत्रायुधानां भूषणानां च न्यासेन पूजायां च मन्त्राः क्रमश्च सूचिताः । 'चक्राय नमः' 'शङ्खाय नमः' 'गदायै नमः' 'पद्माय नमः' इत्यायुधमन्त्रास्तत्तत्स्थानेषु न्यस्याः पूज्याश्च । तथा 'किरीटाय नमः' 'मकुटाय नमः' 'मकरकुण्डलाभ्यां नमः' 'वनमालायै नमः' 'श्रीवत्साय नमः' 'श्रीकौस्तुभाय नमः' 'श्रियै नमः' 'पुष्ट्यै नमः' इति भूषणादीनां मन्त्राः । एवं सर्वदेवेष्वपि तत्तद्ध्यानश्लोकादायुधभूषणन्यासाः पूजा च ग्राह्याः ॥ ६५ ॥

---

१. 'करम' क. पाठः.

बिभ्रद् दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्र-
स्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः ॥

ध्येयो जटामकुटचन्द्रकलेद्धमूर्धा
त्र्यक्षस्तरक्षुवजिनपीतदुकूलवासाः ।
ई[1]शाच्युतस्त्रिशिखचक्रकपालशङ्खान्
बिभ्रत् सितासितवपुर्द्व्युचितात्मभूषः ॥ ६७ ॥

---

तथा च महेशो ध्येयः ध्यातुं शक्यः । दोर्भिः करैः कुठारं मृगमभयवरौ च बिभ्रद् धारयन् । सुप्रसन्नः सुतरां प्रसन्नः । सर्वालङ्कारदीप्तः सर्वैरलङ्कारैः शोभमानः । सरसिजनिलयः पद्मस्थः । व्याघ्रचर्मात्तवासाः वैयाघ्रं चर्म वसानः । मुक्तापरागामृतरसकलिताद्रिप्रभः मुक्ताफलानां चूर्णैरमृतरसमिश्रितैर्निर्मितपर्वताकारः । पञ्चवक्त्रः पञ्चभिराननैर्युक्तः । त्र्यक्षः वक्त्रेषु प्रत्येकं त्रिभिस्त्रिभिर्नेत्रैश्च युक्तः । कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः जटाभारस्याग्रभागे घटितया चन्द्रकलया युक्तः उन्नतो मौलिर्यस्य सः ॥ ६६ ॥

तथा ईशाच्युतश्च ध्येयः । जटामकुटचन्द्रकलेद्धमूर्धा जटाभिः मकुटेन चन्द्रकलया च दीप्तो मूर्धा यस्य सः । त्र्यक्षस्त्रिनेत्रः । तरक्षुवजिनपीतदुकूलवासाः व्याघ्रचर्म पीतदुकूलं च वासो यस्य सः । त्रिशिखचक्रकपालशङ्खान् शूलं चक्रं कपालं शङ्खं च बिभ्रद् भरमाणः । सितासितवपुः वपुषो दक्षभागे श्वेतवर्णः वामभागे कृष्णवर्णश्च । द्व्युचितात्मभूषः शिवस्य विष्णोश्च उचितया योग्यया भूषया युक्तः ॥ ६७ ॥

---

१. 'बिभ्रद् भुजैस्त्रिशिखचक्रकपालशङ्खान श्वेतासितो द्विविधभूषणभृद्धरीशः ॥' ख. पाठः.

दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां
चन्द्रार्धोज्ज्वलशेखरां त्रिणयनामापीतवासोवसम् ।
चक्रं शङ्खमिषुं धनुश्च दधतीं कोदण्डबाणांशयो-
र्मुद्रे वाभयकामदे सकटिबन्धाभीष्टदां वानयोः ॥ ६८ ॥

स्फुरन्मकुटपत्रकुण्डलविभूषितं चम्पक-
स्रजाकलितकन्धरं करयुगेन शक्तिं पविम् ।
दधानमथवा कटीकलितवामहस्तेष्टदं
गुहं घुसृणभासुरं स्मरतु पीतवासोवसम् ॥ ६९ ॥

विघ्नेशं सपरश्वधाक्षपटिकादन्तोल्लसल्लड्डुकै-
र्दोर्भिः पाशसृणिस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम् ।

---

दुर्गां ध्यायतु । दुर्गतिप्रशमनीं दुर्गतिर्दारिद्र्यं तत् प्रकर्षेण शमनशीलाम् । दूर्वादलश्यामलां दूर्वादलवत् श्यामवर्णाम् । चन्द्रार्धोज्ज्वलशेखरां चन्द्रकलयोज्ज्वलेन शिरोलङ्कारेण युक्ताम् । त्रिनयनां नेत्रत्रययुक्ताम् । आपीतवासोवसम् आपीतं वासो वस्त्रं वस्त इत्यापीतवासोवाः ताम् । चक्रं शङ्खमिषुं धनुश्च चक्रशङ्खशरचापान् दधतीम् । कोदण्डबाणांशयोः धनुश्शरयोः स्थाने अभयकामदे अभयवरदे मुद्रे वा, अनयोः करयोः सकटिबन्धाभीष्टदां वा कट्यां बन्धः कटिबन्धः कटिबन्धेन वरदेन च युक्तां वा ॥ ६८ ॥

गुहं च स्मरतु । स्फुरन्मकुटपत्रकुण्डलविभूषितं स्फुरता शोभमानेन मकुटेन पत्रमयाभ्यां कुण्डलाभ्यां च विशेषेण भूषितम् । चम्पकस्रजाकलितकन्धरं चम्पकमय्या मालयालङ्कृतग्रीवम् । करयुगेन करद्वयेन शक्तिं पविं च दधानम् ।(ശക്തി=വേൽ. പവി=വജ്രം)। अथवा कटीकलितवामहस्तेष्टदं कटीकलितवामहस्तेन युक्तं दक्षिणेनेष्टदं च । घुसृणभासुरं कुङ्कुमवद् भासमानं कुङ्कुमेन भासमानं वा । पीतवासोवसं पीतं वासो वस्त इति पीतवासोवाः तम् ॥ ६९ ॥

विघ्नेशं च तथा संस्मरेत् । सपरश्वधाक्षपटिकादन्तोल्लसल्लड्डुकैः परशुना अक्षमालया स्वदन्तेन उल्लसद्भिर्लड्डुकैः चतुर्भिर्दोर्भिः करैर्युतम् । पाशसृणिस्वदन्तवरदाढ्यैः पाशाङ्कुशस्वदन्तवरदसहितैश्चतुर्भिः करैर्वा युतम् ।

शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत्
सिन्दूराभमिभास्यमिन्दुशकलाद्याकल्पमब्जासनम् ॥
स्निग्धारालविसारिकुन्तलभरं सिंहासनाध्यासिनं
स्फूर्जत्पत्रसुक्लृप्तकुण्डलमथेष्विष्वासभृद्दोर्द्वयम् ।
नीलक्षौमवसं नवीनजलदश्यामं प्रभासत्यक-
स्फायत्पार्श्वयुगं सुरक्तसकलाकल्पं स्मरेदार्यकम् ॥ ७१ ॥
इत्यादितत्तत्समभीष्टमन्त्र-
कल्पप्रक्लृप्तक्रमतोऽत्र देवम् ।
निध्याय बुद्ध्या निशिताग्रयाङ्ग-
प्रत्यङ्गभङ्ग्या प्रकरोतु साक्षात् ॥ ७२ ॥

---

शुण्डाग्राहितबीजपूरं शुण्डाया नासाया अग्रे गृहीतेन बीजपूरेण युतम् । उरुकुक्षिं बृहज्जठरम् । त्रीक्षणं त्रिनेत्रम् । सिन्दूराभं सिन्दूरवद् रक्तवर्णम् । इभास्यं गजवदास्येन युक्तम् । इन्दुशकलाद्याकल्पं चन्द्रकला(दि)भिरलङ्कारैर्युतम् । अब्जासनं पद्मस्थं च उपविष्टं च ॥ ७० ॥

अथार्यकं[1] स्मरेत् । स्निग्धारालविसारिकुन्तलभरं स्निग्धेन अपरुषेणारालेन वक्रेण विसारिणा विष्वक्प्रसरणशीलेन कुन्तलभरेण केशभरेण युक्तम् । सिंहासनाध्यासिनं सिंहलाञ्छितमासनमधिरुह्यासीनम् । स्फूर्जत्पत्रसुक्लृप्तकुण्डलं स्फुरता पत्रेण सुष्ठुकल्पितकुण्डलयुतम् । इष्विष्वासभृद्दोर्द्वयं शरचापभृता करद्वयेन युतम् । नीलक्षौमवसं नीलवर्णं क्षौमं वसानम् । नवीनजलदश्यामं नूतनमेघवत् श्यामवर्णम् । प्रभासत्यकस्फायत्पार्श्वयुगं प्रभाख्यया भार्यया सत्यकाख्येन पुत्रेण च शोभमानाभ्यां पार्श्वभागाभ्यां युक्तम् । सुरक्तसकलाकल्पं सुतरां रक्तैः सकलैरलङ्कारैर्युतं च ॥ ७१ ॥

अत्र पूजायाम् इत्यादितत्तत्समभीष्टमन्त्रकल्पप्रक्लृप्तक्रमतः एवमाद्युक्तप्रकारेण तस्य तस्य स्वाभिमतस्य मन्त्रस्य कल्पे निर्दिष्टेन मार्गेण देवं निशिताग्रया बुद्ध्या निध्याय बुद्ध्यावलोक्य अङ्गप्रत्यङ्गभङ्ग्या अङ्गानां मुखादीनां प्रत्यङ्गानां चक्षुःश्रोत्रादीनां भङ्ग्या सौष्ठवेन साक्षात् प्रकरोतु प्रत्यक्षीकरोतु ॥ ७२ ॥

---

१. 'कं च स्म', २. 'समान' ख. पाठः.

**तस्मै निजेष्टमनुरूपतया स्वभक्त्या**
**प्रादुस्सते दिशतु विष्टरमिष्टपीठम्।**
**आराध्य मूलमनुनाङ्घ्रियुगे प्रसूनै-**
**स्तं स्वागतं प्रवदतूपहृतीश्च दद्यात्॥ ७३॥**
**पाद्यार्घ्याचामादिक्लृप्त्योपहारा-**
**नीशार्धेशश्रीशविघ्नेश्वरेषु।**
**देवेष्वन्येष्वर्घ्यपाद्यादिक्लृप्त्या**
**दद्यान्मन्त्री षोडश प्रायशोऽत्र॥ ७४॥**
**अर्घ्यं समर्पयतु दक्षिणदोष्णि दोर्भ्यां**
**मूर्ध्न्येव वा दरभृतं पदयोश्च पाद्यम्।**

---

**स्वभक्त्या** निमित्तेन निजेष्टमनुरूपतया स्वस्येष्टमन्त्ररूपत्वेन प्रादुस्सते प्रकाशीभवते तस्मै देवाय इष्टपीठं पूजितपीठं विष्टरम् आसनं स्मृत्वा दिशतु दद्यात्। अङ्घ्रियुगे तस्य पादयोः मूलमनुना प्रसूनैराराध्य तं देवं प्रति स्वागतं स्वागतमिति वदतु। उपहृतीश्च दद्यात्॥ ७३॥

**अत्र** ईशार्धेशश्रीशविघ्नेश्वरेषु शिवशिवनारायणगणपतिषु पाद्यार्घ्याचामादिक्लृप्त्या पाद्यार्घ्याचमनीयक्रमेण, अन्येषु विष्ण्वादिषु देवेषु अर्घ्यपाद्यादिक्लृप्त्या प्रायशः सर्वत्र षोडशोपहारान् दद्यात्। तथा च प्रपञ्चसारे—

"आसनस्वागते सार्घ्यपाद्ये साचमनीयके।
मधुपर्काचमस्नानवसनाभरणानि च॥
सगन्धसुमनोदीपधूपनैवेद्यचन्दनाः।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश॥"

इति। मन्त्रीत्यनेनात्रोपहारसमर्पणे स्वस्वमूलानन्तरम् 'ओं अर्घ्यमिदं समर्पयामि' इत्यादिमन्त्रविशेषयोजनम् उपहाराणां प्रत्येकमाद्यन्तयोर्जलदाने चोक्तम्॥

तत्रार्घ्यादिदाने क्लृप्तिमाह—अर्घ्यमिति। दरभृतं शङ्खे गृहीतमर्घ्यम् उभाभ्यां कराभ्यां तस्य दक्षिणदोष्णि दक्षिणे करे वा मूर्ध्न्येव वा

---

१. 'न् शर्वार्धेश', २. 'हरेद् दरभृतं वदने कराभ्यां पाद्यं पदाब्जयुजि चाचमनं तथास्ये। तद्दक्षदोष्णि मधुपर्कमुदप्रतोषपोषं ददातु पुनराचमनं पुरोवत्॥ दद्यात् क्रमात् स्नपनवस्त्रयुगोपवीतसंभू' ख. पाठः.

आचामकं च मधुपर्कमपि प्रदद्यात्
पाणौ पुरेव पुनराचमनीयकं च ॥ ७५ ॥

संस्नाप्य रातु वासनद्वितयोपवीत-
संभूषणान्यथ यजेज्जलगन्धपूर्वैः ।
प्राक् स्नानतः परिषदोऽत्र विहृत्य विष्वक्
ताभ्यः पृथक् प्रदिशतूपहृतीर्यथार्हम् ॥ ७६ ॥

आराध्य तत्र कुसुमं प्रणवेन भाव्यं
देवात् तथा प्रसरणं परिषद्गणस्य ।
सिन्धोर्यथोर्मिपटलस्य यथा च वह्ने-
रिद्धात् स्फुलिङ्गनिकरस्य भिदाभिदावत् ॥ ७७ ॥

ईशे षडावृतिरियं परिवारक्लृप्तिः
पञ्चावृतिः पयसिजाक्षनिसुम्भहन्त्र्योः ।

---

समर्पयतु । तथा दरगृहीतं पाद्यं पदयोश्च । आचामकं च मधुपर्कं च दक्षिणे पाणौ प्रदद्यात् । पुनराचमनीयकं च पुरेव पूर्वाचमनीयवत् ॥ ७५ ॥

संस्नाप्य स्नानं कारयित्वा वसनद्वितयोपवीतसंभूषणानि वस्त्रद्वयमुपवीतं भूषणं च रातु दद्यात् । अथ जलगन्धपूर्वैः जलगन्धपुष्पधूपदीपैर्यजेत् । अत्र स्नानतः प्राक् परिषदः परिवारान् विष्वक् समन्ताद् विहृत्य देवान् पृथक् कल्पयित्वा ताभ्यः परिषद्भ्यः उपहृतीः यथार्हं यथायोग्यं पृथक् प्रदिशतु ॥ ७६ ॥

परिषत्प्रसरणक्लृप्तिमाह — आराध्येति । तत्र देवे प्रणवेन कुसुममाराध्य देवात् परिषद्गणस्य प्रसरणं पृथग्भावं तथा भाव्यं कल्पनीयं, यथा सिन्धोः समुद्राद् ऊर्मिपटलस्य लहरीसमूहस्य यथा चेद्धाद् दीप्ताद् वह्नेः स्फुलिङ्गनिकरस्याग्निकणानां समूहस्य तथा भिदाभिदावद् भेदवदभेदवच्च ॥ ७७ ॥

ईशे इयं परिवारक्लृप्तिः परिवाराणां व्यवस्था षडावृतिः षड्भिरावरणैर्युक्ता । पयसिजाक्षनिसुम्भहन्त्र्योः विष्णुदुर्गयोः पञ्चावृतिः । परेषु चतुरा

प्रोक्ता परेषु चतुरावृतिरङ्गपूर्वा
सर्वेषु शर्वगुहयोरपि मूर्तिपूर्वा ॥ ७८ ॥
अङ्गान्यष्ट हरौ यजेच्छतमखाद्याशासु वर्मान्तिमं
दिक्ष्वस्त्रं विदिशीति पञ्च च कुमार्यां तत् तथाग्रेऽक्षि च ।
अग्नीशाशरवायुदिक्षु पुरतोऽक्ष्यन्तं दिशास्वस्त्रकं
षट्छेषेष्विति षण्मुखेऽस्त्रयजनान्ते नेत्रमग्रेऽन्तिमम् ॥ ७९ ॥
हरौ प्रचेतस्यपि वैनतेयं सुदर्शनं प्रेतपतौ सुधांशौ ।
कौमोदकीमावरणद्वयान्ते कोणेषु चाग्न्यादिषु पाञ्चजन्यम् ॥
शोषास्पदे शार्ङ्गमथेषुधी द्वौ
सुग्रीवके भृङ्गपदे च खड्गम् ।
मुख्ये च खेटं वितथे श्रियं च
पुष्टिं दितावग्रभुवि स्वमालाम् ॥ ८१ ॥

---

वृतिः प्रोक्ता । सर्वेषु अङ्गपूर्वा तास्वावृतिष्वङ्गावरणपूर्वा प्रोक्ता । शर्वगुहयोरपि मूर्तिपूर्वा मूर्त्यावरणपूर्वा च ॥ ७८ ॥

हरौ अष्टाङ्गानि शतमखाद्याशासु पूर्वाद्यष्टदिक्षु यजेत् । तत्र पञ्चाङ्गानि पूर्वादिदिक्षु वर्मान्तिमं कवचान्तिममङ्गचतुष्कं, विदिशि अग्न्यादिकोणेष्वस्त्रं च । कुमार्यां तद् अङ्गार्चनं तथा हरेः पञ्चाङ्गवत्, अग्रेऽक्षि नेत्रं च । शेषेषु देवेषु षडङ्गानि अग्नीशाशरवायुदिक्षु अग्नीशाननिर्ऋतिवायुकोणेषु पुरतश्चाक्ष्यन्तं, पूर्वादिदिशास्वस्त्रकं च । षण्मुखे इति उक्तप्रकारेणास्त्रयजनान्ते अग्नीशाशरवायुदिक्षु चत्वार्यङ्गानि, पूर्वादिदिक्ष्वस्त्रं चेष्ट्वा अग्रेऽन्तिमं नेत्रं च यजेत् ॥ ७९ ॥

त्रिधाम्न्यावरणद्वयान्ते अष्टाङ्गपञ्चाङ्गावरणयोरन्ते हरौ इन्द्रे प्रचेतस्यपि वरुणेऽपि वैनतेयं, प्रेतपतौ यमे सुदर्शनं, सुधांशौ सोमे कौमोदकीम्, अग्न्यादिकोणेषु च पाञ्चजन्यं च, शोषास्पदे वरुणवा[illegible]रोर्मध्ये शार्ङ्गं, सुग्रीवके निर्ऋतिवरुणयोर्मध्ये द्वाविषुधी च । तत्र 'इषुधिभ्यां नम' इति मन्त्रः । भृङ्गपदे यमनिर्ऋत्योर्मध्ये खड्गम्, अथ मुख्ये वायुसोमयोर्मध्ये खेटं, वितथे अग्नियमयोर्मध्ये श्रियं, दितौ सोमेशानयोर्मध्ये पुष्टिम्, अग्र[illegible]वि पुरोभागे स्वमालां

---

१. 'म्बुजाक्षहेरम्बयोरपि षडावृतिका कुतश्चित् ॥ अङ्गादिका परिवृतिर्गदिताखिलेषु मूर्त्यादिका गिरिशशक्तिभृतोर्गणेशे । तद्वत् षडावृतियुते चरमद्वयीन्द्रवज्रादिकात्र सकलेषु पृथग् ध्रुवेऽन्याः ॥ अङ्'ख. पाठः. २. 'र्यमणि स्व' क. पाठः.

श्रीवत्सचिह्नं च भृशे जयन्ते
　　श्रीकौस्तुभं च न्यसतु त्रिधाम्नि ।
एवं समुक्ताघृतिदिग्व्यवस्था
　　व्यत्यस्यते कैश्चिदियं क्वचिच्च ॥ ८२ ॥

गौरीपतौ पुंबहुरूपसद्यवामेशमूर्तीः परितः क्रमेण ।
इन्द्रार्किवारीड्वसुपालदिक्षु मूर्तीस्ततोऽङ्गावरणं प्रकल्प्य ॥
अनन्तसूक्ष्मौ च शिवोत्तमैकनेत्रैकरुद्रांश्च पुनस्त्रिमूर्तिम् ।
श्रीकण्ठसंज्ञं च शिखण्डिनं च वृषेशपूर्वासु च दिग्विदिक्षु ॥

उमां च चण्डेश्वरनन्दिनौ च
　　तथा महाकालगणेश्वरौ च ।
वृषं न्यसेद् भिङ्गिरिटिं क्रमेण
　　स्कन्दं च सोमाद्यनिलान्तदिक्षु ॥ ८५ ॥

---

वनमालां च, भृशे इन्द्राग्न्योर्मध्ये श्रीवत्सचिह्नं श्रीवत्साख्यं चिह्नं, जयन्ते ईशेन्द्रयोर्मध्ये श्रीकौस्तुभं च न्यसतु कल्पयतु । परिवाराणां सर्वेषां ताराद्याश्चतुर्थीनमोन्ता एव मन्त्राः । एवं समुक्ता इयमावृतिदिग्व्यवस्था अवृतेर्दिशां क्लृप्तिः कैश्चिद् देशिकैः क्वचित् पश्चिममुखादौ व्यत्यस्यते व्यत्यासः क्रियते ॥ ८०, ८१, ८२ ॥

गौरीपतौ परितः इन्द्रार्किवारीड्वसुपालदिक्षु इन्द्रः स्वयमेव आर्किर्यमः वाराड् वरुणः वसुपालो वैश्रवणः एषां दिक्षु ऐश्यां च क्रमेण पुंबहुरूपसद्यवामेशमूर्तीः तत्पुरुषाघोरसद्योजातवामदेवेशानमूर्तीः प्रकल्प्य ततोऽङ्गावरणं च प्रकल्प्य वृषेशपूर्वासु वृषा इन्द्रः ईश ईशानः इन्द्रादिदिक्षु ईशादिविदिक्षु च क्रमेणानन्तसूक्ष्मौ द्वौ शिवोत्तमैकनेत्रैकरुद्रांश्च त्रीन् पुनस्त्रिमूर्तिं श्रीकण्ठसंज्ञं शिखण्डिनं च न्यसेत् कल्पयेत् । तथा तद्बहिः सोमाद्यनिलान्तदिक्षु उत्तरादिवाय्वन्तदिक्षु प्रादक्षिण्यक्रमेण उमां च चण्डेश्वरनन्दिनौ च द्वौ महाकालगणेश्वरौ च द्वौ वृषं भिङ्गिरिटिं स्कन्दं च न्यसेत् ॥ ८३, ८४ ॥

---

१. 'दलमूलकेषु ।' ख. पाठः.　२. 'कस्था मू' । क., 'कस्थेषूर्ध्वं ततोऽग्राव' ख. पाठः.　३. 'रथाङ्ग' इति मूलकोशपाठः.

स्कन्दे[1] न्यसेद् दिक्षु सनत्कुमारं
स्कन्दं च वाणं च सहेमचूडम् ।
भद्रादिसेनं भवपुत्रदेव-
सेने शिवाद्यस्रिषु देवयानीम् ॥ ८६ ॥

अङ्गान्ते पुरुषादिसद्यचरमाः स्वाशासु शैवीः क्रमा-
दन्याश्चास्रिषु पावकादिषु चनसो वासुदेवादिकाः ।
मूर्तीः कल्पयतु त्रिलोचनहरौ प्राक् चण्डसेनादिह
स्वं वाहं वृषसंज्ञकं च गरुडात्मानं सुधीरग्रतः ॥ ८७ ॥

न्यस्य जयां विजयामपि कीर्तिं प्रीतिं प्रभां तथा श्रद्धाम् ।
मेधां श्रुतिं द्वितीयावरणे प्रागादिदिक्क्रमात् तदनु ॥८८॥
चक्रं शङ्खं सगदं खड्गं पाशाङ्कुशौ शरं च धनुः ।
स्थापयतु सुम्भहन्त्र्यां षोडशकेऽत्रादिमाक्षरं बीजम् ॥ ८९ ॥

---

स्कन्दे दिक्षु सनत्कुमारं स्कन्दं च वाणं च सहेमचूडं हेमचूडं च, शिवाद्यस्रिषु ईशादिकोणेषु भद्रादिसेनं भद्रसेनं भवपुत्रदेवसेने भवपुत्रं देवसेनां च देवयानीं च न्यसेत् ॥ ८५, ८६ ॥

त्रिलोचनहरौ तत्राङ्गान्ते अङ्गावरणान्ते स्वाशासु स्वस्वदिक्षु पुरुषादिसद्यचरमाः तत्पुरुषादिसद्योजातान्ताः शैवीश्चतस्रः, पावकादिष्वस्रिष्वन्या वासुदेवादिकाश्चतस्रश्च मूर्तीः क्रमात् कल्पयतु । इह तु चण्डसेनाद् निर्माल्यधारिणः प्राक् पूर्वमग्रतो वृषसंज्ञकं गरुडात्मानं 'वृषाय गरुडात्मने नम' इति स्वं वाहनं च कल्पयतु । सुधीरिति उक्तैः परिवारनामभिर्मन्त्रयोजनं विद्वानित्यर्थः ॥ ८७ ॥

सुम्भहन्त्र्यां द्वितीयावरणे प्रागादिदिक्क्रमात् जयां विजयामपि कीर्तिं प्रीतिं प्रभां तथा श्रद्धां मेधां श्रुतिं च न्यस्य तदनु तद्बहिः पूर्वक्रमेणैव चक्रं शङ्खं सगदं गदां च खड्गं पाशाङ्कुशौ द्वौ शरं धनुश्च स्थापयतु

---

1. 'न्दं' क. पाठः.

कीर्तिप्रीत्योर्मेधायाश्चाद्यस्वरयुतं विरेफं च।
चक्रे रमेव संबुद्ध्यन्तमिहास्त्राष्टकं फडन्तं च ॥ ९० ॥

दिक्षु क्षुरिकां खड्गं धनुः शरं हुंफडादिकं न्यसतु।
शार्वे मधुकरमग्नौ शम्बरमप्यार्यकेऽङ्गवृत्यन्ते ॥ ९१ ॥

न्यसतु गणञ्जयविघ्नेशैकादिकदंष्ट्रवीरगजवक्त्रान्।
लम्बोदरवरदाभिधभक्तप्रियमष्टदिक्क्रमतः ॥ ९२ ॥

ओजस्वरबीजयुतान् विघ्नेशे चावृतौ द्वितीयायाम्।
गदितमसाधारणमित्यावरणं कीर्तयेऽथ सामान्यम् ॥ ९३ ॥

---

कल्पयतु। अत्र षोडशके परिवारमन्त्रे आदिमाक्षरं स्वस्य स्वस्याद्यमक्षरं बीजं स्यात् ॥ ८८, ८९ ॥

कीर्तिप्रीत्योर्मेधायाश्च तिसृणामेतासाम् आद्यस्वरयुतम् अकारयुक्तं विरेफं रेफरहितं च 'कं कीर्त्यै नमः' 'पं प्रीत्यै नमः' 'मं मेधायै नमः' इति मन्त्रा इत्यर्थः। चक्रे रमेव रं इत्येव बीजम्। इहास्त्राष्टकम् आयुधाष्टकं सम्बुद्ध्यन्तं सम्बोधनप्रथमैकवचनान्तं फडन्तं च। 'रं चक्र फण् नमः' 'शं शङ्ख फण् नमः' 'गं गदे फट् नमः' इत्याद्या मन्त्रा इत्यर्थः ॥ ९० ॥

आर्यके अङ्गवृत्यन्ते अङ्गावरणान्ते दिक्षु क्षुरिकां खड्गं धनुः शरं च हुंफडादिकं न्यसतु। 'हुं फट् क्षुरिकायै नमः' इत्याद्या मन्त्राः। शार्वे कोणे मधुकरम् अग्नौ शम्बरं च ॥ ९१ ॥

विघ्नेशे द्वितीयायामावृतौ अष्टदिक्क्रमतः ओजस्वरबीजयुतान् अयुग्मस्वरैर्वृतेन गमिति बीजेन युतान् गणञ्जयविघ्नेशैकादिकदंष्ट्रवीरगजवक्त्रान्, एकादिकदंष्ट्रः एकदंष्ट्रः एतान् पञ्च, लम्बोदरवरदाभिधभक्तप्रियं लम्बोदरं वरदं भक्तप्रियं च न्यसतु। इत्यसाधारणं प्रत्येकं नियतमावरणं गदितम्। अथ सामान्यमावरणं कीर्तये ॥ ९२, ९३ ॥

प्रागाद्याशास्विन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानान् ।
निर्ऋतावनन्तमीशे ब्रह्माणं मन्त्रवित् क्रमेण यजेत ॥ ९४ ॥
वज्रं शक्तिं दण्डं खड्गं पाशाङ्कुशौ गदां शूलम् ।
चक्रं पद्मं च तथा न्यस्येदिन्द्रादिबाह्यतः क्रमतः ॥ ९५ ॥
विष्वक्सेनप्रमुखं निर्माल्यभुजं निजं निजं यजतु ।
दिक्पालास्त्रावसितौ दिक्पावृत्यन्तरे च दितिभागे ॥ ९६ ॥

स्वाभीष्टमन्त्रपरिवारगणान् स्वपद्मे-
ष्वेवं निवेश्य दिशतूपहृतीश्च तेषु ।
मूर्त्यङ्गपश्चिममिह स्नपनादिभूषा-
निष्ठा जलादिभिरथ प्रयजेदशेषान् ॥ ९७ ॥

तत्रोङ्कारनिजोपचारमनुवर्णाङ्गायुधाद्यैः सुधी-
र्देवं विन्यसनक्रमेण जलगन्धाभ्यां प्रसूनेन च ।

---

प्रागाद्याशासु क्रमेण इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानान् नि-
र्ऋतौ अनन्तम् ईशे ब्रह्माणं च यजेत । मन्त्रविदित्यनेन 'इन्द्राय सुराधिपतये
विष्णुपारिषदे नमः' इत्यादिमन्त्रविशेषज्ञ इत्यर्थः ॥ ९४ ॥

इन्द्रादिबाह्यतः इन्द्रादीनां बाह्यावरणे क्रमेण तथा वज्रं शक्तिं दण्डं
खड्गं पाशाङ्कुशौ गदां शूलं चक्रं पद्मं च न्यस्येत् ॥ ९५ ॥

दिक्पालास्त्रावसितौ दिक्पालानां तदस्त्राणां चावसाने दितिभागे सो-
मेशानयोर्मध्ये दिक्पावृत्यन्तरे दिक्पावरणस्यान्तर्भागे विष्वक्सेनप्रमुखं निजं
निजं निर्माल्यभुजं यजतु ॥ ९६ ॥

स्वाभीष्टमन्त्रपरिवारगणान् स्वस्याभीष्टस्य मन्त्रस्य परिवारगणान् एवं
स्वपद्मेषु स्वस्य स्वस्याधारभूतेषु पद्मेषु क्रमेण निवेश्य कल्पयित्वा तेषु परि-
वारेषु मध्ये इह मूर्त्यङ्गपश्चिमं यथा भवति तथा स्नपनादिभूषानिष्ठा उपहृ-
तीः पृथक् प्रदिशतु । अथाशेषान् परिवारान् जलादिभिः प्रयजेत् ॥ ९७ ॥

तत्र यजने सुधीः जलगन्धाद्युपहाराणां देवे चित्पर्यन्तां व्याप्तिं ध्यायन्
(देवम्) ओङ्कारनिजोपचारमनुवर्णाङ्गायुधाद्यैः प्रणवेन निजनिजोपचारेण मूलेन

---

१. 'पतिभागे च सर्वदेवेषु ॥', २. 'समन्तादवं' ख. पाठः. ३. 'ज्ञ' क. पाठः.
४. 'ण', ५. 'द्मेषु क' ख. पाठः. ६. 'प्रा' क. पाठः.

याजं याजमथैतदीयपरिवारांश्चान्तरङ्गक्रमा-
न्निर्माल्याश्यवसानिकान् निजनिजस्थानेषु संपूजयेत् ॥

सूनावसानैरिति सावृतिं तं संपूज्य पुष्पावृतिमातनोतु ।
पूर्तिं च पुष्पैस्तुलसीद्वयाद्यैर्गन्धाम्बुसिक्तैर्गदितक्रमेण ॥

आद्या कार्या प्रसूनावृतिरिह यजता सोपचारेण पुष्पै-
र्मूलेनापि त्रिवारं हरिमखिलपरीवारकानेकशश्च ।
मूलार्णैस्तं द्वितीया दिगधिपरहितावृत्युपेतं तृतीया
मूलेनाङ्गावृतं केवलमथ परतत्त्वेन तुर्या त्रिरेनम्[1] ॥१००॥

---

च तथा तदक्षरैरङ्गैरायुधमन्त्रैर्भूषणमन्त्रैश्च[2] न्यासस्थानेषु विन्यसनक्रमेण जलग-न्धाभ्यां प्रसूनेन च याजं याजमिष्ट्वेष्ट्वा निर्माल्याश्यवसानिकान् स्वस्वनिर्मा-ल्यधार्यवसानभूतानेतदीयपरिवारान् अन्तरङ्गक्रमात् अन्तराद्यावरणक्रमात् निजनिजस्थानेषु सम्पूजयेत् ॥ ९८ ॥

इति सूनावसानैः पुष्पावसानैः सावृतिमावरणसमेतं तं देवं सम्पूज्य पुष्पावृतिमातनोतु । तुलसीद्वयाद्यैर्गन्धाम्बुसिक्तैः विविधैः पुष्पैर्गदितक्रमेण पूर्तिं पुष्पपूरणं च ॥ ९९ ॥

पुष्पावृतिमाह — आद्येति । इह पुष्पावृतौ यजता साधकेन । हरि-मित्यनेन विष्णावेवायं विशेष इति द्योत्यते । हरिं सोपचारेण मूलेनापि (पुष्पैः) त्रिवारं त्रिस्त्रिवारम्, अखिलपरीवारकान् अङ्गादिनिर्माल्यधार्यन्तानखिलान् परिवारानेकशश्च इत्याद्या प्रसूनावृतिः कार्या । ततः तं हरिं मूलार्णैः त्रिस्त्रिवारं दिगधिपरहितावृत्युपेतम् इन्द्रवज्राद्यावरणरहितैरन्यैरङ्गादिभिस्त्रिभिरावरणैरुपेतं द्वितीया पुष्पावृतिः। अङ्गावृतम् अङ्गावरणद्वयेनैवोपेतं तं मूलेन त्रिवारं तृतीया पुष्पावृतिः । अथ केवलमेनं परतत्त्वेन प्रणवेन त्रिः त्रिवारं तुर्या चतुर्थी पुष्पावृतिः ॥ १०० ॥

---

१. नम् ॥ रुसा', २. 'न्त्रैश्च' ख. पाठः.

दुर्गां प्रागुपचारतोऽखिलपरीवारैरमा मूलतो
द्वेधाथाङ्गपुरस्सरावरणयुक्त्यान्ते स्वयं विद्यया ।
पुष्पैः शाम्भवपक्षतोऽखिलपरीवारैश्च मूर्त्यङ्गकैः
सार्धं केवलमप्युपार्हतु शिवे त्रेधा तथा वाखिले ॥

ससान्द्रघण्टानिनदेन नीचैर्धूपेन दीपेन समर्च्य चोच्चैः ।
देवं ससर्वावरणं प्रदद्यात् सकृत्सकृद् वारि तदावृतिभ्यः ॥

तारेण देवेऽनुगतं विभूति-
जातं प्रसूनार्पणतो विभाव्य ।
किञ्चित् समभ्यर्च्य ददातु तस्मै
तथार्घ्यपाद्याचमनीयकानि ॥ १०३ ॥

---

**दुर्गां** प्राग् आदौ उपचारतः उपचारमन्त्रेण अखिलपरीवारैरमा सर्वपरिवारैः सह पुष्पैराराधयेद् इत्येकधा, अथ तां मूलतः अङ्गपुरस्सरावरणयुक्त्या अङ्गावरणयोगेन इति द्वेधा द्विप्रकारेण कृत्वा पुनरन्ते विद्यया स्वयं द्वादशे पटले वक्ष्यमाणेन विद्यामन्त्रेण प्रधानभूतेनेत्यर्थः[1] । शिवे तु शाम्भवपक्षतः, शम्भुपक्ष इति शिवस्य विग्रहपूजोक्ता, तेन शम्भुपक्षेण अखिलपरीवारैश्च सह तं शिवं पुष्पैरुपार्हतु इत्याद्या । पुनः मूर्त्यङ्गकैः मूर्तिभिरङ्गैश्च सह तमुपार्हत्विति द्वितीया । पुनः केवलं तमुपार्हत्विति तृतीया । शिवे इति त्रेधा त्रिप्रकारेण । अखिलेऽपि तथा त्रिप्रकारेण वा ॥ १०१ ॥

ततः कर्मशेषमाह — **ससान्द्रेति** । ससान्द्रघण्टानिनदेन गम्भीरेण घण्टानादेन सह धूपेन नीचैः नाभिमूलदर्शितेन, तथा दीपेन उच्चैः नेत्रदर्शितेन च ससर्वावरणं सर्वावरणैर्युक्तं देवं समर्च्य तदावृतिभ्यः तस्मै चावरणेभ्यश्च सकृत् सकृद् वारि प्रदद्यात् ॥ १०२ ॥

**पुनस्तारेण-प्रसूनार्पणतः** प्रणवपुष्पाञ्जलिना विभूतिजातं परिवारव्यूहं देवेऽनुगतं विभाव्य लीनं ध्यात्वा मूलेन किञ्चित् समभ्यर्च्य तस्मै देवायार्घ्यपाद्याचमनीयकानि तथा पूर्वक्रमेण ददातु ॥ १०३ ॥

---

१. 'र्थः । तथा शि' ख. पाठः.

भूमिं विशोध्य विनिधाय हिरण्मयाद्यं
पात्रं पवित्रमभिघार्य विभोः पुरस्तात् ।
सम्पादयेद् रुचिरमत्र निवेद्यजातं
प्राज्याज्यकादलगुलादिपरिष्कृतं च ॥ १०४ ॥

प्रोक्ष्यास्त्रेण सुरक्ष्य वायुसलिलैः संशोध्य दग्ध्वाग्निम-
द्दोष्णा वामकरामृताप्लुतमिदं मन्त्रामृतीभावितम् ।
जप्त्वा मूलमथाष्टशः सुरभिमुद्रातः सुधापूरितं
प्राच्यैतद्ग्रहणस्पृहां कुसुमसंराध्या विभोर्भावयेत् ॥

कृत्वा यथोक्तं परिषेचनादिकं
दोर्भ्यां सपुष्पं रसनारुचीरिह ।
विसार्य मन्त्री विनिवेद्य दोर्युजा
ततोऽमृतं तद्वदने समर्पयेत् ॥ १०६ ॥

---

अथ विभोः देवस्य पुरस्ताद् भूमिं विशोध्य हिरण्मयाद्यं सुवर्णरजतादिभिर्निर्मितं पवित्रं शुद्धं पात्रं विनिधाय अभिघार्य उपस्तीर्यात्र प्राज्याज्यकादलगुलादिपरिष्कृतं प्रभूतेनाज्येन कदलीफलैः गुलैरुपदंशैश्च परितः क्षिप्तं रुचिरं रुचिकरं निवेद्यजातं पायसादि विविधं हविः सम्पादयेत् ॥ १०४ ॥

अथ इदं निवेद्यं प्रोक्ष्य अस्त्रेण स्वस्वास्त्रमन्त्रेण सुरक्ष्य वायुसलिलैः वायुबीजेन सलिलैः संशोध्य अग्निमद्दोष्णा अग्निबीजयुक्तेन दक्षिणकरेण दग्ध्वा दहनं भावयित्वा वामकरामृताप्लुतं वामकरस्थामृतबीजेनाप्लावितं मन्त्रामृतीभावितम् अमृतबीजजपेन अमृतीभावितमिदं मूलमष्टशो जप्त्वा सुरभिमुद्रातः सुरभिमुद्रया सह 'अमृतेऽमृतोद्भवेऽमृतवर्षिण्यमृतं स्रावय स्रावये'ति मन्त्रेण सुधापूरितं तद् मूलेन प्राच्य कुसुमसंराध्या पुष्पसमाराधनेन विभोः देवस्य एतद्ग्रहणस्पृहाम् एतत्परिग्रहेच्छां भावयेत् ॥ १०५ ॥

मन्त्री परिषेचनासनादिस्वगृह्योक्तमन्त्रज्ञः यथोक्तं स्वस्वगृह्योक्तं परिषेचनादिकं कृत्वा दोर्भ्यां सपुष्पं पुष्पसहिताभ्यां कराभ्यां देवस्य रसनारुचीः रसनाया दीप्तीः इह निवेद्ये विसार्य (विनिवेद्य) 'निवेदयामी'त्यादिमन्त्रेण निवेदनं कृत्वा ततो दोर्युजा सपुष्पाभ्यां कराभ्याममृतं तद्वदने देवस्यास्ये समर्पयेत् ॥ १०६ ॥

---

१. 'स्रिमिद' ख पाठः. २ 'यं' क पाठः.

निवेदयामि भवते जुषाणेदं हविर्हरे! ।
हरौ मन्त्रोऽयमन्येषु हरिस्थाने स्वनामवान् ॥ १०७ ॥
प्राणादिमुद्रोज्ज्वलदक्षदोष्णा सग्रासमुद्रान्यकरः स्वमन्त्रैः ।
अन्नाद् रसांशं मलधातुवर्जमायोजयेत् तद्वदनार्चिषीहं ॥
देवे युनक्तु सकले जलगन्धपुष्प-
धूपप्रदीपकनिवेद्यगतान् रसांशान् ।
तोयोर्व्यनन्तपवनानलवारिसारान्
जिह्वानसोः श्रवणनाभिदृगाननेषु ॥ १०९ ॥
तत्तत्समर्पणविधौ निजभूतशक्तिः
साक्षादुदेत्य विमलाञ्जलिगं स्वसारम् ।

---

हरौ 'निवेदयामि भवते जुषाणेदं हविर्हरे!' इति निवेदनमन्त्रः । अन्येषु हरिस्थाने हरे इति स्थाने स्वनामवान् स्वस्वनामसहितः । 'जुषाणेदं हविर्हर' इत्यादीत्यर्थः ॥ १०७ ॥

इह निवेदनकाले प्राणादिमुद्रोज्ज्वलदक्षदोष्णा द्वादशे पटले वक्ष्यमाणाभिः प्राणादिमुद्राभिरुज्ज्वलेन दक्षिणकरेण सग्रासमुद्रान्यकरः ग्रासमुद्रासहितवामकरो भूत्वा स्वमन्त्रैः तत्रैव वक्ष्यमाणैः प्राणापानादिमन्त्रैः अन्नात् हविषः मलधातुवर्जं मलं धातुं च वर्जयित्वा रसांशं तद्वदनार्चिषि तद्वदनतेजसि आयोजयेत् ॥ १०८ ॥

अन्नरससमर्पणकथनप्रसङ्गात् षण्णामप्युपहाराणां समर्पणरीतिमाह—देव इति । सकले सावयवे देवे जिह्वानसोः श्रवणनाभिदृगाननेषु षट्सु स्थानेषु तोयोर्व्यनन्तपवनानलवारिसारान् अप्पृथिव्याकाशवायुतेजोजलानां षण्णां सारांशान् सूक्ष्मभूताकारान् जलगन्धपुष्पधूपप्रदीपकनिवेद्यगतान् पञ्चीकृतमहाभूतात्मकेषु षट्सु जलगन्धादिषु स्थितान् रसांशान् क्रमेण युनक्तु योजयेत् ॥

तत्तत्समर्पणविधौ तस्य तस्य जलादेः समर्पणकाले निजभूतशक्तिः स्वस्य साधकस्य पञ्चभूतात्मिकासु शक्तिषु मध्ये सा सा शक्तिः साक्षात् स्वस्वेन्द्रियाद् उदेत्य उद्गम्य विमलाञ्जलिगं विमलं विगतमलधातुकं तदेवाञ्जलिगं

---

१. 'ह ॥ ततो निवेद्य मुद्रिकां प्रधानया करद्वये स्पृशन्ननामिकां निजं मनुं जपन् प्रदर्शयेत् ॥ दे' ख. पाठः.

देवै[1]तदक्षभवशक्तिकरे समर्प्य
तादात्म्यमेति तरसेत्यनुसन्दधीत ॥ ११० ॥

प्रत्येत्य शक्तिरपि सा निजाञ्जलिगतं रसम् ।
समर्प्य सकले तस्मिन् विलीनेति च भावयेत् ॥ १११ ॥

भूयो नैवेद्यसारामृतमयरसयोगेन हृन्मूर्त्यभिख्यं
देवं जाज्वल्यमानज्वलनरुचिमनुध्याय तां धेनुमुद्राम् ।
बद्ध्वा नद्धाञ्जलिः सन् मनुवरमभिजप्याष्टशोऽस्त्रेण रक्षां
कृत्वा वद्ध्वा कवाटं बहिरथ हविषा तन्मये[2]ऽग्नौ जुहोतु ॥

परिसमूहनपूर्वविधावधौ परिसमर्चितपीठनिवेशितम् ।
यजतु देवममुं सकलीकृतं सपरिवारमथो जुहुयादिति ॥

---

शक्तेः कराञ्जलिगतं स्वसारं स्वसारभूतं रसं देवैतदक्षभवशक्तिकरे देवस्यैतस्मादेवेन्द्रियादुद्गच्छन्त्याः शक्तेः कराञ्जलौ समर्प्य तरसा वेगेन तादात्म्यम् ऐक्यम् एति गच्छतीति अनुसन्दधीत ध्यायेत् ॥ ११० ॥

सापि शक्तिः प्रत्येत्य देवं प्रतिगम्य निजाञ्जलिगतं रसं सकले तस्मिन् समर्प्य विलीना च भवतीति च भावयेत् ॥ १११ ॥

भूयः तदनन्तरं नैवेद्यसारामृतमयरसयोगेन नैवेद्यसारभूतेन अमृतमयेन रसेन यो(गात्) जाज्वल्यमानज्वलनरुचिम् अतिशयेन ज्वलदग्निनिभं हृन्मूर्त्यभिख्यम् उपहारप्रकाशिकायां 'हृन्मूर्तिं केचिदिच्छन्ती'त्याद्युक्तस्वरूपं देवमनुध्याय ताम् अमृतवर्षं कुर्वतीं धेनुमुद्रां वद्ध्वा नद्धाञ्जलिः सन् बद्धाञ्जलिर्भूत्वा अष्टशो मनुवरं मूलमन्त्रमभिजप्यास्त्रेण रक्षां कृत्वा कवाटं वद्ध्वाथ बहिः तन्मये देवमये अग्नौ हविषा जुहोतु ॥ ११२ ॥

पूजाहोमं विवृणोति — परिसमूहनेति । परिसमूहनपूर्वविधावधौ परिसमूहनादिक्रियावसाने परिसम[3]र्चितपीठनिवेशितं पूजितपीठे आवाहितं सकलीकृतं देवममुं सपरिवारं परिवारसहितं यजतु । अथो इति वक्ष्यमाणविधिना जुहुयाच्च ॥ ११३ ॥

---

1. 'वे' इति मूलकोशपाठः. 2. 'या' क. पाठः. 3. 'र्चि' ख. पाठः.

सतारभूरादिकपीठिकाणुभिः
सकृत्सकृत् साष्टशतं स्वमूलतः ।
दशांशमङ्गाणुभिरेकशः परै-
र्निजावृतिव्याहृतितारकैः क्रमात् ॥ ११४ ॥
प्रसन्नयज्वा परिषद्बलिं च
मन्त्री हुताशेऽथ समीरणे वा ।
द्वारोपसन्ने प्रविधाय चाचा-
न्तोऽन्तर्विशेद् द्वाःस्थकृताभ्यनुज्ञः ॥ ११५ ॥
संवन्द्य पानीयसमर्पणं च
कृत्वा समुद्वास्य मुखार्चिरास्ये ।
दत्त्वा पिधानीयजलं तदन्नं
निर्माल्यभुक्सात् प्रकरोतु मन्त्री ॥ ११६ ॥

---

सतारभूरादिकपीठिकाणुभिः प्रणवेन व्याहृतिभिः पीठमन्त्रैश्च सकृत् सकृत्, स्वमूलतः साष्टशतम् अष्टसहितं शतम्, अङ्गाणुभिर्मूलाद् दशांशं, परैरन्यैः निजावृतिव्याहृतितारकैः निजनिजावरणमन्त्रैर्व्याहृतिभिस्तारेण च (एकशः) क्रमात् जुहुयादिति पूर्वस्माच्छ्लोकादानयेत् ॥ ११४ ॥

प्रसन्नयज्वा अग्नौ प्रसन्नपूजाकृद् मन्त्री बलिमन्त्रज्ञः हुताशे वाथ समीरणे वा द्वारोपसन्ने द्वाराभ्याशे परिषद्बलिं च प्रविधाय च आचान्तः आचमनकृद् द्वाःस्थकृताभ्यनुज्ञः द्वाःस्थाभ्यां कृतानुज्ञः अन्तः प्रासादान्तः प्रविशेत् ॥ ११५ ॥

देवं संवन्द्य मन्त्री पानीयसमर्पणादिमन्त्रज्ञः पानीयसमर्पणं च कृत्वा मुखार्चिः रसनारुचीरास्ये समुद्वास्य पिधानीयजलं दत्त्वा तदन्नं निर्माल्यभुक्सात् प्रकरोतु निर्माल्यभुजोऽधीनं कुर्यात् ॥ ११६ ॥

---

१. 'स' क. पाठः. २. 'णाद्यं कृ', ३. 'न्त्री ॥ उर्वी विशोध्य वितरेत् परमाय पुंसे गण्डूषदन्तपवनादियुतं क्रमेण । हस्तास्यमार्ष्टिमुखवासमुखोपहारान् देवं समर्च्य तमपूपमुखैर्धिनोतु ॥ एनं प्रसन्नं जलगन्धपुष्पैरभ्यर्च्य पुष्पाञ्जलिमादरेण । मन्त्रैर्मनीषी निगमागमाप्तैः कुर्वीत सर्वेश्वरतोषणाय ॥ गुरुभ्य इदमेवमादिपदपूर्वकेणाणुना करोतु कुसुमाञ्जलिं गुरुपितृस्वमात्रात्मनः । सहोदरकुटुम्बिनीतनयवंश्यसाध्यांस्तथा महीतलसमाश्रितांत्रिभुवनाश्रितांश्चोद्दिशन् ॥ प्रीणातुमन्त्रेण समर्प्य कर्म तज्जप्त्वा पदाब्जस्पृगणुं सहस्रशः । गुह्यातिगुह्येत्यणुना जपार्पणं समाचरेत् सादकमह्याग्रमूलके । इतः पूर्वं' ख. पाठः.

गण्डूषदन्तपवनादियुतं प्रदाय
हस्तास्यमार्ष्टिमुखवासमुखोपहारान् ।
देवं समर्च्य विनिवेद्य च लड्डुकाद्यं
वाद्यादिभिः प्रधिनुयाच्च नृपोपचारैः ॥ ११७ ॥

भूयः समर्च्य कुसुमाञ्जलिमिष्टमन्त्रैः
कृत्वा विधाय मनुवर्यसहस्रजापम् ।
गुह्यातिगुह्यमनुना प्रसमर्प्य भक्त्या
स्तुत्वा प्रदक्षिणविधिं प्रणतिं च कुर्यात् ॥ ११८ ॥

अथाराध्य तत्पादमूले समस्तं
सुधीरर्पयेत् सोदकं दक्षदोष्णा ।
इतःपूर्वमित्यादिना मांमदीयं
चपूर्वाणुनोंतत्सदित्यात्मना च ॥ ११९ ॥

---

**गण्डूषदन्तपवनादियुतं** गण्डूषदन्तधावनादिना[1] युतं यथा भवति तथा **हस्तास्यमार्ष्टिमुखवासमुखोपहारान्** हस्तमार्जनिकामास्यमार्जनिकां मुखवासादिकांश्चोपहारान् प्रदाय देवं समर्च्य लड्डुकाद्यं लड्डुकापूपादिकं विनिवेद्य वाद्यादिभिः वाद्यगाननृत्तादिभिः नृपोपचारैः राजोपचारैः प्रधिनुयात् प्रकर्षेण प्रीणयेत् ॥ ११७ ॥

**भूयः** समर्च्य इष्टमन्त्रैः ईप्सितैर्मन्त्रैः कुसुमाञ्जलिं कृत्वा तत्पादपद्मं स्पृशन् मनुवर्यसहस्रजापं मूलमन्त्रसहस्रावृत्तिजपं विधाय गुह्यातिगुह्यमनुना द्वादशे पटले वक्ष्यमाणेन जपं प्रसमर्प्य भक्त्या सह स्तुत्वा प्रदक्षिणविधिं प्रणतिं प्रणामं च कुर्यात् ॥ ११८ ॥

**अथाराध्य** तत्पादमूले सुधीः 'प्रीणातु भगवानि'त्यादिवक्ष्यमाणमन्त्रेण कर्मसमर्पणज्ञः सोदकं दक्षदोष्णा समस्तं कर्म समर्प्य पुनः इतःपूर्वमित्यादिना ब्रह्मार्पणमन्त्रेण मांमदीयंचपूर्वाणुना 'मां मदीयं चास्मत्स्वामिने नारायणाय समर्पयामी'त्यादिना च ओंतत्सदित्यात्मना 'ओं तत्सदि'ति मन्त्रेण च सर्वं समर्पयेत् । ब्रह्मार्पणमनुरपि द्वादशे पटले वक्ष्यते ॥ ११९ ॥

---

१. 'दियु' ख. पाठः.

तारसावित्रिकाम्नायाद्यणुभिः परितोष्य तम् ।
प्रसन्नाय प्रसन्नार्घ्यं प्रदद्यात् प्रश्रयान्वितः ॥ १२० ॥

देवपादसविधाहितशङ्ख-
प्रेङ्खदाहरतु वारि वरीयः ।
तत्करात्तकलशामृतरूपं
स्वीयपुण्यफलमित्यवगच्छन् ॥ १२१ ॥

अग्रे गुरून् हरनिशाचरदिक्प्रपन्नान्
देवासुरान् भुवि पितॄंश्च पुरो विभाव्य ।
उक्षेत् स्वदक्षिणशयार्पिततीर्थतोयैः
स्वं च स्वसाध्यमपरानपि भक्तिनम्रान् ॥ १२२ ॥

भूयो नत्वा मान इत्यादिनैन-
स्एनो ज्ञाताज्ञातजातं विशोध्य ।
तारेणाराध्यावसानीयमर्घ्यं
दत्त्वा देवं निष्कलीकृत्य रक्षेत् ॥ १२३ ॥

---

तारसावित्रिकाम्नायाद्यणुभिः प्रणवेन व्याहृतिभिः वेदादिमन्त्रैश्च तं परितोष्य प्रसन्नाय तस्मै प्रश्रयान्वितः विनयेन युक्तः प्रसन्नार्घ्यं प्रदद्यात् ॥ १२० ॥

देवपादसविधाहितशङ्खप्रेङ्खत् देवस्य पादसमीपे आहिते शङ्खे प्रेङ्खत् स्फुरत् वरीयः श्रेष्ठं वारि जलम् आहरतु स्वीकुर्यात् । कथंभूतमित्यत्राह — स्वीयपुण्यफलं स्वस्य पुण्यकर्मणः फलं तत्करात्तकलशामृतरूपं तस्य देवस्य करगृहीतकलशस्थामृतात्मकं तदित्यवगच्छन्नाहरत्वित्यर्थः ॥ १२१ ॥

ततः स्वदक्षिणशयार्पिततीर्थतोयैः स्वदक्षिणकरस्थैस्तीर्थजलैः अग्रे भुवि गुरून् विभाव्योक्षेत् । हरनिशाचरदिक्प्रपन्नान् देवासुरान् ईशदिक्प्राप्तान् देवान् निर्ऋतिदिक्प्राप्तानसुरांश्च पुरोभागे विभाव्य पितॄंश्च स्वं च स्वसाध्यं च भक्तिनम्रानपरांश्चोक्षेत् ॥ १२२ ॥

भूयो 'मा न एकस्मिन्नागसी'त्येनं [illegible] ज्ञाताज्ञातजातं ज्ञातेन जातमज्ञातेन जातं च एनः अपराधं विशो[illegible] तारेणाराध्यावसानीयमर्घ्यं दत्त्वा देवं निष्कलीकृत्य रक्षेत् ॥ १२३ ॥

---

१. 'द्भुजात्त' ख. पाठः. २. 'मध्ये गु' क. पाठः. ३. 'र्घ्यं द' ख. पाठः.

अथ तत्प्रसादकुसुमं शिरसि प्रणिधाय क्लृप्तपवनायमनः।
परिपूज्य तं हृदि कृताङ्गविधिः परिरक्ष्य तत्कृतमना विहरेत्॥
अथ द्वादशवर्णादिमन्त्रान्तरसमर्चने ।
न्यासावरणक्लृप्त्यादौ भिदामात्रं प्रदर्श्यते ॥ १२५॥
अङ्गुष्ठादितलान्तमर्कलिपिवर्णान् षट् करे दक्षिणे
षड् वामेऽपि कनिष्ठिकादितलनिष्ठं सर्गक्लृप्त्या ततः।
विन्यस्येद् द्विषडङ्गकान्यपि तथा पञ्चाङ्गकानि द्वयो-
रङ्गुष्ठादिकमङ्गुलीषु युगपत् प्रोक्तेति दोर्भावना॥ १२६॥
हरिलिपिमनुजाक्षराणि मौलौ
हरिमुखदिक्षु विलोचनद्वये च।

---

अथ तत्प्रसादकुसुमं गृहीत्वा शिरसि प्रणिधाय क्लृप्तपवनायमनः कृत-प्राणायामः कृताङ्गविधिश्च भूत्वा तं हृदि परिपूज्य मानसपूजां कृत्वा परि-रक्ष्य तत्कृतमनाः तन्मनस्को भूत्वा विहरेत् आत्मानं पृथक् कुर्यात्॥ १२४॥

एवं सप्तविधं पूजाविधानं सामान्येनोक्त्वा विष्ण्वादीनामुत्सवादौ कालत्रयपूजार्थं द्वादशाक्षरादिमन्त्रान्तरसमर्चने भेदमाह — अथेति । अथ द्वादशवर्णादिमन्त्रान्तरसमर्चने द्वादशाक्षरषडक्षरादिमन्त्रभेदानां समर्चने न्या-सावरणक्लृप्त्यादौ न्यासे आवरणक्लृप्तौ ध्यानादौ च भिदामात्रं प्रदर्श्यते ॥

अर्कलिपिवर्णान् द्वादशाक्षरमन्त्रस्याक्षरान् दक्षिणे करे अङ्गुष्ठादितलान्तं षट्, वामेऽपि करे कनिष्ठिकादितलनिष्ठं षट् च सर्गक्लृप्त्या च विन्यस्येत्। तदनुसारेण स्थितिसंहारौ च कुर्यात् । ततो द्विषडङ्गकानि द्वादशाङ्गान्यपि तथा सृष्टिवद् विन्यस्येत्। पञ्चाङ्गकानि द्वयोः करयोरङ्गुलीषु अङ्गुष्ठादितलान्तं युगपन्न्यस्येत् । इति दोर्भावना करभावना प्रोक्ता ॥ १२६ ॥

हरिलिपिमनुजाक्षराणि हरय आदित्याः तत्संख्या लिप्यो यस्य मनो-स्तज्जातानि द्वादशाक्षराणि मौलौ, हरिमुखदिक्षु इन्द्रादिदिक्षु, विलोचनद्वये

---

१. 'मे क' ख. पाठः,

वदनहृदयनाभिगुह्यजान्व-
ङ्घ्रियुजि च विन्यसतूदयक्रमेण ॥ १२७ ॥
चक्रं च शङ्खं च गदां च पद्मं चाबिभ्रतं शुभ्रतरावभासम् ।
स्फुरत्किरीटादियथार्हभूषं ध्यायेद्धरिं द्वादशवर्णरूपम् ॥
जितादिना प्रोक्तवदर्घ्यकाद्यं दत्त्वार्चयित्वा परिवारयागे ।
पूर्वादितोऽङ्गानि दलेषु शेषं गरुत्मदाद्यं प्रयजेद् यथोक्तम् ॥
अङ्गुष्ठादितलान्तिमं न्यसतु षड् वर्णान् करे दक्षिणे
वामे चापि तथाङ्गकान्यपि मनौ षड्वर्णके शार्ङ्गिणि ।
षड् वर्णान्यथ मौलिफालहृदये नाभ्यूरुपादद्वये
सृष्टौ स्यादितरद्वये तदुपपत्त्याङ्गान्यपि स्वास्पदे ॥ १३० ॥

---

युगपत्, वदनहृदयनाभिगुह्यजान्वङ्घ्रियुजि च उदयक्रमेण सृष्टिक्रमेण विन्यसतु । तदनुसारेण स्थितिसंहारावप्यूह्यौ । अत्र यन्नोच्यते तदष्टाक्षरविधानादवगन्तव्यम् ॥ १२७ ॥

ध्यानमाह — चक्रमिति । द्वादशवर्णरूपं द्वादशाक्षरमन्त्रमूर्तिरूपं हरिमेवं ध्यायेत् — चक्रं च शङ्खं च गदां च पद्मं च आबिभ्रतं धारयन्तं शुभ्रतरावभासं श्वेततरवर्णं स्फुरत्किरीटादियथार्हभूषम् अष्टाक्षरमन्त्रोक्तभूषणं च ॥ १२८ ॥

उपहारदानादौ विशेषमाह — जितादिनेति । जितादिना 'जितन्ते'न पूर्वप्रोक्तवदर्घ्यकाद्यं दत्त्वा तथार्चयित्वा परिवारयागे तु दलेषु द्वादशदलपद्मस्य दलेषु पूर्वादितो द्वादशाङ्गानि यजेत् । गरुत्मदाद्यं 'वैनतेयाय नमः' इत्याद्यं शेषं च यथोक्तं प्रयजेत् ॥ १२९ ॥

वैष्णवषडक्षरविधानमाह — अङ्गुष्ठादीति । शार्ङ्गिणि षड्वर्णके मनौ दक्षिणे वामे चापि करे अङ्गुष्ठादितलान्तिमं षड् वर्णान् न्यसतु । तथा तद्वद् अङ्गान्यपि न्यसतु । अथ मौलिफालहृदये मौलौ फाले हृदये च नाभ्यूरुपादद्वये नाभावूरुद्वये (पादद्वये) च षड् वर्णानि न्यसतु । इति सृष्टौ न्यासः स्यात् । इतरद्वये स्थितिसंहारयोः तदुपपत्त्या नाभ्यादिहृदयान्ता स्थितिः

शङ्खं सचक्रं सगदं सपद्मं
शार्ङ्गं सखड्गं सशरं सखेटम् ।
श्यामः षडात्माष्टभुजैर्दधानो
जिनार्णतोऽर्घ्याद्युपहृत्य पूज्यः ॥ १३१ ॥

वर्मान्तानि वृषादिदिक्षु विदिशास्वग्न्यादितोऽस्त्रं पुरो-
ऽक्ष्यन्त्यं दिक्षु विदिक्षु च क्रमवशान्मूर्तीश्च शक्तीरपि ।
शङ्खादीनि दिशासु कार्मुकमुखान्यस्त्राणि कोणेषु त-
स्याग्रे तार्क्ष्यमथो यथाविधि यजेदिन्द्रादिवज्रादिकम् ॥

विलोमाष्टमवर्गार्णैर्वासुदेवो विबिन्दुभिः ।
सङ्कर्षणश्च प्रद्युम्नश्चानिरुद्धश्च मूर्तयः ॥ १३३ ॥
द्राघितैर्हादिशान्तार्णैः शान्तिः श्रीश्च सरस्वती ।
रतिश्च सलवैर्युक्ताश्चतस्रो मूर्तिशक्तयः ॥ १३४ ॥

---

षडात्मा षडक्षरमूर्तिर्हरिः शङ्खं सचक्रं सगदं सपद्मं शार्ङ्गं सखड्गं सशरं सखेटं चाष्टभुजैर्दधानः श्यामश्च ध्येयः, जिनार्णतः गायत्र्या अर्घ्याद्युपहृत्य दत्त्वा पूज्यश्च ॥ १३१ ॥

वर्मान्तानि चत्वार्यङ्गानि वृषादिदिक्षु इन्द्रादिदिक्षु, अग्न्यादितो विदिशास्वस्त्रं च, पुरोभागे अन्त्यम् अन्तभवम् अक्षि नेत्रं च यजेत् । पुनर्दिक्षु मूर्तीः विदिक्षु शक्तीश्च क्रमवशादपि यजेत् । शङ्खादीनि चत्वारि दिशासु, कार्मुकमुखानि शार्ङ्गादीनि चत्वार्यस्त्राणि कोणेषु च, अथो तस्याग्रे तार्क्ष्यं गरुडं च यथाविधि इन्द्रवज्रादिकं च यजेत् ॥ १३२ ॥

मूर्तिशक्त्यादीनां पूजामन्त्रानाह — विलोमेति । विलोमाष्टमवर्गार्णैः अष्टमवर्गस्य प्रतिलोमाक्षरैः हसषश इत्येतैः विबिन्दुभिः बिन्दुरहितैर्बीजैर्युक्ताः वासुदेवः सङ्कर्षणश्च प्रद्युम्नश्चानिरुद्धश्च मूर्तयः । अथवा विलोमाष्टमवर्गार्णैः शादिवर्गमारभ्य विलोमाष्टमवर्गः स्वरवर्गः, तत्रत्यैः आर्णैरिति पदच्छेदः, अं-काराक्षरैः सह । 'अं वासुदेवाय नमः' 'आं सङ्कर्षणाय नमः' 'अं प्रद्युम्नाय नमः' 'अः अनिरुद्धाय नमः' इति ॥ १३३ ॥

द्राघितैः दीर्घयुक्तैः सलवैः बिन्दुसहितैः हादिशान्तार्णैः हकारादिशका-

---

१. 'रक्त्वा व.' क. पाठः, २. 'आ' ख. पाठः, ३. 'अ', ४. 'आं', ५. 'अ' क. पाठः,

**स्वाद्यर्णबीजैः सह शङ्खचक्रपद्मा गदा शार्ङ्गसखेटखड्गौ ।**
**शरो रलाभ्यामरिपद्ममिन्द्रवज्रादिकं वर्गमुखद्वितीयैः ॥**

**प्रासादमन्त्रे करयोरथेशाङ्गुष्ठादिक्लृप्त्या न्यसनं करोतु ।**
**ईशानमूर्धप्रमुखक्रमेण तत्सूत्रवक्त्रन्यसनं तनौ च ॥ १३६ ॥**

**शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीश्च दोर्भि-**
**र्बिभ्राणं देवदेवं दशभिरथ चतुर्भिस्तु वा दक्षिणाद्यैः ।**
**रुद्राक्षस्रक्कपाले त्रिशिखमपि सखट्वाङ्गकं चाध ऊर्ध्वं**
**ध्यायेत् प्रासादरूपं स्फटिकमणिनिभं पद्मसंस्थं प्रसन्नम् ॥**

---

रान्तैः प्रतिलोमाक्षरैर्युक्ताः शान्तिः श्रीः सरस्वती रतिश्च मूर्तिशक्तयः मूर्तीनां शक्तयश्चतस्रः स्युः ॥ १३४ ॥

**स्वाद्यर्णबीजैः** स्वस्वाद्यक्षरबीजैः सह शङ्खाद्याः । अरिपद्मं चक्रं पद्मं च रलाभ्यां रेफलकाराभ्यां सह । 'शं शङ्खाय नमः' 'रं चक्राय नमः' इत्याद्या मन्त्राः । वर्गमुखद्वितीयैः वर्गमुखैरकारादिभिः तद्द्वितीयैः आकारादिभिश्च सह इन्द्रवज्रादिकम् इन्द्रादिकं वज्रादिकं च स्यात् ॥ १३५ ॥

शिवस्य प्रासादमन्त्रविधाने विशेषमाह — **प्रासादमन्त्र** इति । अथ प्रासादमन्त्रे करयोरुभयोरपि ईशाङ्गुष्ठादिक्लृप्त्या ईशानादिक्रमेण अङ्गुष्ठादिक्रमेण च न्यसनं करोतु । तनौ शरीरे च ईशानमूर्धप्रमुखेण मन्त्रेण तत्सूत्रवक्त्रन्यसनं तेषां सूत्रन्यसनं वक्त्रन्यसनं च करोतु ॥ १३६ ॥

**प्रासादरूपं** देवदेवं देवानामपि देवमेवं ध्यायेत् — दशभिर्दोर्भिः शूलाही शूलं नागं च टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीः टङ्कं कुठारः घण्टा स्वयमेव असिः खड्गः सृणिरङ्कुशः कुलिशो वज्रः पाशाग्न्यभीतयः स्वयमेव एतानि बिभ्राणम्, अथवा दक्षिणाद्यैश्चतुर्भिर्दोर्भिरध ऊर्ध्वं च यथा तथा रुद्राक्षस्रक्कपाले त्रिशिखं शूलं सखट्वाङ्गकं खट्वाङ्गाभिधमायुधविशेषं च बिभ्राणं स्फटिकमणिनिभं श्वेतवर्णं पद्मसंस्थं प्रसन्नं च ॥ १३७ ॥

---

१. 'योः प्रथमेशानादिक्ल', २. 'क्रा' ख. पाठः. ३. 'न' ख. घ. पाठः.

ईशादिसूत्रवदनादिकविग्रहेज्यां
कृत्वाप्यसौम्ययमवासवधातृदिक्स्थैः ।
सद्यादिभिः प्रभिदुरां परिवारपूजां
पञ्चाक्षरोक्तविधिनात्र च सन्तनोतु ॥ १३८ ॥

पञ्चब्रह्मविधौ सुधीः करयुजीशानादिसूक्ताणुका-
नङ्गुष्ठादिकनिष्ठिकावधि तलान्तं षट् तदङ्गान्यपि ।
न्यस्येत् सूक्तमनून् ससूत्रमुखक्लृप्त्या विग्रहे तद्भवा-
स्त्रिंशत्सङ्ख्यकलास्तथाष्टसहिता मन्त्री तदङ्गान्यपि ॥ १३९ ॥

प्राग्वत् प्रार्चितपीठके समभिवाह्येशादिसूक्ताणुभिः
सद्याद्यैरभिवाहनाप्रभृतितन्मुद्राश्च कृत्वा क्रमात् ।

---

पुनः ईशादिसूत्रवदनादिकविग्रहेज्याम् ईशादिभिः[1] सूत्रवक्त्रक्रमेण विग्रहपूजां कृत्वा आप्यसौम्ययमवासवधातृदिक्स्थैः पश्चिमोत्तरदक्षिणपूर्वोपरिदिक्स्थतैः सद्यादिभिः प्रभिदुरां भेदयुक्तां परिवारपूजां पञ्चाक्षरोक्तविधिनात्र च सन्तनोतु ॥ १३८ ॥

अथ पञ्चब्रह्मविधानमाह — पञ्चेति । पञ्चब्रह्मविधौ सुधीः सामान्योक्तं विशेषोक्तं च ज्ञात्वा कर्तुं कुशलः करयुजि करद्वये अङ्गुष्ठादिकनिष्ठिकावधि ईशानादिसूक्ताणुकान् 'ईशानः सर्वविद्यानामि'त्यादिसूक्तमन्त्रान् न्यस्येत् । तथा षट् तदङ्गान्यपि तलान्तं न्यस्येत् । विग्रहे देहे ससूत्रमुखक्लृप्त्या सूत्रवक्त्रक्रमेण, सूक्तमनून् ईशानादिसूक्तमन्त्रान् तद्भवाः ईशानादिसूक्तभवाः अष्टसहितास्त्रिंशत्सङ्ख्याकाः[2] कलास्तदङ्गान्यपि च न्यस्येत् । मन्त्रीत्यनेन अधिवासपटलोक्ताष्टत्रिंशत्कलान्यासे द्वादशपटलोक्तशशिन्यादिशक्तियोगस्तदङ्गविधिश्च सूचितः ॥ १३९ ॥

पुनः प्राग्वत् प्रार्चितपीठके पञ्चाक्षरविधानवदार्चिते पीठे ईशादिसूक्ताणुभिः समभिवाह्य अभिवाहनाप्रभृतितन्मुद्राश्च सद्याद्यैः सूक्तैः क्रमात् कृत्वा प्रक्लृप्ततदणुन्यासेन प्रकर्षेण क्लृप्तैस्ततसूत्रवक्त्रादिभिः अष्टत्रिंशत्कला-

---

१. 'दीति सू' क. पाठः. २. 'ङ्ख्यकला' ख, घ. पाठः.

देवं भावयतु प्रक्लृप्ततदणुन्यासेन साङ्गीकृतं
साक्षस्रक्सकपालशूलविलसत्खट्वाङ्गराजद्भुजम् ॥ १४० ॥

ईशेनोपहृतीः प्रदाय मपरेण स्थाणुसंज्ञाणुना-
थेशानादिकपञ्चसूक्तमनुभिस्तत्सूत्रवक्त्रादिभिः ।
कृत्वा विग्रहपूजनं परिवृतावीशादिसूक्तैर्यजेत्
स्वस्वाशाधिगतैस्तदङ्गमनुभिर्विद्येश्वराद्यैरपि ॥ १४१ ॥

इति तन्त्रसमुच्चये श्रुतार्चाक्रमसिद्ध्यै रविजन्मसंप्रणीते ।
पटलः प्रतिपादितात्मदेवार्चनकर्मापि च सप्तमः समाप्तः ॥

इति तन्त्रसमुच्चये
सप्तमः पटलः ।

---

न्यासादिना च साङ्गीकृतं सकलीकृतं देवं भावयतु ध्यायेत् । कथंभूतं, साक्षस्रक्सकपालशूलविलसत्खट्वाङ्गराजद्भुजम् अधोभागे दक्षिणवामयोरक्षस्रजा कपालेन ऊर्ध्वभागे शूलखट्वाङ्गाभ्यां च शोभमानभुजं ध्यायेत् ॥ १४० ॥

पुनरीशेनोपहृतीः प्रदायाथ मपरेण प्रणवेन स्थाणुसंज्ञाणुना 'नमोऽस्तु स्थाण्वि'त्यादिना ईशानादिकपञ्चसूक्तमनुभिस्तत्सूत्रवक्त्रादिभिश्च विग्रहपूजनं कृत्वा परिवृतौ परिवारयागे स्वस्वाशाधिगतैः स्वस्वदिक्प्राप्तैरीशादिसूक्तैस्तदङ्गमनुभिरप्युक्तक्रमेण विद्येश्वराद्यैः, विद्येश्वरा अनन्तसूक्ष्मादयः आद्यशब्देन उमाचण्डेश्वरादयः इन्द्रादयो वज्रादयश्च विवक्षिताः, तैः सर्वैः सह यजेत् ॥ १४१ ॥

पटलं समापयति — इतीति । इति उक्तप्रकारेण तन्त्रसमुच्चये ग्रन्थे श्रुतार्चाक्रमसिद्ध्यै श्रुतस्यार्चाक्रमस्य स्थापनाय रविजन्मसंप्रणीते रविनाम्नः पुत्रेण नारायणाख्येन विरचिते तस्मिन् प्रतिपादितात्मदेवार्चनकर्मा उक्तमात्मनः साधकस्य देवस्य चार्चनकर्म यस्मिन् सोऽपि च सप्तमः पटलः समाप्तोऽभूत् ॥ १४२ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
सप्तमः पटलः ।

---

१. 'न' क. पाठः.

## अथाष्टमः पटलः ।

अथाभिधास्याम्यभिषेचनं विभो-
र्दिने तुरीये विहितं प्रतिष्ठितेः ।
निमित्तवित्ताद्युपपत्तिभेदितं
विशुद्धिसान्निध्यसमृद्धिकारकम् ॥ १ ॥

अत्राप्यङ्कुररोपणं स्वसमये कुर्वीत तत्त्वान्तिमान्
होमान् निष्कृतिवक्ष्यमाणविधिना चाथात्र पूर्वेऽहनि ।
नागेऽलिन्दभुवि प्रकल्प्य निजकुण्डं मण्डपे देशिकः
कुर्यान्मण्डपसंस्क्रियामपि घटीभ्रान्त्यन्तिमां पूर्ववत् ॥ २ ॥

---

एवं प्रतिष्ठितस्य देवस्यावश्यकर्तव्यमर्चनमुक्त्वा प्रतिष्ठायाश्चतुर्थदिवसे कर्तव्यस्य स्नानस्य विधिमाह — अथेति । अथ पूजायाः कथनानन्तरं विभोः देवस्याभिषेचनम् अभिधास्यामि वक्ष्यामि । तत् तु प्रतिष्ठितेः तुरीये दिने विहितम् । न केवलं चतुर्थदिवस एव तत् कर्तव्यं, विशेषतो विशुद्धिसान्निध्य-समृद्धिकारकं च अशुद्धिपरिहारार्थं सान्निध्यार्थं समृद्ध्यर्थं च साधनम् । तत्रापि निमित्तवित्ताद्युपपत्तिभेदितं निमित्तं हेतुः वित्तं धनम् आदिशब्देन देशकालादय उक्ताः तेषामुपपत्त्यां बहुधा भेदितं च ॥ १ ॥

अत्रापि, न केवलं प्रतिष्ठायामेव अत्र कलशेऽपि । स्वसमये स्वोक्तकाले अङ्कुररोपणं बीजावापं कुर्वीत । निष्कृतिवक्ष्यमाणविधिना प्रायश्चित्तपटले वक्ष्यमाणेन विधानेन तत्त्वान्तिमान् तत्त्वहोमपर्यन्तान् होमांश्च कुर्वीत । अथात्र कलशे कर्तव्ये पूर्वेऽहनि कलशस्नानात् पूर्वदिवसे । देशिकः मण्डपे कलशपूजार्थं कल्पिते मण्डपे अलिन्दभुवि वेदेर्बहिः नागे वायोः पूर्वभागे निजकुण्डम् आचार्यकुण्डं प्रकल्प्य कारयित्वा घटीभ्रान्त्यन्तिमां कुम्भेशपरिभ्रमणपर्यन्तां मण्डपसंस्क्रियां पूर्ववत् कुर्यात् ॥ २ ॥

---

१. 'कृत्वाथ त', २. 'निर्वर्त्य पू' ख. पाठः. ३. 'त्या च ब' ख., 'त्या चतुर्धा भे' छ. पाठः.

आस्फाल्य सूत्राणि घटानुरूपा-
ण्यत्राभिपूर्यद्रविणप्रमाणि ।
खण्डानि कृत्वाथ यथार्हमेता-
न्यापूरयेच्चित्रतरै रजोभिः ॥ ३ ॥

स्युर्द्रव्यसप्तदशके शरशैलनन्द-
वर्गा नवोत्तरशतद्विशते च कुम्भाः ।
सप्तादिविश्वचरमासमसङ्ख्यकेषु
सप्तोल्लसद्दशसु चापि पुटेषु कार्याः ॥ ४ ॥

त्र्येकाङ्गाब्धिनवाङ्कगोविकृतयस्तत्त्वेषुवर्गा बहि-
र्दिक्कोणेषु घटा हयादिकपुटक्षेत्रक्रमाच्छूलिनि ।

---

अथ अत्र मण्डपे घटानुरूपाणि घटसङ्ख्यासदृशानि सूत्राणि आस्फाल्य अभिपूर्यद्रविणप्रमाणि अभिपूर्यमाणानां द्रव्याणां प्रमाणयुक्तानि खण्डानि कृत्वा यथार्हमेतानि खण्डानि चित्रतरै रजोभिरापूरयेत् ॥ ३ ॥

अत्र कलशद्रव्याणां सप्तदशकं पञ्चविंशतिकमिति प्रायेण द्वौ मार्गौ । तत्र पूर्वं सप्तदशद्रव्ये कलशकॢप्तिमाह — स्युरिति । द्रव्यसप्तदशके द्रव्याणां सप्तदशके सप्तादिविश्वचरमासमसङ्ख्यकेषु सप्तसङ्ख्यामारभ्य विश्वशब्देन लक्षितां त्रयोदशसङ्ख्यामवधीकृत्य तन्मध्ये याः असमसंख्याः ओजसंख्याः सप्त नव एकादश त्रयोदश च, तत्संख्यकेषु पुटेषु । पुटो नाम सूत्रयोरन्तर्भाग उच्यते । सप्तोल्लसद्दशसु सप्तसंख्याभिरधिकेषु दशसु क्रमात् शरशैलनन्दवर्गाः शरशैलनन्दानां वर्गाः, शरवर्गः पञ्चविंशतिः, शैलवर्ग एकोनपञ्चाशत् नन्दवर्ग एकाशीतिः नवोत्तरशतद्विशते च नवोत्तरं शतं नवोत्तरं द्विशतं च । एवं पञ्चविधेषु पुटेषु पञ्चविधाः कुम्भाः कार्याः स्युः ॥ ४ ॥

तत्र शूलिनि शिवे हयादिकपुटक्षेत्रक्रमात्, हयाः सप्त, सप्तपुटादीनां क्षेत्राणां क्रमात् त्र्येकाङ्गाब्धिनवाङ्कगोविकृतयः तत्त्वेषुवर्गाश्च बहिर्दिक्कोणेषु

---

१. 'खण्डानि कुर्यादिह पञ्चवर्गद्रव्ये विधिं पूर्वमहं ब्रवीमि । सङ्ख्याः कुम्भगताः' ख. पाठः. २. 'भिः ॥ क्षेत्रे पञ्चपुटेऽम्बुजं नवपदैस्तत्त्वोन्मितैः केवलैर्द्रव्यैः स्यात् स्नपनेऽन्तरत्र नव तद्बाह्ये घटाः षोडश । वीथीः सप्तपुटेऽभितोऽब्जमधिका यावत् तु तत्क्षेत्रकं सृज्यं स्यादुभयत्र सप्तदशभिर्यन्तरालाष्टकम् ॥ स्यु' क. पाठः.

मध्ये पङ्कजकर्णिकादलगताः कुम्भा नव स्युः सदा
श्रीशे दिक्तिथयो बहिर्वसुशते शेषः समानक्रमः ॥ ५ ॥

सङ्ख्याः कुम्भगताः शराद्रिनववर्गाश्चाष्टयुक्तं तथा
षट्पञ्चाशदुपेतमेकशतमत्यष्ट्या शतद्वन्द्वकम् ।
लोकोपेतशतार्धसंयुतशतद्वन्द्वं त्रिशत्येकसं-
युक्ता पञ्चशती च पञ्चकृतिकद्रव्येषु साहस्रथपि ॥ ६ ॥

घटपुटपरिसङ्ख्याः पञ्च पूर्वं शिवादि-
त्रिसहितकृतिनिष्ठास्तत्परस्तात् क्रमेण ।

---

घटाः स्युः । तत्र सप्तपुटे बहिः त्रिकमेककं च । नवपुटे अङ्गान्यब्धयश्च, अ-ङ्गानि षट् अब्धयश्चत्वारः । एकादशपुटे नवाङ्काश्च, अङ्का नव । त्रयो-दशपुटे गावो विकृतयश्च गावो नव विकृतयः षोडश । सप्तदशपुटे तत्त्वेषुवर्गाः, तत्त्वानि पञ्चविंशतिः इषुवर्गश्च पञ्चविंशतिः । इति विभागः । मध्ये पङ्कजकर्णिकादलगताः पद्मस्य कर्णिकागता दलगताश्च सदा पञ्चस्वपि विभागेषु नव कुम्भाः स्युः । श्रीशे वसुशते, वसवोऽष्टौ, अष्टसहिते शते बहिः दिक्तिथयः, दिशो दश तिथयः पञ्चदश । शेषः वसुशतादन्यः समानक्रमः शिववदेव ॥ ५ ॥

पञ्चविंशतिद्रव्ये कलशक्लृप्तिमाह—संख्या इति । पञ्चकृतिकद्रव्येषु पञ्चानां कृतिर्वर्गः पञ्चविंशतिः तत्संख्येषु द्रव्येषु । शराद्रिनववर्गाः शराद्रिनवानां वर्गाः, शरवर्गः पञ्चविंशतिः अद्रिवर्गः एकोनपञ्चाशत् नववर्गः एकाशीतिः । अष्ट-युक्तमेकशतं, तथा षट्पञ्चाशदुपेतं चैकशतम्, अत्यष्ट्या सप्तदशकेन स-हितं शतद्वन्द्वकं शतद्वयं, लोकोपेतशतार्धसंयुतशतद्वन्द्वं लोकास्त्रयः तैः सहि-तेन शतार्धेन पञ्चाशता संयुतं शतद्वन्द्वं च, एकसंयुक्ता त्रिशती, तथा एक-संयुक्ता पञ्चशती, एकसंयुक्ता साहस्रचपि कुम्भगताः संख्याः स्युः ॥ ६ ॥

उक्तसंख्यानां कलशानां पुटक्लृप्तिं क्रमेणाह —घटपुटेति । घट-पुटपरिसंख्याः घटानां पुटगताः संख्याः पूर्वं पञ्च । तत्परस्तात् तदनन्तरं

---

१. 'कुम्भानां गिरिशोक्तती शरकृतिद्रव्येऽष्टयुक्तं' क. पाठः. २. 'तथा दशशती संख्याः सशुद्धोदके' ॥ क., 'तथा दशशती चोक्ता सुमत्यादिभिः ॥' ख. पाठः. ३. 'अत्र चैकादशादि', ४. 'ष्टाः संप्रदिष्टाः क' क. पाठः.

निखिलविषमसङ्ख्या विंशतिर्नन्दयुक्ता
तदनु नवसमेतास्त्रिंशदप्यागमोक्ताः ॥ ७ ॥
क्षेत्रे रुद्रपुटेऽत्र पञ्चकृतिकोष्ठैर्मध्यगैरम्बुजं
न्यस्यैतद्दलकर्णिकासु कलशान् वीथिं समन्तादपि।
तद्बाह्येऽनुदिशं द्विकं विरचयेत् कोणे चतुष्कं द्विकं
तत्राभ्यन्तरतोऽद्रिवर्गकलशे मार्ष्ट्वन्यकोष्ठानि च ॥ ८ ॥
क्षेत्रे त्रयोदशपुटे शरवर्गकोष्ठैः
पद्मं पुरोवदथ दिक्षु बहिस्त्रिकाणि।
कुर्याद् विदिक्षु नवकानि तदन्तराल-
भाञ्जि त्रिकाणि नववर्गघटाभिषेके ॥ ९ ॥

---

शिवादित्रिसहितकृतिनिष्ठाः शिवा एकादश तदादिः[2] कृतिर्विंशतिः त्रिसहिता कृतिः त्रयोविंशतिः तदवसानाः निखिलविषमसंख्याः सर्वा ओजसंख्याः। एकादश, त्रयोदश, पञ्चदश, सप्तदश, एकोनविंशतिः, एकविंशतिः त्रयोविंशतिश्चेत्यर्थः। नन्दयुक्ता नन्दा नव तैः सहिता विंशतिश्च, तदनु नवसमेतत्रिंशदपि एकोनचत्वारिंशदपि आगमोक्ताः आगमेषूक्ताः ॥ ७ ॥

तत्र पञ्चपुटे शुद्धोदकरहितत्वात् पञ्चविंशतिरेव कलशाः। तत्र खण्डविभागकल्पना न कार्येति तत् पृथक्कृत्य तदन्येषां खण्डविभागमाह — क्षेत्रे रुद्रपुट इत्यादिभिः। अद्रिवर्गकलशे एकोनपञ्चाशत्कलशे विधौ रुद्रपुटे एकादशपुटे क्षेत्रे अत्र एषु पदेषु मध्ये मध्यगैः पञ्चकृतिकोष्ठैः पञ्चविंशतिपदैरम्बुजं विरचयेत्। एतद्दलकर्णिकासु पद्मस्य कर्णिकायां दलेषु च नव कलशान् न्यस्य समन्ताद् वीथिमपि, तद्बाह्येऽनुदिशं दिशिदिशि द्विकं, कोणे चतुष्कं, तत्राभ्यन्तर... अन्तरालेषु द्विकं च विरचयेत्। अन्यकोष्ठानि एतद्रहितकोष्ठानि मार्ष्टु मार्जनं कुर्यात् ॥ ८ ॥

नववर्गघटाभिषेके एकाशीतिकलशे विधौ त्रयोदशपुटे क्षेत्रे शरवर्गकोष्ठैः पञ्चविंशतिपदैः पुरोवत् पूर्ववत् पद्मं कुर्यात्। अथ बहिर्दिक्षु त्रिकाणि, विदिक्षु नवकानि, तदन्तरालभाञ्जि दिक्कोणयोरन्तरालगतानि त्रिकाणि च कुर्यात् ॥ ९ ॥

---

१. 'मद्यैः ॥' क. पाठः. २. 'दि' ङ. पाठः.

नालीकं नवभिः पदैस्तिथिपुटे हीनं दलस्थैर्घटैः
पङ्क्त्या वीथिमथ त्रिकं दिशि विदिश्याकल्पयेदेककम् ।
पङ्क्त्या वीथिमथारचय्य नवकं दिश्यष्टकं कोणत-
श्चादध्यात् त्रिकमन्तरे च नवभिर्युक्ते घटानां शते ॥ १० ॥

क्षेत्रे सप्तोत्तरदशपुटे मध्यतो रन्ध्रकोष्ठैः
पद्मं षट्कं दिशि विदिशि कुर्याच्चतुष्कं च दैवे ।
मर्त्यांशे दिश्यथ नवकमत्राष्टकं कोणदेशे
सप्ताढ्यार्धाधिकशतघटे षट्कमप्यन्तराले ॥ ११ ॥

एकोनविंशतिपुटे नवकेन मध्ये
पाथोरुहं सुरनरांशगतानि भूयः ।
कुर्वीत चात्र नवकानि जिनप्रमाणि
सात्यष्टिकद्विशतसङ्ख्यघटाभिषेके ॥ १२ ॥

क्षेत्रे तत्रेध्मसंख्यापुटजुषि नवकेनाम्बुजं ब्रह्मभागे
दैवे दिक्कोणदेशे नवकमथ समर्त्यांशकोणे करोतु ।

---

घटानां नवभिर्युक्ते शते तिथिपुटे पञ्चदशपुटे क्षेत्रे मध्ये नवभिः पदैर्दलस्थैः घटैर्हीनं नालीकं पद्ममाकल्पयेत् । अथ पङ्क्त्या एकपङ्क्त्या वीथिं, ततो दिशि त्रिकं, विदिश्येककं चाकल्पयेत् । अथ पङ्क्त्या वीथिमारचय्य दिशि नवकं कोणतोऽष्टकं च अन्तरे अन्तराले त्रिकं चादध्यात् ॥ १० ॥

सप्ताढ्यार्धाधिकशतघटे सप्ताधिकपञ्चाशत्संयुतशतकलशे सप्तोत्तरदशपुटे क्षेत्रे मध्यतो रन्ध्रकोष्ठैः नवपदैः पद्मं कुर्यात् । दैवे मध्यादारभ्य ब्राह्मदैविकमानुषपैशाचशब्दा आवरणत्वेन व्यपदेश्या यतोऽतो दैविके दिशि षट्कं, विदिशि चतुष्कं च कुर्यात् । अथ मर्त्यांशे दिशि नवकम्, अत्र कोणदेशे अष्टकम्, अन्तराले षट्कं च ॥ ११ ॥

सात्यष्टिकद्विशतसंख्यघटाभिषेके सप्तदशाधिकद्विशतकलशाभिषेके एकोनविंशतिपुटे मध्ये नवकेन पाथोरुहं पद्मं, भूयः सुरनरांशगतानि दैविकमानुषगतानि जिनप्रमाणि, जिनाश्चतुर्विंशतिः, तत्संख्यानि नवकानि कुर्वीत च ॥ १२ ॥

त्रिपञ्चाशदुपगतशतद्वन्द्वकुम्भाभिषेके त्रिपञ्चाशत्सहितशतद्वयकलश-

---

१. 'षट्पञ्चाशद्युतशत' ख. पाठः.

कर्तव्यं मर्त्यभागे दिशि रविघटवत् क्षेत्रमत्रान्तराले-
ऽप्येवं कुर्यात् त्रिपञ्चाशदुपगतशतद्वन्द्वकुम्भाभिषेके ॥१३॥

क्षेत्रे तत्र त्रयोविंशतिपुटजुषि मध्येऽम्बुजं पञ्चकृत्या
कोष्ठानां दैविके स्याद् दिशि दशकमतः कोणदेशे त्रिकं च ।
दिग्देशे तत्त्वसंख्यं तदनु दशकमभ्यन्तरे कोणदेशे
कर्तव्यं सप्तयुक्तं दशकमपि बहिः स्याद् घटानां त्रिशत्याम् ॥

त्रिंशत्सूत्रयुते घटीशरशते क्षेत्रे विधायाभितो
वीथीः पञ्चपुटान्तरेऽभिकृतिकोष्ठैर्मध्यतश्चाम्बुजम् ।
दैवे दिग्विदिशासु सप्तदशसंख्यातान् न्यसेन्मानुषे
दिक्कोणान्तरसंस्थितानपि घटांस्तत्त्वाष्टितत्त्वप्रमान् ॥ १५ ॥

---

स्नानविधौ तत्र इध्मसंख्यापुटजुषि, इध्माः एकविंशतिः, एकविंशतिपुट-
भवे क्षेत्रे ब्रह्मभागे नवकेनाम्बुजं, दैवे दिक्कोणदेशे समर्त्यांशकोणे दैविक-
दिक्षु विदिक्षु मानुषकोणेषु च नवकं करोतु । मर्त्यभागे दिशि रविघटवत्
द्वादशकलशयुतं[2] क्षेत्रं कर्तव्यम् । अत्र मानुषे अन्तरालेऽपि एवं रविघटवत्
क्षेत्रं कुर्यात् ॥ १२ ॥

**पुनर्घटानां** त्रिशत्यां त्रयोविंशतिपुटजुषि क्षेत्रे मध्ये कोष्ठानां पञ्च-
कृत्या पञ्चविंशत्याम्बुजं स्यात् । दैविके दिशि दशकम्, अतः अतोऽस्मिन्
कोणदेशे त्रिकं च, बहिर्दिग्देशे तत्त्वसंख्यं पञ्चविंशतिकं स्यात् । तदनु अभ्य-
न्तरे अन्तराले दशकं, कोणदेशे सप्तयुक्तं दशकमपि कर्तव्यं स्यात् ॥ १४ ॥

**ततो** घटीशरशते घटानां पञ्चशतस्थाने त्रिंशत्सूत्रयुते एकोनत्रिं-
शत्पुटे क्षेत्रे अभितः आयामतो विस्तारतश्च पञ्चपुटान्तरे वीथीर्विधाय
मध्यतः अभिकृतिकोष्ठैः पञ्चविंशतिपदैरम्बुजं, दैवे दिग्विदिशासु सप्तदशसं-
ख्यातांश्च न्यसेत् । मानुषे दिक्कोणान्तरसंस्थितानपि तत्त्वाष्टितत्त्वप्रभान् पञ्च-
विंशतिषोडशपञ्चविंशतिसंख्यान् घटान् क्रमान्न्यसेत् ॥ १५ ॥

---

१. 'गैरम्बु', २. 'क्तं' क. पाठः.

विश्वघ्नत्रिपुटे घटीदशशते खण्डेषु संवर्गित-
क्ष्माभृत्कोष्ठयुतेषु मध्यजवकैः पद्मं नृदेवांशयोः ।
ब्राह्मे तत्त्वपदाब्जशेषितपदान्यायोज्य वीथ्यां घटान्
न्यस्येत् पद्मपदेषु मानुषदिगब्जाशापलाशेष्वपि ॥ १६ ॥

एतेष्वन्यतमं प्रगृह्य कलशक्षेत्रं यथार्हं सुधी-
द्रोणाद्युन्मितशालितण्डुलतिलैः पीठं ससिद्धार्थकैः ।
वासोभ्यन्तरितैः करोतु कुशकूर्चान्तैः पदे ब्राह्मके
तद्वद् व्रीहिचयाग्रदर्भयुगलैः शेषेष्वशेषेष्वपि ॥ १७ ॥

---

पुनर्घटीदशशते घटानां सहस्रे स्नाने विश्वघ्नत्रिपुटे, विश्वे त्रयोदश, तैस्त्रिगुणिते एकोनचत्वारिंशत्पुटे सप्तसप्तपुटान्तरे वीथीः कृत्वा संवर्गितक्ष्माभृत्कोष्ठयुतेषु, क्ष्माभृतः सप्त, स्वेनैव गुणितैः सप्तभिः कोष्ठैः युतेषु एकोनपञ्चाशत्कोष्ठयुतेषु खण्डेष्वित्यर्थः । तत्र मध्यनवकैः मध्यगतैर्नवकैः नृदेवांशयोः मानुषदैविकयोः पद्मं, जातावेकवचनं, पद्मानि कुर्यात् । ब्राह्मे तु तत्त्वपदाब्जशेषितपदानि पञ्चविंशतिपदैरम्बुजं कृत्वा शेषितानि पदानि वीथ्यामायोज्य पद्मपदेषु पञ्चविंशतिपद्मेषु तत्परितो गतेषु पदेषु च मानुषदिगब्जाशापलाशेष्वपि मानुषावरणस्य दिग्भवानां पद्मानां चतुर्षु चतुर्षु दिग्दलेष्वपि घटान् न्यस्येत् ॥ १६ ॥

सुधीः वित्तदेशकालादिविशेषज्ञः साधकः एतेषु उक्तेष्वन्यतमं किञ्चन कलशक्षेत्रं यथार्हं यथायोग्यं प्रगृह्य गृहीत्वा ब्राह्मके पदे स्थाने द्रोणाद्युन्मितशालितण्डुलतिलैः द्रोणतदर्धतत्पादतदर्धपादप्रमाणोन्मितैः शालिभिस्तण्डुलैस्तिलैः ससिद्धार्थकैस्तैः वासोभ्यन्तरितैः वस्त्रान्तकुशकूर्चान्तैरेतैः पीठं करोतु शेषेष्वशेषेष्वपि पदेषु तद्वदेवादरेण व्रीहिचयाग्रदर्भयुगलैः व्रीहिपुञ्जैरग्रदर्भाणां युगलैश्च पीठं करोतु ॥ १७॥

---

१. 'दलेषु', २. 'दिक्कमलदिक्पत्रेषु चावावृतौ ॥', ३. 'कल्प्य क' क. पाठः. ४. 'स्वशक्तिक्षमं द्रोणव्रीहितदर्धतण्ड' ख. पाठ. ५. 'ब्जं कृ' क. पाठः. ६. 'शार्मा. क्षे' ख. घ. पाठः.

विन्यस्यैषु हिरण्मयान् रजतजांस्ताम्रोद्भवान् मार्तिकान्
कुम्भान् वाङ्कुरपालिकादि परितः पुष्पादिकं दक्षिणे ।
उत्पूतं जलमन्यतोऽथ विधिवत् स्नानादिकृत् स्वासने
स्वासीनः प्रकरोतु वायुयमनाद्यात्मार्चनान्तं गुरुः ॥ १८ ॥

इष्ट्वा गुरून् गणपतिं च यजेत पीठं
शय्योक्तवत् प्रकृतियागविराममत्र ।
तत्त्वान्यपीह कतिचित् प्रकृतेरधस्ता-
दर्च्यान्युशन्ति कलयेदथ पद्ममुद्राम् ॥ १९ ॥

अस्त्रेणासिच्य तोयैः कलयतु कवचेन त्रिसूत्रेण कुम्भं
मूलेनालिप्य गन्धैर्मचरममनुना धूपयेत् साधु धूपैः ।

---

एषु[1] पीठेषु हिरण्मयान् वा रजतजान् वा ताम्रोद्भवान् वा मार्त्तिकान् वा कुम्भान् विन्यस्य ब्रह्मकलशस्य परितोऽङ्कुरपालिकादि, आदिशब्दात् प्रदीपादिकं च, दक्षिणे पुष्पादिकं पुष्पगन्धाक्षतादिकम् अन्यतः उत्तरभागे उत्पूतं जलं च विन्यस्याथ गुरुः विधिवद् मन्त्रकल्पोक्तक्रमेण स्नानादिकृद् ब्रह्मकुम्भाग्रतः स्वे विष्टरे स्वासीनः सुखेनोपविश्य वायुयमनाद्यात्मार्चनान्तं गुरुगणपतिवन्दनादि स्वास्त्रेण तालत्रयदिग्बन्धाग्निप्राकारान् विधाय स्वस्य तत्त्वसंहारादिशोषणादितत्त्वसृष्टिलिपिप्राणायामादिलिपिन्यासादिकमधिवासोक्तविधिना विधाय मूलप्राणायामादितन्न्यासशङ्खपूरणात्माराधनपर्यन्तं कर्म पूजापटलोक्तविधिना प्रकरोतु ॥ १८ ॥

ततो गुरून् गणपतिं चेष्ट्वा प्रकृतियागविरामं प्रकृत्यावाहनार्चनान्तं पीठं शय्योक्तवत् शय्यापूजोक्तप्रकारेण यजेत । अत्र कलशपूजायां कतिचिद् देशिकाः प्रकृतेरधस्तात् प्रकृतेः पूर्वं तत्त्वान्यप्यर्च्यानि उशन्ति इच्छन्ति । अथ प्रकृतियागावसाने पद्ममुद्रां कलयेत् ॥ १९ ॥

अथास्त्रेण तोयैः कुम्भमासिच्य कवचेन त्रिसूत्रेण तं कलयतु । मूलेन गन्धैरालिप्य मचरममनुना तारेण धूपैः साधु अन्तर्बहिश्च धूपयेत् । पश्चात्

---

1. 'षु तु पी' क. पाठः.

पश्चात् तं न्यग्बिलं[1] विन्यसतु मपरतः क्ष्मासपीठे यमाद्यै-
र्बीजैः[2] शोषादिरन्ध्रीकरणसमवसानां विशुद्धिं विदध्यात् ॥
आद्येन न्यसतु स्वतत्त्वमनुना दर्भान् द्वितीयेन ग[3]-
न्धाद्भिः प्रोक्षतु मध्यमेन कलशे तत्राक्षतैः प्रोत्किरेत् ।
मूलेन प्रयजेज्जलादिभिरुपान्त्येनैनमुत्तानये-
दुन्नीयाञ्चि[4]तविष्टरे स्वमनुनिष्ठेनान्तिमेन न्यसेत् ॥ २१ ॥
संप्रोक्ष्य प्रणवेन तद्घटपुटे मूलाम्बुजे पावकी-
र्मध्याब्जे मिहिरोद्भवा विधुभवाश्चोर्ध्वारविन्दे कलाः ।
विन्यस्यर्क्सहितैः समष्टिमनुभिः संव्याप्य ताश्चार्चयेत्
पङ्क्तिद्वादशषोडशच्छदगता भूयः प्रसूनाक्षतैः ॥ २२ ॥

---

क्ष्मासपीठे तं कुम्भं निजमनुना न्यग्बिलम् अधोमुखं न्यसतु । पुनः यमाद्यैः यं रं वं लं हं इति बीजैः शोषादिरन्ध्रीकरणसमवसानां शोषणदहनप्लावनकाठिन्यसुषिरीकरणस्वरूपां विशुद्धिं विशेषशुद्धिं विदध्यात् ॥ २० ॥

तत्र कलशे आद्येन पञ्चतत्त्वेष्वाद्येन स्वतत्त्वमनुना दर्भा[6]न् न्यसतु । द्वितीयेन[7] गन्धाद्भिः प्रोक्षतु । मध्यमेनाक्षतैः प्रोत्किरेत् । पुनर्मूलेन जलादिभिरुपहारैः प्रयजेत् । उपान्त्येन चतुर्थेन एनं कुम्भमुत्तानयेत् । उन्नीय ऊर्ध्वं नीत्वा अञ्चितविष्टरे पूजिते पीठे स्वमनुनिष्ठेन स्वमूलमन्त्रान्तेन अन्तिमेन स्वतत्त्वमनुना न्यसेत् ॥ २१ ॥

तद्घटपुटे तस्य कुम्भस्यान्तर्भागे प्रणवेन संप्रोक्ष्य तस्य स्थानत्रये पद्मत्रयं संचिन्त्य मूलाम्बुजे मूलाधारस्थपद्मे पावकीः पावकोद्भवा वह्निकलाः मध्याब्जे मिहिरोद्भवाः सूर्यकलाः ऊर्ध्वारविन्दे विधुभवाः सोमकलाश्च विन्यस्य ऋक्सहितैः समष्टिमनुभिः तत्तदृग्भिस्तत्तत्समष्टिमन्त्रैश्च तत्र तत्रसंव्याप्य भूयः पङ्क्तिद्वादशषोडशच्छदगताः दशद्वादशषोडशदलगताः ताः कलाः प्रसूनाक्षतैरन्यैश्चोपहारैरर्चयेत् ॥ २२ ॥

---

१. 'मूलेन न्यग्बिलं तं न्यसतु सुसहिते योगपीठे' ख. पाठः. २. 'शोषादीनि क्रमेण प्रचरतु सुषिरीकारनिष्ठानि विद्वान् ॥' क. पाठः. ३. 'तं गन्धैरुक्षतु मध्यमेन विकिरेत् तस्मिञ्छुभैरक्षतैः । मू' ख. पाठः. ४. 'चिं' इति मूलकोशपाठः, ५. 'स्य', ६. 'र्भं' क. ख. घ. पाठः. ७. 'ये द्वितीयेन' ख., 'ये ग' घ. ङ. पाठः.

कुम्भावाहनमादधीत चतुरर्णार्कोणुना तन्मुखे
दिङ्मध्येषु निवेश्य बैन्दवकला ह्रामादिकाङ्गान्वितम् ।
तन्मन्त्रेण यजेज्जिनार्णजनितं संपातमापातये-
न्मुद्रां कुम्भमयीं प्रदर्श्य जगदण्डाकारमेनं स्मरेत् ॥ २३ ॥
न्यस्येत् तात्त्विकसंख्यदर्भकृतसन्दर्भं विराड्विग्रहे
कुम्भेऽस्मिन् प्रणवेन कूर्चमथ चार्हेत् तत् सुषुम्नात्मकम् ।
तन्मूले न्यसतु स्वकं सुमहितं[2] द्रव्यं सुवर्णाश्मवत्
तज्जीवात्ममयं निजार्हमनुना मन्त्री ततश्चार्चयेत् ॥ २४ ॥
दोष्णा कुम्भमुखं पिधाय ससुधाबीजेन तच्चेतना-
मुन्नीयोपरिपद्मसद्मपरमात्मैक्यं प्रणीयादिना ।

पुनः चतुरर्णार्कोणुना 'ओं ह्रीं[3] हंसः' इत्यनेन सौरचतुरक्षरेण कुम्भावाहनं कुम्भदेवतावाहनमादधीत । तन्मुखे कुम्भमुखे दिङ्मध्येषु, बिन्दुकलाश्चतस्रश्चेच्चतसृणां दिशां मध्येषु पञ्च चेच्चतसृषु दिक्षु मध्ये च, वक्ष्यमाणा बैन्दवकला निवेश्य न्यस्य ह्रामादिकाङ्गान्वितं 'ह्रां हृदयाय नमः' इत्यादिभिरङ्गानि न्यस्य तैः समन्वितं तन्मन्त्रेण चतुरक्षरेण यजेत् । जिनार्णजनितं स्वस्वगायत्र्याज्यहोमसम्भूतं सम्पातम् आपातयेत् कुम्भे संस्पृशेत् । पुनः कुम्भमयीं मुद्रां प्रदर्श्य एनं कुम्भं जगदण्डाकारं ब्रह्माण्डाकारं स्मरेत् ॥ २३ ॥

विराड्विग्रहे विराडात्मकविग्रहे कुम्भेऽस्मिन् तात्त्विकसंख्यदर्भकृतसन्दर्भं पञ्चविंशत्या दर्भैः कृतविरचनं कूर्चं प्रणवेन न्यस्येत् । अथ कुम्भविग्रहस्य देवस्य सुषुम्नात्मकं तत् कूर्चं तेनैव प्रणवेन चार्हेत् पूजयेत् । तन्मूले तस्य मूलाधारे । स्वकं स्वीयं सुवर्णाश्मवत् सुवर्णेन रत्नैश्च युतं सुमहितं पूजितं च द्रव्यं न्यसतु । ततो मन्त्री द्रव्यदेवतामन्त्राणामैक्यज्ञः तज्जीवात्ममयं तस्य जीवात्मकस्वरूपं तद्द्रव्यं निजार्हमनुना द्रव्यस्य देवतामन्त्रेणार्चयेच्च ॥ २४ ॥

पुनः ससुधाबीजेन अमृतबीजयुक्तेन दोष्णा वामकरेणेतरेण च कुम्भमुखं पिधाय आच्छाद्य तच्चेतनामुन्नीयोर्ध्वं नीत्वा उपरिपद्मसद्मपरमा-

१. 'कल्पकथितं', २. 'समर्चयतु चात्माष्टाक्षरेणाणुना' इति मूलकोशपाठः।
३. 'ह्रीं द' ख. छ. पाठः.

**क्षाद्यान्ताक्षरजातमादिकृततारं शीर्षनिष्ठं जपन्**
**मन्त्री तत्परिपातुकामृतरसैः कुम्भं धियापूरयेत् ॥ २५ ॥**

**उत्पूयोदगुपाहितादुदितमन्त्रेज्याजपोपस्कृता-**
**च्छङ्खे वारुणवारिणः समवदायाभ्यर्च्य तेनाम्भसा ।**
**कुम्भं प्रोक्तमनुं जपन् समभिपूर्योर्ध्वार्धमप्क्षेपत-**
**श्चास्मिन्नक्षरपुष्करं परियजेदावाह्यमूर्त्याश्रयम् ॥ २६ ॥**

**मूर्त्तिः शिफानालसरांसि कण्टकं**
**रन्ध्रं तथोपर्युपरि क्षपूर्वकैः ।**

---

त्मैक्यं तस्य द्वादशान्तस्थपद्मगृहस्थितेन परमात्मनैक्यम् आदिना प्रणवेन प्रणीय आदिकृततारम् आदौ कृतेन तारेण युतं शीर्षनिष्ठं स्वाहाकारान्तं क्षाद्यान्ताक्षरजातं क्षकाराद्यकारान्तमक्षरसमूहं लिपिप्रतिलोमम् 'ओं क्षं स्वाहा' 'ओं ळं स्वाहा' इत्यादि पुनरवसाने शीर्षनिष्ठमित्यनेन शिरोमन्त्रं च जपन् मन्त्री तत्परिपातुकामृतरसैः तस्मात् परमात्मनः पतनशीलैरमृतरसैर्धिया कुम्भमापूरयेत् । मन्त्रीति लिपिप्रतिलोमाक्षरमन्त्राणाममृतबिन्दुरूपेण ध्यानमुक्तम् ॥ २५ ॥

ततः उत्पूय गालयित्वा उदगुपाहितात् उदग्भागे स्थापितात् उदितमन्त्रेज्याजपोपस्कृतात् पीठपूजानन्तरं तीर्थे वरुणं देवं चावाह्य तत्पूजया पञ्चवारुणादिमूलमन्त्रजपेन च संस्कृतात् वारुणवारिणः वरुणदेवत्याज्जलात् शङ्खे समवदाय आहृत्य मूलेनाभ्यर्च्य तेनाम्भसा प्रोक्तमनुं तारलिपिप्रतिलोमशिरोमन्त्रान् जपन् कुम्भमापूर्य अप्क्षेपतश्च वारुणपात्रे शिष्टैर्जलैश्च ऊर्ध्वार्धम् ऊर्ध्वार्धपर्यन्तं च समभिपूर्य अस्मिन् कलशे आवाह्यमूर्त्याश्रयम् आवाहनयोग्याया मूर्तेराश्रयभूतं अक्षरपुष्करं लिपिपङ्कजं परियजेत् । अत्रावाह्यमूर्त्याश्रयमक्षरपुष्करं परियजेदित्यनेन वाक्येन मूर्त्याश्रयमावाह्य मूर्त्यावाहनानन्तरं पुनरक्षरपुष्करं परियजेदिति केषाञ्चित् पक्षे क्रमभेदः सूचितः ॥ २६ ॥

मूर्तिः शिफेत्यादिभिश्चतुर्भिः श्लोकैर्लिपिपङ्कजपूजां ब्रूते— **क्षपूर्वकैः** क्ष ळ ह स ष श इत्येतैर्बीजैः सह मूर्तिः शिफानालसरांसि कण्टकं रन्ध्रं चोपर्युपरि स्युः । 'ओं क्षं नमः पराय मूर्त्यात्मने नमः', 'ओं ळं नमः पराय

---

१. 'स्त' क. पाठः.

**सान्तस्थधर्मादिपदप्रभेदिता-**
**ग्नेयादिकग्रन्थिगणः स्वगोचरे ॥ २७ ॥**
**अधर्मपूर्वान्वितपूर्वपूर्वाः**
**स्युर्ग्रन्थयो दिक्षु नपुंसकार्णैः ।**
**पूर्वादिपत्राण्यपि कादिभान्तै-**
**स्त्रिभिस्त्रिभिर्दिक्षु मकर्णिकान्तः ॥ २८ ॥**
**द्वाभ्यां द्वाभ्यां सर्गबिन्द्वन्विताभ्या-**
**मज्भ्यां पूर्वाद्यादिकाः केसराश्च ।**

---

शिफात्मने नमः' इत्यादयो मन्त्राः । सान्तस्थधर्मादिपदप्रभेदिताग्नेयादिकग्रन्थिगणः अन्तस्थैर्यरलवैः सह धर्मादिपदैः धर्मज्ञानवैराग्यैश्वर्यैश्च प्रभेदितः आग्नेयादिको ग्रन्थिगणः ग्रन्थीनां समूहः स्वगोचरे स्वस्वस्थाने आग्नेयादिकोणेषु । 'ओं यं नमः पराय धर्मायाग्नेयग्रन्थ्यात्मने नमः' इत्यादयो मन्त्राः ॥ २७ ॥

**नपुंसकार्णैः** ऋ ॠ ऌ ॡ इत्येतैः सह अधर्मपूर्वान्वितपूर्वपूर्वाः अधर्मपूर्वैरधर्मादिभिः सह पूर्वपूर्वाः पूर्वादयो ग्रन्थयो दिक्षु । 'ओं ऋ नमः परायाधर्माय पूर्वग्रन्थ्यात्मने नमः' इत्यादयो मन्त्राः । कादिभान्तैः कं खं गं इत्यादिभिः फं बं भं इत्यन्तैः त्रिभिस्त्रिभिः सह पूर्वादिपत्राणि पूर्वादिष्वष्टदिक्षु स्युः । 'ओं कं खं गं नमः पराय पूर्वपत्रात्मने नमः', 'ओं घं ङं चं नमः पराय आग्नेयपत्रात्मने नमः' इत्यादयो मन्त्राः । मकर्णिका अन्तः मकारसहिता कर्णिकान्तर्भागे । 'ओं मं नमः पराय कर्णिकात्मने नमः' इति मन्त्रः ॥ २८ ॥

**सर्गबिन्द्वन्विताभ्यां** क्रमाद् विसर्गेण बिन्दुना च युक्ताभ्यां द्वाभ्यां द्वाभ्यामज्भ्यां सह पूर्वाद्यादिकाः पूर्वादिशब्दा आदिभूताः केसराश्च स्वस्वदिक्षु स्युः । 'ओं अः आं नमः पराय पूर्वकेसरात्मने नमः', 'ओं इः ईं नमः

---

१ 'स्वगाय' क ख. ग. पाठः

तारांशाद्यान्यात्मविद्यापरात्म-
तत्त्वानीहोपर्युपर्यास्थितानि ॥ २९ ॥

क्रमेण सहशक्तितारसहिताः समर्च्यास्ततः
सुधीभिरिह बिन्दुनादयुतशक्तिशान्ता अपि ।
सबिन्दुनिजबीजनत्युपरिसत्परायाक्षरं
विरामहृदयात्मनेपदमुदीर्णमर्णाम्बुजम् ॥ ३० ॥

तद्देवतानामविभिन्नङेन्तनत्यन्तमूर्त्यक्षरतोऽत्र मूर्तिम् ।
आवाह्य साङ्गीकरणार्चनान्ते तस्यां कलावाहनमादधीत ॥

परायाग्नेयकेसरात्मने नमः' इत्यादयो मन्त्राः । तारांशाद्यानि अं उं मं इ-
त्याद्यानि आत्मविद्यापरात्मतत्त्वानि आत्मतत्त्वं विद्यातत्त्वं परात्मतत्त्वं च
इह पद्मे[2] उपर्युपरि आस्थितानि । 'अं नमः परायात्मतत्त्वात्मने नमः'
इत्यादयो मन्त्राः ॥ २९ ॥

ततः इह त्रितत्त्वानामुपरि सुधीभिः तत्तत्पूजायां तत्तत्स्थाने तत्त-
न्मन्त्रात्मतया पद्मस्य तत्तदवयवोद्भवध्यानकुशलैः सहशक्तितारसहिताः सं हं
ह्रीं ओं इत्येतैः सहिताः क्रमेण बिन्दुनादयुतशक्तिशान्ता अपि समर्च्याः
स्युः । 'ओं सं नमः पराय बिन्द्वात्मने नमः', 'ओं हं नमः पराय नादात्मने
नमः', 'ओं ह्रीं नमः पराय शक्त्यात्मने नमः', 'ओं ओं नमः पराय शा-
न्तात्मने नमः' इति मन्त्राः । सबिन्दुनिजबीजनत्युपरिसत्[3]परायाक्षरं बिन्दुस-
हितानां निजनिजबीजानां नतीनां चोपरि सद्भिः परायेत्यक्षरैर्युतं विराम-
हृदयात्मनेपदं विरामेऽवसाने हृदयेन नमसा युक्तेनात्मने इति पदेन युक्तम्
अर्णाम्बुजं लिपिपङ्कजम् उदीर्णम् उक्तम् ॥ ३० ॥

अथ मूर्त्यावाहनमाह — तद्देवतेति । अत्र लिपिमये पद्मे तद्देवता-
नामविभिन्नङेन्तनत्यन्तमूर्त्यक्षरतः तत्तद्विष्ण्वादिदेवतानां नामयुक्तेन चतुर्थ्ये-
कवचनान्तेन नमोन्तेन च मूर्तिशब्देन 'ओं विष्णुमूर्तये नमः' इत्यादिना
मूर्तिमावाह्य साङ्गीकरणार्चनान्ते सकलीकरणमर्चनं[4] च कृत्वा तस्यां मूर्तौ क-
लावाहनमादधीत ॥ ३१ ॥

१. 'ष' ख. पाठः. २. 'द्मे । इत्युप' क. ख. पाठः. ३. 'ष' क. ख. घ. ङ. पाठः. ४. 'नं' क. पाठः.

आदाय शङ्खे सलिलं पुरोव-
दृधृदाष्टगन्धं प्रविलोड्य तस्मिन् ।
इष्ट्वादिना व्यस्तसमस्तरूपे-
णावाहयेत् तत्र कलाकलापम् ॥ ३२ ॥

कलाः कार्शानव्यो[1] दश रविभवाः स्यू रविमिता
निशेशोद्भूताः षोडश दशदशोमाक्षरभवाः ।
चतस्रो बिन्दूत्थाः श्रुतिकृतिमिता नादजनिता
जगत्संख्याः शक्तेः करपरिमिते शान्तजनिते ॥ ३३ ॥

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ॥ ३४ ॥

तपनी तापनी धूम्रा मरीचिर्ज्वालिनी[2] रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी[3] क्षमा ॥ ३५ ॥

---

कलावाहनरीतिमाह—आदायेति । पुरोवत् पूरणारम्भवत् शङ्खे सलिलमादाय हृदा हृदयमन्त्रेण अष्टगन्धं प्रविलोड्य तस्मिन् आदिना तारेणेष्ट्वा तत्र व्यस्तसमस्तरूपेण कलामन्त्रैः कलाकलापं कलासमूहमावाहयेत् ॥ ३२ ॥

कास्ताः कला इत्यत्राह — कला इति । कार्शानव्यः कृशानुसम्बन्धिन्यः वह्निकलाः दश स्युः । रविभवाः सूर्यकलाः रविमिताः द्वादश । निशेशोद्भूताः सोमकलाः षोडश । ओमाक्षरभवाः अकारोकारमकारभवाः दश दश, अकारकला उकारकला मकारकलाश्च दश दश स्युः । बिन्दूत्थाः बिन्दुकलाश्चतस्रः । नादजनिताः नादकलाः श्रुतिकृतिमिताः, श्रुतयो वेदाश्चत्वारः, तेषां कृतिः षोडश, तैः परिमिताः । शक्तेः कलाः शक्तिकलाः जगत्संख्याः तिस्रः । शान्तजनिते शान्तकले करपरिमिते द्वे च ॥ ३३ ॥

धूम्रार्चिरित्यादिना दश वह्निकलाः पठति । हव्यकव्यवहे अपि हव्यवाहा कव्यवहापीत्यर्थः ॥ ३४ ॥

तपनीत्यादिना द्वादश सूर्यकलाः पठति ॥ ३५ ॥

---

१. 'ल' ख. पाठः. २. 'ध' ३. 'धरणी' क. पाठः.

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ३६ ॥
पूर्णा पूर्णामृता चेति तेजस्त्रयभवाः कलाः ।
सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ॥ ३७ ॥
स्थितिः सिद्धिरिति प्रोक्ता यथाक्रममकारजाः ।
जरा च पालिनी शान्तिरैश्वरी रतिकाम्भिके ॥ ३८ ॥
वरदा ह्लादिनी प्रीतिर्दीर्घा चोकारसम्भवाः ।
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधिनी क्रिया ॥ ३९ ॥
उत्कारी चैव मृत्युश्च मकाराक्षरजा मताः ।
पीता श्वेतारुणा तद्वदसितापि च बिन्दुजाः ॥ ४० ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
इन्धिका दीपिका चैव रेचिका मोचिका परा ॥ ४१ ॥
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा ।
व्यापिनी व्योमरूपा चानन्ता वापि च नादजाः ॥४२॥
याद्यैः क्रमोत्क्रमप्रोक्तकभादिद्विद्विवर्णकैः ।
आद्यैश्च कटपाद्यैश्च षाद्यैराद्यैश्च ता युताः ॥ ४३ ॥

अमृतेत्यादिना षोडश सोमकलाः पठति । इति तेजस्त्रयभवाः वह्निसूर्यसोमक्रमेण संभूताः कलाः सृष्टिरित्यादिना दशाकारकलाः पठति । जरेत्यादिना दशोकारकलाः पठति । तीक्ष्णेत्यादिना दश मकारकलाः पठति । पीतेत्यादिना चतस्रो बिन्दुकलाः पठति । अनन्ता वापीति विकल्पेन पञ्चम्यनन्ताप्युक्ता । निवृत्तिरित्यादिना षोडश नादकलाः पठति । परेति नवमी कला ॥ ३६—४२ ॥

कलानां बीजान्याह — याद्यैरिति । याद्यैः यकारादिक्षकारान्तैर्युतास्ता वह्निकलाः, 'यं धूम्रार्चिषे नमः' इत्याद्याः । क्रमोत्क्रमप्रोक्तकभादिद्विद्विवर्णकैः क्रमेण प्रोक्तैः काद्यैः, व्युत्क्रमेण प्रोक्तैर्भाद्यैश्च द्विद्विवर्णैर्युतास्ताः सूर्यकलाः '[2]कं भं तपन्यै नमः' इत्याद्या इत्यर्थः । [3]आद्यैः अकारादिविसर्गान्तैर्युताः

१. 'न तथानन्ता च' इति मूलकोशपाठः. २. 'कं' क. ख पाठः. ३. 'थैरा-थैरका' क. ख. घ. पाठः.

तारस्वशक्तिबीजाढ्याः सर्वाः प्राक् स्वोक्तबीजतः ।
वक्ष्येऽष्टवर्गनिर्दिष्टानृक्समष्टिमनूनपि ॥ ४४ ॥
जाततदाद्ये त्र्यम्बकहंसाद्ये अपि पुनः प्रतद्विष्णुः ।
त्र्यम्बकतत्पदपूर्वे विष्णुर्योनिं च कीर्तितास्तदृचः ॥ ४५ ॥
स्वस्वध्रुवांशयुतमण्डलनाम ङेन्तं
धर्मार्थकामपदमादिदशादियुक्तम् ।
भूयः प्रदादिककलात्मपदं चतुर्थ्या
नत्या च संयुतमिति त्रिसमष्टिमन्त्राः ॥ ४६ ॥

---

सोमकलाः, 'अं अमृतायै नमः' इत्याद्याः । कटपाद्यैः कादिञान्तैर्युताः अकारकलाः 'कं सृष्ट्यै नम' इत्याद्याः, टादिनान्तैर्युताः उकारकलाः 'टं जरायै नमः' इत्याद्याः, पादिशान्तैर्युताः मकारकलाः 'पं तीक्ष्णायै नमः' इत्याद्याः । षाद्यैः षकारादिळकारान्तैः क्षकारान्तैर्वा युताः बिन्दुकलाः, 'षं पीतायै नमः' इत्याद्याः । आद्यैः अकारादिविसर्गान्तैर्युतास्ता नादकलाः, 'अं निवृत्त्यै नमः' इत्याद्याः ॥ ४३ ॥

**ताः सर्वा** अपि कलाः स्वोक्तबीजतः प्राक् तारस्वशक्तिबीजाढ्याः प्रणवभुवनेश्वरीयुक्ताः । स्वशक्तीत्यनेन विष्णौ श्रीबीजमुक्तम् । अष्टवर्गनिर्दिष्टान् वह्निसूर्यसोमाकारोकारमकारबिन्दुनादानां कलाः अष्टवर्गास्तेषु निर्दिष्टान् ऋक्समष्टिमनून् ऋचः समष्टिमन्त्रानपि वक्ष्ये । अहमिति शेषः ॥ ४४ ॥

**जाततदाद्ये** 'जातवेदसे सुनवाम सोमं' 'तत्सवितुरि'त्याद्ये द्वे । त्र्यम्बकहंसाद्ये 'त्र्यम्बकं यजामहे' 'हंसः शुचिषद्' इत्याद्ये च द्वे । पुनः 'प्रतद्विष्णुरि'त्यपि । त्र्यम्बकतत्पदपूर्वे 'त्र्यम्बकं यजामहे' 'तत्सवितुरि'ति पूर्वे द्वे । 'विष्णुर्योनिम्' तदृचः तस्याष्टवर्गस्य ऋचः कीर्तिताः ॥ ४५ ॥

**स्वस्वध्रुवांशयुतमण्डलनाम** स्वेन स्वेन प्रणवांशेन युतानि स्वानि स्वानि मण्डलनामानि । ङेन्तं तानि नामानि चतुर्थ्येकवचनान्तानि च । आदिदशादियुक्तं धर्मार्थकामपदम् आदौ दश द्वादश षोडश इत्येभिर्युक्तानि धर्म, अर्थ, काम इति पदानि । भूयः प्रदादिककलात्मपदं प्रद इत्यादिकं कलात्म इति पदम् । तत्तु चतुर्थ्या नत्या च संयुतं स्यात् । 'मं वह्निमण्डलाय दशधर्मप्रदकलात्मने नमः', 'अं सूर्यमण्डलाय द्वादशार्थप्रदकलात्मने नमः',

---

१. 'कृत्यै न' क. ख. पाठः.

**ब्रह्माद्यैरधिदैवतैरथ पृथिव्याद्यैश्च गन्धादित-**
**न्मात्रैर्घ्राणमुखैः समस्तसदुपस्थानन्दपूर्वैरपि ।**
**तारेष्वंशभवाः समष्टिमनवः सृष्ट्यादिकृत्यैर्निवृ-**
**त्त्याद्याभिर्नमसैकशो निरधिदैवं चात्मनेर्णैर्युताः ॥ ४७ ॥**

**ब्रह्मा विष्णू रुद्रेश्वरौ सदाशिव इहेरिता देवाः ।**
**अन्त्यौ महासदाद्यौ विष्णू क्वापीतरे गणाः प्रथिताः ॥**

**अत्रानन्दविसर्गौ गमनादाने वचनमपि विषयाः ।**
**सृष्टिस्थितिसंहारतिरोभावानुग्रहास्तु कृत्यानि ॥ ४९ ॥**

---

'ठं सोममण्डलाय षोडशकामप्रदकलात्मने नमः' इति त्रिसमष्टिमन्त्राः तेजस्त्रयस्य समष्टिमन्त्राः ॥ ४६ ॥

तारेष्वंशभवाः प्रणवस्य पञ्चांशसंभूतानामकारोकारमकारबिन्दुनादकलानां समष्टिमनवः ब्रह्माद्यैः ब्रह्मविष्णुरुद्रेश्वरसदाशिवैरधिदैवतैः, अथ पृथिव्याद्यैः पृथिव्यप्तेजोवाय्वाकाशैः, गन्धादितन्मात्रैः गन्धादि(भिः) शब्दादिभूतैः तन्मात्रैः गन्धतन्मात्रं रसतन्मात्रं रूपतन्मात्रं स्पर्शतन्मात्रं शब्दतन्मात्रम् इत्येतैः, घ्राणमुखैः घ्राणाद्यैः घ्राणजिह्वाचक्षुस्त्वक्छ्रोत्रैः, समस्तसदुपस्थानन्दपूर्वैरपि समासयुक्तैः सद्भिरुपस्थानन्दपूर्वैरपि उपस्थानन्दः वायुविसर्गः पादगमनं पाण्यादानं वाग्वचनम् इत्येतैः, सृष्ट्यादिकृत्यैः सृष्टिस्थितिसंहारतिरोभावानुग्रहैः, निवृत्त्याद्याभिः निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताभिः एतैः सप्तविधैर्युताः । एकशः प्रत्येकं नमसा संयुताः । निरधिदैवं ब्रह्माद्यधिदेवतावर्जमात्मनेर्णैः आत्मने इत्यक्षरैश्च युताः । 'ब्रह्मणे नमः' इत्याद्याः, 'पृथिव्यात्मने नमः' इत्याद्याः, 'गन्धतन्मात्रात्मने नमः' इत्याद्याः, 'घ्राणात्मने नमः इत्याद्याः, 'उपस्थानन्दात्मने नमः' इत्याद्याः, 'सृष्ट्यात्मने नमः' इत्याद्याः, 'निवृत्त्यात्मने नमः' इत्याद्याश्च सप्त सप्त ते समष्टिमन्त्रा इत्यर्थः ॥ ४७ ॥

ब्रह्मादिवर्गान् पठति — ब्रह्मेति । तत्रान्त्यावीश्वरशिवयोः स्थाने महासदाद्यौ विष्णू महाविष्णुः सदाविष्णुश्च क्वापि विष्ण्वादिषु भवतः । इतरे गणाः प्रथिताः प्रसिद्धाः ॥ ४८ ॥

अत्रानन्दादीन् पठति— अत्रेति । विषयाः उपस्थादीनां विषयत्वेव प्रसिद्धाः । सृष्ट्यादिकृत्यानि पठति — सृष्टीति ॥ ४९ ॥

तेजोजासु समष्ट्यनन्तरमृचो वैवं च सर्वासु वा
चन्द्रार्कानलनादबिन्दुविषरुद्राजक्रमादुद्भवः ।
सूर्याब्जानलबिन्दुनादविषविष्णूद्यत्क्रमेण स्थितिः
कर्माक्षाणि कुहापि पादकरपायूपस्थवाचः क्रमात् ॥

उद्गीथान्वितपाशशक्तिसृणिनिर्बिन्द्वन्तधात्वर्णहों
संवर्णानुगताजपात्मतिथिवर्णैस्तत्कलानां पदम् ।
सृण्यन्तैर्युतमेव वा पृथगुदीर्य प्राणजीवेन्द्रिया-
द्यूर्ध्वांशत्रितयप्रभेदितमथ प्राणान् प्रतिष्ठापयेत् ॥ ५१ ॥

---

एतेषां क्रममाह — तेजोजास्विति । तेजोजासु वह्निसूर्यसोमकलासु समष्ट्य-नन्तरमृचो वा समष्ट्यावाहनानन्तरं वा ऋग्भिरावाहना । सर्वासु कलास्वप्येवं वा क्रमः । चन्द्रार्कानलनादबिन्दुविषरुद्राजक्रमाद् विषं मकारः, रुद्रः उकारः, (अजः अकारः) सोमसूर्यवह्निनादबिन्दुमकारोकाराकारक्रमाद् उद्भवः सृष्टिक्रमः सूर्याब्जानलबिन्दुनादविषविष्णूद्यत्क्रमेण अब्जः सोमः, विष्णुरुकारः, सूर्यसो-मवह्निबिन्दुनादमकाराकारोकारक्रमेण स्थितिः । संहारस्तु पूर्वोक्तक्रम एव । कुहापि क्वचित्पक्षे पादकरपायूपस्थवाचः क्रमात् कर्माक्षाणि कर्मेन्द्रियाणि भवन्ति ॥ ५० ॥

प्राणप्रतिष्ठामाह — उद्गीथेति । उद्गीथान्वितपाशशक्तिसृणिनिर्बिन्द्व-न्तधात्वर्णहों[1]संवर्णानुगताजपात्मतिथिवर्णैः उद्गीथः प्रणवः तदनुगताः पाशश-क्तिसृणयः आं इति पाशः, ह्रीं इति शक्तिः, क्रोमित्यङ्कुशः, निर्बिन्द्वन्ताः धात्वर्णाः यरलवशषसेत्यमी सप्त, हों सं इति स्वरूपम् एतेषां वर्णानामनुगता पश्चात् गता अजपा हंस इति, उद्गीथाद्यजपान्तस्वरूपैस्तिथिवर्णैः पञ्चदशा-क्षरैः सह । तत्कलानां पदं तत्तद्विशेषनामयुक्तं कलानामिति पदं वह्निकलानां सूर्यकलानामित्यादिपदम् । सृण्यन्तैर्युतमेव वा प्रणवपाशशक्त्यङ्कुशैर्युतमेव वा । पृथक् त्रिवारमुदीर्य । प्राणजीवेन्द्रियाद्यूर्ध्वांशत्रितयप्रभेदितं प्राणा इह प्राणा इत्यादिजीव इह स्थित इत्यादि सर्वेन्द्रियाणि इत्यादि च ऊर्ध्वांशत्रि-

---

१. 'होमां सं' ख. घ. ङ. पाठः.

पूर्वं प्राणा इह प्राणाः पुनर्जीव इह स्थितः ।
पुनः सर्वेन्द्रियाण्यादिवाङ्मनश्चक्षुरक्षरम् ॥ ५२ ॥

श्रोत्रघ्राणयुतप्राणा इहैवागत्यसंयुतम् ।
सुखं चिरं तिष्ठन्तु स्वाहेत्यूर्ध्वांशास्त्रयः क्रमात् ॥ ५३ ॥

इच्छाज्ञानक्रियाः शक्तय इह गदिताः शक्तिनाम्नश्चिदान-
न्दात्मानौ शान्तनाम्नः स्वपदमिह समष्टिर्भवेदात्मनेन्तम् ।
स्वे स्वे वा पञ्च मन्त्रास्तदुभयमनवः स्वार्हक्लृप्त्या लिपिर्वा
मूलं वा पूरणी स्याद् यदि न पुनरनन्तान्तिमा बैन्दवीनाम् ॥

---

तयेन च प्रभेदितं पदमुदीर्याथ प्राणान् प्रतिष्ठापयेत् प्राणप्रतिष्ठामन्त्रं जपे-
दित्यर्थ ॥ ५१ ॥

ऊर्ध्वांशत्रितयमाह — पूर्वमिति । प्रथमं प्राणा इह प्राणा इत्यूर्ध्वांशः, पुनर्जीव इह स्थित इति, पुनस्तृतीयः सर्वेन्द्रियाण्यादिवाङ्मनश्चक्षुरक्षरं सर्वेन्द्रियाणि इत्यादौ युत वाङ्मनश्चक्षुरित्यक्षरम् । श्रोत्रघ्राणयुतप्राणा इहैवा-गत्यसंयुतं श्रोत्रघ्राण इति पदाभ्यां सहितेन इहैवागत्येत्यनेन संयुतं सुखं चिरं तिष्ठन्तु स्वाहेति । इति त्रय ऊर्ध्वांशाः क्रमाद् भवन्ति ॥ ५२, ५३ ॥

शक्तिकलादिकमाह — इच्छेति । इह शक्तिनाम्नः षष्ठस्य प्रणवां-शस्य इच्छाज्ञानक्रियास्तिस्रः शक्तयः कला गदिताः । शान्तनाम्नः सप्तम-स्य प्रणवांशस्य चिदानन्दात्मानौ 'चिदात्मने नमः' 'आनन्दात्मने नमः' इतीमौ मन्त्रौ द्वे कले भवतः । इह शक्तिशान्तयोः । आत्मनेन्तम् । आत्मने इत्यन्तम् । स्वपदं 'शक्त्यात्मने नमः' 'शान्तात्मने नमः' इति द्वयं समष्टि-र्भवेत् । स्वार्हक्लृप्त्या स्वयोग्यया क्लृप्त्या त्रिद्विक्रमेण । स्वे स्वे पञ्च मन्त्रा वा तदुभयमनवः शक्तिशान्तयोर्मन्त्राः । अत्र बैन्दवीनां कलानां बिन्दु-कलानाम् । अन्तिमानन्ता न यदि बिन्दुकलाश्चतस्र एव गृह्यन्ते चेत् । पुन-रवसाने लिपिर्वा मूलं वा पूरणी चतुर्नवतिसंख्यापूरणी स्यात् ॥ ९४ ॥

---

१. 'मन्त्रास्तदुभयमनवः पञ्च हंसास्त्रृचो वा । स्वाहृयात्मान्तां समष्ट्यात्मकमनुरथ तत्पूरणी मूलरूपा लिपेर्यो वा कला सा न यदि' ख. पाठः.

तत्तद्वर्ग्याः पृथगिह कलाः सन्निधाप्यैतदीये-
नावाह्याम्नायमयमनुना तत्समष्ट्यात्मना च ।
दोष्णा शङ्खोदकमभिमृशन् स्वासुसंस्थापनाणुं
मन्त्री सम्मन्त्रयतु च कलावाहनप्रक्रियेयम् ॥ ५५ ॥

मूलमन्त्रचिदुपोद्बलितं तद्
वारि मूलमनुना कलशेऽस्मिन् ।
सन्निधाय कुसुमाञ्जलिपूर्वं
व्याप्य विन्यसतु तत्र कलास्ताः ॥ ५६ ॥

आधारे स्वकलादलाम्बुजदलेष्वग्र्यादितस्तैजसीः
पद्दोःसन्धितदग्रपायुवृषणेऽन्धौ नाभिकुक्ष्योर्हृदि ।

---

एवमिह तत्तद्वर्ग्याः तत्तद्वर्गभवाः कलाः पृथक् सन्निधाप्यावाह्य । एत-दीयेन तदीयेन । आम्नायमयमनुना ऋङ्मन्त्रेण । तत्समष्ट्यात्मना तत्तत्स-मष्टिमन्त्रेण चावाह्य दोष्णा शङ्खोदकमभिमृशन् स्पृशन् । स्वासुसंस्थापनाणुं स्वस्वप्राणप्रतिष्ठामन्त्रं संमन्त्रयतु जपतु च । इयं कलावाहनप्रक्रिया कलावा-हनरीतिः । मन्त्रीत्यनेन सकलीकृतात् स्वात्मनस्तत्तत्कलान्यासस्थानतः तां तां कलामावाहयेदिति विशेषकृत्यं सूचितम् ॥ ५५ ॥

ततो मूलमन्त्रचिदुपोद्बलितं मूलमन्त्रावाहनपूजनाभ्यां प्राप्तचैतन्य-प्रकाशम् । तत् समस्तकलासमवेतं वारि । मूलमनुना मूलमन्त्र जपन् । अस्मिन् कलशे सन्निधाय शङ्खात् कलशे योजयित्वा । कुसुमाञ्जलिपूर्वं व्याप्य तत्र कलशे ताः कलाः विन्यसतु ॥ ५६ ॥

कलान्यासमाह — आधार इति । आधारे मूलाधारहृद्भ्रूमध्येषु । स्वकलादलाम्बुजदलेषु स्वस्वकलासङ्ख्यदलवतामम्बुजानां दलेषु । अग्र्यादितः अग्रगतं दलमारभ्य । तैजसीः वह्निसूर्यसोमकलाः न्यस्येत् । पद्दोस्सन्धित-दग्रपायुवृषणे पादकरयोः सन्ध्यग्रेषु विंशतिस्थानेषु अकारकलादशकमुकारक-लादशकं च पुनः पायौ वृषणे अन्धौ लिङ्गमूले नाभिकुक्ष्योः हृदि । पार्श्वद्व-

---

१. 'प्य क्रमेण स्वर्चां चैतत्समुदितसमष्ट्यात्मनाथाभिवाह्य । दो' ख. पाठः

**पार्श्वद्वन्द्वपराक्ककुत्सु च कला न्यस्येद् गले सानने**
**सभ्रूके प्रतिसंस्थितस्वरपदेष्वप्यादिपञ्चांशजाः ॥ ५७॥**

**पद्दोर्युक्तलनासिकाद्विभुजपार्श्वेषु क्रमाद् वार्णजा**
**न्यस्याः पायुशिवोरुजानुनलकास्फिक्षूद्भवा मार्णजाः ।**
**हृद्ग्रीवांसयुगोरुनाभ्युदरवत्सोरोजके बिन्दुजाः**
**शक्रार्कीन्दुजलेशकेष्वथ कलास्थाने कला नादजाः ॥५८॥**

**तत्तद्वर्ग्यकलान्ततस्तदुदिते स्थानेऽखिले व्यापये-**
**दृङ्मन्त्रैः स समष्टिभिः सह निजप्राणप्रतिष्ठाणुभिः ।**
**ऊर्वोस्त्रिः प्रणवं हृदि त्रिरजपां जप्त्वा हृदिस्थादिना**
**मन्त्रेणाभिमृशेद्धृदि न्यसनकॢप्तिः स्यात् कलानामिति ॥**

---

न्द्वपराक्ककुत्सु पार्श्वयोः पृष्ठे गलपृष्ठे च मकारकलाः । गले सानने आस्ये सभ्रूके च बिन्दुकलाश्चतस्रश्चेत् । पञ्च चेद् भ्रुवोर्मूर्धनि च सभ्रूक इति ककारस्य स्वार्थे कप्रत्ययत्वं मूर्ध(शब्द?)वाचकत्वं चावगन्तव्यम् । प्रतिसंस्थितस्वरपदेषु प्रतिलोमेन संस्थितेषु स्वरस्थानेषु नादकलाश्च न्यस्येत् । एवमादिपञ्चांशजाः आदेः प्रणवस्य पञ्चभ्योंऽशेभ्यः सम्भूताः कलाः न्यस्येन् ॥ ५७ ॥

अकारकलादीनां पक्षान्तरेण न्यासमाह — **पद्दोरिति** । पद्दोर्युक्तलनासिकाद्विभुजपार्श्वेषु पादतलयोः करतलयोर्नासिकाद्वये भुजयोः पार्श्वयोश्च । क्रमादार्णजा अकारकला न्यस्या वा । पायुशिवोरुजानुनलकास्फिक्षु पायौ लिङ्गे ऊरुद्वये जानुद्वये जङ्घाद्वये स्फिग्द्वये च । उभवाः उकारकलाः हृद्ग्रीवांसयुगोरुनाभ्युदरवत्सोरोजके हृदि ग्रीवायामंसद्वये ऊरुद्वये नाभावुदरे वत्सोरोजयोश्च । मार्णजाः मकारकलाः । शक्रार्कीन्दुजलेशकेषु इन्द्रयमसोमवरुणब्रह्मस्थानेषु बिन्दुजाः । अथ कलास्थाने नादजाः कलाश्च न्यस्याँ वा ॥५८॥

**अथ** तत्तद्वर्ग्यकलान्ततः तत्तद्वर्ग्याणां कलानामन्ते । तदुदिते तत्तत्कलानामुक्तेऽखिले स्थान । ऋङ्मन्त्रैस्तत्तद्दृग्भिः । ससमष्टिभिः तत्तत्समष्टिमन्त्रैश्च सह । निजप्राणप्रतिष्ठाणुभिः निजनिजप्राणप्रतिष्ठामन्त्रैश्च व्यापयेत् । पुनरूर्वोस्त्रिस्त्रिकृत्वः । प्रणवं हृदि स्पृशन्नजपां च त्रिः जप्त्वा हृदिस्थादिना मन्त्रेण । हृद्यभिमृशेत् हृदयं संस्पृश्य जपेत् । इति कलान्यसनकॢप्तिः स्यात्॥

---

१. 'जः ॥ तत्त' ख. पाठः. २. 'क्षु क्रमान्मार्ण' क. पाठः. ३. 'श्वंद्वयो' क. पाठः. ४. 'स्य ॥' ख. घ. पाठः. ५. 'ग्भिश्च स' क. ख. घ. पाठः.

हृदिस्था देवताः सर्वा हृदये नित्यसंस्थिताः ।
हृदि सर्वं समर्पयामि हृदि प्राणाः प्रतिष्ठिताः ॥ ६० ॥

तिस्रो न्यसेच्छक्तिकलास्त्रिषु स्वे-
ष्वाधारपद्मेषु हृदीतरे द्वे ।
मन्त्रा निजाः पञ्च कला यदि स्युः
स्थानेषु ताः स्वेष्वथ मातृकां च ॥ ६१ ॥

मूलाङ्गन्यासं च कृत्वार्चयित्वा
विद्यादेहात्मानमावाह्य तस्मिन् ।
मूलाद्येन स्वेन नाम्ना चतुर्थी-
नत्यन्तेन न्यस्य साङ्गं यजेच्च ॥ ६२ ॥

प्राग्वच्छङ्खगृहीतवार्युपहितैस्तन्मूर्तिकेऽनुक्रमा-
दावाह्याखिलतत्त्वकानि मनुचैतन्योर्जितं तज्जलम् ।

---

हृदिस्थादिनेत्युक्तं मन्त्रं पठति — हृदीत्यादि । इह
"सप्तात्मकस्य तारस्य परौ द्वौ तु परौ यतः ।
अतस्तु शक्तिशान्ताख्यौ न पठ्येते परैः सह ॥"
इति प्रपञ्चसारोक्तत्वात् कलावाहनं पृथगेवोक्तम् ॥ ६० ॥

संप्रति न्यासक्लृप्तिरपि पृथगेवोच्यते — तिस्रः शक्तिकलाः स्वेषु त्रिष्वाधारपद्मेषु मूलाधारहृदयभ्रूमध्येषु । इतरे शान्तकले द्वे हृदि च न्यसेत् । निजाः पञ्च मन्त्राः शक्तिशान्तयोः कलाः यदि स्युः, ताः स्वेष्वेव स्थानेषु न्यसेत् । अथ मातृकां च मूलाङ्गन्यासं च कृत्वार्चयित्वा तस्मिन् मूलाद्येन चतुर्थीनत्यन्तेन नाम्ना स्वेन स्वेन नाम्ना मूलमुक्त्वा 'ओं विद्यामूर्तये नम' इत्यनेनावाह्य मूलाक्षराङ्गानि न्यस्य साङ्गं यजेच्च ॥ ६१, ६२ ॥

अथ तत्त्वावाहनमाह — प्राग्वदिति । प्राग्वत् पूर्ववत् । शङ्खगृहीतवारि शङ्खगृहीते जले । उपहितैतन्मूर्तिके तत्र मूर्तिकल्पनानन्तरम् । अखिलतत्त्वकानि पञ्चविंशतिं वा षट्त्रिंशतं वा तत्त्वानि । अनुक्रमात् सृष्टिक्रमा-

---

१. 'ष्वथ शान्तजे द्वे । हृद्यन्नराद्यास्त्रिदलेषु मूर्ध्नि तस्योपरि द्वे द्विदले न्यसेद्वा ॥ कृत्वा मूलन्यासमङ्गावसानं तेनाराध्यावाह्य विद्याभिधानाम् । मूर्तौ मूलादिस्वना' ख. पाठः.

कुम्भेऽस्मिन् प्रणिधाय मूलमनुना व्याप्य विन्यस्य त-
त्तत्त्वव्रातमपि स्वमूलमनुवर्णाङ्गान्तमभ्यर्चयेत्[1] ॥ ६३ ॥

अस्त्राणुना घटमुखं नवचूतबोधि-
शाखाग्रपल्लवसतण्डुलचक्रिकाभिः ।
दर्भादि[2]कैरपि विभूष्य नवेन वासो-
युग्मेन वर्ममनुना परिवेष्टयेच्च ॥ ६४ ॥

अत्राभिवाह्य मनुविग्रहमादिदेवं
कल्पक्रमेण परिपूज्य ततो धिनोतु[3] ।
मन्त्रान् प्रजप्य परिरक्ष्य कृताभ्यनुज्ञो
मन्त्री ततः परिघटार्चनमारभेत ॥ ६५ ॥

संहत्या विनियोज्यं द्रव्यगणं तावदत्र कथयामि ।
बहुधाभिधास्यमानस्नपनविधासुप्रतीतये पूर्वम् ॥ ६६ ॥

---

दावाह्य । मनुचैतन्योर्जितं मन्त्रचैतन्येन वर्धितम् तज्जलमस्मिन् कुम्भे प्रणिधाय मूलमनुना व्याप्य ततत्त्वव्रातं तत्त्वसमूहमपि स्वमूलमनुवर्णाङ्गान्तं विन्यस्याभ्यर्चयेत् ॥ ६३ ॥

ततो नवचूतवोधिशाखाग्रपल्लवसतण्डुलचक्रिकाभिः नवैराश्वत्थशाखाग्रपल्लवैः सतण्डुलया चक्रिकया दर्भादिभिरपि घटमुखमस्त्राणुना विभूष्य नवेन वासोयुग्मेन वर्ममनुना परिवेष्टयेच्च ॥ ६४ ॥

अत्र प्रणवोपचारादिभिर्मनुविग्रहमादिदेवं परमपुरुषमावाह्य कल्पक्रमेण परिपूज्य निवेद्य ततो धिनोतु । मन्त्री वैदिकांस्तान्त्रिकांश्च स्वीयान् स्वीयान् मन्त्रांश्च प्रजप्य परिरक्ष्य कृताभ्यनुज्ञः ब्रह्मकलशस्थाद् देवादनुज्ञां लब्ध्वा ततः परिघटार्चनमारभेत ॥ ६५ ॥

अत्र पूर्वं बहुधाभिधास्यमानस्नपनविधासुप्रतीतये अनेकप्रकारेण वक्ष्यमाणस्नपनविधानेषु सुप्रतीतये सुखेनावगमाय । संहत्या सङ्घातरूपेण । विनियोज्यं योजनीयं द्रव्यगणम् । तावत् साकल्येन कथयामि ॥ ६६ ॥

---

१. त् ॥ समन्त्रकं व्याससमासरूपं कृत्वापरन्चसमपीह केचित् । कृत्वाखिलाधारनिवेशकल्या कार्या स्थविष्ठापघनां क्रिया च ॥ आदिमनुत्रिपदाहितपरसूक्ष्ममहाङ्गसङ्क्रमोपेते । स्यादुचितोऽत्रानुविधिः कार्यो वाचार्यदर्शितक्रमतः ॥ अस्त्रा', २. 'प्र', ३. 'तु । इत्थं प्रधानकलशार्चनमुच्यते स्म पश्चे विशेषमखिलेष्वनुखण्डसंस्थम् ॥ संह' ख. पाठः.

निशाशालीचूर्णाक्षतमणिहिरण्याढ्यमजिते
स्मृतं स्नानोदं तद्द्विचरमयुतं गन्धसलिलम् ।
शिवे शान्त्यम्भः सुम्भजिति कुशदूर्वे च शतमू-
ल्यपि व्याघ्री सिंही सुमतिभिरिहौषध्य उदिताः ॥ ६७ ॥
क्रान्तिश्यामाकपद्मार्तवकुशतुलसीबैल्वगन्धाक्षतं स्या-
च्छार्ङ्गीशे पाद्यमाद्यत्रितयमिह हरौ सुम्भहन्त्र्यां सराजिः ।
श्यामाकः स्कन्दविघ्नस्मरजिति तिलराज्यद्रिमृत्साः समुक्तं
दूर्वा चैतेषु शास्तर्यथ तिलरजनीगन्धपुष्पाक्षतानि ॥ ६८ ॥
आर्येऽर्घ्यं क्षीरराज्यार्तवतिलकुशगन्धा इमे साक्षतोदा
दुर्गायां गन्धपुष्पस्थलगदधियवा साक्षतोदास्त एव ।

तत्राजिते निशाशालीचूर्णाक्षतमणिहिरण्याढ्यं निशाशालीचूर्णाभ्या-मक्षतेन नवभी रत्नैः हिरण्येन च युक्तं स्नानोदमिति स्मृतम् । शिवे तद्द्विचरमयुतं तेष्वन्त्यद्वयेन रत्नैः हिरण्येन च युक्तं गन्धसलिलम् । शान्त्यम्भः शान्त्युदकं स्मृतम् । सुम्भजिते कुशदूर्वे द्वे च । (ശതമൂലി=കാതിരിക്ക. വ്യാഘ്രി=ചെറുവഴുതിന. സിംഹി=വലിയവഴുതിന.) इत्येताः सुमति-भिरोषध्य उदिताः ॥ ६७ ॥

शार्ङ्गीशे क्रान्तिश्यामाकपद्मार्तवकुशतुलसीबैल्वगन्धाक्षतम् । (ക്രാന്തി=വിഷ്ണുക്രാന്തി. ശ്യാമാകം=കറിട്ട.) आर्तवं पुष्पम् । बैल्वं बिल्वस्य फलं पुष्पं पत्रं वा एतत्सर्वं सहितं पाद्यं स्यात् । हरौ इह द्रव्येषु मध्ये । आद्यत्रितयं क्रान्तिश्यामकपद्मानि । सुम्भहन्त्र्यां सराजिः सर्षपसहितः श्या-माकः पाद्यम् । स्कन्दविघ्नस्मरजिति स्कन्दविघ्नशिवेषु । तिलराज्यद्रिमृत्साः तिलसर्षपपर्वतमृदः पाद्यम् । एतेषु षट्सु दूर्वा च । अथ शास्तरि तिलरज-नीगन्धपुष्पाक्षतानि पाद्यं समुक्तं स्यात् ॥ ६८ ॥

आर्ये क्षीरराज्यार्तवतिलकुशतिलगन्धा अर्घ्यं संप्रोक्तं स्यात् । दुर्गा-यां साक्षतोदा अक्षतोदकसहिताः । इमे क्षीराद्याः । शर्वस्कन्दद्विपास्ये शिव-स्कन्दविघ्नेषु । गन्धपुष्पस्थलगदधियवाः गन्धपुष्पयोः स्थाने दधियवाभ्यां

१. 'ण्यं मुराजिति स्मृ' क. पाठः. २. 'ष्पोदकानि ॥' ख. पाठः.

शर्वस्कन्दद्विपास्येऽक्षतफलयवयुक्ता विदुग्धा हरौ ते
संप्रोक्तं स्याद् वचाढ्याः पुरमुरमथने सर्व एवाखिलोक्ताः ॥

तक्कोलजातिसलवङ्गशशाङ्कगन्ध-
पुष्पं हरीशितरि नान्त्ययुगं रमेशे ।
नान्त्यत्रयं शिवगणेशगुहे लवङ्ग-
गन्धाम्बुपद्मकमयमाचमनं प्रभेशे ॥ ७० ॥

श्रीशे बिल्वद्विजग्रन्थिलखदिरशमीरा हरीशे सहैतै-
र्जम्बूनीपाम्रकारग्वधपनसमधूकास्तुरीयः कुमार्याम् ।
माधूकब्रह्मशैरीषकपनसरसाला महेशे प्रभेशे
क्षीर्याख्यास्ते च शेषेष्वजितगिरिशयोः प्लक्षहीनाः कषाये॥

---

युक्ताः साक्षतोदा अक्षतोदकाभ्यां सहिताः । त एव शास्तर्युक्ताः । हरौ अक्षतफलयवयुक्ता विदुग्धाः क्षीररहिताः । ते शास्तर्युक्ताः । पुरमुरमथने शिवनारायणे । वचाढ्या वचया युक्ताः । (വചാ=വയമ്പ്) अखिलोक्ताः सर्वेपूक्ताः त एवार्घ्यं संप्रोक्तं स्यात् ॥ ६९ ॥

हरीशितरि शिवनारायणे । तक्कोलजातिसलवङ्ग शशाङ्कगन्धपुष्पम् । तक्कोलं तदेव । (ജാതി=ജാതിക്കാ) लवङ्गः स एव । शशाङ्कः कर्पूरम् । एतान्याचमनं स्यात् । रमेशे नान्त्ययुगं गन्धपुष्परहितानि । शिवगणेशगुहे शिवविघ्नस्कन्देषु । नान्त्यत्रयं शशाङ्कगन्धपुष्परहितानि तानि । प्रभेशे लवङ्गगन्धाम्बुपद्मकमयम् । (പദ്മകം=പതിമുകം) एतत्स्वरूपमाचमनं स्यात् ॥ ७० ॥

श्रीशे कषाये बिल्वद्विजग्रन्थिलखदिरशमीराः । बिल्वः प्रसिद्धः । द्विजः पलाशः । (ഗ്രന്ഥിലം=വയ്യങ്കതക. ഖദിരം=കരിങ്ങാലി. ശമീരം=വന്നി) एते स्युः । हरीशे एतैः सह जम्बुनीपाम्रकारग्वधपनसमधूकाः । (ജംബു=ഞാവൽ. നീപം=കടമ്പ്. ആമ്രം=മാവ്. ആരഗ്വധം=കൊന്ന. പനസം=പ്ലാവ്. മധൂകം=ഇരിപ്പ.) एते । कुमार्यां तुरीयः खदिरः । महेशे माधूकब्रह्मशैरीषकपनसरसालाः । (മാധൂകം=ഇരിപ്പ. ബ്രഹ്മ=പ്ലാശ്. ശൈരീഷകം=നെന്മേനിവാക.) पनसमुक्तम् ।

न्यग्रोधद्रुरुदुम्बरश्चलदलप्लक्षौ रसालद्विजौ
शैरीषः समधूकदारुरपि सेनान्यां कषायोचिताः ।
ओषध्योऽत्र सुवर्चलामलवचा ब्राह्मी तथा शङ्खपु-
ष्प्युद्दिष्टाः सशतावरी सहसहा कान्तिश्च लक्ष्मीरपि ॥
श्रीशे रात्रिसहाशिरीषकुशभद्राः सूर्यवर्तिन्यपि
प्रोक्तं मार्जनमीशशार्ङ्गभृति तत्षट्कान्वितं भूस्तृणम् ।
गन्धाढ्यं तुलसीद्वयीपनससंयुक्तं च शास्तर्यथो
रात्र्यैन्द्रयक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम् ॥ ७२ ॥
धात्र्याम्रं बिल्वकेर्यौ पनसमपि फले डाडिमीभव्यरम्भा-
श्चेशार्यश्रीशविघ्नेऽष्टक इह तु गुहे मातुलुङ्गाख्यजम्ब्वौ ।

രസാലം=മാവ) एते । प्रभेशे क्षीर्याख्याः (നാല്പാമരം) । शेषेषु उक्तेषु पञ्चस्वपि ते च क्षीर्याख्याश्च । तत्राजितगिरिशयोस्तु प्लक्षहीना एते स्युः ॥ ७१ ॥

सेनान्यां न्यग्रोधद्रुः न्यग्रोधवृक्षः, उदुम्बरः, चलदलप्लक्षौ चलदलोऽश्वत्थः, रसालद्विजौ उक्तौ, शैरीषः उक्तः, समधूकदारुः मधूक उक्तः । एतेषां त्वचः कषायोचिताः कषाये निर्दिष्टाः । अत्र सेनान्यां (സുവർച്ചലാ=തുച്ചട), अमलवचा निर्मला वचा उक्ता, (ബ്രാഹ്മീ=ബ്രഹ്മി), शङ्खपुष्पी सैव सशतावरी (ശതാവരി=ശതാവേലി), सहसहा सहया सहिता (സഹാ=പൂവാങ്കുരുന്തൽ) । कान्तिरुक्ता, ലക്ഷ്മീ:=ശ്രീതാളി) । एता ओषध्यः ॥ ७२ ॥

श्रीशे रात्रिसहाशिरीषकुशभद्राः (രാത്രി=മഞ്ഞൾ. ഭദ്രാ=ചെറുപുള) अन्यान्युक्तानि, (സൂര്യാവർത്തിനി=അരിവേള) । एता मार्जनं प्रोक्तम् । ईशशार्ङ्गभृति तत्षट्कान्वितं (ഭൂസ്തൃണം=നിലപ്പന) । गन्धाढ्यं गन्धयुक्तं, तुलसीद्वयीपनससंयुक्तं तुलसीद्वयी तुलसी कृष्णतुलसी (പനസം=പ്ലാവിന്റെ ഇല) एतानि । अथो शास्तरि रात्र्यैन्द्रयक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम्, (ഐന്ദ്രി=ഉഴിഞ്ഞ) । एतत्स्वरूपं मार्जनम् । अत्र पल्लवानि गृह्यन्ते ॥ ७२ ॥

ईशार्यश्रीशविघ्ने एतेषु फले । (ധാത്രി=നെല്ലിക്കാ. ആമ്രം=മാങ്ങ.) बिल्वकेर्यौ (ബില്വം=കൂവളക്കാ. കേരി=തേങ്ങ. പനസം=ചക്ക),

१. 'रा' क. पाठः.

धात्रीकेरस्थलेऽन्त्यात्रितयसबदरीजातिकेरं कुमार्यां
शार्ङ्गांशेऽतोऽतिरिक्तं सकुटचबदरीमातुलङ्गं कपित्थम् ॥
रत्नान्याहुरिहाञ्जरागमपि नीलं मौक्तिकेन्दूपलौ
चाग्नेये कुरुविन्दकाचकसमेतौ विद्रुमं वज्रकम् ।
शार्ङ्गांशे च्युतकाचनीलकुरुविन्दस्कान्दपुष्याजरा-
गायस्कान्तविदूरजार्कहरिनीलस्फाटिकं गारुडम् ॥ ७५ ॥
मुक्तावैडूर्यवज्रं मणिमरतकगोमेदपुष्येन्द्रनीलं
भर्गे दौर्गेऽधरार्धद्रुहिणमणिमहानीलनीलप्रवालम् ।

---

डाडिमीभव्यरम्भाः (ഡാഡിമി=താളിമാതളം. ഭവ്യം=ഇറളി. രംഭാ=കദളിക്കാ) । गुहे त्विह अष्टके धात्रीकेरस्थले मातुलुङ्गाख्यजम्ब्वौ । (മാതുലുംഗം=മാതളം. ജംബൂ-ഞാവൽ) । कुमार्याम् अन्त्यात्रितयसबदरीजातिकेरम् । अन्त्यत्रितयं डाडिमीभव्यरम्भाः । (ബദരം=ഇലന്ത. ജാതി-ജാതിക്കാ. കേരം=നാളികേരം) । शार्ङ्गांशे अतः धात्र्याद्यष्टकात् सकुटचबदरीमातुलुङ्गं कपित्थं च अतिरिक्तम् अधिकं स्यात् । (കുടചം=കുടകപ്പാലയരി. കപിത്ഥം=വിളാങ്ങാ) ॥ ७४ ॥

आग्नेये स्कन्दे इह अञ्जरागं पद्मरागं, नीलं स्वयमेव, मौक्तिकेन्दूपलौ, (മൌക്തികം=മുത്തു. ഇന്ദൂപലം=ചന്ദ്രകാന്തം), कुरुविन्दकाचकसमेतौ । कुरुविन्दं स्वयमेव । (കാചകം=കരുട്ടുകല്ലു. വിദ്രുമം=പവിഴം. വജ്രകം=വൈരം) । एतानि रत्नान्याहुः । शार्ङ्गांशे च्युतकाचनीलकुरुविन्दस्कान्दपुष्याजरागायस्कान्तविदूरजार्कहरिनीलस्फाटिकं च्युतानि रहितानि काचनीलकुरुविन्दानि स्कन्दोक्तानि पुष्यादिसहितानि च । (പുഷ്യം=പുഷ്യരാഗം. അജരാഗം=ഭ്രമരരാഗം) । अयस्कान्तं स्वयमेव । विदूरजं वैडूर्यम् । (അർക്കം=സൂര്യകാന്തം) । हरिनीलम् इन्द्रनीलम् । स्फाटिकं स्फटिकम् । (ഗാരുഡം=ഗരുഡശില) । एतानि ॥ ७५ ॥

भर्गे शिवे मुक्तावैडूर्यवज्रं, मणिमरतकगोमेदपुष्येन्द्रनीलम्, (മണി=മാണിക്കം) । मरतकं गोमेदं च स्वयमेव । अन्यान्युक्तानि । दौर्गे अधरार्धद्रुहिणमणिमहानीलनीलप्रवालम् । अधरार्धं मुक्तावैडूर्यवज्रं मणिश्च ।

विष्णौ मुक्ताप्रवालाभिधकुलिशविदूरोद्भवाम्भोजरागं
तच्छैवं वा प्रभेशे स्फटिकरहितहारीशमाहुर्गणेशे ॥
लोहं शास्त्रजिते सुवर्णरजतं ताम्रायसी च त्रपु
स्कन्दे सीसककांस्यपित्तलयुतं मारं हरीशेऽखिलम् ।
स्वर्णोत्कीर्णसुपर्णकच्छपदरारिण्यौपमानाङ्ककं
श्रीशेऽत्रामलकं प्रविष्टमुरमांसीयुक्तधात्रीफलम् ॥ ७७॥
गन्धं रुङ्मुरवारिसेव्यघुसृणक्षायःपटीरं हरि-
द्वैपास्यार्यहरे सुरद्रुशशिनागाब्दैस्तदीशाच्युते ।

ഗൃഹിണമണി=ഇന്ദ്രനീലം)। महानीलं नीलं च स्वयमेव । (പ്രവാളം=പവിഴം) । एतानि । विष्णौ मुक्ताप्रवालाभिधकुलिशविदूरोद्भवाम्भोजरागम् । (കുലിശം=വജ്രം. വിദൂരോദ്ഭവം=വൈഡൂര്യം. അംഭോജരാഗം=പദ്മരാഗം) । प्रभेशे तद्वा विष्णूक्तं वा, शैवं शिवोक्तं वा । गणेशे स्फटिकरहितहारीशं स्फटिकहीनहरीशोक्तं द्वादशैवाहुः ॥ ७६ ॥

शास्त्राजिते शास्तृविष्ण्वाः सुवर्णरजतं सुवर्णं रजतं च, ताम्रायसी ताम्रमयश्च, (ത്രപു=ചെമ്പ്/ഓട്), एतल्लोहम् । स्कन्दे सीसककांस्यपित्तलयुतमेतत् । (സീസം=ഈയം. കാംസ്യം=വെള്ളോട്. പിത്തളം=പിച്ചള) । हरीशे सारम् औरसहितम्, (ആരം=ഇരുമ്പ്), अखिलमेतत् लोहम् । श्रीशे स्वर्णोत्कीर्णसुपर्णकच्छपदरारीणि स्वर्णेन कृतानि गरुडकूर्मशङ्खचक्राणि । औपमानाङ्ककम् औपमानद्रव्याङ्गानि अत्र श्रीशे प्रविष्टमुरमांसीयुक्तधात्रीफलं प्रविष्टाभ्यां मुरमांसीभ्यां युक्तं धात्रीफलम् आमलकम् आमलकद्रव्यम् ॥ ७७ ॥

हरिद्वैपास्यार्यहरे विष्णुगणपतिशास्तृशिवेषु रुङ्मुरवारिसेव्यघुसृणक्षायःपटीरम् (രുക്=കൊട്ടം) मुरं स्वयमेव (വാരി=ഇരുവേലി. സേവ്യം=രാമച്ചം. ഘുസൃണം=കാകരം. ക്ഷായം=മാഞ്ചി. അഗരു=അകില്. പടീരം=ചന്ദനം) गन्धं प्राहुः । ईशाच्युते सुरद्रुशशिनागाब्दैः सह तत् । (സുരദ്രു=ദേവതാരം. ശശി=കർപ്പൂരം. നാഗം=നാ

1. 'क' ह. पाठः. 2. 'अ' ख. घ ह. पाठः.

सेनान्यामसृगायसेन्दुगदकीशाम्भोमुरं मालयं
  दौर्गे प्राहुरिदं मुराब्गदपदसाचोरगोरोचनम् ॥ ७८ ॥
मल्लीचम्पकजातिनन्दिवकुलं तुल्यं गुहान्येषु तैः
  संयोज्यं शिवविघ्नयोरपरनन्द्यम्भोजसौगन्धिकम् ।
सैतत्कुन्दफलिन्युमापतिहरौ कुन्दाब्जयूथीस्त्रियः
  श्रीशार्ये महिषद्विषीह कुसुमं साशोकनागोद्भवम् ॥
उत्पलकल्हाराम्बुजकुमुदं सौगन्धिकं कशेरुयुतम् ।
उत्पलयुगमपि शरजे तत्तदभावेऽत्र रक्तकरवीरम् ॥ ८० ॥

---

ഗപ്പുവ്. അബ്ജം=മത്തങ്ങാ) । सेनान्याम् असृगायसेन्दुगदकीशाम्भोमुरं मालयं च । (അസൃക്=കുംകുമം. ആയസം=അകിൽ. ഇന്ദു=കപ്പൂരം. ഗദം=കൊട്ടം. കീശം=കണ്ടിവെണ്ണ. അംഭസ്സ്=ഇരുവേലി.) मुरं स्वयमेव । मालयं चन्दनम् । दौर्गे इदं गन्धं मुराब्गदपदसाचोरगोरोचनं प्राहुः । मुराम्भोगदस्थाने साचोरगोरोचनम् । (പൂ=മഞ്ഞി. ചോരം=കച്ചൂരം) । गोरोचनं स्वयमेव ॥ ७८ ॥

गुहान्येषु स्कन्दादन्येषु षट्सु मल्लीचम्पकजातिनन्दिवकुलं तुल्यं समानम् । (മല്ലി=മല്ല) ! चम्पकं स्वयमेव । (ജാതി=പിച്ചകം. നന്ദി=നന്ദിയാർവട്ടം. വകുളം=ഇലഞ്ഞി) । शिवविघ्नयोः तैः उक्तैः अपरनन्द्यम्भोजसौगन्धिकं संयोज्यम् । (അപരനന്ദി=മറ്റേനന്ദിയാർവട്ടം:) । अम्भोजं पद्मम् । सौगन्धिकं स्वयमेव । उमापतिहरौ सैतत्कुन्दफलिनी एतैः सहितं कुन्दं फलिनी च । (കുന്ദം=കുരുന്ന. ഫലിനി=ഞാവൽ) । इति दश । श्रीशार्ये श्रीशार्ययोः पूर्वोक्तैः पञ्चभिः सहिताः कुन्दाब्जयूथीस्त्रियः । कुन्दं चोक्तम् । (യൂഥി=ഇരുവാച്ചിമല്ല. സ്ത്രീ=കറുമൂഴി ) । इति नव । महिषद्विषीह साशोकनागोद्भवम् । अशोकं स्वयमेव । (നാഗോദ്ഭവം=നാഗപ്പൂവ്) । पूर्वोक्तैः पञ्चभिः सहितमेतद्द्वयं कुसुमं पुष्पोदकलशद्रव्यम् ॥ ७९ ॥

शरजे उत्पलकल्हाराम्बुजकुमुदं सौगन्धिकम् । (ഉല്പലം=ചെങ്ങഴുനീർ. കൽഹാരം=നെയ്തൽ) । अम्बुजं पद्मम् । (കുമുദം=ആമ്പൽ) सौगन्धिकं स्वयमेव । (कशेरुयुतं) (കശേരു=നാനെയ്തൽ) उत्पलयुगं ।

नीवारशालियवतण्डुलवेणुबीज-
माषं हरौ हरिहरेऽक्षतमेतदेव ।
सिद्धार्थकङ्कुसहितं निजगर्भगीता
विघ्नेश्वरे महिषजित्यपि धातवः स्युः ॥ ८१ ॥

कथितकथितवृक्षत्वक्करीषं सुदग्धं
भसितमिह समुक्तं भर्गदुर्गाहरीशे ।
इह महिषनिहन्त्र्यां खादिरत्वक्पदे तु
द्विजवरतरुकल्कं योजनीयं वदन्ति ॥ ८२ ॥

वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवाः स्युर्मृद-
स्तुल्याः कोलनदीतटद्वयतटाकान्तस्रवन्त्युद्भवाः ।

---

श्वेतोत्पलं नलिोत्पलं च । अत्र स्कन्दे तत्तद्भावे एतेष्वन्यतमाभावे[2] (രക്തകര വീരം=ചുവന്നകണവീരം) इति पुष्पोदकम् ॥ ८० ॥

हरौ नीवारादिकमक्षतम् । (നീവാരം=വരിനെല്ല്. ശാലി=നെല്ല്.) यवं स्वयमेव । तण्डुलं च स्वयमेव । (വേണുബീജം=മുളനെല്ല്. മാഷം=ഉഴുന്ന്) । इत्यक्षतद्रव्यम् । हरिहरे सिद्धार्थकङ्कुसहितमेतदेव । (സിദ്ധാർത്ഥം=കടുക. കങ്കു=കമ്പ) । विघ्नेश्वरे महिषजित्यपि निजगर्भगीताः निजगर्भन्यासोक्ता धातवः स्युः ॥ ८१ ॥

भर्गदुर्गाहरीशे कथितकथितवृक्षत्वक्करीषं कषायोक्तानां वृक्षाणां त्वग्भिः सह सुदग्धं करीषं भसितं समुक्तम् । इह महिषनिहन्त्र्यां खादिरत्वक्पदे तु खादिरस्थाने द्विजवरतरुकल्कं पलाशत्वचं योजनीयमिति वदन्त्याचार्याः ॥ ८२ ॥

वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवा मृदस्तुल्याः सर्वत्र । वेदी अग्निहोत्रवेदी । (ക്ഷേത്രം=വിളഭൂമി. ഗജശൃംഗജം=ആനക്കൊമ്പത്തേത്. ഉക്ഷശൃംഗജം=കാളക്കൊമ്പത്തേത്. ഗിരി=പർവ്വതം. വല്മീകം=പററ.) । शार्ङ्गीशे कोलनदीतटद्वयतटाकान्तस्रवन्त्युद्भवाः । (കോലോദ്ഭവം=പന്നിപ്പുഴി. നദീതടദ്വയോദ്ഭവം=നദീതീരദ്വയത്തിങ്കലേതു്.

---

१. 'जतरुवरक' ख. पाठः. २. 'तत्तेष्व' ख. घ. पाठः.

शार्ङ्गीशे सरिदब्धिजे शरभवे तीर्थाखुवेश्मोद्भवे
विघ्ने शास्तरि हस्तिनाकुजविहीना वाहिनीतीरजाः ॥
शान्त्यम्भः शिवशार्ङ्गिणोरिह तिलसिद्धार्थैर्यवैर्वैणवै-
र्नीवारैस्तुलसीदलाम्बुजपलाशैर्मङ्गलाम्भः पुनः ।
ब्रह्माशोककुशार्जुनेन्द्रलतिकाबोध्यङ्कुराब्जैकप-
द्माढ्यं भक्ष्यमिभानने पृथुकपूपाद्यं चतुष्कं विदुः ॥ ८४ ॥
बीजानीषुभवे यवाः सतिलगोधूमाः ससिद्धार्थकाः
शालीमुद्गकमाषकाश्च सहनीवारा हरीशेऽथ ते ।

---

ശരഭവം = കുളത്തിലേത്. അരയാൽവൃക്ഷഭവം = പുഴയി ലേതു) । पूर्वोक्ताभिः षड्भिः सहिता एता मृदः । शरभवे सरिदब्धिजे (പുഴയിലേതും. സമുദ്രത്തിലേതും.), पूर्वोक्ताः षट् च । विघ्ने तीर्थाखुवेश्मोद्भवे (തീർത്ഥത്തിലേതും എലിപ്പുഴുവും.), पूर्वोक्ताः षट् च । शास्तरि हस्तिनाकुजविहीनाः हस्तिदन्तजवल्मीकविहीनाः पूर्वोक्ताः । षड्भ्य एतद्द्वयरहिताः वाहिनीतीरजाः नदीतीरस्थाश्च मृदः ॥ ८३ ॥

इह शिवशार्ङ्गिणि तिलसिद्धार्थैर्यवैर्वैणवैर्नीवारैः तुलसीदलाम्बुजपलाशैः तुलसीदलैः पद्मदलैश्च शान्त्यम्भः स्यात् । पुनस्तत्र ब्रह्माशोककुशार्जुनेन्द्रलतिकाबोध्यङ्कुराब्जैकपद्माढ्यम् । (ബ്രഹ്മ = പ്ലാശ്) । अशोककुशे स्वयमेव । (അർജ്ജുനം = മരുത്. ഇന്ദ്രലതിക = ഉഴിഞ്ഞ. ബോധ്യങ്കുരം = ആലുടെ മുള. ഏകപദ്മം = ഒറ്റത്താമര) । एतानि मङ्गलाम्भः स्यात् । इभानने पृथुकपूपाद्यं चतुष्कं भक्ष्यं विदुः । बुधा इति शेषः । (പൃഥുകം = അവിൽ. പൂപം = അപ്പം. ലഡ്ഡുകം = എള്ളുണ്ട. ശഷ്കുലി = അപ്പ[illegible]) इति ॥ ८४ ॥

इषुभवे यवाः सतिलगोधूमाः, (ഗോധൂമം = കോതമ്പ്), ससिद्धार्थकाः शालीमुद्गकमाषकाः सहनीवाराश्च बीजानि । अथ हरीशे निर्माषसिद्धार्थकाः स्कन्दोक्तेषु माषसिद्धार्थरहिताः श्यामाकच्छणकङ्गुवैणवयुताः ।

---

१. 'द्वयाम्बु' क. पाठः. २. 'द्यैः स्याद् विघ्ने पृथुकादि होमविहितं भक्ष्यं च' ख. पाठः. ३. 'च' क. पाठः. ४. 'क्तः' ख. पाठः. ५. 'ज' ङ. पाठः.

श्यामाकच्छणकङ्गुवैणवयुना निर्मापमिद्धार्थकाः
सङ्घातद्रविणान्यजीगणमथान्यैस्तत्प्रयोगं ब्रुवे ॥ ८५ ॥
आज्यादिसप्तदशाभिर्द्रव्यैः श्रीशाभिषेचने ।
घटादिक्लृप्तिरुद्दिष्टपूर्वा द्रव्यादिकं ब्रुवे ॥ ८६ ॥
आज्योष्णोदकरत्नकानि फललोहं मार्जनं गन्धकं
प्रादक्षिण्यविधानतोऽक्षतयवौ ब्राह्मे सदैवे न्यसेत् ।
पाद्यार्घ्याचमनीयगव्यदधि दुग्धं माक्षिकं क्वाथकं
दिक्कोणेषु बहिस्तदीशमनुभिस्तारेण शेषेष्वपः ॥ ८७ ॥
विष्णूष्णरश्म्यजकुबेरवसूंश्च विश्वान्
गन्धर्वकान् निर्ऋतिसुम्भजितौ पितॄंश्च ।

---

श्यामाकमुक्तम् । (ഒരിനം ചാമകപ്പുയറ്. [illegible]) । वैणवमुक्तम् । इति बीजानि । संघातद्रविणानि संघातरूपाणि द्रव्याणि अजीगणं गणितवानहम् । अथान्यैरसंघातैः सह तत्प्रयोगं कलशविधानं ब्रुवे वच्मि ॥ ८५ ॥

एवं सामान्येन संघातद्रव्याण्यभिधायाथ विष्ण्वादिदेवानां कलशविधिं पृथक् पृथग् वदन् प्रथमं विष्णौ सप्तदशद्रव्यविधिमाह — आज्यादीति । श्रीशाभिषेचने श्रीशस्याभिषेचने आज्यादिसप्तदशभिर्द्रव्यैः करणीये तत्र घटादिक्लृप्तिः घटानां पुटानां खण्डानां च क्लृप्तिः उद्दिष्टपूर्वा पूर्वोक्तैव । द्रव्यादिकं द्रव्यदेवतामन्त्रादिकं ब्रुवे वच्मि ॥ ८६ ॥

ब्राह्मे सदैवे ब्रह्मकलशे दैविके च प्रादक्षिण्यविधानतः मध्यानन्तरं पूर्वादिप्रदक्षिणक्रमेण आज्योष्णोदकरत्नकानि आज्यमुष्णोदं रत्नोदं च, फललोहं फलोदकं लोहोदं च, मार्जनं च, गन्धकं गन्धोदम्, अक्षतयवौ अक्षतोदं यवोदं च न्यसेत् । पुनर्बहिर्मानुषे दिक्कोणेषु दिक्कोणक्रमेण पाद्यार्घ्याचमनीयगव्यदधि पाद्यमर्घ्यमाचमनीयं पञ्चगव्यं दधि च, दुग्धं क्षीरं, माक्षिकं मधु, क्वाथकं कषायजलम्, एतानि सप्तदशद्रव्याणि तदीशमनुभिः तत्तद्देवतामन्त्रैः प्रणवादिचतुर्थीनमोन्तैः न्यसेत् पूरयेदित्यर्थः । शेषेषु द्रव्यकलशेभ्योऽन्येषु तारेणापश्च पूरयेत् ॥ ८७ ॥

विष्णूष्णरश्म्यजकुबेरवसून् विष्णुं सूर्यं ब्रह्माणं वैश्रवणं वसूंश्च,

---

१. 'वे ॥ स्नाना....दिशा प्रपूर्य शरवर्गद्रव्यकेऽन्तर्हरौ पाद्यादीन्युपखण्डमध्य' ख. पाठः.

श्रीवाक्सदक्षकविसोमसुरेश्वरार्की-
नाज्यादिभाञ्ज्यभिदधत्यधिदैवतानि ॥ ८८ ॥
ऋचः षोडश पुंसूक्तस्येदं विष्णुरपि क्रमात् ।
स्नानमन्त्रास्तदीशान्ताः प्रोक्ताः स्नानक्रमं ब्रुवे ॥ ८९ ॥
मानुषदिक्खण्डघटैर्ब्रह्मघटेनाथ मानुषविदिक्स्थैः ।
दैविकदिक्कोणगतैः सप्तदशद्रव्यक हरिं स्नपयेत् ॥ ९० ॥
द्रव्ये तत्त्वमिते षडर्णमनुना स्नानोदकं मध्यतः
पाद्यादीन्युपखण्डमध्यकलशेष्वात्तासनेज्यादिषु ।
बाह्ये दिग्विदिगन्तरालनिहितेष्वन्तश्च दिक्कोणगे-
ष्वापूर्य द्रविणानि तत्तदणुभिश्चाभ्यर्चयेच्छार्ङ्गिणि ॥

---

विश्वान् देवान्, गन्धर्वकान् गन्धर्वान्, निर्ऋतिसुम्भजितौ निर्ऋतिं दुर्गां पितॄंश्च, श्रीवाक्सदक्षकविसोमसुरेश्वरार्कीन् श्रियं सरस्वतीं दक्षं शुक्रं सोममिन्द्रं यमं च, आज्यादिभाञ्जि आज्यादिद्रव्यगानि अधिदैवतान्यभिदधति वदन्ति ॥ ८८ ॥

पुंसूक्तस्य षोडशर्चः 'इदं विष्णुरपि' तदीशान्ताः अन्ते तत्तद्देवतानामयुक्ताः क्रमात् स्नानमन्त्राः प्रोक्ताः । स्नानक्रमं ब्रुवे ॥ ८९ ॥

सप्तदशद्रव्यके सप्तदशद्रव्यस्नाने पूर्वं मानुषदिक्खण्डघटैः, अथ ब्रह्मघटेन, पुनर्मानुषविदिक्स्थैः खण्डैः, पुनर्दैविकदिक्कोणगतैश्च हरिं स्नपयेत् ॥ ९० ॥

विष्णावेव पञ्चविंशतिद्रव्यस्नानमाह — द्रव्य इति । शार्ङ्गिणि तत्त्वमिते पञ्चविंशतिमिते द्रव्ये, मध्यतो ब्रह्मकलशे, षडर्णमनुना स्नानोदकं निशाशालीत्याद्युक्तम् । बाह्ये मानुषे दिग्विदिगन्तरालनिहितेषु, अन्तर्दैविके दिक्कोणगतेषु च स्थानेषु, आत्तासनेज्यादिषु कृतपीठपूजासंस्कारादिषु, उपखण्डमध्यकलशेषु उपखण्डानां मध्यस्थेषु कलशेषु, पाद्यादीनि द्रविणानि तत्तदणुभिः वक्ष्यमाणमन्त्रैरापूर्य चार्चयेच्च ॥ ९१ ॥

---

१. 'त् ॥ पितृलक्ष्मीवाग्दक्षा विष्णुकवीन्द्विन्द्रयमार्दिनेशधनदाः । विश्वनिर्ऋत्यजगसुगन्धर्वा दुर्गेति च क्रमात् स्नपने ॥ द्र' क. पाठः. २. 'स्वव्यक्तादिधरान्ततत्त्वगणरूपद्रव्यकाणि न्यसेत् ॥', ३ 'तपूजपी' ख. पाठः.

पाद्यार्घ्याचामगव्यं सघृतदधिपयः क्षौद्रमर्काक्षरेणो-
ष्णोदं क्काथोदकं मार्जनफलयवरत्नोदलोहोदकौशम् ।
गायत्र्या गन्धपुष्पौपमिकमपि सधात्र्यक्षतं केरवारी-
क्षूत्थोदं तण्डुलोदं न्यसतु तदधिदैवान्तमष्टाक्षरेण ॥९२॥
द्रव्याणां पुरुषः परः पितृरमावाग्दक्षाव्रिष्णूशन-
श्चन्द्रेन्द्रार्ककृतान्तविश्वधनदेरब्रह्मवस्वाह्वयाः ।
स्युः सावित्र्यपि देवता निगदिता गन्धर्ववारीश्वरा-
स्तार्क्ष्यः क्ष्मानिर्ऋती रमाधरनृसिंहाख्यौ हयास्यः क्रमात् ॥

पाद्यार्घ्याचामगव्यं पाद्यमर्घ्यमाचमनीयं गव्यं च, सघृतदधिपयः घृतं दधि पयश्च, क्षौद्रं मधु, एतान्यष्टौ द्रव्याणि अर्काक्षरेण द्वादशाक्षरमन्त्रेण तदधिदैवान्तं चतुर्थीनमोन्तं तत्तद्देवतानामान्ते भवति यथा तथा न्यसतु । पुनस्तत्रान्तरालेषु उष्णोदमुष्णजलं, क्काथोदकं कषायं, मार्जनफलयवरत्नोदलोहोदकौशं मार्जनं फलोदं यवोदं रत्नोदं लोहोदं कुशोदं च । गायत्र्या च पुनर्दैविके गन्धपुष्पौपमिकमपि गन्धोदं पुष्पोदम् औपमानं च, सधात्र्यक्षतम् आमलकोदकमक्षतोदकं च, केरवारि नालिकेरोदकम्, इक्षूत्थोदं, तण्डुलोदं च, दिग्विदिक्षु अष्टाक्षरेण तदधिदैवान्तं च ॥ ९२ ॥

देवताः पठति — द्रव्याणामिति । परः पुरुषो ब्राह्मे । पुनः पितृर-

१. 'त् ॥ शालीपिष्टसुवर्णरत्नरजनीचूर्णाह्वयैः स्नानकं
श्यामाकाम्बुजविष्णुपर्ण्यभिधदूर्वाभिः स्मृतं पाद्यकम् ।
राजीपुष्पफलाक्षतैर्यवतिलैर्गन्धैः कुशैश्चार्घ्यकं
तक्कोलेन्दुलवङ्गजातिफलसम्मन्नं तथाचामकम् ॥
प्लाक्षन्यूनपयोद्रुखादिरशमीबिल्वद्विजग्रन्थिलैः
क्काथं रात्रिसहाशिरपिकुशभद्रः सूर्यवर्तिन्यपि ।
षट्कं मार्जनमीरितं सकदलीबिल्वाम्रधात्रीफलं
केरीडाडिमभव्यकं सपनसं प्राहुः फलोदाङ्गकम् ॥
मुक्ताविद्रुमपद्मरागपविवैडूर्याह्वयै रत्नकं
तद्वत्काञ्चनरूप्यताम्रकमयस्त्रप्वान्वितं लोहकम् ।
गन्धाः शीतजलायसास्रमुरसेव्याप्तार्तयः पुष्पकं
मल्लीचम्पकजातिनन्दिबकुलश्रीकुन्दयूथ्यम्बुजम् ॥
हैमं सुवर्णदरकूर्मरथाङ्गमौपमानं जटामुरयुतामलकी सुपिष्टा ।
ज्ञेयाजिते सयवतण्डुलमाषशालिनीवारवैणवमुदीरितमक्षताङ्गम् ॥
इदमत्राधि' क. पाठः.

**इदमृग्घिरण्यवर्णा आपोहिष्ठप्रजापतेनत्वत् ।**
**तेजोऽसीति दधिक्राव्णोऽथाप्यायस्वमन्त्रमधुमत्यः ॥ ९४ ॥**
**आकृष्णेनाश्वत्थे भद्रंकर्णेभिऋग् गणानां त्वा ।**
**वायो ब्रह्मोपत्वा देवस्यत्वा च मानुषे मन्त्राः ॥ ९५ ॥**
**विष्णोरराटमिति तत्त्वायामि सुपर्णमित्यतः स्योना ।**
**शन्नो यादिव्या यासां च परोमात्रयाणवो दैवे ॥ ९६ ॥**
**ब्राह्मेऽतो देवा इति मनवः स्नपने स्वपूरणाणुयुताः ।**
**इति पञ्चविंशतिमितद्रव्यस्नानक्रमो हरौ प्रोक्तः ॥ ९७ ॥**

---

मावाग्दक्षविष्णूशनश्चन्द्रेन्द्रार्ककृतान्तविश्वधनदेरब्रह्मवस्वाह्वयाः पितरः श्रीः सरस्वती दक्षो विष्णुः शुक्रः सोम इन्द्रः सूर्यो यमो विश्वेदेवा वैश्रवणो वायुः ब्रह्मा वसवश्च, सावित्र्यपि मानुषे । गन्धर्ववारीश्वराः गन्धर्वो वरुणश्च, तार्क्ष्यो गरुडः, क्ष्मानिर्ऋती पृथिवी निर्ऋतिश्च, रमाधरनृसिंहाख्यौ श्रीधरो नृसिंहश्च, हयास्यो हयग्रीवः दैविके । एते क्रमाद् द्रव्याणां देवता निगदिताः स्युः ॥ ९३ ॥

स्नानमन्त्रान् पठति — इदमिति । इदमृक् 'इदं विष्णुः', 'हिरण्यवर्णाः शुचयः', 'आपो हि ष्ठ', 'प्रजापते न त्वत्', 'तेजोऽसी'ति, 'दधिक्राव्णो अकारिषम्', आप्यायस्वमन्त्रमधुमत्यः 'आप्यायस्व'मन्त्रो 'मधु वाता' इत्यादि तिस्र ऋचश्च ॥ ९४ ॥

'आकृष्णेन रजसा', 'अश्वत्थे वो निषदनं', 'भद्रंकर्णेभि'ऋक् 'गणानां त्वा', 'वायवायाहि', 'ब्रह्मजज्ञानम्', 'उप त्वाग्ने', 'देवस्य त्वा' च, एते मानुषे मन्त्राः ॥ ९५ ॥

'विष्णोरराटमि'ति, 'तत् त्वायामि', 'सुपर्णं वस्ते', 'स्योना पृथिवी', 'शन्नो देवी', 'या दिव्या आपः', 'यासां राजा', 'परो मात्रया' एते दैवे दैविके अणवः ॥ ९६ ॥

ब्राह्मे 'अतो देवा' इति स्नपने स्वपूरणाणुयुताः द्वादशाक्षरादिमन्त्राः स्वस्वदेवतानाममन्त्राश्चावसाने युक्ताः एते मनवः स्युः । इति हरौ पञ्चविंशतिमितद्रव्यस्नानक्रमः पञ्चविंशतिमितैर्द्रव्यैः स्नानक्रमः प्रोक्तः ॥ ९७ ॥

अधमाधमपूर्वमुत्तमोत्तमपर्यन्तमिहाभिषेचनम् ।
नवधा परिचक्षते बुधाः क्रमशः शङ्करशार्ङ्गधन्वनि ॥ ९८ ॥

बाणाद्रिनन्दकृतयः कलशा हरीशे
 न्यूनं शतं सनवविंशतिकं शतं च ।
तत्त्वोत्तरद्विशतकं द्विशती सविश्वा
 सा सप्तसप्ततियुता[2] त्रिशती सताना ॥ ९९ ॥

आज्यादिभिर्[3]हरिवदत्र कषायनिष्ठै-
 र्द्रव्यैस्तु सप्तदशभिस्त्र्यधमाभिषेकाः ।
शैलाङ्कशङ्करपुटाहितपञ्चसप्त-
 गोवर्गसङ्ख्यकलशैर्विहिताः क्रमेण ॥ १०० ॥

---

अथ शिवनारायणकलशक्लृप्तिमाह —अधमाधमेति । इह शङ्कर-शार्ङ्गधन्वनि अधममध्यमोत्तमेषु प्रत्येकमधममध्यमोत्तमयोगादभिषेचनं क्रमशो बुधा नवधा परिचक्षते आहुः ॥ ९८ ॥

हरीशे एतत्संख्याः कलशाः स्युः — बाणाद्रिनन्दकृतयः बाणकृतिः पञ्चविंशतिः अद्रिकृतिरेकोनपञ्चाशत् नन्दकृतिरेकाशीतिः इत्यधमत्रयम् । न्यूनं शतं सप्तनवतिः, सनवविंशतिकं शतं च नवविंशत्यधिकशतं, तत्त्वोत्तर-द्विशतकं पञ्चविंशत्यधिकशतद्वयमिति मध्यमत्रयम् । सविश्वा द्विशती त्रयो-दशाधिकशतद्वयं, सप्तसप्ततियुता सा सप्तसप्तत्यधिकशतद्वयं, सताना त्रिशती एकोनपञ्चाशदधिकत्रिशतमिति (उत्तमत्रयम्) ॥ ९९ ॥

अत्र शङ्करनारायणेऽपि हरिवत् विष्णुवत् शैलाङ्कशङ्करपुटाहितपञ्च-सप्तगोवर्गसंख्यकलशैः सप्तनवैकादशपुटेषु कल्पितैः पञ्चविंशत्येकोनपञ्चाश-देकाशीतिकलशैराज्यादिभिः कषायनिष्ठैः सप्तदशभिर्द्रव्यैः त्र्यधमाभिषेकाः अधमाधमाधममध्यमाधमोत्तमाश्चाभिषेकाः क्रमेण विहिताः ॥ १०० ॥

---

१. 'तत्राशुगादिनववर्गमिता घटाः स्युर्न्यूनं', २. 'तादिकृतिस्त्रिशतयाः' क. पाठः. ३. 'कक्वथितनिष्ठहरिप्रदिष्टद्रव्यै' ख. पाठः. ४. 'ग ॥ मुक्ताफलं कुलिशविद्रुममञ्जपुष्यब्रह्मादिरागमर्कशसूर्यपदादिकान्तम् । वैडूर्यगारुडशतक्रतुनीलसारस्कान्तं त्रिलोचनहरौ स्फटिकं च रत्नम् ॥

**सद्योजातकवामवक्त्रबहुरूपेशानपञ्चाक्षरा-**
**प्यायस्वेति पयोवधीह मधुवातब्रह्महृद्भ्यां मधु ।**
**अश्वत्थे शिरसा जिनार्णशिखया पुष्पावतीलोचने-**
**नापोहस्त्रमयाणुना पुरुषपङ्क्त्यर्णाणुनेत्याक्षतम् ॥ १०१ ॥**

---

तेषु त्रिषु स्नानमन्त्राणामेव विशेष इति तान् पठति — सद्य इति । सद्योजातकवामवक्त्रबहुरूपेशानपञ्चाक्षराणि 'सद्योजात', वामदेवाय', 'तत्पुरुषाय', 'अघोरेभ्यः', 'ईशानः सर्वविद्यानां', पुनः पञ्चाक्षरम्, 'आप्यायस्व' इति पयोवधि पाद्यार्घ्याचमनीयगव्यघृतदधिक्षीरेषु सप्त मन्त्राः । इह मधुवातब्रह्महृद्भ्यां 'मधु वाता' इति तिस्रः ऋचः, पञ्चब्रह्महृदयेन च मधु मधुस्नानम् । अश्वत्थे वः', शिरसा पञ्चब्रह्मशिरसा कषायस्नानम् । जिनार्णशिखया 'ओं शङ्कराय विद्महे' इत्याद्यया गायत्र्या ब्रह्मशिखया चोष्णोद-

---

श्रीमातुलुङ्गकुटचामलकाम्रकेरीरम्भाकपित्थबदरीफलपूरभव्यम् ।
चोचम्पलं कनकपित्तलकांस्यसीसं ताम्रायसाररजतत्रपुलोहमाहुः ॥

भद्रं भूस्तृणयामिनीकुशशिरीषं सूर्यवर्तिन्यपि
प्रोद्दिष्टं पनसं सहा द्वितुलसीगन्धात्मकं मार्जनम् ।
गन्धो रुङ्मुरवारिसेव्यघुसृणप्रायःपटीराश्च ये
सामान्याः शशिदेवदारुघननागाश्चेह तौ द्वादश ॥

नीवारशालियवतण्डुलवेणुबीजमाषं सकङ्गुसितसर्षपमक्षताङ्गम् ।
श्यामाकबिल्वतुलसीकुशगन्धदूर्वाक्रान्त्यक्षतातिवपयोरुहमत्र पाद्यम् ॥

दघं(?)न्याक्षताढ्यं तिलफलयवकौशैर्वचागन्धपुष्पै-
राज्यार्घ्यं जातितक्कोलशशिकुसुमगन्धश्रियाचामकं स्यात् ।
क्वाथे श्रीखादिरग्रन्थिलपनसशमीनीपशम्याकजम्बू-
क्षीर्याम्रब्रह्ममाधूकमपि च भसिते तत् करीषं सुगन्धम् ॥

राजीनीवारपद्मैर्यवतिलतुलसीब्रह्मभिर्वेणुबीजैः
शान्त्यम्भो मङ्गलाम्भश्चलदलमुखजैन्द्र्यर्जुनाशोककौशैः ।
कार्यं पद्मैकपद्मान्वितमथ कठिनीतीरमध्यात् तटाका
न्नाकुक्षेत्रादिवेदीवृषकरिकिरिशृङ्गाच्च गृह्णातु मृत्स्नाः ॥

नीवारगोधूमयवप्रियङ्गुश्यामाकशालीतिलवैणवानि ।
बीजानि मुद्गचणकवन्ति कुन्दफलिन्युपेतं शिवभावि पुष्पम् ॥

सद्यो' क. पाठः. १ 'वः पञ्च' ख. पाठः.

**तन्महेशदशवर्णतः परं व्योमजैनलिपिपङ्क्तिवर्णतः ।**
**त्र्यम्बकाणुकवचेन मानकाग्विष्णुजैनलिपिना यवोदकम् ॥**
**इत्युक्तसद्यादिकमन्त्रकाणां सहस्रशीर्षाद्यजितोक्तमन्त्रान् ।**
**एकैकमादौ समुदीर्य मन्त्री संस्नापयेचाभिहितक्रमेण ॥**
**तिथिसङ्ख्यपुटेऽधमाधमं रचयेच्छैलपुटेन मध्यतः ।**
**नवकान्यपि दिग्विदिक्षु तत्परितोऽष्टाविति मध्यमाधमम् ॥**
**गुलेक्षुकेरोदकतैलशान्तिमङ्गल्यमृद्भस्मजलानि बाह्ये ।**
**ब्राह्मेण बीजेन घृतादिकान्ते दिक्कोणदेशेष्वभिपूरयेच ॥**

---

कस्नानम् । पुष्पावतीलोचनेन 'पुष्पावतीः' ब्रह्मनेत्रेण च फलोदकस्नानम् । 'आपो हि ष्ठ' अस्त्रमयाणुना ब्रह्मास्त्रमन्त्रेण च मार्जनस्नानम् । पुरुषपङ्क्त्यर्णाणुना 'तत्पुरुषेण' व्योमव्यापिदशाक्षरेण चाक्षतोदस्नानमिति आक्षतम् अक्षतोदपर्यन्तस्नानम् ॥ १०१ ॥

तन्महेशदशवर्णतः 'तन्महेशाय' इति गायत्र्या व्योमव्यापिदशाक्षरेण च परं रत्नोदकस्नानम् । व्योमजैनलिपिपङ्क्तिवर्णतः व्योमगायत्र्या तद्दशाक्षरेण च लोहोदस्नानम् । त्र्यम्बकाणुकवचेन 'त्र्यम्बकं यजामहे' ब्रह्मकवचेन च गन्धोदकस्नानम् । मानकक् 'मा नस्तोके', विष्णुजैनलिपिना 'नारायणाय विद्महे' इत्याद्यया गायत्र्या यवोदकम् ॥ १०२ ॥

मन्त्री मन्त्रविशेषज्ञः इत्युक्तसद्यादिकमन्त्रकाणां सद्योजातादिसप्तदशविधानामुक्तानां मन्त्राणाम् आदौ सहस्रशीर्षाद्यजितोक्तमन्त्रान् वैष्णवोक्तसहस्रशीर्षादिमन्त्रेषु एकैकं समुदीर्य अभिहितक्रमेण 'मानुषदिक्खण्डघटैरि'त्यादिश्लोकोक्तक्रमेण संस्नापयेत् ॥ १०३ ॥

अथ मध्यमाधमादिकमाह — तिथीति । तिथिसंख्यपुटे पञ्चदशपुटे क्षेत्रे मध्ये शैलपुटेन सप्तपुटेनाधमाधमं रचयेत् । तत्परितो वीथ्या बहिः दिग्विदिक्षु अष्टौ नवकान्यपि रचयेदिति मध्यमाधमं स्यात् ॥ १०४ ॥

तत्र घृतादिकान्ते आज्योष्णोदकेत्याद्युक्तसप्तदशद्रव्यान्ते तद्बाह्ये दिक्कोणदेशेषु गुलेक्षुकेरोदकतैलशान्तिमङ्गल्यमृद्भस्मजलानि गुलम् इक्षूदकं

---

१. 'पारिजप्य म' ख. पाठः

त्वं विष्णो इति दिक्ष्वथाश्रिषु पुनर्विष्णोर्नुकं शन्न इ-
त्यश्वक्रान्तऋगुद्धृतासि च पुरोयुक्तैः क्रमाद् ब्रह्मभिः।
केरोदावधि संहतैरथ पृथग्भूतैश्च सद्यान्तिमै-
र्मूलोङ्कारसमन्वितैः स्नपितयेत् स्नाते यवोदान्तिमैः ॥

क्षेत्रे विंशतिसूत्रकेऽधमभवं मध्ये तु चेन्मध्यमं
वीथिं पङ्क्तियुजोत्तमं यदि तु पङ्क्त्यैतद्बहिस्तत्क्रमात्।
कुर्यात् षोडश पञ्चकानि नवकान्यप्यन्तरा गन्धकं
विन्यस्येद्धरिमूलतोऽन्यदखिलं प्राग्वद् द्वयीतीतरा ॥१०७॥

क्षेत्रे तत्र त्रयोविंशतिपुट इषुवर्गात्मकद्रव्यक्लृप्त्या
मध्ये कृत्वाष्टयुक्तं शतमथ परितः पञ्चकोदञ्चितानि ।

---

नालिकेरोदकं तैलं शान्तिजलं मङ्गल्यजलं मृज्जलं भस्मजलं च ब्राह्मेण बीजेन 'कं' इति ब्रह्मबीजेनाभिपूरयेच्च ॥ १०५ ॥

यवोदान्तिमैः सप्तदशद्रव्यैः स्नाते सति दिक्षु 'त्वं विष्णो सुमतिमि'-ति, अथाश्रिषु 'विष्णोर्नुकं', 'शन्नो देवीरि'ति, 'अश्वक्रान्त'ऋक्, 'उद्धृतासि वराहेण' इति वैष्णवमन्त्रपुरोयुक्तैः, केरोदावधि गुलेक्षुकेरोदस्नानेषु संहतैः समस्तैः ब्रह्मभिः, अथ पृथग्भूतैः सद्यान्तिमैश्च पञ्चभिर्ब्रह्मभिश्च एतेषामन्ते मूलोङ्कारसमन्वितैश्च स्नपितयेत् स्नपितं कुर्यात् ॥ १०६ ॥

मध्यममध्यमं मध्यमोत्तमं चाह — क्षेत्र इति । विंशतिसूत्रके एकोनविंशतिपुटे क्षेत्रे मध्ये अधमभवं मध्यमं चेत् पङ्क्तियुजा, मध्ये उत्तमं यदि तु पङ्क्त्या च वीथिं कुर्यात् । एतद्बहिस्तत्क्रमात् मध्यमं चेत् षोडश पञ्चकानि, उत्तमं यदि षोडश नवकान्यपि कुर्यात् । अत्रान्तरा अन्तरालेषु हरिमूलतः वैष्णवाष्टाक्षरेण गन्धकं गन्धोदकं विन्यस्येत् । अन्यदखिलम् आज्यादिकं गुलादिकं च प्राग्वत् । इतरा द्वयी मध्यममध्यमं मध्यमोत्तमं चेति स्यात् ॥ १०७ ॥

उत्तमत्रैविध्यमाह — क्षेत्र इति । तत्र त्रयोविंशतिपुटे क्षेत्रे मध्ये इषुवर्गात्मकद्रव्यक्लृप्त्या पञ्चदशपुटैः पञ्चविंशतिद्रव्यक्लृप्त्या मानुषान्तरा-

---

१. 'च' क. पाठः.

द्विकोणाभ्यन्तराण्यारचयतु नवकाढ्यानि वा सत्यकादि-
स्थानस्थानि त्रिकाणि द्विविधविधिसमान्युत्तमार्वाग्द्वयीति

तत्रोत्तमोत्तमविधौ शतमष्टयुक्तं
मध्ये बहिर्दिनकराष्टिदिनेशसङ्ख्याः ।
दिक्कोणमध्यनिहिता जलधिप्रमाणा-
स्तत्सत्यकादिषु च तत्त्वपुटे घटाः स्युः ॥ १०९ ॥

बलां वचां चातिबलां च शङ्ख-
पुष्पीं च सक्तूदकसिंहिके च ।
व्याघ्रीं कुशोदं च घृतादिकान्ते
ब्रह्माङ्गतोऽन्तर्न्यसतु त्रिकेषु ॥ ११० ॥

---

लगतत्रिकैः सहाष्टोत्तरं शतं कृत्वा, अथ परितो दिक्कोणाभ्यन्तराणि पञ्चको-
ष्ठाञ्चितानि पञ्चकैर्युक्तानि वा नवकाढ्यानि वा आरचयतु । उत्तमाधमं चेत्
पञ्चकानि, उत्तममध्यमं चेद् नवकानीति विभागः । सत्यकादिस्थानस्थानि
दिगन्तरालयोर्मध्यस्थानि त्रिकाण्यन्यान्यन्तरालानि वारचयतु । तानि तु द्वि-
विधविधिसमानि उत्तमस्याधमे मध्यमे च समानि । उत्तमार्वाग्द्वयी उत्तमत्रि-
तयस्य अधोगतद्वयमिति स्यात् ॥ १०८ ॥

तत्रोत्त(मोत्त)मविधौ तत्त्वपुटे पञ्चविंशतिपुटे मध्ये पूर्ववदष्टयुक्तं
शतम् । बहिर्दिक्कोणमध्यनिहिताः दिक्कोणान्तरालस्थाः दिनकराष्टिदिनेश-
संख्याः क्रमेण द्वादशषोडशद्वादशसंख्याः । तत्सत्यकादिषु दिक्समीपस्था-
न्तरालेषु जलधिप्रमाणाः चत्वारः कलशाः स्युः ॥ १०९ ॥

उत्तमत्रितयेऽपि साधारणं द्रव्यपूरणमाह — बलामित्यादिभिः ।
अन्तः घृतादिकान्ते घृतादिसप्तदशद्रव्ये पूरिते सति तत्रान्तरालगतत्रिकेषु
ब्रह्माङ्गतः पञ्चब्रह्माङ्गमन्त्रैः बलां (കുറുന്തോട്ടി) वचाम् (വയമ്പ്) अतिब-
लां (ആനക്കുറുന്തോട്ടി) शङ्खपुष्पीं, सैव, पुनः सक्तूदकसिंहिके सक्तूदकं
सिंहिकां च, (സിംഹികാ-ചെറുവഴുതിന. വ്യാഘ്രി-വലിയവഴുതിന)
कुशोदकं च न्यसतु ॥ ११० ॥

---

१. 'ष' ख. पाठः.

दिक्कोणकीर्तितगुलाद्यभिपूरणान्ते
तत्सत्यकादिषु बहिर्न्यसतु क्रमेण ।
अष्टाक्षरेण सलिलानि नदीसमुद्र-
वाप्यन्धुवर्षहिमतीर्थकनिर्झराणाम् ॥ १११ ॥

तत्रान्तरिक्षाद्यपरान्तरेषु
स्वमूलतो न्यस्यतु बीजतोयम् ।
स्वर्णं तिलं दौर्व्यकशालितण्डु-
लाम्भः क्षपापुष्पजलं क्रमेण ॥ ११२ ॥

उत्तमत्रितयेऽपीति व्यक्तमुक्तं प्रपूरणम् ।
ततस्तत्स्नपनं कुर्यात् तत्तत्पूरणमन्त्रतः ॥ ११३ ॥

स्नानेऽस्मिन् नवधोदितेऽपि तदुदग् द्रव्यं समस्तं क्षमं
न्यस्य द्रोणघटे समस्तमनुभिः सम्पूर्य गन्धाम्भसा ।

---

बहिर्दिक्कोणकीर्तितगुलाद्यभिपूरणान्ते दिक्कोणेषूक्तैर्गुलादिभिः पूरिते सति पूर्वं तत्सत्यकादिषु दिक्समीपस्थान्तरालेषु क्रमेण वैष्णवाष्टाक्षरेण नदीसमुद्रवाप्यन्धुवर्षहिमतीर्थकनिर्झराणाम् । नदीसमुद्रौ स्वयमेव । (വാപി= നെടുംകേ.ി, അന്ധു=കിണറ) । वर्षं वर्षजलम् । हिमं हिमजलम् । तीर्थं तीर्थजलम् । (.ിർഝരം=അരുവിയാറ) । एतेषां सलिलानि तदभावे तद्बुद्ध्या शुद्धजलानि च न्यसतु ॥ १११ ॥

तत्रान्तरिक्षाद्यपरान्तरेषु कोणसमीपस्थान्तरालेषु स्वमूलतः बीजतोयं, स्वर्णं, तिलं, दौर्व्यकशालितण्डुलाम्भः दूर्वाम्भः शाल्यम्भः तण्डुलाम्भश्च, क्षपापुष्पजलं क्षपाजलं (ക്ഷപാ=മഞ്ഞൾ) पुष्पजलं च क्रमेण न्यस्यतु ॥

इति उत्तमत्रितयेऽपि प्रपूरणं व्यक्तं स्फुटम् उक्तम् । ततस्तत्तत्पूरणमन्त्रतः स्नानोक्तमन्त्रावशिष्टेषु कलशेषु पूरणमन्त्रैः स्नपनं कुर्यात् ॥ ११३ ॥

शङ्करनारायणकलशस्नाने विशेषकृत्यमाह — स्नान इति । ईशाच्युते नवधा नवप्रकारेणोदितेऽपि स्नाने साधकः सर्वद्रव्याणि सर्वमन्त्रांश्च

---

१. 'बीजतो' इति मूलकोशपाठः. २. 'न्त्रन्न' ख. घ. ङ. पाठः.

इष्ट्वा सम्यगनेन सर्वकलशान्ते स्नापयेत् साधको
यज्ञायज्ञनृसूक्तरुद्रसहितव्योमाणुनेशाच्युते ॥ ११४ ॥

अत्यष्टिसङ्ख्यैरिषुवर्गसङ्ख्यैर्द्रव्यैरथैतैः क्रमवर्धितैश्च ।
वक्ष्यामि तैलादिकगन्धकर्पूराद्यन्वयेन स्नपनं स्मरारौ ॥

अन्तः शान्त्युदकं प्रदक्षिणतयेन्द्रात् पञ्चगव्यं पयो
दध्याज्यं मधु रत्नकं कुशजलं गन्धाम्बु बाह्यावृतौ ।
तद्वत् क्षारगुलासवाज्यदधिदुग्धाच्छोदगर्भाभिधान्
सङ्कल्प्याम्बुनिधीन् दलस्थितघटेष्वापूरयेद् वार्यपि ॥

---

तत्र साधयितुं समर्थो गुरुः तदुद(ग्भागे?क्) तस्य कलशक्षेत्रस्योदग्भागे द्रोण-घटे द्रोणवहे कलशे समस्तमनुभिः तत्तद्द्रव्याणामुक्तैर्मन्त्रैः समस्तं द्रव्यं समं समप्रमाणं न्यस्य गन्धाम्भसा संपूर्य सम्यगिष्ट्वा कलावाहनादिसहितं यथा-विधानं संपूज्य अनेन सर्वकलशान्ते यज्ञायज्ञनृसूक्तरुद्रसहितव्योमाणुना यज्ञा यज्ञा वः, नृसूक्तं पुरुषसूक्तं, रुद्रं श्रीरुद्रम् एतैः सहितेन महाव्योमव्या-पिमन्त्रेण स्नापयेत् ॥ ११४ ॥

अथ शिवस्य कलशविधिमाह — अत्यष्टीति । अथ स्मरारौ अत्यष्टि-संख्यैः सप्तदशसंख्यैः, इषुवर्गसंख्यैः पञ्चविंशतिसंख्यैश्च द्रव्यैः, तैलादिक-गन्धकर्पूराद्यन्वयेन तैलादियोगेन गन्धयोगेन कर्पूरादियोगेन च क्रमवर्धितैः एतैः पञ्चविंशतिद्रव्यैश्च स्नपनं वक्ष्यामि ॥ ११५ ॥

तत्र सप्तदशद्रव्यस्नाने[2] क्लृप्तिमाह — अन्तरिति । अन्तर्ब्रह्मकलशे शान्त्युदकं, बाह्यावृतौ मानुषे इन्द्रात् पूर्वस्मादारभ्य प्रदक्षिणतया पञ्चगव्यं पयः दधि आज्यं मधु रत्नकं कुशजलं गन्धाम्बु चापूरयेत् । दलस्थितघटेषु तद्वद् इन्द्रादारभ्य प्रदक्षिणतया क्षारगुलासवाज्यदधिदुग्धाच्छोदगर्भाभिधान् क्षाराद्यभिधानयुक्तानम्बुनिधीन् सङ्कल्प्य वार्यप्यापूरयेत् ॥ ११६ ॥

---

१. 'न्वितेन' क. पाठः. २. 'न' ख. ग. ङ. पाठः.

सावित्री शीतांशुरुद्रौ हुताशः
स्कन्दो वित्तेशश्च सप्तर्षयश्च ।
इन्द्रश्च स्युर्देवता बाह्यसंस्था
ईशानो ब्राह्मेऽम्बुधिष्वम्बुधीशः ॥ ११७ ॥

सद्याद्याः पञ्चगव्ये निजनिजमनवो दुग्धदध्याज्यमाध्वी-
ष्वासत्येनाश्मतोये कुशमयसलिले स्याच्च देवस्यमन्त्रः ।
गन्धद्वारेति गन्धाम्बुनि सलिलनिधिष्वष्टसु स्युः समुद्र-
ज्येष्ठाद्या ब्रह्मकुम्भे स्नपनमनुरथ प्रोदिता व्योमविद्या[1] ॥

तत्त्वद्रव्यविधौ शिवेऽर्धशतसंयुक्ते घटाना शते
क्षेत्रेऽत्यष्टिपुटे घटा नव निवेश्या ब्रह्मभागेऽम्बुजे ।
दिक्कोणेषु कृशानुभूमिपरिसङ्ख्याताः क्रमाद् दैविके-
ऽथाशाश्रयन्तरसंस्थिता नवविकाराग्न्युन्मिता मानुषे ॥

तद्देवताः पठति — सावित्रीति । सावित्री, शीतांशुरुद्रौ सोमो रुद्रश्च, हुताशोऽग्निः, स्कन्दः स्वयं, वित्तेशो वैश्रवणः, सप्तर्षयः त एव, इन्द्रः स एव, एता बाह्यसंस्थाः देवताः स्युः । ब्राह्मे कलशे ईशानः । अम्बुधिष्वम्बुधीशो वरुणः ॥ ११७ ॥

स्नानमन्त्रान् पठति—सद्याद्या इति । अथ पञ्चगव्ये सद्याद्याः पञ्चब्रह्माणो मन्त्राः । दुग्धदध्याज्यमाध्वीषु निजनिजमनवः 'आप्यायस्वे'त्याद्याः । अश्मतोये रत्नोदके 'आसत्येन' । कुशमयसलिले 'देवस्य त्वे'ति । गन्धाम्बुनि 'गन्धद्वारे'ति । अष्टसु सलिलनिधिषु 'समुद्रज्येष्ठा'द्याः । ब्रह्मकुम्भे व्योमविद्या स्नपनमनुः प्रोदिता ॥ ११८ ॥

अथ शिवे तत्त्वद्रव्यविधौ पञ्चविंशतिद्रव्ये घटानामर्धशतसंयुक्ते पञ्चाशत्कलशयुते शते अत्यष्टिपुटे[2] सप्तदशपुटे क्षेत्रे ब्रह्मभागेऽम्बुजे नव घटा निवेश्याः । दैविके दिक्कोणेषु क्रमात् कृशानुभूमिपरिसंख्याताः त्र्येकसंख्याताः, अथ मानुषे आशाश्रयन्तरसंस्थिताः दिक्कोणान्तरालस्थिताः नवविकाराग्न्युन्मिताः नवषोडशत्रिमिताः निवेश्याः ॥ ११९ ॥

१. 'व्योमविद्या सदपि ॥' ख. पाठः. २. 'ट' ग. ङ. पाठः.

**अन्तर्दिग्विदिशोर्बहिश्च कृतिसूत्रेऽभ्यन्तरेऽर्कार्कषड्-**
**वेदेभा द्विशते घटा नृपयुतेऽङ्गाब्धीनभूपद्विपाः ।**
**मध्याद्याखिलखण्डकेषु नवशो द्व्यर्काधिके मानुषे**
**कोणेष्वेकघटाधिकं शरशतं प्रागुक्तमन्यत् समम् ॥ १२० ॥**
**ब्राह्मे शान्त्यम्बु दैवे दिशि विदिशि पुनः पाद्यमाचाममर्घ्यं**
**गन्धाज्यक्षौद्रदुग्धं न्यसतु दधि बहिश्चेक्षुतोयं फलोदम् ।**
**क्वाथाम्भः सक्तुगन्धार्तवकनकजलं रत्नमुक्ताप्रवालं**
**दिक्कोणाभ्यन्तराले यवतिलजलदूर्वोत्पलं कौशशाली ॥**
**ईशानः पितरो हुताशदयितावाचौ च सावित्र्यथो**
**बह्निः षण्मुखसोमरुद्रमहिषारीभास्यविघ्नेश्वराः ।**

---

केवले द्विशते कृतिसूत्रे विंशतिसूत्रे एकोनविंशतिपुटे अन्तर्बहिश्च दिग्विदिशोः बहिरभ्यन्तरे च क्रमात् पञ्चसु स्थानेषु अर्कार्कषड्वेदेभाः द्वादश द्वादश षट् च चत्वारोऽष्टौ च घटा निवेश्याः । तत्रैव नृपयुते षोडशाधिके द्विशते पूर्वक्रमेणैव अङ्गाब्धीनभूपद्विपाः षट्चतुर्द्वादश षोडशाष्टौ च घटा निवेश्याः । द्व्यर्काधिके चतुर्विंशत्यधिके शतद्वये मध्याद्याखिलखण्डकेषु मध्याद्येष्वखिलेषु खण्डेषु नवशो घटा निवेश्याः । नवकानां पञ्चविंशतिकमित्यर्थः । पुनः शरशतं पञ्चशतं मानुषे भागे कोणेष्वेकघटाधिकं, पूर्वं षोडशकम् इदानीं सप्तदशकमित्यर्थः । प्रागुक्तमन्यदखिलमत्रापि समम् ॥

पञ्चविंशतिद्रव्याणां पूरणक्रममाह — **ब्राह्म** इति । शिवे ब्राह्मे कलशे शान्त्यम्बु न्यसतु । दैवे दिशि विदिशि क्रमात् पाद्यमाचाममर्घ्यं, गन्धाज्यक्षौद्रदुग्धं पञ्चगव्यमाज्यं मधु क्षीरं च दधि च न्यसतु । बहिर्दिक्कोणाभ्यन्तराले क्रमाद् इक्षुतोयं, फलोदं, क्वाथाम्भः, सक्तुगन्[illegible]कनकजलं सक्तुजलं गन्धजलं पुष्पजलं कनकजलं च, रत्नमुक्ताप्रवालं रत्नजलं मुक्ताजलं विद्रुमजलं च यवतिलजलदूर्वोत्पलं यवजलं तिलजलं दूर्वाजलमुत्पलजलं च, कौशशाली कुशजलं शालीजलं च न्यसतु ॥ १२१ ॥

देवताः पठति — **ईशान** इति । ईशानः, पितरः, हुताशदयिता स्वाहा, वाक् सरस्वती, सावित्री, वह्निरग्निः षण्मुखसोमरुद्रमहिषारीभास्यवि-

---

१. 'न्यस्येच्छान्त्य', २. 'दधि च. नृविषयेऽथेक्षु', ३. 'दूर्वला' ख. पाठः.
४. 'शमि' क. ख. पाठः.

ज्येष्ठाखण्डलविष्णवजैलिविलयः पाशी दिनेशो मरुत्
प्रेताधीशरमे मही च मुनयो विश्वे च तद्देवताः ॥ १२२ ॥

पाद्यादीदं विष्णुरापः पुनन्त्व-
त्यापोहिष्ठेत्यग्निमीले त्विषेत्वा ।
मध्वाद्यादध्यात्ममन्त्रा उपत्वा
मानस्तोकेऽश्वत्थ इत्याकषायम् ॥ १२३ ॥

भूयः सुमित्राद्यग्नुरग्न आया-
द्यावोऽथ पुष्पाद्यतिमन्त्रकः स्यात् ।

---

धेश्वराः स्कन्दः सोमः रुद्रो दुर्गा गणपतिर्विघ्नेश्वराश्च, ज्येष्ठाखण्डलविष्णव-जैलिविलयः ज्येष्ठा इन्द्रः विष्णुर्ब्रह्मा वैश्रवणश्च, पाशी वरुणः, दिनेशः सूर्यः, मरुद् वायुः, प्रेताधीशरमे यमः श्रीश्च, मही पृथिवी, मुनयः सप्तर्षयः, विश्वेदेवाश्च तद्देवताः तेषां द्रव्याणां देवताः ॥ १२२ ॥

स्नानमन्त्रान् पठति — पाद्यादीति । पाद्यादिक्रमेण 'इदं विष्णुः', 'आपः पुनन्तु' इति, 'आपो हि ष्ठे'ति, 'अग्निमीले', 'इषे त्वा', मध्वाद्या-दधि मध्वारभ्य दधिपर्यन्तम् आत्ममन्त्राः स्वस्वमन्त्राः । मधौ 'मधु वाताः' । क्षीरे 'आप्यायस्व' । दध्नि 'दधि क्राव्णः' । पुनः 'उप त्वाग्ने', 'मानस्तोके', 'अश्वत्थे वः' इत्याकषायं कषायपर्यन्तम् ॥ १२३ ॥

'सुमित्रा[3] नः' 'अग्न आयाहि' इत्याद्यः । अथ पुष्पात्रतिमन्त्रकः,

---

१. 'पि' क. पाठः. २. 'ताः ॥
शान्त्यम्भो रत्नगन्धोदककनकभृतं पाद्यकं शैलमृत्सा
दूर्वाराजीतिलैराचमनमथ सतक्कोलजातीलवङ्गम् ।
अर्घ्यं दध्यम्बुदुग्धाक्षतयवतिलराजीकुशाग्रैः फलोदं
भव्यं श्रीवीजपूरामलकपनसरम्भाम्रकैरैर्महेशे ॥
प्लक्षोनक्षीरिशैरीषकपनसमधूकद्विजाम्रैः कषायं
गन्धाः शीताश्रसेव्याम्बुगरुमुरगदन्ताः प्रसूनाम्बु जात्या ।
नन्द्यावर्तमल्लिकाचम्पकसबकुलसौगन्धिकाब्जैश्च रत्नं
मुक्तावैडूर्यवज्रं मणिमरतकगोमेदपुष्येन्द्रनीलम् ॥
पाद्यादीदं' क. पाठः. ३. 'न्या' ख. घ. ङ. पाठः.

ब्रह्मादिजज्ञानहिरण्यवर्णमन्त्रौ
समुद्रात्मकमन्त्रकोऽथ ॥ १२४ ॥

रक्षोहणमोषधयः पितरःपदपूर्वकः श्रिये त्रिष्टुप् ।
देवस्यत्वाथाशुःशिशान इति चाणवोऽत्र शाल्यन्तम् ॥

द्रव्ये तत्त्वमितेऽत्र षोडशभिरप्यभ्यङ्गपूर्वैर्युते
कुम्भानां त्रिशती द्विशत्यपि समायुक्ता त्रिपञ्चाशता ।
मृत्सापार्श्वयुगस्थगन्धसलिलेऽस्मिन् कृत्युपेतात्रिश-
त्युक्ता पञ्चशती तु पञ्चसहिता कर्पूरकाद्यान्विते ॥ १२६ ॥

क्षेत्रे तत्र त्रयोविंशतिपुट इषुवर्गात्मकद्रव्ययुक्त्या
मध्ये कृत्वाष्टयुक्तं शतमथ परितः कल्पयेद् वीथिकान्ते ।

---

ब्रह्मादिजज्ञानहिरण्यवर्णमन्त्रौ 'ब्रह्मजज्ञानं' 'हिरण्यवर्णाः', । समुद्रात्मकमन्त्रकः 'समुद्रज्येष्ठाः' ॥ १२४ ॥

'रक्षोहणं वाजिनम्', 'ओषधयः संवदन्ते', पितरःपदपूर्वकः 'पितरः पितामहा' इत्यादि, 'श्रिये जातः', त्रिष्टुबिति 'जातवेदसे सुनवाम', 'देवस्य त्वा', 'आशुः शिशानः' इति शाल्यन्तं शालीजलपर्यन्तं मन्त्राः । मध्ये ब्रह्मकलशे व्योममन्त्रकः स्यात् ॥ १२५ ॥

पञ्चविंशतिद्रव्ये द्रव्यान्तरयोगमाह — द्रव्य इति । अत्र तत्त्वमिते पञ्चविंशतिके द्रव्ये अभ्यङ्गपूर्वैः षोडशभिर्द्रव्यैर्युते कुम्भानां त्रिशती स्यात् । त्रिपञ्चाशत्समायुक्ता द्विशत्यपि । मृत्सापार्श्वयुगस्थगन्धसलिले मृत्तिकायाः पार्श्वद्वये स्थितैर्गन्धसलिलैर्युते अस्मिन् अभ्यङ्गादिसहितपञ्चविंशतिद्रव्ये कृत्युपेतत्रिशती विंशत्यधिकशतत्रयम् । कर्पूरकाद्यान्विते कर्पूरादिभिः सहिते तु तत्र पञ्चसहिता पञ्चशत्युक्ता स्यात् ॥ १२६ ॥

तत्र तैलादिके त्रयोविंशतिपुटे क्षेत्रे मध्ये इषुवर्गात्मकद्रव्ययुक्त्या पञ्चविंशतिद्रव्यन्यायेन पञ्चदशपुटैरष्टयुक्तं शतं कृत्वाथ परितो वीथिकान्ते वीथ्या बहिः दिक्कोणाभ्यन्तरस्थान् तिथिनवदिनकृत्सम्मितान् पञ्चदशनवद्वादशसंख्यांस्त्रिशते, त्रिपञ्चाशदुपेतद्विशते चेद् नन्दसङ्ख्यान् स्था-

---

1. 'ते त' ख. घ. पाठः.

दिक्कोणाभ्यन्तरस्थांस्तिथिनवदिनकृत्सम्मितान्नन्दसंख्यान्
वा कुम्भान् प्राग्वदन्तर्बहिरथ कलशान् पूरयेत् तैलपूर्वैः ॥

तैलं गुलं केररसाम्भसी च
तीर्थं सरिद्वारि तटाकवारि ।
कूपाम्बु च न्यस्यतु दिग्विदिक्षु
शर्वादिमन्त्रैर्विषमैः समैश्च ॥ १२८ ॥

न्यस्येद् भृशादिष्वचलोक्षशृङ्ग-
वेद्युत्थिताः क्षेत्रखलोत्थिते च ।
नद्यब्धितीर्थप्रभवाश्च मृत्स्नाः
क्रमेण विद्येश्वरनाममन्त्रैः ॥ १२९ ॥

क्षेत्रे तत्र पृषत्कवर्गपुटभाजि द्वादशोर्ध्वं शतं
मर्त्यांशाश्रिविलुप्तकोष्ठघटयुक्त्याधाय तद्बाह्यतः ।

---

नत्रयेऽपि नवकान् कल्पयेत् । वाशब्दः कलशसंख्याविकल्पद्योतनार्थः । तत्रान्तः प्राग्वत् पञ्चविंशतिद्रव्याणि पूरयेत् । अथ बहिस्तैलपूर्वैः कलशान् पूरयेत् ॥ १२७ ॥

तत्र दिग्विदिक्षु दिक्षु कोणेषु च क्रमात् विषमैः अयुग्मैः समैर्युग्मै-[2]श्च शर्वादिमन्त्रैः 'शर्वो रुद्रः' इत्याद्यष्टमूर्तिमन्त्रैः तैलं, गुलं, केररसाम्भसी नालिकेररसं नालिकेराम्भश्च, तीर्थं, सरिद्वारि, तटाकवारि, कूपाम्बु च न्यसतु ॥ १२८ ॥

भृशादिष्वन्तरालेषु विद्येश्वरनाममन्त्रैः अनन्तसूक्ष्मादिभिः अचलोक्षशृङ्गवेद्युत्थिताः पर्वतादुक्षशृङ्गादग्निहोत्रवेद्याश्चोत्थिताः, क्षेत्रखलोत्थिते (ക്ഷേത്രം-വിളഭൂമി. ഖലം-കളം) ताभ्यामुत्थिते च, नद्यब्धितीर्थप्रभवाश्च नद्याः समुद्रात् तीर्थतश्चोद्धृता मृत्स्नाः क्रमेण च न्यस्येत् ॥ १२९ ॥

तत्र गन्धजलान्विते तैलादिके पृषत्कवर्गपुटभाजि पञ्चविंशतिपुटे क्षेत्रे मध्ये मर्त्यांशाश्रिविलुप्तकोष्ठघटयुक्त्या अष्टोत्तरशतकलशस्य मानुषकोणेषु त्यक्तपदयोगेन द्वादशोर्ध्वं शतमाधाय तद्बाह्यतो दिक्षु द्वादश,

---

१. 'का' क. ख. घ. ङ. पाठः. २. 'ग्मैः श' क. ख. घ. पाठः.

दिक्षु द्वादश षोडशाग्निषु चतुष्काण्यन्तराले त्रिशः
कृत्वा न्यस्यतु मूलतोऽभिहितमृत्पार्श्वद्वये गन्धकम् ॥

एकत्रिंशत्पुटेऽन्तर्नवयुतशतमेतद्बहिर्दिग्विदिक्स्थं
चापूर्य प्रोक्तरीत्या नवकमथ सहाभ्यन्तरत्रित्रिकं च ।
एतद्बाह्ये चतुर्दिक्ष्वपि घटनवकान्यद्रिसंख्यानि कृत्वा
कर्पूराद्यैः समापूरयतु मनुयुगद्रव्यकैश्च क्रमेण ॥ १३१ ॥

पुंसेन्दुवानरपयोदपटीरवारि-
कुष्ठागरून् हरिदिशीशपदादिकेषु ।
वैडूर्यनीलमणिविद्रुमवज्रमुक्ता-
गारुत्मतानि यमराड्दिशि घोरनाम्ना ॥ १३२ ॥

---

अग्निषु षोडश, अन्तराले त्रिशश्चतुष्काणि त्रीणि त्रीणि चतुष्काणि च कृत्वा अभिहितमृत्पार्श्वद्वये भृशादिस्थानामुक्तानां मृदां पार्श्वद्वये । मूलतो गन्धकं गन्धजलं न्यसतु ॥ १३० ॥

तैलादिभिर्गन्धजलैः कर्पूरादिभिश्चान्विते पञ्चविंशतिद्रव्ये, विधिमाह — एकत्रिंशत्पुट इति । एकत्रिंशत्पुटेऽन्तः प्रोक्तक्रमेण नवयुतशतं पञ्चविंशतिद्रव्यैरापूर्य एतद्बहिर्दिग्विदिक्स्थं नवकं सहाभ्यन्तरत्रित्रिकं च कृत्वा दिक्कोणगतानि नवकानि तैलादिभिः, अन्तरालस्थितत्रित्रिकेषु मध्यस्थानि मृद्भिः, पार्श्वद्वयस्थानि गन्धोदकैश्च प्रोक्तरीत्यापूर्य पुनरेतद्बाह्ये चतुर्दिक्ष्वपि अद्रिसंख्यानि संभूयाष्टाविंशतिसंख्यानि घटनवकानि कृत्वा कर्पूराद्यैर्मनुयुगद्रव्यकैरष्टाविंशतिद्रव्यैश्च क्रमेण समापूरयतु ॥ १३१ ॥

तत्र हरिदिशि पूर्वभागे ईशपदादिकेषु ईशकोणगतं नवकमारभ्य प्रादक्षिण्यक्रमेण पुंसा तत्पुरुषेण इन्दुवानरपयोदपटीरवारिकुष्ठागरून् न्यसतु । (ഇന്ദു=കർപ്പൂരം. വാനരം=ഞണ്ടിവെണ്ണ. പയോദം=മുത്തങ്ങ. പടീരം=ചന്ദനം. വാരി=ഇരുവേലി. കുഷ്ഠം=കൊട്ടം. അഗരു=അകിൽ)। पुनर्यमराड्दिशि दक्षिणभागे घोरनाम्ना अघोरेण वैडूर्यनीलमणिविद्रुमवज्रमुक्तागारुत्मतानि न्यसतु ॥ १३२ ॥

---

१. 'कं कु' क. ख. पाठः. २. 'णादिग' क. पाठः.

न्यग्रोधपिप्पलशिरीषपलाशबिल्व-
प्लक्षाम्रजक्वथितवार्यजतः प्रतीच्याम् ।
गोधूमशालियवमुद्गतिलप्रियङ्गु-
निष्पावकान् न्यसतु वामत उत्तरस्याम् ॥ १३३ ॥

तैलादित्रिविधोक्तद्रव्याणां पूरणे पुरा प्रोक्ताः ।
मन्त्रा एव स्नपने स्नपनमितीशोऽभ्यधायि पञ्चविधम् ॥

इषुकृतिपरिसङ्ख्यद्रव्यकैरेष दुर्गा-
स्नपनमभिदधेऽस्मिन् कुम्भसङ्ख्यादिक्लृप्तिः ।
प्रथमनिगदिता स्यादत्र तु द्रव्यमन्त्र-
क्रमपरिगतमेतद् भेदमात्रं वदामि ॥ १३५ ॥

---

प्रतीच्यामजतः सद्योजातेन न्यग्रोधपिप्पलशिरीषपलाशबिल्वप्लक्षाम्रजक्वथितवारि न्यग्रोधादीनां सप्तानां कषायजलानि न्यसतु । उत्तरस्यां वामतः वामदेवेन गोधूमशालियवमुद्गतिलप्रियङ्गुनिष्पावकान् क्रमेण न्यसतु ॥ १३३ ॥

तैलादित्रिविधोक्तद्रव्याणां तैलादीनां गन्धजलानां कर्पूरादीनां च पूरणे (पुरा) प्रोक्ता मन्त्रा एव स्नपने चेतीशे पञ्चविधं सप्तदशद्रव्यं पञ्चविंशतिद्रव्यं तैलादित्रिविधं च स्नपनमभ्यधायि उक्तम् ॥ १३४ ॥

अथ दुर्गास्नपनमाह — इषुकृतीति । अद्य इदानीमहम् इषुकृतिपरिसंख्यद्रव्यकैः पञ्चविंशतिद्रव्यैः दुर्गास्नपनमभिदधे वच्मि । अस्मिन् दुर्गास्नपने कुम्भसंख्यादिक्लृप्तिः कुम्भसङ्ख्यापुटसङ्ख्याखण्डविभागादीनां स्थितिः प्रथमनिगदिता स्यात् । अत्र तु द्रव्यमन्त्रक्रमपरिगतं द्रव्यमन्त्रक्रमाणां प्राप्तमेतद्भेदमात्रं वदामि ॥ १३५ "

---

१. 'ने प्रो', २. 'देव दु' ख. पाठः. ३. 'तत्द्रव्य' क. ख. पाठः. ४. 'नं चाभ्य' क. पाठः. ५. 'मन्त्रं व' क. घ. पाठः.

ब्राह्मे स्याद् गन्धपुष्पौषधिफलमणिहेमाम्बु शर्वादि दैवे
सक्तूदं भस्म माध्वी तिलरसगुलमश्वत्थदूर्वोदरौप्यम्।
पाद्यार्घ्यं पञ्चगव्यान्यपृथगथ पृथक् कौशकाषायरत्नं
गाङ्गेयं धातुगन्धार्तवफलमपि दिक्कोणमध्येषु बाह्ये॥ १३६॥

---

द्रव्याण्याह — ब्राह्म इति। ब्राह्मे कलशे गन्धपुष्पौषधिफलमणिहे-माम्बु स्यात्। अत्रौषध्यः कुशदूर्वेत्यादिपठिता एव। मणयः सामान्यानि नवरत्नानि। गन्धपुष्पफलहेमानि प्रसिद्धानि। दैवे शर्वादि ईशानादि प्रादक्षिण्येन सक्तूदं, भस्म, माध्वी मधु, तिलरसगुलं तिलरसं तैलं गुलं च, अश्वत्थदूर्वोदरौप्यम् अश्वत्थोदं दूर्वोदं राजतोदं च। बाह्ये दिक्कोणमध्येषु दिक्कोणान्तरालेषु क्रमात् पाद्यार्घ्यं पाद्यमर्घ्यं च, अपृथक् पञ्चगव्यानि एकीकृतपञ्चगव्यम्, अथ पृथग्भूतानि गोमूत्रगोमयक्षीरदध्याज्यानि पञ्चगव्यानि पञ्चकलशेषु, कौशकाषायरत्नं कौशं कषायं रत्नोदं च, गाङ्गेयं सुवर्णं तत्सहितं जलं, धातुगन्धार्तवफलमपि धातूदं गन्धजलं पुष्पजलं फलोदं च स्युः॥ १३६॥

---

१. 'ध्ये॥

मूलं ब्राह्मे पौरुषे दैविके तस्याष्टौ वर्णा मानुषाङ्गानि दिक्षु।
चत्वार्यस्त्रं कोणदेशे त्विह स्यान्नेत्रं त्वष्टस्वन्तरालेषु भूयः॥

दूर्वा सिंहीकुशशतगुणा व्याघ्र औषध्य उक्ता
भस्मक्षीरिद्विजतरुकरीषैः स्मृतं चाथ पाद्यम्।
राजीश्यामाकयुतनवदूर्वाग्रमर्घ्यं कुशाग्रं
राजीक्षीराक्षततिलयुतं गन्धपुष्पोदकं स्यात्॥

क्वाथं क्षीरिद्रुमखदिरजं रत्नकं वज्रमुक्ता-
वैडूर्यं विद्रुममणिमहानीलनीलाञ्जरागम्।
धातून् श्यामं सरसहरितालाञ्जनं रोचनाढ्यं
सौराष्ट्रीं गैरिकमपि ससीसं मनोह्वां तथाहुः॥

पाटीराम्रायसकपिजटारोचनाः सेन्दुचोरा
गन्धा नन्दीवकुलसहितं चम्पकाशोकनागम्।
मल्लीजात्यान्वितमभिहितं पुष्पकं जातिकेरी
भव्यप्रोद्यद्वदरकदलीबीजपूरैः फलोदम्॥

पाद्य' क. पाठः.

पाद्य इदंविष्णुरणुः पर आपोह्यग्निमील इति गव्यं ।
दध्यन्तेषु निजार्हाश्चाज्य इषेत्वा कुशे तु तत्सवितुः ॥
अश्वत्थेवस्त्र्यम्बकहिरण्यगर्भैस्ततः परं क्रमशः ।
मानस्तोके शन्नः पुष्पावत्येव पुष्पफलजलयोः ॥ १३८ ॥
सक्तूदके सुमित्रा भूतिश्रीर्भस्मके मधौ स्वार्हः ।
तैले विश्वानिन इति गौलेऽग्नेत्वं च पैप्पलेऽश्वत्थे ॥ १३९ ॥
शन्नो देवीरग्ने त्वं परयोर्मध्यमे तु चित्तिः स्रुक् ।
त्रिष्टुभ एकैकार्णैः परिखण्डे मध्यमेऽन्वितं शेषैः ॥ १४० ॥
अत्यष्टिसङ्ख्यद्रविणाभिषेके
सद्रव्यकुम्भक्रममब्जकलासिः ।

---

स्नानमन्त्रान् सानक्रमेण सहाह—पाद्य इति । पाद्ये 'इदंविष्णुर'णुः । परे अर्घ्ये 'आपोहिष्ठ' । गव्ये 'अग्निमील' इति । दध्यन्तेषु निजार्हाः 'तत्सवितुः' 'गन्धद्वारां' 'आप्यायस्व' 'दधि क्राव्ण' इति । आज्ये 'इषे त्वा' । कुशे 'तत्सवितुः' ॥ १३३ ॥

ततः परं क्रमशः कषायरत्नोदसुवर्णोदधातूदगन्धजलेषु पञ्चसु 'अश्वत्थे वः', 'त्र्यम्बकं यजामहे', 'हिरण्यगर्भः सम', 'मानस्तोके', 'शन्नो देवीः' इति । पुष्पफलजलयोः पुष्पजले फलजले च 'पुष्पावतीरि'त्येव ॥ १३८ ॥

पुनरन्तर्गतसक्तूदके 'सुमित्रा नः' । भस्मके भस्मजले 'भूतिश्रीः' । मधौ स्वार्हः 'मधु वाता' इत्यर्थः । तैले 'विश्वानि नः' । गौले 'अग्ने त्वं' । पैप्पले अश्वत्थोदके 'अश्वत्थे वः'[2] ॥ १३९ ॥

परयोः दूर्वोदरजतोदकयोः 'शन्नो देवीः' 'अग्ने त्वम्' इति क्रमेण । मध्यमे ब्रह्मकलशे तु 'चित्तिः स्रुक् चित्तमाज्यम्' । परिखण्डे परिखण्डकुम्भेषु क्रमेण त्रिष्टुभो 'जातवेदस' इत्यस्य एकैकार्णैः सह मध्यमे शेषैरक्षरैरन्वितं स्नानं स्यात् ॥ १४० ॥

कुमार्याम् अत्यष्टिसंख्यद्रविणाभिषेके सप्तदशद्रव्यस्नाने सद्रव्यकुम्भ-

---

१. 'दुर्गाभिः परिकलशैरिहान्तरा ब्रह्मयज्ञमनुना च । स्नापयतु साधु विद्वान् दुर्गास्नपन समासतः प्रोक्तम् ॥ उक्त' ख. पाठः. २. 'ले अश्वत्थे वः' क. पाठः.

स्याद् विष्णुभागाभिहिता कुमार्या-
मितीरितः स्नानविधिर्द्विधात्र ॥ १४१ ॥

उत्तमत्रितयमुत्तमद्वयं मध्यमद्वयमथाधमद्वयम् ।
बाहुलेयकलशाभिषेचनं प्राहुरत्र नवधा बुधोत्तमाः ॥१४२॥

शरहतशतसङ्ख्यैरेतदर्धाङ्घ्रिसङ्ख्यै-
र्नवयुतशतसङ्ख्यैरद्रिमत्या नवत्या ।
नवकृतिशरषष्टिभ्यां घटैस्तत्प्रभेदा
नव गिरिशरवर्गाभ्यां च सद्रव्यभेदाः ॥ १४३ ॥

त्रिंशत्सूत्रयुते घटीशरशते क्षेत्रेऽभितो वीथिकाः
कृत्वा पञ्चपुटान्तरेऽभिकृतिकोष्ठेष्वेषु खण्डेष्वथ ।

---

क्रममन्त्रक्लृप्तिः द्रव्यकुम्भक्रममन्त्राणां स्थितिर्विष्णुभागाभिहिता स्यात् । इत्यत्र द्विधा स्नानविधिरीरितः ॥ १४१ ॥

अथ स्कन्दस्य कलशविधिमाह — उत्तमेति । बुधोत्तमाः उत्तमादिस्नाने फलविशेषज्ञा आचार्याः अत्र स्नाने उत्तमत्रितयम् उत्तमकलशानां त्रितयम्, उत्तमद्वयं मध्यमाधमयोरुत्तमद्वयं, मध्यमद्वयं तयोर्मध्यमद्वयम्, अथाधमद्वयं तयोरधमद्वयं चेति बाहुलेयकलशाभिषेचनं नवधा प्राहुः ॥१४२॥

शरहतशतसंख्यैः पञ्चगुणितशतसङ्ख्यैः एतदर्धाङ्घ्रिसङ्ख्यैः एतदर्धसंख्यैः पञ्चाशदधिकशतद्वयेन एतदङ्घ्रिसङ्ख्यैः पञ्चविंशत्यधिकशतेन, पुनः नवयुतशतसंख्यैः, अद्रिमत्या नवत्या सप्तयुतनवत्या, नवकृतिशरषष्टिभ्यां नवकृतिरेकाशीतिः शरषष्टिः पञ्चाधिकषष्टिः, गिरिशरवर्गाभ्यां च गिरिवर्ग एकोनपञ्चाशत् शरवर्गः पञ्चविंशतिः इति घटैः हेतुभिः सद्रव्यभेदा द्रव्यभेदसहिताः तत्प्रभेदा स्नानभेदाः नव स्युः ॥ १४३ ॥

घटीशरशते घटानां पञ्चशते त्रिंशत्सूत्रयुते क्षेत्रे पञ्चपुटान्तरे पञ्चपञ्चपुटान्तरे अभितः समन्ताद् वीथिकाः कृत्वा अथाभिकृतिकोष्ठेषु पञ्चविंशतिकोष्ठेषु खण्डेषु स्थितेषु मत्स्यांशकोणानि एकैकोपपदार्पणेन तेषां

---

1. 'त्र तद्वीथि' ख. पाठः.

एकैकोपपदार्पणेन रचयेन्मर्त्यांघ्रिकोणानि षड्-
विंशत्या कलशैर्युतानि नवकाढ्यान्यन्तरालानि च ॥
ब्राह्मे दैविकदिग्विदिक्ष्वपि तथा गव्याज्यदुग्धं दधि
क्षौद्रं तैलगुलेक्षुतीर्थसलिलं चापूरयेन्मूलतः ।
तत्रस्थोपघटाष्टकान्युदितक्लृप्त्या रत्नकाद्यष्टके-
ष्वेकैकद्रविणेन शुद्धसलिलैः शेषानुदित्यन्तिमान् ॥
रत्नानां बीजानां क्वाथानामष्टकानि पुष्पाणाम् ।
फलगन्धलोहकानामथौषधीनामपामपीति नव ॥ १४६ ॥
सागरभवं सरिज्जं निर्झरवापीतटाकजं च जलम् ।
ह्रदकूपसेतुजातं जलाष्टकेऽन्यानि पूर्वगणितानि ॥ १४७ ॥

---

बहिःकोणेषु एकैकपदयोगेन षड्विंशत्या कलशैर्युतानि रचयेत् । तत्रान्तरालानि नवकाढ्यानि च रचयेत् । अन्यानि सर्वखण्डान्यपि पञ्चविंशतिकान्येव ॥ १४४ ॥

ब्राह्मे कलशे दैविकदिग्विदिक्ष्वपि तथा गव्याज्यदुग्धं पञ्चगव्यमाज्यं क्षीरं च, दधि, क्षौद्रं, तैलगुलेक्षुतीर्थसलिलं तैलं गुलमिक्षुसलिलं तीर्थसलिलं च मूलत आपूरयेत् । तत्रस्थोपघटाष्टकानि नवसु स्थानेष्वपि तत्तन्मध्यकुम्भानन्तरगतान्यष्टकानि उदितक्लृप्त्या संघातद्रव्येषूक्तया क्लृप्त्या रत्नकाद्यष्टकेषु मध्ये एकैकद्रविणेनापूरयेत् । शेषान् तद्बाह्यगतषोडशषोडशकलशान् उदित्यन्तिमान् दिक्कोणानन्तरमीशेन्द्रयोर्मध्यगतान्तरालमारभ्य सोमेशयोर्मध्यगतान्तरालपर्यन्तान् कलशान् शुद्धसलिलैरापूरयेत् । स्कन्देऽन्तराले सर्वत्रायमेव क्रमः ॥ १४५ ॥

रत्नाद्यष्टकानां क्रममाह — रत्नानामिति । रत्नानां बीजानां क्वाथानां पुष्पाणां फलगन्धलोहकानां फलानां गन्धानां लोहानां च ओषधीनामपामपीति नवविधान्यष्टकानि स्युः ॥ १४६ ॥

जलाष्टकस्य पूर्वतोऽनुक्तत्वात् संप्रत्याह — सागरभवमिति । जलाष्टके सागरभवं जलं, सरिज्जं नद्युद्भवं, निर्झरवापीतटाकजम् (നിർഝരം= അരിവി. വാപി=നെടുംകേണി. തടാകം=കുളം.), ह्रदकूपसेतुजातम्

---

१. 'शफ', २. णान्त' ब. पाठः.

धात्रीं रात्रीपिष्टमाचाममर्घ्यं
कौशं काशं दौर्व्यकं सेव्यकं च ।
न्यस्येद् दिक्कोणक्रमान्मर्त्यभागे
पर्जन्यादिष्वेकशोऽत्राङ्कुरांश्च ॥ १४८ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षबिल्वपलाशजाः ।
शम्यपामार्गजाश्चैव क्रमादष्टाङ्कुराः स्मृताः ॥ १४९ ॥

(ഹേമം=കയം. ക്ഷൂപം=കിന്നാ. സേതു=ചിറ.) । अन्यानि रत्नादीनि पूर्वगणितानि सङ्घातकथने गणितानि ॥ १४७ ॥

पुनर्मर्त्यभागे दिक्कोणक्रमात् (ധാത്രി=നെല്ലിക്കാ. രാത്രിപിഷ്ടം=മഞ്ഞപ്പൊടി), आचामम्, अर्घ्यं, कौशं कुशजलम्, (കാശം=ആറ്റുദർഭ. സേവ്യകം=രാമച്ചം ദൌർവ്യകം=കറുക.) एतानि न्यस्येत् । अत्र पर्जन्यादिष्वन्तरालेष्वङ्कुरांश्च एकैकशो न्यस्येत् ॥ १४८ ॥

अङ्कुरान् कथयति — न्यग्रोधेति । न्यग्रोधादयः क्रमादष्टाङ्कुराः स्मृताः । न्यग्रोधादयः प्रसिद्धा एव ॥ १४९ ॥

१. 'क्ष

रत्नाष्टके वारिजरागनीलमुक्तेन्दुकान्तान् कुरुविन्दकाचौ ।
प्रवालवज्रे च यवांस्तिलांश्च गोधूमसिद्धार्थकशालिमुद्गान् ॥
माषं सनीवारकमष्टबीजान्याहुर्वटोदुम्बरपिप्पलाख्याः ।
प्लक्षाम्रविप्रद्रुशिरीषमाधूकाख्याः कषायेऽष्टमहीरुहाः स्युः ॥
उत्पलकल्हाराम्बुजकुमुदं सौगन्धिकं कशेरुयुतम् ।
उत्पलयुगमपि पुष्पाण्यष्टालाभेऽत्र रक्तकरवीरम् ॥
स्यान्मातुलङ्गसहकारसबिल्वजम्बूचोचाख्यडाडिमसभव्यककादलानि ।
अष्टौ फलान्यसृगयश्शशिकुष्ठकोशपाथो मुरं मलयजं विदुरष्टगन्धम् ॥
लोहानि क्रमशः स्मृतानि शरजे चामीकरं रूप्यकं
ताम्रायस्त्रपुसीसकांस्यकसमेतं पित्तलं चाष्टमम् ।
ओषध्योऽत्र सुवर्चलामलवचा ब्राह्मी तथा शङ्खपु-
ष्प्युद्दिष्टाः सशतावरी सहसहाक्रान्तिश्च लक्ष्मीरपि ॥
न्यग्रोधोदुम्बरचलदलप्लक्षबिल्वद्विजाख्याः
सम्प्रोक्ताः स्युः शरभुवि शमीमार्गजौ चाङ्कुराढ्यैः ।
वेदीक्षेत्रेभवृषगिरिवल्मीकनद्यब्धिजाः स्यु-
र्मृत्स्नाश्चाष्टौ शिववदिह चाचामपाद्यार्घ्यकाद्यम् ॥
न्यग्रो' क. पाठः.

भूभृद्वर्गयुतद्विशत्यथ घटानां चेदिह क्षेत्रकं
कृत्वा सप्तदशप्रभेदितपुटं वीथीं च पद्मान्तरे ।
त्रिंशत्कानि शिलीमुखोपपदसंयुक्त्या बहिर्दिक्ष्वथो
कोणेषूत्कृतिसङ्ख्यकानि रचयेदेकैककोष्ठान्वयात् ॥ १५० ॥

गव्यादितीर्थसलिलावधिभिः सरोज-
रागादिसेतुसलिलावधिभिश्च तद्वत् ।
आपूर्य चामलकपूर्वकदौर्व्यकान्तै-
र्दिक्कोणगानुपघटान् परिपूरयेत ॥ १५१ ॥

दिक्कोणगान्युपपदानि सकोणखण्डा-
न्यत्रापहाय सहतत्त्वशते घटानाम् ।
गव्यादिमध्ववधिकैरथ पद्मराग-
पूर्वैश्च पूरयतु तान् कदलीफलान्तैः ॥ १५२ ॥

---

अथ घटानां भूभृद्वर्गयुतद्विशती एकोनपञ्चाशदधिकशतद्वयं चेत् इह सप्तदशप्रभेदितपुटं क्षेत्रकं पद्मपुटान्तरे वीथीं च कृत्वा बहिर्दिक्षु शिलीमुखोपपदसंयुक्त्या दिक्स्थितानां पञ्चविंशतिकानां बहिर्भागे पञ्चपञ्चोपपदयोगेन त्रिंशत्कानि रचयेत् । अथो कोणेषु एकैककोष्ठान्वयात् एकैककोष्ठयोगेन उत्कृतिसंख्यकानि षड्विंशतिसंख्यानि च रचयेत् ॥ १५० ॥

अत्र गव्यादितीर्थसलिलावधिभिः पूर्वं ब्राह्मे दैविकेषूक्तैर्गव्यादितीर्थजलान्तैर्नवभिर्द्रव्यैस्तेषु मध्यस्थकलशानापूर्य तद्वत् पूर्वक्रमेणैव सरोजरागादिसेतुसलिलावधिभिश्च रत्नाद्यष्टकेषु रत्नेषु पद्मरागादिभिर्जलाष्टके तु सेतुसलिलान्तैर्द्रव्यैरेकैकेन पूर्वोक्तानुपघटांश्चापूर्य आमलकपूर्वकदौर्व्यकान्तैः 'धात्रीं रात्रीपिष्टमि'त्याद्युक्तैरष्टभिर्द्रव्यैः दिक्कोणगान् उपघटान् दिक्कोणेषु योजितान् पञ्चकानेककांश्च परिपूरयेत ॥ १५१ ॥

अथ घटानां सहतत्त्वशते पञ्चविंशत्यधिकशतेऽपि अत्र सप्तदशपुटे दिक्कोणगानि योजितान्युपपदानि सकोणखण्डानि कोणगतानि चत्वारि खण्डानि च अपहाय त्यक्त्वा अत्र गव्यादिमध्ववधिकैः मध्ये दिक्षु च

---

१. 'मार्गे प' ख. पाठः. २. 'ग्र' ख. ग. ङ. पाठः. ३. 'केषु तु' ख. पाठः.

अन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या-
नाशासु पञ्चदश सैककनन्दसंख्यान् ।
कुम्भान् विदिक्षु परिपूर्य करोतु वात्र
गव्यादिसेतुसलिलावधिभिर्जघन्यम् ॥ १५३ ॥

अन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या-
स्तद्बाह्यनस्तिथिरसप्रमिताः क्रमेण ।
दिक्कोणयोर्नवशतेऽथ शते त्रिहीने
बाह्ये तु धूर्जटिगिरिप्रमिता घटाः स्युः ॥ १५४ ॥

अन्तस्तत्त्वघटेषु सर्वमणितोयं गव्यकं दुग्धकं
दध्याज्यं मधु गौलमिक्षुसलिलं तैलं हरिद्राजलम् ।

---

स्थितैः पञ्चभिर्द्रव्यैरन्तःस्थितान्. अथ पद्मरागपूर्वैः कदलीफलान्तैः पञ्चविधै-रष्टकैरपि पूर्ववदुपघटांश्च पूरयतु । इत्युत्तमत्रयमुक्तम् ॥ १५२ ॥

उक्त एवोत्तमत्रये अधमस्य पक्षान्तरमाह — अन्तरिति । त्रयोदश-पुटे क्षेत्रे अन्तर्बाह्ये शरवर्गसङ्ख्यान् पञ्चविंशतिसंख्यान्, आशासु पञ्च-दश, विदिक्षु सैककनन्दसंख्यान् स्वस्वकोणेष्वेकैककुम्भयोगेन नवनवकु-म्भान् संभूय दशदशकुम्भान् गव्यादिसेतुसलिलावधिभिः नवसु मध्यस्थघ-टेषु गव्यादितीर्थसलिलावधिभिर्नवभिर्द्रव्यैः, परिकलशाष्टकेषु पद्मरागादिसेतु-सलिलान्तैर्नवविधैरष्टकैश्च परिपूर्य जघन्यम् उत्तमत्रितयेऽधमं करोतु वा ॥

उत्तमद्वयमप्याह — अन्तस्त्रयोदशपुट इति । अथ त्रयोदशपुटे अन्तर्मध्ये, शरवर्गसंख्याः पञ्चविंशतिसंख्याः तत्र नवशते नवयुते शते चेत् तद्बाह्यतो दिक्कोणेषु क्रमेण तिथिरसप्रमिताः पञ्चदशसंख्याः षट्संख्या घटाः स्युः । अथ त्रिहीने शते सप्तयुतनवत्यां चेदन्तस्तथैव पञ्चविंशति-कम् । बाह्ये तु क्रमेण धूर्जटिगिरिप्रमिताः दिक्ष्वेकादश कोणेषु सप्त च घटाः स्युः ॥ १५४ ॥

तद्द्वयेऽपि द्रव्यन्यासमाह — अन्तरिति । विद्वान् कलशक्रमं तद्द्र-व्याणि च विद्वानाचार्यः अन्तःस्थितेषु पञ्चविंशतिघटेषु बाह्ये सर्वमणितोयं

---

१. 'टान् पू'. २. 'त्रकु' [illegible].

धात्रीवारि फलोदकं क्वथितकं कौशाम्बुकाशाम्बुनी
सेव्यं दौर्व्यमपीति सप्तदशकं विन्यस्य विद्वानथ ॥

पाटीरासृगयःप्लवङ्गमुरमांसीतोयमुस्ताम्बुमुक्-
चोरैलाशशिजातिकुष्ठकलवङ्गत्वक् च ये षोडश ।
गन्धास्तेषु युगं युगं न्यसतु पर्जन्यादिकाभ्यन्तरे-
ष्वष्टौ तद्बहिरङ्कुरानभिहितान् दिक्कोणखण्डेष्वपि ॥

एकाशीत्यां प्राग्वन्नवनवकान्यादधीत रुद्रपुटे ।
अत्रैव पञ्चषष्ट्यां बहिःस्थितान्यष्ट सप्तकानि स्युः ॥१५७॥

सर्पिर्मूत्रशकृन्ति दुग्धदधिनी गोरोचनावारिकं
कौशं रत्नकगन्धमाक्षिकगुलकाथोदबीजोदकम् ।

---

रत्नाष्टकयुतजलं, तस्यानन्तरदिक्कोणेषु गव्यकं दुग्धकं दधि आज्यं मधु गौलं इक्षुसलिलं तैलं, पुनस्तदनन्तरस्थदिग्विदिक्षु हरिद्राजलं धात्रीवारि फलोदकं क्वथितकं कौशाम्बुकाशाम्बुनी कुशजलं काशजलं च सेव्यं दौर्व्यमपि इति द्रव्याणां सप्तदशकं विन्यस्याथ पर्जन्यादिकाभ्यन्तरेषु ये निर्दिश्यमानाः षोडश गन्धाः, तेषु युगं युगं द्वौ द्वौ गन्धौ न्यसतु। पाटीरासृक् चन्दनं कुङ्कुमं च। अयःप्लवङ्गं (അകിലും കണ്ടിവെണ്ണയും)। मुरमांसी (മുരവും മാഞ്ചിയും)। तोयमुस्तम् (ഇരുവേലിയും മുത്തങ്ങയും)। अम्बुमुक्चोरम् (മുത്തങ്ങയും കർപ്പൂരവും)। एलाशशि (ഏലത്തരിയും കർപ്പൂരവും)। जातिकुष्ठकं (ജാതിക്കായും കൊട്ടവും)। लवङ्गत्वक् च (രണ്ടും ഇലവർങ്ഗം തന്നെ)। तद्बहिर्दिक्कोणखण्डेष्वपि मध्यस्थकलशेषु अभिहितानुक्तान् न्यग्रोधादिकानष्टावङ्कुरांश्च न्यसतु ॥ १५५, १५६ ॥

मध्यमध्यमद्वयमाह — **एकाशीत्यामिति**। एकाशीत्यां घटसंख्यायां रुद्रपुटे एकादशपुटे प्राग्वत् पूर्वोक्तवत् मध्येऽष्टदिक्ष्वपि नवनवकान्यादधीत। पञ्चषष्ट्यां तु अत्रैव एकादशपुटे बहिःस्थितानि दिक्षु कोणेष्वपि सप्तकान्यष्ट स्युः ॥ १५७ ॥

अत्र द्रव्याण्याह — **सर्पिरिति**। मध्यमद्वन्द्वके कर्णिकातद्दिक्कोणदलादिकेष्वपि कर्णिकायां तद्दिक्कोणदलेषु, आदिशब्देन तद्दिग्विदिक्खण्डेषु च। सर्पि-

मृत्सातोयतिलोदसूनसलिलस्वर्णोदकं कर्णिका-
तद्दिक्कोणदलादिकेष्वपि निदध्यान्मध्यमद्वन्द्वके ॥

गव्यक्षौद्रपयोघृतानि दधि गौलेक्षूदतैलं नवं
केरीवार्यथ पाद्यमर्घ्यसलिलं चाचामकं काथकम् ।
रत्नाम्भः फलवारि गन्धसलिलं पुष्पोदकं चाधम-
द्वन्द्वद्रव्यगणोऽङ्कशैलपुटयोः प्रोक्ता पदप्रक्रिया ॥

मूलेन ब्रह्मघटैर्गायत्र्या द्रव्यपूर्णपरिकलशैः ।
अङ्गाणुनावशिष्टैः स्नपयतु मध्यादिपूरणक्रमतः ॥ १६० ॥

मूलोपचाराणुकुमारसूक्ततः संस्नापयेद् ब्रह्मघटेन मूलतः ।
खण्डान्तरब्रह्मघटैर्जिनार्णतः सद्रव्यकैः शुद्धजलैर्हृदेति वा ॥

---

मूत्रशकृन्ति आज्यं गोमूत्रं गोमयं च, दुग्धदधिनी क्षीरं दधि च, गोरो-चनावारिकं, कौशं, रत्नकगन्धमाक्षिकगुलकाथोदबीजोदकं रत्नोदं गन्धोदं मधु गौलं कषायं बीजोदकं च, मृत्सातोयतिलोदसूनसलिलस्वर्णोदकं मृज्जलं तिलो-दकं पुष्पोदकं हिरण्योदकं च निदध्यात् ॥ १५८ ॥

अधमद्वन्द्वमाह — गव्येति । गव्यक्षौद्रपयोघृतानि पञ्चगव्यं मधु क्षीरं घृतं च, दधि, गौलेक्षूदतैलं गौलमिक्षूदं तैलं च, नवं नवीनं केरीवारि नालिकेरोदकम्, अथ बाह्ये पाद्यम्, अर्घ्यसलिलम् , आचामकं, काथकं, रत्नाम्भः, फलवारि, गन्धसलिलं, पुष्पोदकं च एतानि सप्तदशद्रव्याणि पूर्वक्रमेणाधम-द्वन्द्वद्रव्यगणः प्रोक्तः । अत्र अङ्कशैलपुटयोः नवसप्तपुटयोः पदप्रक्रिया पद-क्लृप्तिः प्रोक्ता पूर्वोक्तैवेत्यर्थः ॥ १५९ ॥

स्नानमन्त्रानाह — मूलेनेति । ब्रह्मघटैः सर्वखण्डस्थितैः ब्रह्मकलशैर्मू-लेन स्नपयतु । द्रव्यपूर्णपरिकलशैर्गायत्र्या च, अवशिष्टैः शुद्धजलपूर्णैरङ्गाणुना च, मध्यादिपूरणक्रमतः ब्रह्मकलशादिभिः पूरणक्रमेणैव स्नपयतु ॥ १६० ॥

पक्षभेदमाह — मूलेति । ब्रह्मघटेन मूलोपचाराणुकुमारसूक्ततः संस्ना-पयेत् । खण्डान्तरब्रह्मघटैर्मूलेन, सद्रव्यकैः द्रव्यसहितापरकुम्भैः जिनार्णतो गा-यत्र्या , शुद्धजलैः कुम्भैः हृदा हृदयमन्त्रेण इति वा संस्नापयेत् ॥ १६१ ॥

पूर्त्यै पञ्चशतस्य यो ह्युपघटः कोणेषु तेन स्वख-
ण्डैक्यात् पञ्चकमेककं च विहितं दिक्कोणयोर्यत्पुनः ।
खण्डैकत्वजुषापि तेन मनुजांशद्रव्यभाजा पृथग्
देवेशं स्नपयेदितीह नवधा प्रोक्तोऽभिषेको गुहे ॥ १६२॥

विघ्नेशोऽपि महेशवद् घटपुटाद्याधाय वैधातृकं
कुम्भं द्वादशरत्नकेन परिपूर्यापूरयेत् तत्परम् ।
अन्तर्दिग्विदिशोर्बहिश्च कलशान् पाद्यादिभिर्द्व्यष्टभि-
स्तैरेवाथ तदान्तरालिकगुलाद्याढ्यैस्तु वा त्र्यष्टभिः॥

पाद्यार्घ्याचमनीयदुग्धदधिसर्पिः क्षौद्रगव्यं फलं
भक्ष्यं यावकशालिके सतिलरत्नाष्टापदं विद्रुमम् ।

---

अत्र पञ्चशतस्य पूर्त्यै कोणेषु मानुषखण्डकोणेषु यो ह्युपघटः प्रोक्तः, तेन घटेन स्वखण्डैक्यात् कोणस्थपञ्चविंशत्या सह स्नपयेत् । यत्पुनरेकोनपञ्चाशदुपेतद्विशतघटे दिक्कोणयोर्विहितं पञ्चकमेककं च विहितं, खण्डैकत्वजुषापि एकखण्ड एव स्थितवतापि तेन मनुजांशद्रव्यभाजा मानुषगतद्रव्यपूरणाद्धेतोः पृथगेव देवेशं स्नपयेत् । इति गुहे नवधा नवप्रकारेणाभिषेकः प्रोक्तः ॥ १६२ ॥

गणपतौ कलशविधिमाह — **विघ्नेश** इति । विघ्नेशोऽपि महेशवत् शिववत् घटपुटादि घटपुटक्रमाणां क्लृप्तिमाधाय । वैधातृकं कुम्भ ब्रह्मकलशं द्वादशरत्नकेन परिपूर्य तत्परं तदनन्तरम् अन्तर्दैविके बहिर्मानुषे च दिग्विदिशोः दिक्षु कोणेषु च पाद्यादिभिर्द्व्यष्टभिः षोडशभिर्द्रव्यैः कलशानापूरयेत् । अथवा तैरेव षोडशभिः सहैव तदान्तरालिकगुलाद्याढ्यैः तेषां मानुषदिक्कोणानामन्तरालगतैः गुलादियुक्तैः त्र्यष्टभिश्चतुर्विंशतिद्रव्यैरापूरयेत् ॥ १६३ ॥

द्रव्याणि गणयति — **पाद्येति** । पाद्यार्घ्याचमनीयदुग्धदधिसर्पिः पाद्यम् अर्घ्यम् आचमनीयं क्षीरं दधि आज्यं च, क्षौद्रगव्यं मधु पञ्चगव्यं च, फलं, भक्ष्यं, यावकशालिके यवजलं शालिजलं च, सतिलरत्नाष्टापदं

---

१. 'पकोणखण्डेषु' ङ. घ. ङ. पाठः. २. 'त्या स' ख. ङ. पाठः. ३. 'ले' क. पाठः.

गौलं पुष्पजलं च दौर्व्यसलिलं धातूदमृत्साकुशं
मुक्ताकेरपयश्च षोडश वदन्ति द्रव्यकाण्यष्ट च ॥
तद्देवता गणेशः पितरो वाग् वह्निवल्लभा सोमः ।
रुद्रोऽग्निर्गुहसावित्र्यौ च गणेशो गजास्यकः पवनः ॥१६५॥
विश्वेदेवा यमधनदब्रह्माणोऽथ दिनकरो दुर्गा ।
विष्णुर्लक्ष्मीः सप्त च मुनयो भूर्वह्निवरुणसोमाः स्युः ॥
अत्रेदंविष्णुऋचापोह्यणुनापःपुनन्तुमनुना च ।
आप्यायस्वदधिक्राव्णःसावित्र्याख्यमधुमतीभिश्च ॥१६७॥

---

तिलोदकं रत्नोदकम् अष्टापदमिति हिरण्योदकं, विद्रुमं विद्रुमोदकं, गौलं, पुष्पजलं, दौर्व्यसलिलं, धातूदमृत्साकुशं धातूदं मृज्जलं कुशोदकं च, मुक्ताकेरपयश्च मुक्ताजलं नालिकेरपयश्च, एतानि षोडशाष्ट च द्रव्याणि वदन्ति । बुधा इति शेषः । सप्तदशद्रव्ये पञ्चविंशतिद्रव्येऽप्ययमेव विधिरित्यर्थः ॥ १६४ ॥

तेषां देवताः पठति —तद्देवता इति । मध्ये गणेशः, पुनः पितरः, वाक् सरस्वती, वह्निवल्लभा स्वाहा, सोमः, रुद्रः ,अग्निः, गुहसावित्र्यौ स्कन्दः सावित्री च, गणेशः, गजास्यकश्च, पवनो वायुः, विश्वेदेवाः, अथ यमधनदब्रह्माणः यमो वैश्रवणो ब्रह्मा च, दिनकरः सूर्यः, दुर्गा, विष्णुर्लक्ष्मीः, सप्त च मुनयः सप्तर्षयः, भूर्भूमिः, वह्निवरुणसोमाश्च तद्देवताः स्युः ॥ १६५, १६६ ॥

अभिषेकमन्त्रानाह — अत्रेति । 'इदं विष्णु'ऋचा, 'आपोह्य'णुना, 'आपःपुनन्तु'मनुना, 'आप्यायस्व', 'दधि क्राव्णः', सावित्र्याख्यमधुमतीभिः सावित्री 'तत्सवितुरि'ति, मधुमत्यो 'मधु वाता' इति तृचम् , 'अग्निमील'

---

१. 'व', २. 'स्युः,

विघ्नेशे स्फटिकोनितं हरिहरोक्तं रत्नमीशोदितं
पाद्यार्घ्याचमनीयपुष्पफलरत्नं दौर्गवद् धातुकम् ।
भक्ष्यं स्यात् पृथुकादिकं स्वहवनोद्दिष्टं चतुष्कं मृदो
वेदीक्षेत्रगजोक्षश्रृङ्गगिरिवल्मीकाखुतीर्थोद्भवाः ॥

अत्रे' क. पाठः.

भूयोऽग्निमीलइत्यृङ्मानस्तोकेगणेशमूलेन ।
पुनरोषधीऋचाशुशिशानपितरोहिरण्यवर्णर्ग्भिः ॥१६८॥
ब्रह्मादिजज्ञमनुना रक्षोहणमित्यृचा तथाग्नेत्वम् ।
पुष्पावतीश्च शन्नो देवीर्देवस्य चोद्धृतासीति ॥ १६९ ॥
सिञ्चेत् तथाग्नआयाह्यृचा समुद्रादिकेन मनुना च ।
याः फलिनीश्च गणानां त्वेति च पाद्यादिकान्तकलशैस्तम् ॥
आर्येऽन्तः पाद्यमन्तर्दिशि विदिशि बहिश्चार्घ्यमाचामगव्ये
गोमूत्रं दुग्धदध्याज्यमपि मधु कषायं फलं मार्जनं मृत् ।
सक्तूदं गन्धपुष्पोदकयवगुलमिक्षूदकेरीरसं स्यात्
केरोदं रत्नलोहोदकमपि सहतीर्थाक्षताम्ब्वन्तरान्तम् ॥
तद्देवताः पितृश्रीवाक्सावित्र्यस्तथैव गायत्री ।
सोमो रुद्राग्निगुहा विश्वे विघ्नेश्वरो मही ज्येष्ठा ॥ १७२ ॥

---

इति, 'मा नस्तोके', गणेशमूलेन, 'ओषधीरि'त्यृचा, 'आशुः शिशानः', 'पितरः पितामहाः', 'हिरण्यवर्णा' इत्यृग्भिः, ब्रह्मादिजज्ञमनुना 'ब्रह्म जज्ञानमि'ति, 'रक्षोहणमि'त्यृचा, 'अग्ने त्वं', 'पुष्पावतीश्च', 'शन्नो देवीः', 'देवस्य त्वा', 'उद्धृतासी'ति, 'अग्न आयाह्यृ'चा, समुद्रादिकेन 'समुद्रं गच्छे'ति, 'याः फलिनीः', 'गणानां त्वा' इति एतैर्मन्त्रैः पाद्यादिकान्तकलशैः पाद्यादिभिः क इति ब्रह्म तदन्तैः ब्रह्मकलशान्तैस्तं गणपतिं सिञ्चेत् ॥ १६७–१७० ॥

शास्तुः कलशविधिमाह — आर्ये इति । आर्ये अन्तः ब्राह्मे पाद्यं स्यात् । अन्तर्बहिश्च दिशि विदिशि अन्तरान्तम् अन्तरालान्तं यथा तथा अर्घ्यम्, आचामगव्ये आचमनीयं पञ्चगव्यं च, गोमूत्रं, दुग्धदध्याज्यं क्षीरं दध्याज्यं च, मधु, कषायं, फलं, मार्जनं, मृत्, सक्तूदं, गन्धपुष्पोदकयवगुलं गन्धोदकं पुष्पोदकं यवोदकं गुलं च, इक्षूदकेरीरसम् इक्षूदकं नालिकेररसं च, केरोदं नालिकेरोदकं, रत्नलोहोदकमपि रत्नोदकं लोहोदकं च, सहतीर्थाक्षताम्बु तीर्थोदकमक्षतोदकं च, एतानि द्रव्याणि स्युः ॥ १७१ ॥

देवताः पठति — तद्देवता इति । पितृश्रीवाक्सावित्र्यः पितरः श्रीः सरस्वती सावित्री च, तथा गायत्री, सोमः, रुद्राग्निगुहाः रुद्रोऽग्निः स्कन्दश्च

इन्द्रः सप्तर्षिमरुन्नृसिंहदुर्गास्ततः परं क्रमशः ।
श्रीधरयुगजकुबेराः पुरुषो निर्ऋतिः परश्च सम्प्रोक्ताः ॥१७३॥
षण्मूलप्रणवाणुना स्नापितयेत् सम्पूरणोक्तक्रमात्
पाद्यादिद्रविणाभिपूर्णकलशैः सस्वोपकुम्भैः सुधीः ।
सावित्र्याद्यणुपञ्चकं तदनु सावित्र्यादितत्त्वान्मनून्
गव्याद्येषु युनक्तु मध्ववधिषु द्रव्येषु षट्सु क्रमात् ॥
मध्वन्तिमोऽधमविधिर्यववारिनिष्ठः
स्यान्मध्यमोऽक्षतजलान्तिम उत्तमः स्यात् ।

---

विश्वे देवाः, विघ्नेश्वरो गणपतिः, मही पृथिवी, ज्येष्ठा स्वयमेव, इन्द्रः, सप्तर्षिमरुन्नृसिंहदुर्गाः सप्तर्षयो वायुः नरसिंहो दुर्गा च, श्रीधरयुगजकुबेराः श्रीधरः उभयत्र ब्रह्मा वैश्रवणश्च, पुरुषः, निर्ऋतिः, परः पुरुषश्च, तद्देवताः सम्प्रोक्ताः ॥ १७२, १७३ ॥

पाद्यादिद्रविणाभिपूर्णकलशैः ब्रह्मकलशादिद्रव्यकलशैः सस्वोपकुम्भैः स्वस्वपरिकलशैः सह सम्पूरणोक्तक्रमात् षण्मूलप्रणवाणुना सर्वत्र षण्मन्त्रमूलमन्त्रप्रणवैः स्नापितयेत् स्नपितं कुर्यात् । सुधीरिति तत्तद्देवतानाममन्त्रयोजनमुक्तम् । गव्याद्येषु मध्ववधिषु षट्सु द्रव्येषु क्रमात्, सावित्र्याद्यणुपञ्चकं पञ्चगव्ये, तदनु गोमूत्रदुग्धदध्याज्येषु 'तत्सवितुः' 'आप्यायस्व' 'दधि क्राव्णः' 'तेजोऽसि' इति मन्त्रान्, मधौ 'मधु वाता' इति च युनक्तु ॥ १७४ ॥

अत्र मध्वन्तिमः मध्वन्तनवद्रव्यैः अधमविधिः स्यात् । यववारिनिष्ठः यवोदकान्तसप्तदशद्रव्यैः मध्यमो मध्यमविधिः । अक्षतजलान्तिमः अक्षत-

---

१. 'क्ताः ॥
आर्ये गन्धनिशाक्षतयव + तिलं पाद्यं सराजीतिलं
सक्षीरं कुशगन्धपुष्पभृतमर्घ्यं स्याल्लवङ्गाम्बुजम् ।
गन्धाम्ब्वाचमनं पयस्तरुकृतं कायकं सर्जनं
रात्र्यैन्द्र्यक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम् ॥
क्षेत्राद्रिवेदिनृपश्रृङ्गनदीद्वितीरजाता मृदः प्रमथराजि हरीरितानि ।
लोहानि रुद्रगदितानि सविद्रुमानि रत्नानि गन्धकुसुमान्यपि तद्विधाप्यम् ॥'
षण्मू' क. पाठः २. 'स्न' इति मूलकोशपाठः ३. 'नां मन्त्रे' ख. पाठः

तत्तत्क्षमं घटपुटादि विधाय चैतं-
त्रिष्वेकमाचरतु च स्नपनं प्रभेशे ॥ १७५ ॥

तत्तद्द्रव्यन्यसनमिति कृत्वा द्रवद्रव्यकुम्भान्
मुक्त्वा शेषान् सपरिकलशान् वारिणा वारुणेन ।
आपूर्यैषूज्ज्वलकिसलयाद्यञ्चितेषु स्वमन्त्रे-
णावाह्याभ्यर्चयतु जलगन्धादिभिश्चानुखण्डम् ॥ १७६ ॥

आचार्यः सह मूर्तिपैरथ दिशास्वग्निं विहृत्य क्रमात्
स्वस्वोक्तद्रविणाणुभिः कृतहुतिः सम्पातपातं पुनः ।
कृत्वा द्रव्यघटेषु मन्त्रमहितान् हृद्यांशुकैर्वर्मणा
तान् संछाद्य विभूषयेत् ससुमनोदर्भाक्षताद्यैरपि ॥

---

जलान्तपञ्चविंशतिद्रव्यैः उत्तमः उत्तमविधिः स्यात् । तत्तत्क्षमं तस्य तस्योचितं घटपुटादि घटपुटकप्त्याद्याधाय एतत्रिष्वपि विधिषु मध्ये एकं स्वयोग्यं स्नपनं प्रभेशे आचरतु ॥ १७५ ॥

इति उक्तप्रकारेण तत्तद्द्रव्यन्यसनं तस्य तस्य द्रव्यस्य न्यासं कृत्वा द्रवद्रव्यकुम्भान् पञ्चगव्यादिद्रवद्रव्येण पूर्णान् कुम्भान् मुक्त्वा शेषान् पाद्यादिभिर्द्रव्यैर्युक्तान् सपरिकलशान् द्रव्यहीनांश्च कलशान् वारुणेन वारिणा कलशक्षेत्रोत्तरभागगतस्वस्तिकस्थजलद्रोण्यां गालितवारिणा पूर्णायां तस्यां वरुणं देवं चावाह्य सम्पूज्य पञ्चवारुणादिजप्तेन तेन वारिणापूर्य उज्ज्वलकिसलयाद्यञ्चितेषु उज्ज्वलैर्मनोहरैरश्वत्थचूतपनसस्तवकैः आदिशब्देन तण्डुलपूर्णचक्रिकादिभिरलङ्कृतेषु तेषु अनुखण्डं खण्डेखण्डे स्वस्वमन्त्रेणावाह्य जलगन्धपुष्पादिभिरभ्यर्चयतु ॥ १७६ ॥

अथाचार्यो मूर्तिपैः सह दिशासु पूर्ववदग्निं क्रमाद् विहृत्य स्वस्वोक्तद्रविणाणुभिः अधिवासपटले स्वस्वविभागोक्तैर्द्रविणैर्मन्त्रैश्च कृतहुतविधिर्भूत्वा पुनर्द्रव्यघटेषु संपातपातं कृत्वा मन्त्रमहितान् स्वस्वमन्त्रेण पूजितान् जप्तांश्च तान् हृद्यांशुकैः शुद्धैर्वस्त्रैर्वर्मणा संछाद्य ससुमनोदर्भाक्षताद्यैः पुष्पसहितदर्भाक्षतगन्धाद्यैरपि । विभूषयेत् अलङ्कुर्यात् ॥ १७७ ॥

---

१. 'पु त्रिष्वे' क. ख, 'रं त्रिष्व' ग. पाठः. २. 'द्यैः विभू' ङ. पाठः.

प्रागास्यः समवस्थितोऽत्र कलशक्षेत्राद् बहिस्तत्त्वता-
 राराध्याखिलखण्डतत्त्वविहितैकाङ्गं विभाव्याथ तम् ।
भूतानि प्रविलाप्य शोषदहनाद्याधाय सृष्ट्वा लिपि-
 न्यासान्ते समनूदयादि सकलाध्वन्यासनिष्ठं चरेत् ॥
इष्ट्वा पीठमिहाभिवाह्य सकलीकृत्यैकभूयं गतं
 सम्पूज्यैनमथो निवेद्य परितो दद्याद् बलिं पूर्ववत् ।
स्वस्वोक्तैर्बलिमन्त्रकैरथ समाचम्यान्तरभ्येत्य न-
 नैवेद्यं प्रविसृज्य तोषणसपर्यां च प्रकुर्याद् गुरुः ॥ १७९ ॥
शुद्धा भवन्त्वित्यणुना च पञ्चविंशत्युपेतेन पवित्रपाणिः ।
सम्पातशेषान्वितवारिणोक्षेत् कुम्भान् किरेदक्षतसूनकैश्च ॥
 शुद्धा भवन्त्विमे कुम्भाः सकुशाः सापिधानकाः ।
 वातातपपरीताश्च शुभलक्षणसंयुताः ॥ १८१ ॥
 पञ्चविंशतिधा विष्णोस्तत्त्वभेदेन निष्ठतः ।
 ध्र्ठ्येयत्ताश्रयाः सर्वाः सङ्गच्छन्तां विभूतयः ॥ इति ॥

---

अत्राधिवासकर्मणि कलशक्षेत्राद् बहिः पश्चिमे भागे प्रागास्यः समवस्थितो भूत्वाथ तत्त्वताराराध्या तत्त्वैस्तारेण च पुष्पाराधनात् तं देवम् अखिलखण्डतत्त्वविहितैकाङ्गम् अखिलैः खण्डैः तत्त्वरूपैरुपलक्षितैकशरीरं विभाव्य तस्य भूतानि प्रविलाप्य शोषदहनाद्याधाय भूतानि सृष्ट्वा लिपिन्यासान्ते समनूदयादि मन्त्रोदयादिसहितं सकलाध्वन्यासनिष्ठं षडध्वन्यासपर्यन्तं कर्म चरेत् ॥ १७८ ॥

पुनः पीठमिष्ट्वा इहावाह्य सकलीकृत्यैकीभूयम् एकत्वं गतम् एनं देवं संपूज्य निवेद्याथो पूर्ववत् स्वस्वोक्तैर्बलिमन्त्रकैः परितो बलिं च दद्यात् । अथो समाचम्यान्तरभ्येत्य नैवेद्यं प्रविसृज्य तोषणसपर्यां प्रसन्नपूजां च प्रकुर्यात् । गुरुरिति पूर्वस्मादधिवासादत्रातिदेशं कर्तुं समर्थ इति सूचितम् ॥ १७९ ॥

ततः पवित्रपाणिर्गुरुः 'शुद्धा भवन्त्वि'त्यणुना 'पञ्चविंशतिधे'त्युपेतेन संपातशेषान्वितवारिणा संपातशेषयुक्तैर्गन्धजलैः पूजितान् कुम्भानुक्षेत् । अक्षतसूनकैः पुष्पाक्षतैः किरेच्च ॥ १८० ॥

प्रस्तुतं मन्त्रद्वयं पठति —शुद्धा भवन्त्विति । पञ्चविंशतिधेति च ॥ १८१, १८२ ॥

---

१. 'स्व' इति मूलकोशपाठः.

सम्प्रार्थ्य शास्त्रोदितमित्यनेन मन्त्रेण मन्त्री रचिताञ्जलिः सन्
दत्त्वावसानीयकमर्घ्यमस्मै देवाय कुर्वीत लयाङ्गकार्यम् ॥

शास्त्रोदितमिदं चास्तु स्नपनं देवनिर्मितम् ।
अनेन स्नपनेनास्तु प्रसन्नो भगवान् हरिः ॥ १८४ ॥

अभ्येत्य देवायतनाग्रसंस्थः कृत्वा प्रसूनाञ्जलिमञ्जलिं च ।
विज्ञापयेद् विश्वजनीनमेनं बुधोऽधिवासः कृत इत्यनेन ॥

अधिवासः कृतो देव! स्नपनाय मया तव ।
क्षणेन मे प्रसादोऽस्य क्रियतां पुरुषोत्तम! ॥ १८६ ॥

अत्रोदाहृतविष्णोरित्यादिपदांशकेषु मन्त्रितमः ।
शम्भोरित्यादि पदं स्वं स्वं कुर्वीत सर्वदेवेषु ॥ १८७ ॥

समेत्य मण्डपं ततो निजे निषद्य विष्टरे ।
परं पदं परामृशन्नतन्द्रितो निशां नयेत् ॥ १८८ ॥

---

पुनश्च संप्रोक्ष्य रचिताञ्जलिः सन् मन्त्री मन्त्रार्थं स्मरन् 'शास्त्रोदितमि'-त्यनेन मन्त्रेण संप्रार्थ्य पुनरवसानीयमर्घ्यं चास्मै देवाय दत्त्वा लयाङ्गकार्यं लयाङ्गं रक्षां च कुर्वीत ॥ १८३ ॥

प्रार्थनामन्त्रं पठति—शास्त्रोदितमिति ॥ १८४ ॥

ततोऽन्तरभ्येत्य देवायतनाग्रसंस्थः देवालयस्याग्रतः स्थित्वा प्रसूनाञ्जलिमञ्जलिं च कृत्वा विश्वजनीनं विश्वस्य जनस्य हितकारिणम् एनं देवम 'अधिवासः कृत' इत्यनेन मन्त्रेण विज्ञापयेत् ॥ १८५ ॥

तन्मन्त्रं पठति — अधिवासः कृत इति ॥ १८६ ॥

अत्रास्मिन् प्रकरणे उदाहृतविष्णोरित्यादिपदांशकेषु उक्तेषु 'पञ्चविंशतिधा विष्णोरि'त्यादिषु विष्णोरित्यादिपदस्थानेषु मन्त्रितमः मन्त्रपदयोजने कुशलः सर्वदेवेष्वपि शम्भोरित्यादि स्वं स्वं पदं कुर्वीत ॥ १८७ ॥

ततो मण्डपं समेत्य निजे विष्टरे आसने निषद्योपविश्य अतन्द्रितः[1] निद्रातन्द्रादिविहीनः परं पदं योगनिद्रयोत्कृष्टं पदं गतं देवं परामृशन् ध्यायन् निशां नयेत् ॥ १८८ ॥

---

१. 'निद्रतो' इति मूलकोशपाठः

प्रातस्तुर्यदिने स्वसाम्प्रतिककृत् सम्पूज्य सर्वात्मकं
तारेणाथ पृथक् स्वतत्त्ववपुषं कृत्वार्घ्यहस्तोऽग्रतः ।
स्थित्वा मूलमनुं प्रजप्य मरुता द्वारं विदार्याभिग-
म्यान्तर्दर्शितमङ्गलोऽर्घ्यसलिलं देवाय दद्याद् गुरुः ॥

निर्माल्यं व्यपनीय विश्वमनुना विष्णौ परेष्वस्त्रतो
मन्त्री मूलत एव वा शिवहरौ गन्धेन पुंसूक्ततः ।
तैलेनाज्य परेषु चास्त्रमनुना शैरीषचूर्णादिभि-
र्घृष्ट्वा भूरिजलैर्विशोध्य च विभुं सम्पूजयेत् पायसैः ॥

इष्ट्वा पीठमिहाभिवाह्य सकलीकृत्य प्रदाय क्रमात्
पाद्यार्घ्ये स्वजिनार्णतोऽस्त्रमनुना वाच्छिद्य तत्कौतुकम् ।

---

पुनः प्रतिष्ठायास्तुर्यदिने चतुर्थदिवसे गुरुः स्वयं स्वसांप्रतिककृत् स्वस्य सम्प्रतिभवं प्राभातिकं कर्म कृत्वा मण्डपं गत्वा सर्वात्मकम् एकीभूतं देवं तारेण संपूज्याथ स्वतत्त्ववपुषं स्वतत्त्वात्मकशरीरं देवं तत्त्वैः पुष्पाराधनेन पृथक् कृत्वा तस्माद् गत्वा देवालयस्याग्रतोऽर्घ्यहस्तः स्थित्वा मूलमनुं यथाशक्ति प्रजप्य मरुता वायुबीजमुच्चरन् द्वारं विदार्य उद्घाट्य अन्तरभिगम्य देवसमीपं गत्वा दर्शितमङ्गलो भूत्वा उत्सवपटले वक्ष्यमाणरीत्या मङ्गलानि दर्शयित्वा देवायार्घ्यसलिलं दद्यात् ॥ १८९ ॥

विष्णौ विश्वमनुना पञ्चतत्त्वेषु मध्यममन्त्रेण, परेष्वस्त्रतो मूलत एव वा निर्माल्यं व्यपनीय शिवहरौ पुंसूक्ततो गन्धेन परेषु तैलेनास्त्रमनुना च आज्य अभ्यञ्जनं कृत्वा शैरीषचूर्णादिभिः अभ्यङ्गनिवर्तनसाधनैः घृष्ट्वा (ശൈരീഷം=നെന്മേനിവാക.) भूरिजलैर्विशोध्य विभुं देवं पायसैः सह संपूजयेत् । मन्त्रीत्यनेनास्यां नित्यक्रियायां सर्वं कर्म मन्त्रसहितमेव कुर्यादिति सूचितम् । मन्त्रविशेषविधानाभावे मूलं प्रणवं वा तत्र योजयेदित्यपि सूचितम् ॥ १९० ॥

पुनः पीठमिष्ट्वा इह पीठे देवं चावाह्य सकलीकृत्य पाद्यार्घ्ये क्रमात् स्वस्वक्रमेण प्रदाय स्वजिनार्णतः स्वस्वगायत्र्या स्वस्वास्त्रमनुना वा तत्कौतुकं देवस्य दक्षिणकरे पूर्वमेव बद्धं कौतुकम् आच्छिद्य त्यक्त्वा स्वकरौ प्रक्षाल्य

प्रक्षाल्य स्वकरौ प्रदाय पुनराचामादि संस्नाप्य तं
सिक्त्वा तत्त्वहुतान्तहोमकलशैः प्रत्येकमभ्यर्चयेत् ॥ १९१ ॥

अथाराध्य पीठं समावाह्य देवं
तदीयाश्च मुद्राः प्रदर्श्यार्णतत्त्वम् ।
स्वमन्त्रोत्तरं न्यस्य दत्त्वोपहारान्
जलैः स्नानकालेऽभिषिच्यार्चयित्वा ॥ १९२ ॥

गत्वान्तर्मध्यकुम्भानुमतिकृदुपगम्यार्च्य चोद्धार्यकुम्भं
नीराज्यार्घ्यं प्रदाय स्वविहितमनुनोद्धार्य गत्वान्तरर्घ्यम् ।
दत्त्वा नीराज्य देवं स्नपयतु कलशेनार्चयेच्चानुखण्डं
नैवेद्यान्तेऽन्तरा स्नानमपि वितनुयात् तत्तदुक्ताणुनाज्ञ ॥

सर्वत्र तत्तदणुदैवतमूलतारै-
र्मध्यस्थितैश्चरतु संस्नपनं घटैस्तैः ।

---

पुनस्त्वाचामादि प्रदाय संस्नाप्य तत्त्वहुतान्तहोमकलशैः प्रायश्चित्तपटले वक्ष्यमाणैर्होमकलशैः सिक्त्वा होमकलशस्नाने प्रत्येकमभ्यर्चयेच्च ॥ १९१ ॥

अथ पीठमाराध्य देवं समावाह्य तदीया आवाहनादिमुद्राः प्रदर्श्य अर्णतत्त्वं स्वमन्त्रोत्तरं लिपितत्त्वमन्त्राक्षरादिकं च न्यस्योपहारान् दत्त्वा स्नानकालेऽभिषिच्यार्चयित्वा मण्डपान्तर्गत्वा मध्यकुम्भानुमतिकृद् भूत्वा ब्रह्मकलशस्थदेवाय पुष्पमाराध्य तस्यानुज्ञां लब्ध्वा उद्धार्यकुम्भम् उद्धारयोग्यं कुम्भमुपगम्य किञ्चिदार्च्य संपूज्य नीराज्यार्घ्यं प्रदाय स्वविहितमनुना स्वस्वगायत्र्या द्रव्यकुम्भं[3] स्वस्वमूलेन तत्पारिकुम्भं च मूर्तिपेनोद्धार्यान्तर्गत्वा देवायार्घ्यं दत्त्वा नीराज्य कलशेन देवं स्नपयतु । अनुखण्डं खण्डे खण्डे स्नपिते देवमर्चयेच्च । अत्र खण्डानां खण्डानामन्तराले नैवेद्यान्ते तत्तदुक्ताणुना तत्तदागमेषूक्ताणुना अन्तरा स्नानमपि वितनुयात् ॥ १९२, १९३ ॥

मनुवित् मन्त्रयोजनकुशलो गुरुः सर्वत्र देवेषु प्राक् तत्तदणुदैवतमूलतारैः 'इदं विष्णुरि'त्यादितत्तन्मन्त्रानन्तरं 'पितृभ्यो नमः' इत्यादितत्तद्देवतानाममन्त्रान्ते स्वस्वमूलमन्त्रं तारं चोक्त्वा मध्यस्थितैः स्वखण्डेषु मध्य-

---

१. 'रा' इति मूलकोशपाठः. २. 'त्त्वं स्वस्व' ख. पाठः. ३. 'म्भं स्वम्' ख. पाठः. ४. 'नां मन्त्रा' ख. पाठः.

निर्दैवतैः परिघटैर्मनुवित् कुमार्यां
दुर्गाभिरङ्गमनुभिः शरजे हृदा वा ॥ १९४ ॥
तन्महेशमनुना महेश्वरे श्रीशसेशहरिसुम्भविद्विषि ।
ब्रह्मजज्ञमनुना स्वमूलतोऽन्येषु च स्नपनमन्तरा चरेत् ॥

तत्तद्भागसमीरितक्रममनूपेतैरिति स्नापयेद्
देवं द्रव्यघटैः स्वकीयपरिकुम्भैश्च प्रकृत्याश्रितम् ।
आश्रित्य क्रममन्तरङ्गवशादिक्कोणादिकं वोद्धृतै-
र्मध्यान्ते स्नपनेऽत्र तद्दलघटा यद्येतदन्तेऽमुना ॥ १९६॥

---

स्थब्रह्मकलशैः तैर्घटैः संस्नपनं चरतु । तदनन्तरं तत्रतत्रस्थैः परिघटैः निर्दै[2]-वतैः देवतानाममन्त्रैर्हीनैरुक्तैर्मन्त्रैः[3] स्नपनं चरतु । कुमार्यां[4] दुर्गाभिर्वा, शरजे त्वङ्गमनुभिर्वा हृदा वा चरतु ॥ १९४ ॥

अन्तरा स्नाने मन्त्रानाह — तन्महेशेति । महेश्वरे तन्महेशमनुना 'तन्महेशे'त्याद्यया गायत्र्यान्तरा स्नपनं चरेत् । श्रीशसेशहरिसुम्भविद्विषि विष्णु-शङ्करनारायणदुर्गासु 'ब्रह्मजज्ञ'मनुना, अन्येषु देवेषु स्वस्वमूलतश्च ॥ १९५॥

इति एवमुक्तेन विधिना तत्तद्भागसमीरितक्रममनूपेतैः तत्र तत्र विष्णवा-दिभागेषु सम्यगुक्तैः क्रमैर्मन्त्रैश्च संयुतैर्द्रव्यघटैस्तं देवं स्नापयेत् । स्वकीय-परिकुम्भैश्च तत्र प्रकृत्याश्रितं क्रममाश्रित्य वा पञ्चविंशत्यादिकलशयुक्तेषु ख-ण्डेषु स्नानकाले यथा प्रकृतिः सर्वकलशस्वरूपिणी स्थितिः दैविकाद्या वा मानुषाद्या वा[5] दिग्विदिक्स्था वा प्रादक्षिण्या वान्यथा वा, तथा विकृतिखण्डे-ष्वपि तं क्रममाश्रित्येत्यर्थः । इत्येकः पक्षः । अन्तरङ्गवशदिक्कोणादिकं स-र्वखण्डेष्वपि मध्यकलशोद्धारानन्तरं तत्तदन्तर्भागसमीपस्थदिक्कोणानन्तरं[6] तत्त[7]-द्बहिर्दिक्कोणान्तरालक्रममाश्रित्येत्यपरः पक्षः । एवमुद्धृतैः स्वस्वपरिकल-शैश्च स्नापयेत् । मध्यान्ते स्नपनेऽत्र ब्रह्मखण्डे तद्दलकलशाः सन्ति यदि एतदन्ते दलकलशानामप्यन्ते अमुना ब्रह्मकलशेन स्नापयेत् ॥ १९६ ॥

---

१. 'दैं' क. ग. पाठः. २. 'दैं' ख. घ. च. पाठः. ३. 'न्त्रैर्हीनै' ङ. पाठः. ४. 'र्यां तु दु' ख. घ. ङ. पाठः. ५. 'वा तत्र दि' क. ख. पाठः. ६. 'तद', ७. 'तद्ब' ङ. पाठः.

कृत्वार्वागन्त्यकुम्भात् स्नपनमिति समभ्यर्च्य देवं समेत्य
प्रोद्धास्यान्त्ये घटे तत्सकलमिममुपानीय बिम्बोक्तनीत्या।
कुम्भेशेनाभिषिच्य स्नपयतु विधिवत् तेन तत्स्थांशुकाद्यै-
र्नीराज्य न्यस्तमन्त्रं महितमुपहृतार्घ्यं यजेत् पायसेन ॥

ततो यथाविध्यभिपूज्य देवं निवेद्य सन्तर्प्य तमग्निरूपम्।
सावस्रुतोक्षं परिषद्बलिं च कृत्वा विभुं भावयतु प्रसन्नम् ॥

इति तन्त्रसमुच्चये समुद्यद्घटसङ्ख्यापरिकल्पनाप्रकारः।
पटलः कलशप्रसाधनैतत्स्नपनाख्यानपरोऽष्टमः समाप्तः ॥

इति तन्त्रसमुच्चये

अष्टमः पटलः।

---

अन्त्यकुम्भादर्वाक् पुरोगतं स्नपनमिति कृत्वा देवं समभ्यर्च्य पुन-र्मण्डपं समेत्यान्त्ये घटे तत्सकलं मण्डपगततोरणध्वजद्वारकलशादिकं प्रोद्धा-स्येमं कलशं बिम्बोक्तनीत्या "स्यान्नीराजनमग्रत" इत्यादिश्लोकोक्तक्रमेण बिम्बस्थाने तं कलशमुपानीय कुम्भेशेन च प्रोक्तक्रमेणाभिषिच्य तत्स्थांशु-काद्यैः तत्स्थवस्त्रचक्रिकादिभिश्च नीराज्य विधिवत् स्वगुरूक्तक्रमेण तेन कलशेन स्नपयतु। पुनर्न्यस्तमन्त्रं स्वस्वोक्तसर्वमन्त्रन्यासानन्तरं महितं पूजितम् उपहृतार्घ्यमुपहारदानानन्तरं पायसेन यजेत् ॥ १९७ ॥

ततो यथाविधि देवमभिपूज्य निवेद्याग्निरूपं तं सन्तर्प्य पूजाहोमं कृत्वा सावस्रुतोक्षं कलशानामभिषेककाले सर्वकलशेभ्यः किञ्चित्किञ्चिदवस्रावितानि जलान्येकीकृत्य तेन सर्वपरिवारेपूक्षणं परिषद्बलिं प्रतिष्ठायामिव परिषदां बलिं च कृत्वा विभुं देवं प्रसन्नं भावयतु प्रसन्नपूजां च कुर्यात् ॥ १९८ ॥

पटलं समापयति — इतीति। इति तन्त्रसमुच्चयाख्ये ग्रन्थेऽष्टमः पटलः समाप्तोऽभूत्। कथंभूतः, समुद्यद्घटसंख्यापरिकल्पनाप्रकारः सम्यक्प्रकाशितानां घटसंख्यानां परिकल्पनायाः प्रकारेण युक्तः। कलशप्रसाधनैतत्स्नपनाख्यानप-रश्च कलशानां प्रसाधनं पूरणपूजनाधिवासादिकम्, एतत्स्नपनम् उत्तरेद्युः कर-णीयं कर्म, एतयोः कर्मणोराख्याने प्रकथने तत्परस्तात्पर्येण युक्तः ॥ १९९ ॥

इति तन्त्रसमुच्चयविमर्शिन्याम्

अष्टमः पटलः।

## अथ नवमः पटलः ।

अथ प्रतिष्ठास्नपनाद्यनन्तरं समाचरेत् सर्वसुपर्वसूत्सवम् ।
ततोऽनुसंवत्सरमुक्तवासरव्यवस्थया चाखिलसम्पदाप्तये ॥

मार्गादिराधावधिकेषु षट्सु मासेष्विहैकत्र परत्र वातः ।
स्वर्क्षान्तमाकल्प्य समुप्तबीजः सप्ताह्निकाद्युत्सवमादधीत ॥

स्नातांचान्तः स्फीतभेर्यादिनादो
गर्भागारं प्राप्य नान्दीमुखान्ते ।
कृत्वा पुण्याहं समाराध्य देवं
मन्त्री सङ्कल्पं करोतूत्सवस्य ॥ ३ ॥

---

एवमष्टभिः पटलैः भूपरिग्रहादिस्नपनपर्यन्तं कर्माभिधाय नवमेन पटलेनोत्सवं वक्तुमारभते — अथेति । अथशब्दार्थमेव विवृणोति — प्रतिष्ठास्नपनाद्यनन्तरमिति । प्रतिष्ठास्नपनं प्रतिष्ठायाश्चतुर्थदिवसस्नपनम् । आदिशब्देन जीर्णोद्धारादिकमुच्यते । प्रतिष्ठादीनां स्नपनानन्तरं सर्वसु पर्वसु सप्तस्वपि देवेषूत्सवमाचरेत् । तत आरभ्य अनुसंवत्सरं संवत्सरे संवत्सरे च उक्तवासरव्यवस्थया आगमेषूक्तसप्ताह्निकादिदिवसव्यवस्थायोगेन अखिलसम्पदाप्तये सर्वसम्पत्समापादनाय च ॥ १ ॥

उत्सवस्य कालनियममाह — मार्गादीति । मार्गादिराधावधिकेषु मार्गशीर्षादिवैशाखान्तेषु इह षट्सु मासेषु मध्ये एकत्र मासे अतः परत्र वा मासे स्वर्क्षान्तं मार्गशीर्षादितत्तन्मासविशिष्टनक्षत्रान्तम्, अथवा स्वर्क्षान्तं विष्ण्वादिदेवेषु स्वस्वपञ्चमीदिनान्तं, यद्वा स्वस्वप्रतिष्ठानक्षत्रान्तं तस्मिन्नृक्षे तीर्थस्नानं यथा भवति तथा चाकल्प्य तत्पूर्वमेव यथाकालं समुप्तबीजः कृतमङ्गलबीजावापो भूत्वा सप्ताह्निकाद्युत्सवं यथोक्तमादधीत ॥ २ ॥

तदारम्भविधिमाह — स्नाताचान्त इति । स्नाताचान्तः स्नानाचमनाद्यनन्तरं मन्त्री पाद्यपूजाकर्मज्ञः स्फीतभेर्यादिनादः भेरीसन्ताडनं यथोक्तं कारयित्वा गर्भागारं प्राप्य नान्दीमुखान्ते पुण्याहं कृत्वा देवं समाराध्य उत्सवस्य सङ्कल्पं करोतु एतं कालमेवंभूतमुत्सवं करिष्य इति देवाय विवेदयेदित्यर्थः ॥ ३ ॥

---

१. 'त्वा' इति मूलकोशपाठः.

तत्राग्रतः स्थापयतु ध्वजं च
तद्दण्डवाहादिकमारचय्य ।
संशोध्य सम्भूष्य च पल्लवाद्यैः
पुण्याहमाधाय यथाविधानम् ॥ ४ ॥

संशोध्य भूताप्ययधारणाद्यै-
स्तद्वाहनं वर्णतनुं विभाव्य ।
देवाग्रसंस्थात् कृतमूर्तिकेऽस्मिन्
वाहाणुना वाहनतोऽभिवाह्य ॥ ५ ॥

साकल्यमापाद्य समर्च्य केतौ
सम्यक् प्रतिष्ठाप्य समिष्टपीठे ।
केतुं च संस्थाप्य समिष्टपीठे
गर्ते पताकादिपरिष्कृताङ्गम् ॥ ६ ॥

आवाह्य सम्पूज्य निवेद्य वेद्यां
कृत्वा बलिं प्रार्थयतां च मन्त्री ।

---

तत्राग्रतः पुरोभागे ध्वजं च स्थापयतु । अग्रत इत्यनेन केषाञ्चित् पक्षे प्रागेव ध्वजस्थापनाङ्गीकार उत्सवस्य सूचितः । तत्स्थापनविधानमाह— तद्दण्डवाहादिकमिति । ध्वजदण्डं वाहनं पताकां घण्टादिकं चारचय्य कारयित्वा मन्त्री केतुस्थान उपविश्य केतुदण्डं दर्भमृदादिभिः संशोध्य पल्लवाद्यैः सम्भूष्य यथाविधानं मूर्तिपैः सह पुण्याहमाधाय तद्वाहनं भूताप्ययधारणाद्यैः भूतसंहारेण शोषणादिभिश्च संशोध्य वर्णतनुं लिपिप्राणायामादिभिर्लिपिमयदेहं विभाव्य पीठं प्रपूज्य कृतमूर्तिके कल्पितमूर्तिकेऽस्मिन् वाहने सति गर्भागारं गत्वा देवाग्रसंस्थाद् वाहनतो वाहाणुना वाहनमभिवाह्य साकल्यमापाद्य समर्च्य केतुस्थानं प्राप्य समिष्टपीठे केतौ सम्यग् अचञ्चलं प्रतिष्ठाप्य समिष्टपीठे गर्ते पताकादिपरिष्कृताङ्गं पताकाघण्टामालादिभिरलङ्कृतावयवं केतुं च संस्थाप्य आवाह्य सम्पूज्य निवेद्य वेद्यां तन्मूले वेदिकां कृत्वा बलिं च कृत्वा प्रार्थयतां च । मन्त्रीत्यनेन प्रार्थनामन्त्रज्ञ इति सूचितम् । यत्र तु देवालये तन्नित्यसान्निध्यकृते तस्या

---

१. 'ण्टां चा' क. पाठः. २. 'ङ' ख. घ. ङ. पाठः.

ध्वजप्रतिष्ठापनकर्म यत्र
तन्नित्यसान्निध्यकृते कृतं प्राक् ॥ ७ ॥
तत्राधुना केतुपटेऽभिवाह्य
तद् वाहमारोप्य यजेद् यथोक्तम् ।
कुर्याच्च केतून् बहिरग्निमादि-
दिक्पीठिकान्ते बलिदेवतानाम् ॥ ८ ॥

प्राकारान्तः समन्ताद् रुचिरतरवितानादिभिर्भूषयित्वा
पूगस्तम्भादिशुम्भच्छिबिरविततिभिर्यन्त्रदीपादिभिश्च ।
संमृज्यालिप्य माल्यैर्बहलपरिमलैर्मण्डयित्वा विशोध्य
ग्रामे सर्वत्र संस्थापयतु शुभपताकोज्ज्वलान् केतुदण्डान् ॥
आरभ्य चैवं महमाद्यरात्रौ देवार्चनं भूतबलिं च कुर्यात् ।
प्रातश्च सायं च परेष्वहस्सु बलिं तदिज्यां सवनत्रयेऽपि ॥

---

ध्वजदेवताया नित्यपूजाबल्यर्थं ध्वजप्रतिष्ठापनकर्म महाध्वजस्थापनं प्रागेव कृतं, तत्र त्वधुना उत्सवारम्भे केतुपटे पताकायां तद्वाहनं यथोक्तमावाह्यानन्तरं केतावारोप्य लम्बयित्वा यजेत् सम्पूज्य बलिं दद्यात् । ततो बहिरग्निमादिदिक्पीठिकान्ते बहिर्गतानाम् अग्रगतादीनां दिक्पीठिकानां समीपे कुमुदादीनां नन्द्यादीनां वान्येषां वा बलिदेवतानां स्वस्वमन्त्रेणाष्टौ केतून् कुर्याच्च ॥ ७—८ ॥

प्राकारान्तः बाह्यगतप्राकारान्तर्भागेऽपि समन्तान् चतुर्दिक्ष्वपि रुचिरतरवितानादिभिः अतिमनोहरैः वितानाच्छादनादिभिः पूगस्तम्भादिशुम्भच्छिबिरविततिभिः पूगस्तम्भादिभिः शोभमानैर्मण्डपविशेषैः यन्त्रदीपादिभिरन्यैश्चालङ्कारैर्भूषयित्वा भूप्रदेशं संमृज्यालिप्य बहलपरिमलैर्माल्यैः पुष्पविशेषैश्च मण्डयित्वालङ्कृत्य ग्रामेऽपि सर्वत्र विशोध्य शुभपताकोज्ज्वलान् केतुदण्डांश्च संस्थापयतु ॥ ९ ॥

एवं महम् उत्सवमारभ्य आद्यरात्रौ प्रथमदिवसरात्रौ देवार्चनं भूतबलिं च कुर्यात् । परेष्वहस्सु उत्तरदिवसेषु प्रातः सायं च तदिज्यां देवपूजां सवनत्रयेऽपि कुर्यात् ॥ १० ॥

---

१. 'मार्ज्यालि' इति मूलकोशपाठः

शुद्धोदकैः स्नानविधौ सदुग्धदध्याज्यगन्धोदकपञ्चगव्यैः ।
केरोदकैस्तं कलशैश्च साधु संस्नाप्य देवं विहितक्रमेण ॥
नवांशुकाभ्यां परिवेष्ट्य यज्ञसूत्रं च कृत्वाथ किरीटपूर्वैः ।
विभूषयेत् स्वार्हविभूषणैश्च गन्धैश्च माल्यैरपि मालिकाभिः ॥
कालेषु त्रिषु सावनैः स्वमनुभिर्मूलेन वा सर्वतः
सम्पूज्याज्यगुलोपदंशकदलीकेरादियुक्तं हविः ।
दौग्धाद्यं विनिवेदयेदिह शिवे दौग्धान्नहारिद्रके
सद्यान्तं कृसरं गुलान्नसकलान्ने चाननेषु क्रमात् ॥ १३ ॥
कालद्वयेऽप्युत्सवनामधेयं
बलिं गुरुर्भूतबलिं किरेद् वा ।
कालप्रक्लृप्त्योभयमाचरेद् वा
वक्ष्ये बलिं भौतिकमौत्सवं च ॥ १४ ॥

---

तत्र देवस्य स्नानविधौ स्नानकाले पूर्वं शुद्धोदकैः पुनः सदुग्धदध्याज्यगन्धोदकपञ्चगव्यैः पृथक् पूजितैरेतैः क्षीराद्यैः केरोदकैः नालिकेरजलैः कलशैश्च (विहित)क्रमेण तं देवं साधु संस्नाप्य वस्त्रेण बिम्बं परिमार्ज्य नवांशुकाभ्यां परिवेष्ट्य यज्ञसूत्रं चांसे कृत्वाथ किरीटपूर्वैः स्वार्हविभूषणैः स्वस्वयोग्यालङ्कारैः गन्धैर्माल्यैर्मालिकाभिश्च विभूषयेत् ॥ ११, १२ ॥

त्रिषु कालेषु सावनैः सवनभवैः विष्णौ द्वादशाक्षराष्टाक्षरषडक्षरैर्मन्त्रैः, शिवे प्रासादपञ्चब्रह्मषडक्षरैर्मन्त्रैः, अन्येषु स्वस्वविहितैर्मनुभिर्वा, सर्वतः सर्वदेवेषु सर्वकालेषु च स्वस्वमूलेन वा सम्पूज्याज्यगुळोपदंशकदलीकेरादियुक्तं हविर्विनिवेदयेत् । शिवे त्विह दौग्धाद्यमपि विनिवेदयेत् । तानि पुनः सद्यान्तं भवन्ति । ईशानतत्पुरुषाघोरवामदेवसद्योजातमुखेषु क्रमात् दौग्धान्नहारिद्रके दौग्धान्नं पायसं, हारिद्रकं निशाचूर्णेन सह पक्वं, कृसरं तिलैः सह पक्वं, गुलान्नसकलान्ने गुलान्नं सकलान्नं च गुलेन सह पक्वं सकलान्नं तच्चतुष्कमिश्रमिति ॥ १३ ॥

अथ गुरुः स्वयं कालद्वयेऽपि प्रातस्सायं चोत्सवनामधेयं बलिं वा भूतबलिं वा किरेत् । कालप्रक्लृप्त्या प्रातरुत्सवबलिः सायं भूतबलिरिति कप्त्योभयमाचरेद् वा भौतिकं भूतबलिम् औत्सवम् उत्सवबलिं च क्रमेण वक्ष्ये ॥ १४ ॥

---

१. 'भूष्य य' इति मूलकोशपाठः.

त्रिधा स्वमूलाणुसमर्चितं हवि-
विंभज्य तद्दैविकमाद्यमंशकम्।
सभूतकूरावितरांशकौ क्रमात्
प्रकल्पयेत् पारिषदं च भौतिकम्॥ १५॥

निर्माल्यभुक्पश्चिममुख्यदेवता-
स्विष्टं हविर्दैविकमन्यदन्यतः।
आमन्त्रणं चाश्रितवाद्यघोषणै-
रत्रादितो भूतगणस्य कारयेत्॥ १६॥

सम्प्रार्थ्य देवं बलिकौतुके स्वे
संयोज्य सन्धार्य च मूर्तिपेन।
तत्साक्षिकं क्लृप्तसुदीप्तदीप-
वाद्यादिहृद्यं बलिमातनोतु॥ १७॥

सृष्टिस्थितिविनाशानां कर्तर्भूतपते! प्रभो!।
त्वत्पारिषदमुख्यानां बलिदानाय शाधि माम्॥ १८॥

---

स्वमूलाणुना[1] समर्चितं हविस्त्रिधा विभज्य तेष्वाद्यमंशकं तद्धवि-र्दैविकं प्रकल्पयेत्। इतरांशकौ सभूतकूरौ "पललं रजनीचूर्णं सलाजं दधि सक्तुकम्" इत्युक्तभूतकूरयुक्तौ क्रमेण पारिषदं भौतिकं च प्रकल्पयेत्॥ १५॥

निर्माल्यभुक्पश्चिममुख्यदेवतासु द्वाःस्थादिनिर्माल्यधार्यन्तासु मुखभ-वासु विशिष्टासु वा देवतासु दैविकं हविरिष्टम्। अन्यतोऽन्यत् पारिषदेषु पारिषदं भूतेषु भौतिकं च। अत्र बलिकाले आदित आरम्भे अश्रितवाद्य-घोषणैः यथोपपत्ति पूजितानां वाद्यानां घोषणैः भूतगणस्यामन्त्रणमाह्वानं कारयेत्॥ १६॥

देवं संप्रार्थ्य 'सृष्टिस्थितिविनाशानामि'त्यादिना प्रार्थ्य स्वे बलिकौ-तुके बल्यर्थं विरचिते बिम्बे संयोज्य मूर्तिपेन सन्धार्य धारयित्वा तत्साक्षिकं देवसाक्षियुक्तं क्लृप्तसुदीप्तदीपवाद्यादिहृद्यं क्लृप्तेन सुतरां दीप्तेन दीपेन वा-द्यादिना वाद्यगाननृत्तादिभिश्च हृद्यं यथा भवति तथा बलिमातनोतु॥ १७॥

प्रार्थनामन्त्रं पठति—सृष्टिस्थितीति॥ १८॥

---

१. 'णुस' ख. ङ. पाठः.

प्रोक्ष्याराध्य विभाव्य तत्र वसुपत्राब्जस्थितां देवतां
पाद्याद्यं प्रसमर्प्य तत्तदणुना सम्पूज्य दत्त्वा बलिम्।
तत्तत्पार्श्वपदे प्रदाय परिषण्मन्त्रेण मूलेन च
प्राप्य्यापो बलिमुद्रया प्रधिनुयादेवं बलिप्रक्रिया ॥ १९ ॥

द्वाःस्थौ पार्श्वद्वये द्वार्यजितपुरसुरद्वेषिणोर्मण्डपेऽग्ये
वाहं पृष्ठेऽहिराजं यजतु सगणपं दक्षिणे दक्षिणेशम्।
शेषेष्वेतानशेषान् स्मरजिति गतवाहाहिपान् द्वाःस्थवत्सु
द्वाःस्थान् सर्वेष्वथाग्न्यादिकादिगाधिपतीन् वाहनान्तान्
[दशेशे ॥ २० ॥

लोकेशोपरि मातृशास्तृमहिषच्छिद्‌षण्मुखार्थाधिभू-
निर्माल्यामृतभोजिनश्च निखिलेष्वप्यर्चयेत् स्वास्पदे।

---

बलिक्लृप्तिमाह — प्रोक्ष्येति। बलिपीठेषु जलेन प्रोक्ष्य पुष्पेणाराध्य तत्र वसुपत्राब्जस्थिताम् अष्टदलपद्मे स्थितां देवतां विभाव्य ध्यात्वा पाद्याद्यमुपहारजातं प्रसमर्प्य तत्तदणुना जलगन्धादिभिः सम्पूज्य बलिं दत्त्वा तत्तत्पार्श्वपदे तस्य तस्य पार्श्वस्थाने परिषण्मन्त्रेण तत्तत्परिषण्मन्त्रेण मूलेन च बलिं प्रदाय चापः प्राप्य्य बलिमुद्रया प्रधिनुयात् प्रीणयेत्। एवं बलिप्रक्रिया बलिदानप्रकारः ॥ १९ ॥

अथ भूतबलेः क्रममाह — द्वाःस्थाविति। अजितपुरसुरद्वेषिणोः विष्णुशिवनारायणयोः द्वारि पार्श्वद्वये द्वाःस्थौ यजतु। अग्ये मण्डपे वाहं च, पृष्ठे अहिराजमनन्तं, दक्षिणे द्वारि पार्श्वद्वये सगणपं गणपतिसहितं दक्षिणेशं दक्षिणामूर्तिं च, शेषेषु पञ्चसु देवेषु एतानुक्तान् द्वाःस्थादीन् अशेषान् शेषनाम्नानन्तेन रहितान्, स्मरजिति गतवाहाहिपान् रहितवाहानन्ताभ्यां युक्तान्, द्वितीयद्वाःस्थवत्सु देवेषु द्वितीयद्वाःस्थांश्च, अथ सर्वेष्वप्यग्न्यादिकदिगधिपतीन् दश, ईशे तु वाहनान्तान् अन्ते वाहनेन युक्तान् तांश्च यजतु ॥ २० ॥

निखिलेष्वपि देवेषु लोकेशोपरि लोकेशानां पूजानन्तरं मातृशास्तृमहिषद्विट्षण्मुखार्थाधिभूनिर्माल्यामृतभोजिनश्च मातॄः शास्तारं दुर्गां स्कन्दं वैश्रवणं निर्माल्यधारिणं च स्वास्पदे स्वस्वस्थानेऽर्चयेत्। धनाध्यक्षं वैश्रवणं

---

१. 'ता', २. 'ताः' घ. पाठः. ३. 'हनान' क. ख. ङ. पाठः.

सोमानन्तरमेव वार्हतु धनाध्यक्षं तथान्तर्बहि-
द्वाःस्थेज्योपरि वाहनादिकसमिज्या वैवमन्तर्बलिः ॥२१॥
प्रासादान्तर्बहिरपि सभान्तर्बहिश्चाजितेशे
द्वाःस्थास्तेष्वन्तिमविरहिता वाद्यहीना रमेशे ।
अन्त्यस्थानस्थितविरहिताः शर्वशास्त्रोः कुमार्या-
माद्योना वा गुहगणपयोर्वा तथाद्यन्तहीनाः ॥ २२ ॥

प्रासादान्तर्नन्दिचण्डौ हरीशे
स्यातां तद्बाह्ये जयत्सेननामा ।
विष्वक्सेनश्चाप्युमा श्रीः सभान्तः
शूलं चक्रं तद्बहिश्च क्रमेण ॥ २३ ॥

चण्डप्रचण्डावरिशङ्खपाणी
श्रीः पुष्टिसंज्ञाप्यजितेऽग्यपक्षे ।

---

सोमानन्तरं सोमस्य पूजाया अनन्तरं तदुत्तरे वा अर्हतु पूजयेत् । तथान्तर्बहिर्द्वाःस्थेज्योपरि अन्तर्द्वाःस्थानन्तरमेव बहिर्द्वाःस्थावभ्यर्च्य पुनर्वाहनादिकसमिज्या वाहनादीनां पूजा वा कार्या । एवमन्तर्बलिः अन्तर्भागगतो बलिः स्यात् ॥ २१ ॥

द्वाःस्थानां क्लृप्तिमाह — प्रासादान्तरिति । अजितेशे प्रासादान्तर्बहिः प्रासादस्यान्तर्भागे बहिर्भागे च सभान्तर्बहिश्च सभाया अन्तर्बहिश्चेति चतुर्विधा द्वाःस्थाः । रमेशे तेषु द्वाःस्थेषु मध्ये अन्तिमविरहिताः सभाया बहिर्द्वाःस्थविरहिता वा आद्यहीनाः प्रासादान्तर्द्वाःस्थविरहिता वा । शर्वशास्त्रोः अन्त्यस्थानस्थितविराहिताः सभाबहिर्द्वाःस्थरहिताः । कुमार्याम् आद्योना वा चतुर्विधद्वाःस्थयुक्ता वा । गुहगणपयोस्तथा आद्यन्तहीना वा ॥ २२ ॥

तेषां नामानि कथयति — प्रासादेति । हरीशे प्रासादान्तः नन्दिचण्डौ स्याताम् । तद्बाह्ये प्रासादबाह्ये जयत्सेननामा विष्वक्सेनश्च । सभान्तश्चापि उमा श्रीरपि । तद्बहिः क्रमेण शूलं चक्रं च ॥ २३ ॥

अजिते अग्र्यपक्षे पक्षयोः प्रागुक्तपक्षे अन्तिमरहितपक्षे चण्डप्रचण्डौ अरिशङ्खपाणी चक्रपाणिः शङ्खपाणिश्च श्रीः पुष्टिसंज्ञापि स्थिताः । अन्यपक्षे

---

१. 'व बहिर्द्वाःस्थानन्तरमेव बहि' ख. पाठः.

स्थिताः क्रमाच्चक्रदरादिपाणी
श्रीपुष्टिवाह्ये भवतोऽन्यपक्षे ॥ २४ ॥

प्रासादस्थाः प्रोक्ता नन्दिमहाकालशूलपाण्यभिधाः ।
सहपरशुपाणयोऽन्तस्सदसि शिवे तीक्ष्णदन्तसमृगास्यौ ॥

शास्तरि शस्ताः क्रमशः क्षुरिकापाणिश्च खड्गहस्तश्च ।
अथ वीरबाहुसमहावीरौ तीक्ष्णश्च तीक्ष्णदन्तश्च ॥ २६ ॥

प्राक् चण्डिकाम्बिके स्तो ह्लादिन्यपि मोदिनी सभान्तःस्थे ।
तत्र बहिर्विजयन्तीकात्यायन्यौ च दुर्गायाम् ॥ २७ ॥

वह्निभुवि वज्रहस्तः प्रासादे शक्तिपाणिश्च ।
सदसि पुनरग्निकेतुर्द्वाःस्थौ स्तः सूर्यकेतुश्च ॥ २८ ॥

प्रासादद्वारगतौ विघ्नेशे वज्रदन्तसमृगास्यौ ।
स्यातां च चण्डविक्रमविघ्नकरौ कीर्तितौ सभान्तःस्थौ ॥

---

आद्यरहितपक्षे श्रीपुष्टिवाह्ये चक्रदरादिपाणी चक्रपाणिः शङ्खपाणिश्च भवतः। तत्र प्रासादबहिर्द्वार एव चण्डप्रचण्डौ ॥ २४ ॥

शिवे नन्दिमहाकालशूलपाण्यभिधाः नन्दी महाकालः शूलपाणिश्च सहपरशुपाणयः परशुपाणिश्च एते प्रासादस्था द्वाःस्थाः प्रोक्ताः। अन्तस्सदसि सभाया अन्तः तीक्ष्णदन्तसमृगास्यौ तीक्ष्णदन्तो मृगास्यश्च ॥ २५ ॥

शास्तरि क्षुरिकापाणिश्च खड्गहस्तश्च अथ वीरबाहुसमहावीरौ वीरबाहुः महावीरश्च तीक्ष्णश्च तीक्ष्णदन्तश्च द्वाःस्थाः शस्ताः ॥ २६ ॥

दुर्गायां प्राक् पूर्वं चण्डिकाम्बिके स्तो भवतः। प्रागित्यनेन क्वचित् पक्षे जयाविजयाभ्यां च योगः सूचितः। सभान्तःस्थे सभाया अन्तर्भागस्थे ह्लादिनी मोदिन्यपि भवतः। तत्र सभाया बहिः विजयन्तीकात्यायन्यौ च ॥

वह्निभुवि प्रासादे वज्रहस्तः शक्तिपाणिश्च, सदसि सभायां पुनरग्निकेतुः सूर्यकेतुश्च द्वाःस्थौ स्तः ॥ २८ ॥

विघ्नेशे प्रासादद्वारगतौ वज्रदन्तसमृगास्यौ वज्रदन्तो मृगास्यश्च। सभान्तःस्थौ चण्डविक्रमविघ्नकरौ कीर्तितौ स्याताम् ॥ २९ ॥

---

१. 'गजास्यौ' इति मूलकोशपाठः.

स्थाणौ वृषो मुररिपौ गरुडो द्वयात्मा
शार्ङ्गीश्वरेऽथ गणराजि महादिचाषः ।
आर्ये हयः शिखिभवे शिखिकुक्कुटौ च
सिंहो निसुम्भजिति वाहनकेतनाङ्काः ॥ ३० ॥
द्वाःस्थान् प्रार्च्य बहिर्निरेत्य च सभाया येसमस्तादिना
विज्ञाप्य ध्वजदेवताश्च परितस्तत्तद्गणांस्तद्बहिः ।
पीठे स्वावरणावृतं परिषदध्यक्षं ततोऽष्टग्रहान्
दिक्षु क्षेत्रपतिं यजेदुदितिदिश्येवं बहिः स्याद् बलिः ॥
नन्दी महाकालसभूतनाथमहीधराख्यौ सहपर्वतेशौ ।
ततो गुहेशाभिधकालपाशकपालिनश्चाष्ट शिवे ध्वजेशाः ॥
सदेवसेनापतिरग्निलोचनः
सदण्डहस्तोऽप्यसिधारिसंज्ञकः ।

---

वाहननामाह — स्थाणाविति । अथ स्थाणौ वृषः ऋषभः । मुररिपौ गरुडः । शार्ङ्गीश्वरे द्वयात्मा ऋषभगरुडात्मा । गणराजि महादिचाषः महाचाषः । आर्ये हयः अश्वः । शिखिभवे स्कन्दे शिखिकुक्कुटौ । तत्र शिखी वाहनं, कुकुटो ध्वजलक्षणम् । निसुम्भजिति सिंहः । एते वाहनकेतनाङ्काः वाहनानि ध्वजलक्षणानि च ॥ ३० ॥

बहिर्बलिविधिमाह — द्वाःस्थानिति । सभाद्वाःस्थान् प्रार्च्य, सभाया बहिर्निरेत्य निर्गत्य, येसमस्तादिना 'ये समस्तजगदि'त्यादिना मन्त्रेण सर्वान् विज्ञाप्य, परितो ध्वजदेवताश्च यजेत् । तद्बहिरावरणे तत्तद्गणांश्च पञ्चाशद्भूतगणादींश्च, पुनः पीठे महापीठे स्वावरणावृतं स्वस्वपरिवारोपेतं परिषदध्यक्षं हरिसेनादिभूताधिपं च, ततो दिक्ष्वष्ट ग्रहान्, उदितिदिशि ईशानपश्चिमे क्षेत्रपतिं च यजेत् । एवं बहिः बहिर्गतो बलिः स्यात् ॥ ३१ ॥

शिवादिध्वजेशान् क्रमेण पठति — नन्दीति । इति शिवे इत्यष्ट ध्वजेशाः स्युः ॥ ३२ ॥

गुहे नव ध्वजेशान् पठति — सदेवसेनापतिरिति ॥ ३३ ॥

---

१. 'स्थौ' इति मूलकोशपाठः. २. 'क्षितः ।' ग. पाठः.

सकालपाशो ध्वजशेखराभिधो
गदी पुनः शूलविलासिनामकः ॥ ३३ ॥

विप्रप्रियश्चेति नव ध्वजेशा
गुहेऽन्तिमः शर्वदिशीह कार्यः ।
स्वमण्डपप्रोक्तचराः परेषु
गणेश्वरे द्वारघटे प्रदिष्टाः ॥ ३४ ॥

विंशद्भूतगणाः स्मृताः स्मररिपौ दिग्दिक्षु पञ्चाशतो-
द्भिन्नाश्चाष्टसु दिक्षु शार्ङ्गभृति सप्तत्या तथेशाच्युते ।
षट्कोट्योद्भिदुरा गुहे महिषहन्त्र्यामष्टकोट्या तथा
तत्तत्पारिषदाः प्रभेशगणपत्योश्च द्वितीयावृतौ ॥ ३५ ॥

बलिपीठस्य समन्ताद्बलिजिति बलजिन्मुखाष्टदिक्क्रमतः ।
कुमुदाद्यष्टकमिष्ट्वा मध्येपीठं यजेत हरिसेनम् ॥ ३६ ॥

---

गुहे अन्तिमो विप्रप्रियः शर्वदिशि कार्यः । परेषु हरौ शिवनारायण-दुर्गाशास्तृषु च स्वमण्डपप्रोक्तचराः स्वस्वमण्डपसंस्कारे ध्वजेषूक्ताः । तत्र हरौ कुमुदाद्याः, शिवनारायणे नन्दिकुमुदात्माद्याः, दुर्गायां काल्याद्याः, शास्तरि गोप्त्राद्याः, गणेश्वरे द्वारघटपूजायामुक्ता वक्रदन्ताद्याः प्रदिष्टाः ॥ ३४ ॥

द्वितीयावरणबलिदेवता आह — विंशदिति । द्वितीयावृतौ स्मररिपौ दिग्दिक्षु दशदिक्षु विंशद्भूतगणाः स्मृताः । शार्ङ्गभृति चाष्टसु दिक्षु पञ्चाश-तोद्भिन्नाः पञ्चाशद्भूतगणाः । ईशाच्युते तथा सप्तत्या उद्भिन्नाः सप्ततिभूत-गणाः । गुहे षट्कोट्योद्भिदुराः षट्कोटिभूतगणाः । महिषहन्त्र्याम् अष्टकोट्या उद्भिदुराः अष्टकोटिभूतगणाः । प्रभेशगणपत्योः तत्तत्पारिषदाः विघ्नपार्षदाः शास्तृपार्षदाश्च स्मृताः ॥ ३५ ॥

महापीठावरणान्याह — बलिपीठस्येति । बलिजिति विष्णौ बलि-पीठस्य समन्तात् बलजिन्मुखाष्टदिक्क्रमतः इन्द्राद्यष्टदिक्षु कुमुदाद्यष्टकमिष्ट्वा मध्येपीठं पीठोपरि मध्यभागे हरिसेनं यजेत ॥ ३६ ॥

---

१. 'ढ' इति मूलकोशपाठः. २., ३. 'रिषदा' ख. घ. ङ. पाठः.

पुरभिदि भूतिदसंज्ञं सदुर्निरीक्षं सभीमरूपमथ ।
यजतु सुलोचनसुमुखौ समहाबाहू दिशास्वधश्चोर्ध्वम् ॥

त्रिशिरास्त्रिभुजौ पिङ्गलहरिसेनौ चाह्वयैर्द्विठान्तैः स्वैः ।
चतुरो भूतिदपूर्वांश्चतुरः कुमुदादिकांश्च शार्ङ्गीशे ॥ ३८ ॥

द्वितयान् द्विशोऽखिलान् वा परितोऽधः पिङ्गलं यजेदुपरि ।
परमेष्ठीशपदाद्यं सेनमथायान्तुमन्त्रनश्चान्ते ॥ ३९ ॥

आयान्तु पार्षदाः सर्वे शाङ्करा वैष्णवास्तथा ।
बलिपीठेऽत्र सन्तुष्टा निवसन्तु यथासुखम् ॥ ४० ॥

नमः सर्वपार्षदेभ्यो नम इति ।

ब्रह्मसुपूर्वे घोष्यौ सयज्ञवेष्ट्यौ सुरङ्गिणी सुमुखी ।
सुभुजा प्रमोदिनी पुनरात्मन्यपि कीर्तितान्तिमा ब्राह्मी ॥

एताः क्रमेण पूज्या दुर्गायां दिक्षु पीठमध्ये च ।
ब्राह्म्यन्तेऽब्जदलस्थाः काल्याद्याश्चात्र पूजनीया वा ॥४२॥

---

पुरभिदि भूतिदं दुर्निरीक्षं भीमरूपं सुलोचनं सुमुखं महाबाहुं त्रिशिरसं त्रिभुजं पिङ्गलं हरिसेनं च महापीठस्य पूर्वादिदिशास्वधश्चोर्ध्वे च द्विठान्तैः स्वाहान्तैः स्वैराह्वयैर्नामभिः 'भूतिदाय स्वाहा' इत्याद्यैर्मन्त्रैर्यजतु । शार्ङ्गीशे भूतिदपूर्वान् शिवोक्तांश्चतुरः कुमुदादीन् विष्णूक्तांश्चतुरो यजतु ॥ ३७, ३८ ॥

द्वितयान् शैवोक्तान् वैष्णवोक्तांश्चाखिलान् परितो द्विशः द्विद्विशो वा अधः पिङ्गलम् उपरि परमेष्ठीशपदाद्यं सेनं परमेष्ठीशसेनं च यजेत् । अन्ते 'आयान्तु पार्षदा' इति मन्त्रेण च यजेत् ॥ ३९ ॥

दुर्गायाम् एताः क्रमेण दिक्षु पीठमध्ये च पूज्याः । कास्ताः, ब्रह्मसुपूर्वे घोष्यौ ब्रह्मघोषी सुघोषी च, सयज्ञवेष्ट्यौ यज्ञवेष्टी च, पुनः सुरङ्गिण्याद्याः । अन्तिमा अवसानभूता ब्राह्मी कीर्तिता । अत्र ब्राह्म्यन्ते ब्राह्म्या अवसाने समीपे वा अब्जदलस्थाः पीठपद्मस्य पूर्वादिदलेषु कालीकराल्याद्याः पूजनीया वा ॥ ४१, ४२ ॥

ओजाशासु बलिं करोतु हरिवर्जं सर्वतो वा तथा
शर्वे प्रागमृतांशुपूजनविधेरर्च्यश्च वित्ताधिपः ॥ ५१ ॥
यथान्यायं मातृप्रभृतिगुहनिष्ठावृतिमथो
यजेद् गायत्र्याद्यैर्मनुभिरपि सर्वेषु विधिवत् ।
इमां प्रागाद्याशापरिगतकुमारादिसहितां
त्रिधामन्येवं वा सहरिहरसुम्भासुररिपौ ॥ ५२ ॥
प्राचि स्कन्दं प्रभेशं शिखिनि पितृपतौ धर्ममातॄस्तथार्यं
भृङ्गे भानुं पितृस्थं द्रुहिणमुदकराजीरणे सूकरार्ये ।
स्कन्दं मुख्येऽन्यमातॄरपि तुहिनरुचावम्बिकां त्र्यम्बकं स्वे
कोणे चार्हेत् परीत्यार्चयतु पुनरुदित्यां च निर्माल्यभाजम् ॥

---

दिशिपूर्वकेण 'ओं पूर्वस्यां दिशि शिवस्ये'त्यादिना बलिं करोतु । ओजाशासु पूर्वदक्षिणपश्चिमोत्तरोर्ध्वदिक्षु येभूतादिमन्त्रेण 'ये भूताः पुरस्सद' इत्यादिना मन्त्रेण च बलिं करोतु । हरिवर्जं हरिं वर्जयित्वा सर्वतः सर्वदेवेषु तथा वा । शर्वे अमृतांशुपूजनविधेः सोमाराधनात् प्राग् वित्ताधिपो वैश्रवणोऽर्च्यश्च ॥५१॥

अथो सर्वेषु देवेषु मातृप्रभृतिगुहानिष्ठावृतिं मातृशास्तृदुर्गास्कन्दान् यथान्यायं न्यायाविरोधेन गायत्र्याद्यैर्वक्ष्यमाणैर्मनुभिरपि विधिवद् यजेत् । त्रिधामनि विष्णौ इमामावृतिं प्रागाद्याशापरिगतकुमारादिसहितां प्रागाद्याशासु स्थितस्कन्दाद्यावरणसहितां यजेत् । सहरिहरसुम्भासुररिपौ शिवनारायणे दुर्गायामप्येवं वा यजेत् ॥ ५२ ॥

स्कन्दाद्यावृतिमाह — प्राचीति । प्राचि इन्द्रस्य बहिर्भागे स्कन्दमर्हेत् । शिखिनि अग्नेः बहिः प्रभेशं शास्तारं, पितृपतौ यमस्य दक्षिणे धर्ममातॄः धर्मं मातॄश्च, तथा भृङ्गे यमनिर्ऋत्योरन्तराले आर्यं, पितृस्थं निर्ऋतिस्थं भानुं सूर्यम्, उदकराजि वरुणे द्रुहिणं ब्रह्माणम्, ईरणे वायौ सूकरार्ये वराहं दुर्गां च, मुख्ये स्कन्दं, तुहिनरुचौ सोमे अन्यमातॄः उत्तरमातॄः[2] अम्बिकामपि, त्र्यम्बकं शिवं स्वे कोणे च, पुनः परीत्य परिक्रम्य उदित्याम् ईशपश्चिमे निर्माल्यभाजं चार्चयतु ॥ ५३ ॥

---

१. 'म' घ. च. पाठः. २. 'दु' क. पाठः.

नमस्ते द्वारपालाय चण्डायामिततेजसे ।
नरसिंहतनूजाय चक्रेणाङ्कितमौलये ॥ ५४ ॥

नमस्ते द्वारपालाय प्रचण्डायामितौजसे ।
नरसिंहतनूजाय शङ्खेनाङ्कितमौलये ॥ ५५ ॥

वाहनाय महाविष्णोस्ताक्ष्यायामिततेजसे ।
गरुडाय नमस्तेऽस्तु दुष्टसर्पेन्द्रमृत्यवे ॥ ५६ ॥

शय्या यो जगतां धातुर्विष्णोर्विविधमायिनः ।
अनन्ताय नमस्तुभ्यमहीन्द्रनमिताङ्घ्रये ॥ ५७ ॥

नमस्ते सर्वभूतेश! सर्वसम्पत्प्रदायिने ।
सर्वविघ्नविनाशाय विघ्नेशाय शिवात्मने ॥ ५८ ॥

नमस्तेऽस्तु महायोगिन्! व्याख्यामुद्रालसत्कर! ।
दक्षिणामूर्तिरूपाय रुद्राय परमात्मने ॥ ५९ ॥

नमस्ते द्वारपालाय चक्रव्यग्रमहाभुज! ।
दृष्ट्या निहतदैत्याय वैष्णवाय नमो नमः ॥ ६० ॥

नमस्ते द्वारपालाय शङ्खव्यग्रमहाभुज! ।
दृष्ट्या निहतदैत्याय वैष्णवाय नमो नमः ॥ ६१ ॥

दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो! ॥ ६२ ॥

मुखं यः सर्वदेवानां येन हव्यं च नीयते ।
येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे ॥ ६३ ॥

---

'उपस्थाय स्तोत्रैरि'त्याद्युक्तमुत्सवबलिं विवृण्वन् पूर्वमुपस्थानमन्त्रान् क्रमेण पठति —नमस्ते द्वारपालायेत्यादि । अत्र केषाञ्चित् प्रधानानामेवोपस्थानमन्त्रा भवन्ति । इतरेषां तु स्वस्वनाममन्त्रा एवोपस्थाने प्रयोज्या इत्यवगन्तव्यम् ॥ ५४—७५ ॥

येन संह्रियते सर्वं येन धर्मं च रक्ष्यते ।
यस्माद् बिभेति लोकोऽयं प्रेतनाथ! नमोऽस्तु ते ॥

राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम् ।
तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः ॥ ६५ ॥

येन संरक्ष्यते सर्वं यस्मिन् सर्वं प्रतिष्ठितम् ।
अमोघपाशहस्ताय तस्मैऽपांपतये नमः ॥ ६६ ॥

पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात् ।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते! ॥ ६७ ॥

यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः ।
सोमाय गदिने तस्मै ज्योतिषां पतये नमः ॥ ६८ ॥

यत्प्रसादाज्जगत् सर्वं धनेन परिपूर्यते ।
यक्षगुह्यकनाथाय धननाथ! नमोऽस्तु ते ॥ ६९ ॥

येन कालाग्निना लोको युगान्तेष्ववदह्यते ।
तस्मै ते ब्रह्मणः पुत्र! विरूपाक्ष! नमोऽस्तु ते ॥ ७० ॥

येन सृष्टं जगत् सर्वं सर्गादौ विष्णुशासनात् ।
पितामह! नमस्तुभ्यं सर्वलोकेश! पद्मज! ॥ ७१ ॥

पन्नगाधिपतिर्देव! अनन्तो नाम नामतः ।
पातालवासिने नित्यं नागराज! नमोऽस्तु ते ॥ ७२ ॥

वीरभद्र! नमस्तेऽस्तु नमो विघ्नेश्वराय च ।
ब्राह्मयादिभ्यश्च[1] मातृभ्यः सर्वाभ्यो वै नमो नमः ॥

श्रीधराय नमस्तेऽस्तु नमस्तेऽश्वमुखाय च ।
वागीश्वर्यादिमातृभ्यः सर्वाभ्यो वै नमो नमः ॥७४॥

विष्वक्सेन! नमस्तेऽस्तु देवनिर्माल्यधारिणे ।
शङ्खचक्रगदापाणे! महापारिषदेश्वर! ॥ ७५ ॥

---

१. 'श्च सर्वाभ्यो मातृभ्यो वै' ख. ग. पाठः.

एते हरावुपस्थानमन्त्रास्तत्र शिवादिषु ।
साधारणास्त एव स्युर्विशेषोक्तान् पृथग् ब्रुवे ॥ ७६ ॥
नमस्ते द्वारि युक्ताय शूलहस्ताय धीमते ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ ७७ ॥
नमस्ते द्वारि युक्ताय परशुव्यग्रपाणये ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ ७८ ॥
येन प्रसूयते सर्वं यस्मिन् सर्वं प्रलीयते ।
अमोघपाशहस्ताय तस्मैऽपांपतये नमः ॥ ७९ ॥
वाहनाय महाशम्भोः शैलार्णवघनस्वन ।
ऋषभाय नमस्तुभ्यं सर्वदुष्टप्रशान्तये ॥ ८० ॥
नमस्ते द्वारि युक्ताय शूलहस्ताय धीमते ।
दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ॥ ८१ ॥
नमस्ते द्वारपालाय प्रचण्डायामितौजसे ।
नरसिंहतनूजाय चक्रेणाङ्कितमौलये ॥ ८२ ॥
नमस्ते द्वारि युक्तायै चण्ड्यै खेटासिधारिणि ।
नरसिंहतनूजायै चक्रेणाङ्कितमौलये ॥ ८३ ॥
नमस्ते द्वारि युक्तायै अम्बिकायै महौजसे ।
नरसिंहतनूजायै शङ्खेनाङ्कितमौलये ॥ ८४ ॥
नमस्ते द्वारि युक्तायै जयायै ज्वालयावृते ।
दृष्ट्या निहतदैत्यायै कात्यायन्यै नमो नमः ॥ ८५ ॥
नमस्ते द्वारि युक्तायै विजयायै महौजसे ।
दृष्ट्या निहतदैत्यायै कात्यायन्यै नमो नमः ॥ ८६ ॥

---

हरौ एते द्वाःस्थादिनिर्माल्यधार्यन्तेषूपस्थानमन्त्राः स्युः । शिवादिषु तत्र उक्तेषु मन्त्रेषु साधारणाः केचित् त एव । विशेषोक्तान् विशेषत उक्तान् पृथग् ब्रुवे ॥ ७६ – ११० ॥

---

१., २. 'यि' ख. ग. घ. पाठः.

वाहनाय महादेव्याः सिंहायामिततेजसे ।
अतुल्यबलवन्नत्र नमस्तेऽस्तु हरीश्वर ! ॥ ८७ ॥
दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ! ।
कुलिशव्यग्रहस्ताय नमस्तस्तु शतक्रतो ! ॥ ८८ ॥
मुखं यः सर्वदेवानां येन हव्यं च नीयते ।
येन प्रवर्तते सर्वं नमस्तेऽस्मै हविर्भुजे ॥ ८९ ॥
दण्डहस्ताय भीमाय सर्वप्राणहराय च ।
प्रेतनाथ ! नमस्तेऽस्तु पितृलोकनिवासिने ॥ ९० ॥
खड्गहस्ताय घोराय नैर्ऋताय महामते ! ।
रक्षोधिपाय तीक्ष्णाय नमस्तेऽस्तु निशाचर ! ॥ ९१ ॥
जलाधिपाय प्राणाय सर्वभूतहिताय च ।
पाशहस्ताय भीमाय नमस्तेऽस्तु अपांपते ! ॥ ९२ ॥
सदागताय प्राणाय सर्वभूतहिताय च ।
ध्वजहस्ताय शब्दाय नमस्तेऽस्तु समीरण ! ॥ ९३ ॥
नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्तितः ।
गदापट्टसधारी च सोमराजाय ते नमः ॥ ९४ ॥
धनदाय कुबेराय सर्वौषधिधराय च ।
पौलस्त्याय च नीलाय नमस्तेऽस्तु धनाधिप ! ॥ ९५ ॥
ईशानः सर्वविद्यानामक्षमालाधरो हरः ।
हरिणहस्तो महात्मा च नमस्तेऽस्तु हरिप्रिय ! ॥ ९६ ॥
स्रष्टा चरस्य सर्वस्य लोकानां च पितामहः ।
आदिश्च सर्वभूतानां तस्मै वेदात्मने नमः ॥ ९७ ॥
पन्नगाधिपतिर्देव! अनन्तो नाम नामतः ।
पातालवासिने नित्यं नागराजाय ते नमः ॥ ९८ ॥
तर्जयन्ती जगत् सर्वं सदा निर्माल्यधारिणि ! ।
वरदाभयहस्तायै चण्डिकायै नमोऽस्तु ते ॥ ९९ ॥

---

१. 'वानत्र' क. घ. पाठः. २. 'तु' ख. पाठः. ३. 'मो' क. घ. पाठः.
४. 'रसाय' ग. पाठः.

इन्द्रः सुरपतिश्चैव वज्रहस्तो महाबलः ।
शतयागाधिपो देवस्तस्मै ह्यागात्मने नमः ॥ १०० ॥
सर्वदेवमयो देवो रक्षोवह्निर्महाबलः ।
सप्तजिह्वो महावीर्यो नमो वैश्वानराय च ॥ १०१ ॥
दण्डहस्तो महादेवो धर्माध्यक्षो महाबलः ।
आवाहये धर्मराजं ! तस्मै प्रेतात्मने नमः ॥ १०२ ॥
खड्गहस्तधरो देवो नैर्ऋतो नीलविग्रहः ।
निर्ऋते ! च नमस्तुभ्यं खड्गहस्तात्मने नमः ॥ १०३ ॥
जलराज ! महाराज ! विख्यात इति निम्नगः ।
पश्चिमां दिशमाचष्टे पाशहस्तात्मने नमः ॥ १०४ ॥
सर्वप्रकाशको नित्यः सर्वलोकाधिदेवता ।
ध्वजहस्तो महाप्राणस्तस्मै वाय्वात्मने नमः ॥ १०५ ॥
नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्तितः ।
गदापट्टसधारी च सोमराजाय ते नमः ॥ १०६ ॥
सर्वलोकाधिपो देव ईशानो नाम नामतः ।
शूलपाणिर्महादेव ! त्रैलोक्याधिपते ! नमः ॥ १०७ ॥
स्रष्टा चरस्य सर्वस्य लोकानां च पितामहः ।
आदिश्च सर्वभूतानां तस्मै वेदात्मने नमः ॥ १०८ ॥
पन्नगाधिपतिर्देव ! अनन्तो नाम नामतः ।
पातालवासिने नित्यं नागराजाय ते नमः ॥ १०९ ॥
वाहनाय गणेशस्य महाचाषाय धीमते ।
मध्ये पारिषदेशानां भ्राजमानाय वै नमः ॥ ११० ॥
एवं गिरिशशार्ङ्गीशदुर्गास्कन्दादिषूदिताः ।
द्वाःस्थवाहनदिक्पादिस्तुतिमन्त्रा विशेषिताः ॥ १११ ॥

---

एवमुक्तप्रकारेण गिरिशशार्ङ्गीशदुर्गास्कन्दादिषु, आदिशब्देन विघ्नो गृह्यते, द्वाःस्थवाहनदिक्पादिस्तुतिमन्त्राः द्वाःस्थादीनाम् उपस्थानमन्त्रा ये ये विशेषितास्ते ते उदिता उक्ताः ॥ १११ ॥

---

१. 'च' क. पाठः. २. 'द्र' ग. घ. पाठः. ३. 'जं'. ४. 'त्यो' ख. ग. घ. पाठः.

ताराद्यं निजनाम ङेन्तमथ विष्णवादीष्टदेवाक्षर-
  प्रोद्यत्पारिषदाक्षरं सह चतुर्थ्या हार्दहृद्यं वदेत् ।
एवं स्यात् परिवारदैवतमनूनां लक्षणं तत्पद-
  प्रोद्यत्पारिषदेभ्य एष परिषन्मन्त्रो नमोन्तः स्मृतः ॥

  यद्यन्तर्द्वारमधिकौ श्रीशेऽत्रानन्दनन्दनौ ।
  द्वाःस्थौ जया च विजया तथैव महिषद्विषि[1] ॥ ११३ ॥

  स्फुरस्फोटयहुंत्र्यक्षस्वाहा नन्दिमनुः शिवे ।
  प्रोंकपालिन् ह इत्येष महाकालमनुर्हृदा ॥ ११४ ॥

---

उपस्थानमन्त्रान् पठित्वा स्वस्वमन्त्रानाह — ताराद्यमिति । ताराद्यम् आदौ तारविशिष्टं ङेन्तं चतुर्थ्येकवचनान्तं च निजनाम स्वस्वनाम 'ओं चण्डाये'त्यादि । अथानन्तरं विष्णवादीष्टदेवाक्षरप्रोद्यत्पारिषदाक्षरं विष्णवादीनां तत्तदिष्टानां देवानां वाचके प्रोद्यत् प्रकर्षेणोद्गच्छत् पारिषद इत्यक्षरं, तत् पुनश्चतुर्थ्या विभक्त्या सह हार्दहृद्यं नमसा युक्तं वदेत् । 'ओं चण्डाय विष्णुपारिष(दे ? दाय) नमः' । एवं परिवारदैवतमनूनां परिवारदेवतामन्त्राणां लक्षणं स्यात् । तत्पदप्रोद्यत्पारिषदेभ्यः, तत्पदेन चण्डादिपरिवारदैवतनामोच्यते, 'चण्डपारिषदेभ्य' इत्यादि । अथवा तदित्ये(व ? तत्)पदानन्तरं पारिषदेभ्य इति तत्पारिषदेभ्यः । एष परिषन्मन्त्रो नमोन्तश्च स्मृतः 'तत्पारिषदेभ्यो नम' इति । एतत् परिवारमन्त्रलक्षणं भूतबल्यादावपि सर्वत्र समानम् ॥ ११२ ॥

श्रीशेऽन्तर्द्वारं भवति यदि अत्रान्तर्द्वारे आनन्दनन्दनौ द्वाःस्थौ अधिकौ पूर्वोक्तादधिकौ । महिषद्विषि तथा यदि, अन्तश्चण्डिकाम्बिके बहिश्च जया च विजया च भवतः ॥ ११३ ॥

शिवे 'स्फुर स्फोटय हुं त्र्यक्ष स्वाहा' इति नन्दिमनुः । हृदा मनसा सहितः 'प्रोंकपालिन् ह' इति महाकालमनुः । अनयोर्मन्त्रानन्तरं नाममन्त्राभ्यामपि बलिदानं कार्यम् ॥ ११४ ॥

---

१. 'बहिश्च म', २. 'षि ॥ कुमारे सुकुमारश्च भद्रसेनश्च कीर्तितौ । स्फु' ग. पाठः.
३. 'द' इति व्याख्याकोशपाठः.

गरुडमनुस्तारादिस्वाहान्तः पक्षिराजाय ।
गरुडाय वैनतेयायेत्यपि नत्याथ तस्य गायत्री ॥ ११५ ॥

'वैनतेयाय विद्महे । पक्षिराजाय धीमहे* । तन्नो गरुडः प्रचोदयात् ।'

सिंहस्य वज्रनखदंष्ट्रायुधायपदान्ततः ।
महासिंहाय हूं नत्या मनुरेवं समीरितः ॥ ११६ ॥

विष्ण्वादिदेवनाम्नः पुरतस्तु सुरादिजातिनामाद्यम् ।
अधिपतयेपदमत्र प्रयोज्यमिन्द्रादिदिक्पमन्त्रेषु ॥ ११७ ॥

सुरतेजःप्रेताख्या रक्षांसि तथा जलानि च प्राणाः ।
नक्षत्राण्यपि विद्या लोका नागाश्च जातयोऽत्र दश ॥११८॥

'ओं नमो भूतेभ्यो भूतकृद्भ्यः सर्वेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा' ॥

---

तारादिस्वाहान्तः पक्षिराजायेति गरुडमनुः । नत्या नमसा सह गरुडाय वैनतेयायेति द्वावपि । अथ तस्य गायत्री, लिख्यत इति शेषः ॥ ११९ ॥

वज्रनखदंष्ट्रायुधायपदान्ततः 'ओं वज्रनखदंष्ट्रायुधाय' इति पदान्ते 'महासिंहाय हूं' इति नत्या च वदेत् । एवं सिंहस्य मनुः समीरितः ॥११६॥

दिक्पालमन्त्रलक्षणमाह — विष्णवादीति । अत्र इन्द्रादिदिक्पमन्त्रेषु विष्ण्वादिदेवनाम्नः पुरतः पूर्वं तु सुरादिजातिनामाद्यं सुरतेज इत्यादीनां जातीनां नामाद्यं यथा भवति तथाधिपतयेपदं प्रयोज्यं स्यात् । 'ओं इन्द्राय सुराधिपतये विष्णुपारिषदे नम' इत्यादयो मन्त्रा इत्यर्थः ॥ ११७ ॥

जातीराह — सुरेति । सुरतेजःप्रेताख्याः सुरतेजःप्रेतेति तिस्र आख्याः रक्षांसि जलानि प्राणाः नक्षत्राणि विद्याः लोकाः नागाश्चेति अत्र दश जातयः स्युः ॥ ११८ ॥

पुनः 'ओं नमो भूतेभ्य' इत्याद्युक्तान् मन्त्रान् पठति — पूर्वस्यां दिशीत्यादि ॥

---

१. 'नाम्नामा' क, 'नाम्नाद्यं' च. पाठः.

---

* 'धीमहि' इत्येव प्रसिद्धो गायत्र्यां पाठः । 'धीमहे' इति तु अत्र परिष्टाच्च पठ्यते ।

'पूर्वस्यां दिशि हरेर्भगवतो ये गणा वज्रपाणयः श्वेताः श्वेताक्षाः श्वेतलोहिता दिव्यन्तरिक्षभौमाः पातालनिवासिनश्च तेभ्यो वै नमो नमः स्वाहा' ॥

प्राचीत्यणुरिहान्यत्राशास्त्रवर्णपदे क्रमात् ।
आग्नेय्यां शक्तिरक्ते च याम्यायां दण्डसंयुतम् ॥ ११९ ॥
कृष्णं तथैव नैर्ऋत्यां खड्गं श्यामसमन्वितम् ।
वारुण्यां पाशशबले वायव्यां पुनरङ्कुशम् ॥ १२० ॥
पीतं तथैव सौम्यायां गदां सितसमन्विताम् ।
ऐशान्यां शूलकपिले तूर्ध्वायां पद्मसूक्ष्मके ॥ १२१ ॥
अधस्ताद् विषधूम्रे च योजयेन्मन्त्रवित्तमः ।
हरिस्थानेऽन्यदेवेषु शिवादि स्वस्वनाम च ॥ १२२ ॥

'ये भूताः पुरस्सदो निशाचरा रौद्राः सन्तोऽसन्तः सदसन्तो विरूपा विश्वरूपा महारूपा घोररूपा मृगास्था

---

मन्त्रे दिगादिविशेषयोजनप्रकारमाह — प्राचीति । प्राचि पूर्वदिग्भागे इत्यणुः । अन्यत्र अग्न्यादौ इह आशास्त्रवर्णपदे दिशामायुधानां वर्णानां पदेषु स्थानेषु क्रमान्मन्त्रवित्तम एतानि पदानि योजयेत् । तानि क्रमेणाह — आग्नेय्यामित्यादि — आग्नेय्यां शक्तिरक्ते च 'आग्नेय्यां दिशि हरेर्भगवतो ये गणाः शक्तिपाणयः रक्ता रक्ताक्षा' इत्यादि । याम्यायां दण्डसंयुतं कृष्णं 'याम्यां दिशि हरेर्भगवतो ये गणा दण्डपाणयः कृष्णा' इत्यादि । नैर्ऋत्यां खड्गं श्यामसमन्वितं 'नैर्ऋत्यां खड्गपाणयः श्यामाः' । वारुण्यां पाशशबले 'वारुण्यां पाशपाणयः शबलाः' । वायव्यां पुनरङ्कुशं पीतं 'वायव्याम् अङ्कुशपाणयः पीताः' । तथैव सौम्यायां गदां सितसमन्वितां 'सौम्यायां गदापाणयः सिताः' । ऐशान्यां शूलकपिले 'ऐशान्यां शूलपाणयः कपिलाः' । ऊर्ध्वायां पद्मसूक्ष्मके 'ऊर्ध्वायां पद्मपाणयः सूक्ष्माः' । अधस्ताद् विषधूम्रे च 'अधस्ताद् दिशि हरेर्भगवतो ये गणा विषपाणयः धूम्रा धूम्राक्षा' इत्यादीत्यर्थः । अन्यदेवेषु हरिस्थाने हरेरित्यस्य स्थाने स्वस्वनाम योजयेत् । 'पूर्वस्यां दिशि शिवस्य भगवतो ये गणा वज्रपाणयः श्वेताः श्वेताक्षा' इत्यादीत्यर्थः ॥ ११९–१२२ ॥

विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति, तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यो[1] नमो नमः स्वाहा' ॥

इति ।

प्राचीत्यणुर्दक्षिणपश्चिमोत्तरो-
पर्यक्षराण्योजदिशास्वतोऽन्यतः ।
पुरःपदेऽग्न्यादिविदिक्पनाम च
क्रमान्नवाशासु यदीह योजयेत् ॥ १२३ ॥

ऋषभायेति नमोन्तो महाबलायाथ सौरभेयाय ।
हरवाहनाय चैते वृषमनवोऽर्थेति तस्य गायत्री ॥ १२४ ॥

'सौरभेयाय विद्महे । महाबलाय धीमहे । तन्नो वृषः प्रचोदयात्' ।

---

तृतीयं मालामन्त्रमाह — ये भूता इति ॥

इति प्राचि भागे अणुः । अतोऽन्यतः ओजदिशासु[2] अयुग्मदिक्षु पुरःपदे पुर इत्यस्य[3] स्थाने दक्षिणपश्चिमोत्तरोपर्यक्षराणि दक्षिण-पश्चिम-उत्तर-उपरीति पदानि क्रमाद् योजयेत् । 'ये (देवा ? भूता) दक्षिणसद' इत्यादि । नवाशासु यदि विष्णवादौ कुहचिद् बहिर्बलिकाले बलिपीठबाह्यतो नवाशासु अतोऽन्यतः कोणेषु पुरःपदे क्रमाद् अग्न्यादिविदिक्पनाम च अग्न्यादिकोणपालानां नाम च योजयेत् । 'ये (देवा ? भूता) अग्निसद' इत्यादि ॥ १२३ ॥

ऋषभमन्त्रानाह — ऋषभायेति । नमोन्त ऋषभायेति, नमोन्त इति प्रत्येकं सम्बध्यते । महाबलायेति, तथा सौरभेयायेति, तथा हरवाहनायेति, एते वृषमनवः[4] । अथेति तस्य गायत्री च भवति ॥ १२४ ॥

तां लिखति — सौरभेयायेत्यादि ॥

---

1. 'तेभ्यस्ताभ्यो' ख. ग. पाठः. २. 'जाशा' ख. पाठः. ३. 'त्युपस्था' क. 'त्युक्तस्था' ङ. पाठः. ४. 'षे' क. पाठः.

ओं नमः षण्मुखायेति स्कन्दमैन्द्र्यां स्थितं यजेत् ।
शास्तारमग्नौ भांबीजं भूताधिपतये नमः ॥ १२५ ॥
वीरभद्रं गणपतिं प्राक्प्रत्यक्पार्श्वयोस्ततः ।
ब्रह्माणीमपि तन्मध्ये यजेन्माहेश्वरीमपि ॥ १२६ ॥
कौमारीं वैष्णवीं तद्वद् वाराहीं च सबीजकैः ।
नाममन्त्रैस्तथेन्द्राणीं चामुण्डीं सजिनाक्षरैः ॥ १२७ ॥

'वीरभद्राय विद्महे महाननाय धीमहि तन्नः शान्तः प्रचोदयात्' । 'एकदंष्ट्राय विद्महे गजाननाय धीमहि तन्नो दन्तिः प्रचोदयात् ।' 'ब्रह्मभूतायै विद्महे कुशहस्तायै धीमहि तन्नो ब्राह्मी प्रचोदयात्' । 'महेश्वरभूतायै विद्महे शूलहस्तायै धीमहि तन्नो माहेश्वरी प्रचोदयात्' । 'स्कन्दभूतायै विद्महे शक्तिहस्तायै धीमहि तन्नः कौमारी प्रचोदयात्' । 'विष्णुभूतायै विद्महे चक्रहस्तायै धीमहि तन्नो वैष्णवी प्रचोदयात्' । 'प्रजापतिभूतायै विद्महे गदाहस्तायै धीमहि तन्नो वाराही प्रचोदयात्' । 'इन्द्रभूतायै विद्महे वज्रहस्तायै धीमहि तन्न इन्द्राणी प्रचोदयात्' । 'रुद्रभूतायै विद्महे खड्गहस्तायै धीमहि तन्नश्चामुण्डी प्रचोदयात्' ।

---

स्कन्दाद्यावरणं क्रमेण विवृणोति— ओं नम इत्यादि । ऐन्द्र्यां प्राच्यां स्थितं स्कन्दम् 'ओं नमः षण्मुखाये'ति यजेत् । अग्नौ भांबीजयुक्तं 'भूताधिपतये नम' इति मन्त्रेण शास्तारं यजेत् ॥ १२५ ॥

पुनर्दक्षिणे 'ओं धर्माय नम' इति धर्ममाराध्य तत्पश्चिमे मातॄर्यजेत् । तत्र प्राक्प्रत्यक्पार्श्वयोर्वीरभद्रं गणपतिं च यजेत् । ततस्तन्मध्ये सबीजकैः, वीं गं व्यों मं[3] मां हौं[4] हें हों हुं एतानि बीजानि, स्वस्वनाममन्त्रैः ब्रह्माणीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीमिन्द्राणीं चामुण्डीं यजेत् । सैजिनाक्षरैः स्वस्वगायत्रीभिश्च ॥ १२६, १२७ ॥

गायत्रीः क्रमेण पठति — वीरभद्रायेत्यादि ॥

---

१. 'से' ग. पाठः. २. 'न्ती' ख. ग. घ. पाठः. ३. 'ओं' ख. ग. पाठः. ४. 'हे हौं हों', ५. 'स्व' ङ. पाठः.

मातृभ्यो लोकमातृभ्यः सर्वमातृभ्य इत्यपि ।
सर्वमातृगणेभ्यश्च क्रमाद् दिक्षूर्ध्वतोऽमुना ॥ १२८ ॥

'नानारूपा मातरः प्रतिदिशं व्यवस्थिताः दिव्यन्तरिक्षभौमाः पातालनिवासिन्यश्चेहायान्तु विष्णवाज्ञया मामनुगृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यरूपधारिण्यस्ताभ्यो देवीभ्यो नमो नमः स्वाहा'।

साधारणमनौ विष्णुपदे स्वस्वाक्षरं पठेत् ।
सर्वत्राकाशमातृभ्यस्तद्गणेभ्योऽपि वा हरेत् ॥ १२९ ॥
निजमन्त्रशास्तृशम्बरकुमारहस्त्यश्वनीलकालाश्च ।
आर्यार्चने कपर्द्युग्रो रुद्रसुतश्च भूतनाथश्च ॥ १३० ॥
भूतनाथाय विद्महे भवपुत्राय धीमहे ।
गायत्री चेति तन्त्रोक्ता तन्नः शास्ता प्रचोदयात् ॥ १३१ ॥
चाम्वादीनां गणाः सर्वे कोटिकोटिगणाधिपाः ।
भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः ॥ १३२ ॥

---

'मातृभ्यो नम' इत्यादिभिश्चतुर्भिर्मन्त्रैः क्रमाद् दिक्षु, अमुना 'नानारूपा' इत्याद्येन मन्त्रेण ऊर्ध्वतो यजेत् ॥ १२८ ॥

मालामन्त्रं पठति — नानारूपा इति ॥

साधारणमनौ साधारणेऽस्मिन् मन्त्रे विष्णुपदे स्वस्वाक्षरं शिवादिपदं पठेत् । पुनः सर्वत्र आकाशमातृभ्यस्तद्गणेभ्य इत्यपि हरेद्वा ॥ १२९ ॥

आर्यार्चने निजमन्त्रशास्तृशम्बरकुमारहस्त्यश्वनीलकालाश्च निजमन्त्रो निजमूलमन्त्रः 'शास्त्रे नमः 'शम्बरकुमाराय नमः' 'हस्त्यश्वाय नमः' 'नीलाय नमः' 'कालाय नमः' कपर्दी 'कपर्दिने नमः' उग्रः 'उग्राय नमः' रुद्रसुतश्च 'रुद्रसुताय नमः' भतनाथश्च 'भूतनाथाय नमः' एते मन्त्राः ॥ १३० ॥

तत्र 'भूतनाथाय विद्महे' इत्याद्या गायत्री चोक्ता ॥ १३१, १३२ ॥

---

१. 'श्च ॥ सकपर्द्युग्रो रुद्रसुताथं च शास्तुयजनेस्युः ॥ मू', २. 'संप्रोक्त' ग. पा :. ३. 'स्यो' क. घ. पाठः. ४. 'न्ति' क. पाठः.

चाम्वाद्यः पश्चिमे शास्तुः स्वनाम्नाच्यो दिवाकरः ।
खषोत्कायेति मन्त्रो वा हुतान्तस्तद्विधौ स्मृतः ॥ १३३ ॥
ओंतदादिद्विषट्केण ब्रह्मा हूमिति सूकरः ।
दुर्गा स्वमूलतः स्कन्दो मूलनामजिनाक्षरैः ॥ १३४ ॥

'सनत्कुमाराय विद्महे । षडाननाय धीमहे । तन्नः स्कन्दः प्रचोदयात्' ।

श्रीधराश्वमुखौ पार्श्वद्वये वागीश्वरी क्रिया ।
कीर्तिर्लक्ष्मीस्तथा सृष्टिर्विद्या शान्तिश्च मातरः ॥१३५॥
तद्बीजं तुर्यषष्ठौ च द्वादशश्च त्रयोदशः ।
आद्यश्चैकादशश्चैव द्वितीयश्चेन्द्रगाः स्वराः ॥ १३६ ॥
गायत्रीरहितं सर्वं योज्यमत्रापि पूर्ववत् ।
शिवं यजेत् षडर्णेन नाम्ना निर्माल्यधारिणम् ॥ १३७॥

---

शास्तुः पश्चिमे चाम्वाद्यः 'चाम्वादीनां गणा' इत्याद्यो मन्त्रः स्यात् । 'निर्ऋतिवहिः स्वनाम्ना 'ओं सूर्याय नमः' इति वा, हुतान्तः स्वाहान्तः 'खषोत्काये'ति मन्त्रो वा तद्विधौ सूर्ययजने स्मृतः ॥ १३३ ॥

ओंतदादिद्विषट्केण 'ओं तथ्स नेमो ब्रह्मणे तथ्स नेमः' इति द्वादशाक्षरेण ब्रह्मार्च्यः । हूमिति बीजेन सूकरो वराहोऽर्च्यः । दुर्गा स्वमूलतोऽर्च्या । मूलनामजिनाक्षरैः स्वमूलेन षण्मन्त्रैर्गायत्र्या च स्कन्दोऽर्च्यः ॥ १३४ ॥

तद्गायत्रीं पठति — सनत्कुमारायेति ॥

पुनरुत्तरमातृणां पार्श्वद्वये श्रीधराश्वमुखौ । तन्मध्ये वागीश्वरी क्रिया कीर्तिः लक्ष्मीः सृष्टिः विद्या शान्तिश्च सप्त मातरः ॥ १३५ ॥

तत्र इन्द्रगाः लकारगताः तुर्यषष्ठौ द्वादशः त्रयोदशश्च आद्यः एकादशश्च द्वितीयश्च स्वराः । लीं लूं लैं लौं लं लें लां इति तद्बीजं तासां बीजानि ॥ १३६ ॥

अत्रापि गायत्रीरहितं सर्वं मन्त्रजातं पूर्ववद् दक्षिणमातृवद् योज्यम् । षडर्णेन स्वेन षडक्षरेण शिवं यजेत् । निर्माल्यधारिणं स्वनाम्ना यजेत् ॥ १३७ ॥

---

1. 'तत्सदादिस्वष' ख. पाठः. २. 'क्ष' ग. पाठः. ३., ४. 'त्र' क. ख. घ. च पाठः. ५. 'णं स्वस्व' ख. ग घ. ङ. च. पाठः,

विष्वक्सेनोऽन्तवौङ्कारो नमोन्तः परिकीर्तितः ।
क्लीं मुण्डिन्यै नम इति मुण्डिनीमनुरीरितः ॥ १३८ ॥
चण्डेश्वरस्य मन्त्रोऽथ धुनिचण्डहुमस्त्रकम् ।
चण्डेति चण्डचण्डेति नाम चण्डेश्वरेति च ॥ १३९ ॥
चण्डचण्डाय विद्महे चण्डेश्वराय धीमहे ।
इति चण्डेशगायत्री तन्नश्चण्डः प्रचोदयात् ॥ १४० ॥
गोपुरद्वारि सम्पूज्यौ शङ्खपुष्पनिधी हरौ ।
शङ्खचक्रौ बहिर्द्वारि ततः सर्वत्र घोषयेत् ॥ १४१ ॥
ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
विष्णुपारिषदाः सर्वे गृह्णन्तु बलिमुत्तमम् ॥ १४२ ॥
आराध्य ध्वजदेवतादिबहिरावा[illegible] पूर्ववद्
विष्णौ दिग्गणमन्त्रतश्च दशदिक्ष्वत्राहरेद् वा बलिम् ।
येभूतादिपुरःप्रभृत्युपरिनिष्ठैः सर्वदिक्षु क्रमात्
पीठस्याधिपतिं निजावृतिवृतं मध्ये समभ्यर्चयेत् ॥१४३॥

---

विशेषमाह — विष्वक्सेन इति । अन्तवौङ्कारः नामान्ते वौंकारयुक्तः नमोन्तश्च विष्वक्सेनः 'ओं विष्वक्सेन वौं नमः' इति मन्त्र इत्यर्थः । 'क्लीं मुण्डिन्यै नमः' इति मुण्डिनीमनुरीरितः ॥ १३८ ॥

अथ 'धुनिचण्डहुमस्त्रकम्' इति चण्डेश्वरमन्त्रः । चण्डेति चण्डचण्डेति चण्डेश्वरेति च नाम । 'चण्डाय नम' इत्याद्या नाममन्त्रा इत्यर्थः ॥ १३९ ॥

चण्डचण्डेत्याद्या तस्य गायत्री च ॥ १४० ॥

हरौ गोपुरद्वारि शङ्खपुष्पनिधी शङ्खनिधिः पुष्पनिधिश्च पूज्यौ । तत्र बहिर्द्वारि शङ्खचक्रौ चेति भूतबलेरत्र विशेषः । ततः सर्वत्र 'ये समस्तमि'-त्यादिना घोषयेत् उच्चैरुच्चरेत् ॥ १४१, १४२ ॥

विष्णौ ध्वजदेवतादिबहिरावारद्वयं कुमुदादिकं पञ्चविंशद्भूतगणस्वरूपं चावरणद्वयं पूर्ववद् भूतबलिवदाराध्य दशदिक्षु दिग्गणमन्त्रतः 'पूर्वस्यां दिशि हरेरि'त्यादिमन्त्रेण अत्र तृतीयावरणे बलिमाहरेत् । वेति समुच्चायार्थः । येभूतादिपुरःप्रभृत्युपरिनिष्ठैः 'ये भूताः पुरस्सदः' इत्यादि 'ये भूता उपरि-

**स्थाणौ भूतबलिक्रमेण बलिपीठान्तं बहिः स्याद् बलि-**
**र्यत्रान्तः शिववद् बहिश्च शिववत् तत्रान्यतश्चान्यथा।**
**दुर्गायां प्रथमोदितावरणबाह्येऽर्च्याः सुदुर्गादय-**
**स्तत्तद्दिश्यगणाः स्मरद्विषि महाकालादयश्चोदिताः॥**
**येभूतादिमनुद्वयेन पृथगावृत्त्या गुहेऽत्रार्यके**
**चाम्बेत्यादिभिरुत्सवार्थमिति विघ्नेशे ग्रहोपान्ततः।**
**सर्वत्रैकपरिक्रमात् त्रिविधमन्त्रैर्येसमस्तंनमो-**
**गृह्णन्त्वादिभिरीश्वरे प्रथमतो वैतैर्ध्वजावारतः॥ १४५॥**

---

षद्' इत्यन्तैर्नवभिर्मन्त्रैः क्रमात् पीठस्य सर्वदिक्षु नवसु दिक्षु, निजावृति-वृतं कुमुदाद्यावृतिसहितम् अधिपतिं हरिसेनं मध्ये च समभ्यर्चयेत्॥ १४३॥

स्थाणौ भूतबलिक्रमेण बलिपीठान्तं बहिर्बलिः स्यात्। यत्र देवेऽन्त-र्बलिः शिववत् 'पूर्वस्यां दिशी'त्यादिकं 'ये भूता' इत्यादिकं चान्तः परिगृ-ह्यते, तत्र बहिश्च शिववत् बलिपीठंपर्यन्तबलिर्भूतबलिक्रमेण स्यात्। अन्य-तश्चान्यथा यत्रान्तर्विष्णुवद् भवति तत्र बहिरपि विष्णुवदित्यर्थः। दुर्गायां प्रथमोदितावरणबाह्ये काल्यादिध्वजावरणबाह्येऽष्टकोटिगणेभ्य इत्यस्य स्थाने सुदुर्गादयः तत्तद्दिश्यगणाः तत्तद्दिग्भवा गणा अर्च्या उदिताः। स्मरद्विषि महाकालादयो विंशद्भूतगणाश्च॥ १४४॥

गुहेऽत्र षट्कोष्ठावरणान्ते येभूतादिमनुद्वयेन 'ये भूताः स्कन्दसेनास्य' इत्यादिना 'बलिग्रहेभ्यो भूतेभ्य' इत्यादिना च पृथगावृत्त्या आवरणद्वयेन, बलिं हरेदिति शेषः। आर्यके एतत्स्थाने चाम्बेत्यादिभिः 'चाम्बादीनां गणा' इत्यादिना 'नमोऽस्तु भीमरूपेभ्य' इत्यादिना 'प्राग् गणेभ्यः' इत्यादिना 'सर्वेभ्यः पिङ्गलेभ्य' इत्यादिना च वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः पृथगावृत्त्या च, विघ्नेशे एतत्स्थाने 'उत्सवार्थमि'ति मनुना च बलिं हरेत्। सर्वत्र सर्वदेवेषु ग्रहोपान्ततः देवग्रहादेः पूर्वं ये समस्तंनमोगृह्णन्त्वादिभिः 'ये समस्तमि'त्या-दिना 'ओं नमो भूतेभ्य' इत्यादिना 'गृह्णन्तु बलिम्' इत्यादिना च त्रिविध-मन्त्रैः एकपरिक्रमात् एकावृत्त्या च बलिं हरेत्। ईश्वरे ध्वजावारतः नन्द्यादि-ध्वजावरणात् प्रथमत एतैस्त्रिविधमन्त्रैर्वा॥ १४५॥

सुदुर्गा च विदुर्गा च निदुर्गा सुविलोचना ।
सुलोचना सुभद्रा घातिदुर्गा दुर्गविक्रमा ॥ १४६ ॥
अकन्या च सुकन्या च रविकन्या च कन्यका ।
रक्षःकन्या मारकन्या सुरकन्या रविप्रभा ॥ १४७ ॥
कृत्तिका कार्तिका सर्वकार्तिका कार्तिकायनी ।
कृत्यान्तिका कृत्यकन्या कृत्तिनी कृत्तिकोद्भवा ॥ १४८ ॥
वामा सुवामा वामार्हा वामाङ्गी वामलोचना ।
वामोद्भवा वामसमा वाममूर्तिधरा पुनः ॥ १४९ ॥
देवी सुदेवी यादेवी समदेवी सुमर्दिनी ।
विदेवी रविदेवी च देवदेवीति कीर्तिता ॥ १५० ॥
अदण्डा च विदण्डा च सुदण्डा दण्डविक्रमा ।
शतदण्डा महादण्डा दुर्दण्डा दुरतिक्रमा ॥ १५१ ॥
अगौरी च विगौरी च सुगौरी गौरिविक्रमा ।
निगौरी चैव दुगौरी सुगौरी गौरिवल्लभा ॥ १५२ ॥
जया च विजया चैव अजया च जयावती ।
सुजया च जयाक्रान्ता जयन्ता जयविक्रमा ॥ १५३ ॥
काली चैव सुकाली च विकाली करकालिका ।
दुष्काली कार्तिकाकाली निष्काली भद्रकालिका ॥ १५४ ॥
समेदिनी सुमेदिनी वसुधा च वसुन्धरा ।
भूमिरुर्वी धरा पृथ्वीति क्रमात् परिकीर्तिताः ॥ १५५ ॥
सुदुर्गाद्यष्टशक्त्यन्ते प्राक्स्थिताभ्योक्षरान्ततः ।
स्याद् देवग्रहशक्तिभ्यो दुर्गावर्णसमन्वितः ॥ १५६ ॥

---

सुदुर्गाद्यष्टविधाः शक्तीराह — सुदुर्गेति ॥ १४६—१५५ ॥

अष्टविधशक्तीनां मन्त्रानुद्धरति — सुदुर्गाद्यष्टशक्त्यन्त इति । सुदुर्गाद्यष्टशक्तीरुक्त्वा प्राक्स्थिताभ्योक्षरान्ततः 'प्राक्स्थिताभ्य' इत्यक्षराणामन्-

---

१. 'च' क. पाठः. २. 'क्ष' ख. ग. क. पाठः. ३. 'न्त' ख. पाठः. ४. 'क्ष', ५. 'या' ख. ग. पाठः. ६. 'र्गा' क. ख. ग. पाठः. ७. 'र्गाष्टक्त्य' ख. पाठः.

कोटिपारिषदीभ्योन्ते नमो नम इतीरितः।
प्राङ्मन्त्रोऽन्यत्र तच्छक्तिदिग्ग्रहार्णविभेदितः ॥ १५७॥

महाकालो विधाता च वज्रपाणिः क्रतुः प्रभुः।
दक्षः शतक्रतुर्मूर्तिरप्रमेयश्च वीर्यवान् ॥ १५८ ॥

नित्यो विद्युत्प्रभः शूली शूलहस्तस्त्रिनेत्रवान्।
स्वाङ्गदीप्तस्तमोघातः सृष्टिकृद् वीर्यविक्रमः ॥ १५९ ॥

मान्धाता सृष्टिकृद् वीर्यो नित्ययोगः प्रतापवान्।
एते विंशतिकोटीनां प्राक्स्थितानां नमो नमः ॥ १६०॥

अग्निरग्निसमानश्च ज्वाली विश्वभुगव्ययः।
हुताशी मूर्तिमान् व्यापी कपिलो रक्तलोचनः ॥ १६१ ॥

उग्रो रक्तवपुर्धूम्रः सप्तार्चिर्विश्वभेषजी।
हुतभुक् सत्यवान् वेगी भस्मच्छन्नो मरुत्सखः॥ १६२॥

योगप्रियः सदाकाङ्क्षी दारुजः स्पन्दनो जटी।
इत्येते कोटिगुणिता अग्निरूपा नमो नमः ॥ १६३ ॥

यमो वैवस्वतो धाता शत्रुघातः प्रजान्तकः।
मृत्युः प्रेताधिपो धर्मः कृष्णः कृष्णाक्ष एव च ॥ १६४॥

---

देवग्रहशक्तिभ्योदुर्गावर्णसमन्वितः 'देवग्रहशक्तिभ्यो दुर्गा' इति वर्णैर्युक्तः, 'कोटिपारिषदीभ्य' 'इत्यन्ते नमो नम' इति प्राङ्मन्त्र ईरितः स्यात्। सुदुर्गेत्यादि पद्यमुक्त्वा वा, 'ओं सुदुर्गाविदुर्गानिदुर्गासुविलोचनासुलोचनासुभद्रातिदुर्गा-दुर्गविक्रमाभ्यः' इत्युक्त्वा वा 'प्राक्स्थिताभ्यो देवग्रहशक्तिभ्यो दुर्गाकोटि-पारिषदीभ्यो नमो नमः' इति प्राङ्मन्त्रः। अन्यत्र नवसु मन्त्रेषु तच्छक्तिदि-ग्ग्रहार्णविभेदितः तत्तच्छक्तिभिर्दिग्भिर्ग्रहार्णैश्च विशेषेण भेदितः। अक-न्याद्यष्टशक्त्यन्ते 'अग्निदिक्स्थिताभ्योऽसुरग्रहशक्तिभ्य' इत्याद्यूहयेत्। उपर्य-धोभागयोर्ब्रह्मग्रहसर्पग्रहौ योज्यौ ॥ १५६, १५७ ॥

शिवे दशविधमहाकालादिविंशद्भूतगणमन्त्रान् पठति — महाकाल इत्यादि ॥ १५८ — १८३ ॥

---

१. 'ज्व' क. पाठः

नित्ययोगी सुहृत्क्षेमी आत्मधर्मी सदान्तकः ।
मायारूपी प्रजाकाङ्क्षी सत्यासत्यप्रियः सुहृत् ॥ १६५ ॥
इत्येते कोटिगुणिता यमरूपा नमो नमः ।
रक्षोऽसुरः पिशाचश्च निर्ऋतिर्वीर एव च ॥ १६६ ॥
तीक्ष्णश्चक्षुर्भ्रसीदेही यज्ञहर्ता विनायकः ।
अतिमूर्तिरनेकाङ्गी क्रूरः क्रूरवपुर्महान् ॥ १६७ ॥
सूक्ष्मरुद्रो विरूपाक्षो भस्माङ्गी धूम्रलोचनः ।
इत्येते कोटिगुणिता निर्ऋतिरूपा नमो नमः ॥ १६८ ॥
वरुणः शम्बरो भृङ्गी निम्नगाधिपतिः क्षमः ।
श्रीमानभ्रघनः कान्त आनन्दस्तत्त्वदर्शनः ॥ १६९ ॥
पाशहस्तः पशुर्वेगी आक्रन्दः[२] श्यामलोचनः ।
कपर्दी प्राणदः श्यामः सत्यबुद्धिः सनातनः ॥ १७० ॥
इत्येते कोटिगुणिता वरुणरूपा नमो नमः ।
वायुर्गन्धवहः सूक्ष्मस्तत्त्वात्मानन्द एव च ॥ १७१ ॥
प्राणोऽपानः समानश्च ज्ञानाक्षो ज्ञानिनो वरः ।
कपाली शूलपाणिश्च व्यानोदानौ च साकली ॥ १७२ ॥
अमाली मालवान् बिन्दुर्मूलशाकी विभावरी ।
इत्येते कोटिगुणिता वायुरूपा नमो नमः ॥ १७३ ॥
यक्षोऽथ रयिवान् सोमः सूक्ष्मः कालो निराश्रयः ।
आलम्बो भैरवो भिक्षुर्विकारो[३] वाम एव च ॥ १७४ ॥
ज्येष्ठो मालाधरश्चण्डो मनश्चोन्मन एव च ।
रौद्रो बलधरः कालः सर्वत्र बलवानपि ॥ १७५ ॥
इत्येते कोटिगुणिता यक्षरूपा नमो नमः ।
ईशान ईश्वरः शम्भुः शूलहस्तस्त्रिणेत्रवान् ॥ १७६ ॥
अनादिनिधनो रागी कपिलः कपिलाक्षधृक् ।
रुद्रो गणाधिपो योगी विश्वहर्ता[४] दिगम्बरः ॥ १७७ ॥

---

१. 'य' ख. पाठः. २. 'क्रान्तः श्या' क. पाठः. ३. 'कि' ख. पाठः.
४. 'निर्विश्व' ख. ग. पाठः.

धूम्राक्षो धूम्ररूपश्च नीलो विश्वभुजो हरः ।
इत्येते कोटिगुणिता रुद्ररूपा नमो नमः ॥ १७८ ॥
महाबलो महानादो मूर्तिर्मूर्तिपतिः शिवः ।
पवित्रो राजयः स्थाणुरघोरो घोर एव च ॥ १७९ ॥
अरुणो लाङ्गलो मन्युरङ्गारः शिवभूषणः ।
जीमूतो मूर्तिकृद् वाग्मी मन्त्रीशस्त्रिपुरान्तकः ॥ १८० ॥
गणाधिपाः शिवस्यैते ऊर्ध्वरूपा नमो नमः ।
बुधः प्रतर्दनः शुद्धः कालरूपोग्रदंष्ट्रवान् ॥ १८१ ॥
दीर्घबाहुः प्रकाशश्च भर्ता हर्ता विचक्षणः ।
कालाग्नी रौरवो घोरो नरकः शर्व एव च ॥ १८२ ॥
नागश्चैवाथ घोरश्च किम्बुरुर्दनुजः क्षमी ।
इत्येते कोटिगुणिताः पातालास्ते नमो नमः ॥ १८३ ॥
ये भूताः स्कन्दसेनस्य पार्षदा बलिभोजिनः ।
तृप्यन्तु तेऽद्य यान्तु सन्ध्योऽसन्ध्यो नमो नमः ॥ १८४ ॥

'बलिग्रहेभ्यो भूतेभ्यः स्कन्दपार्षदेभ्यो नमो नमः स्वाहा ।'

चाम्बादीनां गणाः सर्वे कोटिकोटिगणाधिपाः ।
भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः ॥ १८५ ॥

'नमोऽस्तु भीमरूपेभ्यो भीमवक्त्रेभ्यो विविधाकृतिभ्यो वरदेभ्यश्च वो नमो नमः ।'

'भूतगणेभ्यो बहुरूपेभ्यो विश्वरूपेभ्यः सन्ध्योऽसन्ध्यः सर्वगणेभ्यो नमो नमः ।'

---

स्कन्दे येभूतादिमन्त्रद्वयं पठति — ये भूता इत्यादि ॥ १८४ ॥
आर्ये चाम्बादिमन्त्रचतुष्कं क्रमेण पठति — चाम्बादीनामित्यादि ॥ १८५ ॥

---

१. 'श्री' ख. ग. घ. पाठः. २. 'म' ख. ग. पाठः.

एष प्राग्गणमन्त्रोऽत्र प्राक्स्थाने दक्षिणेति च ।
पश्चिमेत्युत्तरेत्यर्णं योजयेद् दक्षिणादिषु ॥ १८६ ॥

'सर्वेभ्यः[1] पिङ्गलेभ्यो महाशनेभ्यो घोररूपेभ्यो मृगयुभ्यो विनायकेभ्यो मूकेभ्यो बधिरेभ्योऽन्धेभ्यो जळेभ्यः स्थूलेभ्यः कृशेभ्यो दीर्घेभ्यो ह्रस्वेभ्यो नपुंसकेभ्यः[2] सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा ।'

उत्सवार्थं गता ये च याश्च विघ्नप्रहर्षणाः ।

'ॐ नमो विघ्नपार्षदेभ्यो विघ्नपार्षदीभ्यो नमो नमः स्वाहा[3] ।'

स्वनाममन्त्रगायत्रीतत्तन्मूर्त्यादिमन्त्रकैः ॥ १८७ ॥

सासङ्ख्यदेवतामूलैर्बलिपीठे बलिं हरेत् ।

'हरिसेनाय विद्महे । महाबलाय धीमहे । तन्नः शान्तः प्रचोदयात् ।'

'अष्टमूर्तिपार्षदेभ्यः[4] सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा ।'

---

तत्र तृतीये मन्त्रे विशेषमाह — एष इति । एष प्राग्गणमन्त्रः । अत्र प्राक्स्थाने प्रागित्येतस्य स्थाने दक्षिणादिषु दिक्षु दक्षिणेति पश्चिमेति उत्तरेति अर्णं योजयेत् ॥ १८६ ॥

विघ्ने उत्सवार्थमित्यादिमन्त्रं पठति ॥

महाबलिपीठे भूतबलेर्विशेषमाह — स्वनामेति । स्वनाममन्त्रगायत्रीतत्तन्मूर्त्यादिमन्त्रकैः । स्वनाममन्त्रेत्यनेन विष्णौ 'बेलाय नमः' 'हरिसेनाय नमः' इति मन्त्रद्वयमुक्तम् । अन्येषु हरसेनादिस्वस्वनामैव । गायत्री लिख्यते । तत्तन्मूर्त्यादिमन्त्रकैरिति : विष्णुदुर्गयोः 'अष्टमूर्त्या'दि, अन्येषु 'दशमूर्तिपार्षदेभ्यः सद्भ्य' इत्यादि । सासंख्यदेवतामूलैः 'असंख्याता गणा' इत्यादिना 'देवताभ्यः पितृभ्य' इत्यादिना तत्तद्देवस्य मूलेन च बलिपीठे बलिं हरेत् ॥

---

१. 'भ्यः स्त्रीभ्यः स' क. ख., 'भ्योऽस्त्रीभ्यः स' ग. पाठः. २. 'भ्यो न' क. पाठः. ३. 'हा । ओं सर्वेभ्यो विघ्नपार्षदेभ्यो नमः । स्व' ख. ग. पाठः. ४. 'व' क. ख. ग. घ. पाठः.

असङ्ख्याता गणाः सर्वे कोटिकोटिगणाधिपाः ॥ १८८ ॥
भवन्ति सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः ।
देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः ॥ १८९ ॥

एतत्स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः ।

'हरसेनाय विद्महे । महाबलाय धीमहे । तन्नः शक्तिः प्रचोदयात् ।'

'दशमूर्तिपार्षदेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा ।'

ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ॥ १९० ॥
विष्णुपारिषदाः सर्वे गृह्णन्तु बलिमुत्तमम् ।

'ओं नमो भूतेभ्यो भूतकृद्भ्यः सर्वेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा ।'

गृह्णन्तु बलिमेतत्तु बाह्यस्था विहगाननाः ॥ १९१ ॥
ये क्रूरा येऽल्पसत्त्वाश्च भूतप्रेतपिशाचकाः ।
वेतालाश्चैव मातङ्गा हीनाहीनाश्च ये गणाः ॥ १९२ ॥
सर्वेषां चैव तेषां च हरामि बलिमुत्तमम् ।
सर्वेभ्य एव तेभ्यश्च सगणेभ्यो नमो नमः ॥ १९३ ॥

इति ।

प्रोक्तक्रमेण सकलं बलिपीठवर्जं
क्षेत्राधिपालबलिकर्मयुतं विधाय ।

---

तान् मन्त्रान् क्रमेण पठति — हरिसेनाय विद्महे इत्यादि ॥

पुनः येसमस्तमित्यादिमन्त्रत्रयमेकावृत्तिबलिदानाय क्रमेण पठति — ये समस्तमित्यादि, ओं नमो भूतेभ्य इत्यादि, गृह्णन्तु बलिमेतत् तु इत्यादि ॥ १९०—१९३ ॥

अत्र भूतबलावुत्सवबलावपि क्रियाक्रमे पक्षभेदमाह — **प्रोक्तक्रमेणेति** । बलिपीठवर्जं सकलं कर्म क्षेत्राधिपालबलिकर्मयुतं प्रोक्तक्रमेण विधाय

स्वावारवीतमभिपूज्य च पीठमध्ये
पीठाधिपं विधिवदत्र समापयेद् वा ॥ १९४ ॥
बलिं विधायेति परीत्य सन्नतः
स्वाचम्य गर्भालयमभ्युपेत्य च ।
आयोज्य देवं बलिबिम्बसंस्थितं
स्वमूलबिम्बे तमथ क्षमापयेत् ॥ १९५ ॥
इत्युत्सवं त्रिषवणार्चितदेवदेव-
भूदेवदेवपरिषत्प्रकराभिरामम् ।
आतोद्यवाद्यबहुलोज्ज्वलदीपदीप्रं
कुर्वीत सर्वदिवसेषु सुभावितात्मा ॥ १९६ ॥
तीर्थस्नानदिनाधरेद्युरभिसायं सोऽयमाचार्यको
ग्रामे चैत्यचतुष्पथादिषु बलिं कुर्वन् परीत्याखिले ।

---

स्वावारवीतं स्वावरणपरिवृतं पीठाधिपं पीठमध्ये (विधिवत्) अभिपूज्यात्र समापयेद्वा ॥ १९४ ॥

इति उक्तक्रमेण बलिं विधाय परीत्य प्रदक्षिणीकृत्य सन्नतः सम्यङ् नमस्कृत्य स्वाचम्य गर्भालयमभ्युपेत्य बलिबिम्बसंस्थितं देवं स्वमूलबिम्ब आयोज्याथ तं क्षमापयेत् ॥ १९५ ॥

उत्सवं विशेषेण सादरं कर्तव्यमाह — इत्युत्सवमिति । सुभावितात्मा सुतरां भावित उद्योजित आत्मा मनो यस्य सः आचार्यः सर्वदिवसेषु उत्सवान्तर्भूतेषु सर्वेषु दिवसेष्वपि इति उक्तप्रकारेण त्रिषवणार्चितदेवदेवभूदेवदेवपरिषत्प्रकराभिरामं सवनत्रयेऽप्यर्चितेन देवदेवेन देवानामिन्द्रादीनामपि देवेन विष्णवादिना तथार्चितैर्भूदेवैर्ब्राह्मणैः तथाचार्चितेन देवस्य परिषत्समूहेन चाभिरामं मनोहरम्, आतोद्यवाद्यबहुलोज्ज्वलदीपदीप्रं च आतोद्येन वीणादिना तथान्यवाद्यविशेषैर्बहुलैरुज्ज्वलैर्दीपैश्च दीप्रमतिशयेन प्रकाशनशीलमुत्सवं कुर्वीत ॥ १९६ ॥

ततः तीर्थस्नानदिनाधरेद्युः तीर्थस्नानदिनात् पूर्वेद्युः अभिसायं सायन्तनबलिकाले सोऽयमाचार्यकः स्वयमेवाखिले ग्रामे चैत्यचतुष्पथादिषु चैत्यं

---

१. 'भूताधि' ख. पाठः. २. 'समाहिता' क. पाठः.

ग्रामान्ते मृगयाप्रचारविहृतिं कृत्वा सुयोधैः समं
प्रत्यापत्य ततः स्वकौतुकगतं मूले समायोजयेत् ॥१९७॥

मन्त्रौ शार्ङ्गिणि विष्णुपारिषदमात्रर्णादिकौ तौ शिवे
स्यातां ग्रामबलौ तु रुद्रपदभिन्नौ वा नमोभूतकः।
गृह्णन्त्वीशहरौ निसुम्भजिति हृद्भूतादिगृह्णन्त्वणू
गृह्णन्त्वाद्यणवो गुहे प्रमथनाथे पिङ्गलाद्यस्तथा ॥ १९८॥
विष्णुपारिषदेभ्यश्च प्रमथेभ्यो नमो नमः।
मातृभ्यस्तद्गणेभ्यश्च सर्वेभ्यो वै नमो नमः॥ १९९॥

'ओं नमो भूतेभ्यो भूतकृद्भ्यः सर्वेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा।'
गृह्णन्तु बलिमेतत् तु बाह्यस्था विहगाननाः।
ये क्रूरा येऽल्पसत्त्वाश्च भूतप्रेतपिशाचकाः॥ २००॥

---

प्रसिद्धाश्वत्थादिवृक्षस्थानं चतुष्पथं चतुर्णां पथां सङ्गमः, आदिशब्देन विशेषस्थानान्तराण्युच्यन्ते, तत्र तत्र बलिं कुर्वन् परीत्य परितो गत्वा ग्रामान्ते ग्रामसमीपस्थवने सुयोधैः सुप्रसिद्धैर्योद्धृभिः समं सह मृगयाप्रचारविहृतिं तीक्ष्णमृगहननादिक्रीडां कृत्वा प्रत्यापत्य पुनः स्वस्थानमागम्य ततः स्वकौतुकगतं देवं मूले मूलबिम्बे समायोजयेत् ॥ १९७ ॥

तत्र ग्रामबलौ शार्ङ्गिणि विष्णुपारिषदमात्रर्णादिकौ 'विष्णुपारिषदेभ्यश्च' 'मातृभ्यस्तद्गणेभ्यश्च' इत्यादिकौ मन्त्रौ स्याताम्। शिवे रुद्रपदभिन्नौ विष्णुस्थाने रुद्रपदयुक्तौ, 'ओं नमो भूतेभ्य' इत्यादि वा। ईशहरौ 'गृह्णन्त्वि'ति। निसुम्भजिति हृद्भूतादिगृह्णन्त्वणू 'ओं नमो भूतेभ्य' इत्यादि गृह्णन्तु बलिमि'त्याद्यं च। गुहे गृह्णन्त्वाद्यणवः 'गृह्णन्त्वि'त्यादि, 'ग्रामपर्वतवन' इत्यादि, 'नमोऽस्तु सिन्धुचारिभ्य' इत्यादि, 'शून्याग्रमनिवासिभ्य' इत्यादिमनवः। प्रमथनाथे तथा पिङ्गलाद्यश्च 'ओं ग्रूं नमः सर्वेभ्यः पिङ्गलेभ्य' इत्यादि॥ १९८॥

तान् मन्त्रान् क्रमेण पठति—विष्णुपारिषदेभ्य इत्यादि ॥ १९९-२०१ ॥

वेतालाश्चैव मातङ्गा हीनाहीनाश्च ये गणाः ।
सर्वेषां चैव तेषां च हरामि बलिमुत्तमम् ॥ २०१ ॥
सर्वेभ्य एव तेभ्यश्च सगणेभ्यो नमो नमः ।
'ग्रामपर्वतवनचारिभ्यो नमो नमः ।'
नमोऽस्तु सिन्धुचारिभ्यश्चतुष्पथगताय च ।
शून्यागारनिवासिभ्यः सर्वेभ्यो वै नमो नमः ॥२०२॥
शून्यग्रामनिवासिभ्यो वृक्षगुल्मगताय च ।
देवागारनिवासिभ्यो भूतेभ्यश्च नमो नमः ॥ २०३ ॥

'ओं ग्रूं नमः सर्वेभ्यः पिङ्गलेभ्यो बहुरूपेभ्यो महागणेभ्यो घोररूपेभ्यो मृगयुभ्यो विनायकेभ्यो बधिरेभ्योऽन्धेभ्यो जळेभ्यः स्थूलेभ्यः कृशेभ्यो दीर्घेभ्यो ह्रस्वेभ्यो मुण्डेभ्यः स्त्रीभ्यो नपुंसकेभ्यो बहुरूपेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः ।'
इति ।

बलिं दत्त्वा यथान्यायं शेषं शुद्धे तु भूतले ।
नमः पारिषदेभ्यश्चेत्युक्त्वान्ते निक्षिपेद् गुहे ॥ २०४ ॥

अथाप्लुतो मङ्गलपालिकादिभिः
स्वलङ्कृते तत्र निषद्य मण्डपे ।
समर्चितात्मा शयने प्रसाधिते
यथापुरं पीठमपि प्रपूजयेत् ॥ २०५ ॥

---

गुहे तु यथान्यायं बलिं दत्त्वा शेषं हविः शुद्धे भूतले 'नमः पारिषदेभ्यश्च' इत्युक्त्वा निक्षिपेत् ॥ २०४ ॥

**अथ** बलिदानानन्तरम् आप्लुतः स्नात्वा मङ्गलपालिकादिभिः स्वलङ्कृते तत्राग्रगते मण्डपे निषद्य समर्चितात्मा सकलीकरणशङ्खपूरणात्माराधनकृद् भूत्वा यथापुरं प्रतिष्ठायाः पुरस्तादधिवासनमण्डपे यथा तथा शयने प्रसाधिते सति पीठमपि प्र[ पू]जयेत् ॥ २०५ ॥

---

१. 'रेभ्यो' ख. पाठः.

गर्भालयं प्राप्य समिष्टविष्टरे
देवं समास्थाप्य समर्च्य चार्चकः ।
प्रसाद्य दत्त्वा व्यजनाद्युपाहृतीः
कृताञ्जलिः प्रार्थयतामनेन तम् ॥ २०६ ॥

तीर्थयात्रा त्वया देव! श्वः कर्तव्या सुरेश्वर! ।
तत्र प्रतिसराऽऽरम्भं त्वमनुज्ञातुमर्हसि ॥ २०७ ॥

अश्वत्थपत्रयुगलैरथ साग्रदूर्वा-
सिद्धार्थसंयुतघृतं परिगृह्य दोर्भ्याम् ।
मन्त्रैः सुशोभनसुभद्रसुमङ्गलार्ण-
भिन्नैर्भवत्ववसितैः क्रमशोऽधिबिम्बम् ॥ २०८॥

आरोपयेत् कटितटावधि कन्धरान्तं
कान्तं च दोर्विनिमयोभयपार्श्वयुक्त्या ।
प्रक्षालयेत् करयुगं पृथगत्र तत्त-
दश्वत्थपत्रकमपास्य च तस्य पृष्ठे ॥ २०९ ॥

---

अथार्चकः गुरुः गर्भालयं प्राप्य समिष्टविष्टरे पूजिते पीठे देवं समास्थाप्य सम्यगावाह्य समर्च्य निवेद्य व्यजनाद्युपाहृतीः तालवृन्तादिसर्वोपहारान् दत्त्वा कृताञ्जलिर्भूत्वा 'तीर्थयात्रा त्वये'त्यनेन तं देवं प्रार्थयताम् ॥ २०६ ॥

प्रार्थनामन्त्रं पठति — तीर्थेति ॥ २०७ ॥

घृतारोपणमाह — अश्वत्थेति । अथ प्रार्थनानन्तरम् अश्वत्थपत्रयुगलैरिभिः साग्रदूर्वासिद्धार्थसंयुतघृतं दूर्वाग्रसिद्धार्थसंयुतं घृतं दोर्भ्यां परिगृह्य सुशोभनसुभद्रसुमङ्गलार्णभिन्नैः सुशोभनं सुभद्रं सुमङ्गलम् इत्यक्षरसंयुक्तैः भवत्ववसितैः भवतु इत्यन्ते युक्तैः 'सुशोभनं भवतु' इत्यादिभिर्मन्त्रैः अधिबिम्बं बिम्बे कटितटावधि कटिपर्यन्तं कन्धरान्तं कण्ठान्तं कान्तं मूर्धान्तं च क्रमशो दोर्विनिमयोभयपार्श्वयुक्त्या करयोर्विनिमयाद् दक्षिणकरस्य दक्षिणपार्श्वे वामकरस्य वामपार्श्वे योगश्च यथा भवति तथारोपयेत् । अत्र पृथक् तत्तदश्वत्थपत्रं तदा तदा तस्य देवस्य पृष्ठेऽपास्य करयुगं प्रक्षालयेच्च ॥ २०८, २०९ ॥

कर्मार्चामभिषिच्य तत्र पुरतः कृत्वा विधाय द्विजैः
पुण्याहं प्रकलय्य कौतुकमघोरेणेश्वरेऽन्येषु तत् ।
प्राग्वद् भूतलयादिकं लिपिमनुन्यासान्तमाधाय त-
त्पीठं मूर्तिमपि प्रकल्प्य कुसुमाराध्या समाज्ञाप्य तम् ॥

प्रष्ठोद्गीथोपचारैर्मनुवरपुटितैः सृष्टिसंहाररीत्या
प्रोक्तैरावाहयामीत्युपरतिसहितैः पञ्चमन्त्रैस्तदीयात् ।
हृत्पद्मादात्मतेजःकणमधिदरवारि प्रणीयामुतस्तं
कर्मार्चायां सुयोज्य प्रकटयतु सहाङ्गीक्रियाद्यं च सद्यः ॥

तत्त्वन्यासप्रभृतिविधिना सुस्थितं मूलसंस्थं
कृत्वा देवं विहृतममुतो मण्डपान्तः प्रणीय ।

---

कर्मार्चामभिषिच्य तत्र देवस्य पुरतः कृत्वा स्थापयित्वा द्विजैः सह पुण्याहं विधाय ईश्वरे अघोरेण मन्त्रेण अन्येषु प्राग्वच्च तत् क्षौमक्षिप्तसमुक्त-सर्षपसुवर्णोर्ज्वस्वलमित्युक्तं कौतुकं प्रकलय्य बद्ध्वा पुनस्तस्यां कर्मार्चायां भूतलयादिकं भूतसंहारशोषणादि भूतसृष्टिलिपिप्राणायामं च लिपिमनुन्यासान्तं लिपिन्यासं मन्त्रप्राणायामान्तं न्यासं चाधाय तत्पीठं सम्पूज्य मूर्तिमपि प्रक-ल्प्य कुसुमाराध्या तं देवं समाज्ञाप्य प्रार्थ्यावाहयेत् ॥ २१० ॥

आवाहनविधिमाह — प्रष्ठेति । प्रष्ठोद्गीथोपचारैः प्रष्ठः पुरोभागः उद्गीथः प्रणवः पुरोभागगतप्रणवोपचारयुक्तैः मनुवरपुटितैः मूलपुटितैः सृष्टिसं-हाररीत्या प्रोक्तैः पूर्वं सृष्टिक्रमेण पुनः संहारक्रमेण च प्रोक्तैः आवाहयामी-त्युपरतिसहितैः अवसाने आवाहयामीति सहितैः स्वीयैः स्वीयैः पञ्चमन्त्रैः तदीयाद् देवस्य हृत्पद्माद् आत्मतेजःकणं परचैतन्यात्मकं तेजोलेशम् अधिदर-वारि शङ्खजले प्रणीय अमुतः शङ्खात् (तं) कर्मार्चायां सुयोज्य सद्य एव सहाङ्गीक्रियाद्यं सकलीकरणाद्यं च प्रकटयतु कुर्यादित्यर्थः ॥ २११ ॥

**मूलसंस्थं** मूलार्चागतं देवं तत्त्वन्यासप्रभृतिविधिना तत्त्वन्यासादिना सुस्थितं स्थिरीभूतं कृत्वा अमुतोऽस्मात् प्रदेशाद् विहृतं कौतुकगतं देवं मण्ड-पान्तः प्रणीय प्रापयित्वा प्रथममहिते शय्याराधनकाल एव पूजिते कस्मि-

---

१. 'रैर्निजमनुपु' क. ग. पाठः. २. 'स्तत् क' ख. ग. घ. पाठः. ३. 'न्त' ख. पाठः. ४. 'यैः प' घ. च. पाठः.

पीठं न्यस्य प्रथममहिते स्वाणुनावाह्य भूयः
साङ्गीकृत्य प्रयजतु निवेद्यान्तिमैश्चोपहारैः ॥ २१२ ॥

ताम्बूलव्यजनार्पणादिसुभगां कृत्वा प्रसन्नार्चनां
प्रागन्त्यार्घ्यविधेः स्वपञ्चमनुभिः शय्यातले शाययेत् ।
व्याप्यैनं पुनरुत्क्रमेण शरतत्त्वैर्मूलतश्चादिना
जाग्रत्स्वप्नसुषुप्तिसंज्ञितदशास्तीर्त्वा तुरीयां नयेत् ॥

दशां तुरीयामधिगम्य रम्यां
देवं स्वरूपानुभवानुषक्तम् ।
ध्यायन् धियानन्दघनं सुरक्ष्य
संवृत्य शेषां क्षपयेत् क्षपां च ॥ २१४ ॥

काल्योचितं कर्म विधाय साधु
सविग्रहीभूतसमर्चितात्मा ।

---

श्चित् पीठे न्यस्य भूयः स्वाणुना स्वमूलेनावाह्य साङ्गीकृत्य निवेद्यान्तिमैरुपहारैः प्रयजतु ॥ २१२ ॥

**ताम्बूलव्यजनार्पणादिसुभगां** ताम्बूलार्पणादिभिर्व्यजनार्पणादिभिश्च[1] मनोहरां प्रसन्नार्चनां कृत्वा प्रागन्त्यार्घ्यविधेः अवसानीयार्घ्यदानात् पूर्वं स्वपञ्चमनुभिः स्वस्वपञ्चतत्त्वमन्त्रैः शय्यातले शाययेत् । एनं देवं पुनरुत्क्रमेण संहारमार्गेण पठितैः शरतत्त्वैः पञ्चतत्त्वैः मूलतः आदिना प्रणवेन चोत्क्रमेण पादादिकेशान्तं पृथग् व्याप्य जाग्रत्स्वप्नसुषुप्तिसंज्ञितदशाः जाग्रदवस्थां स्वप्नावस्थां सुषुप्त्यवस्थां च क्रमात् तीर्त्वा अतिक्रम्य तुरीयां दशां नयेत् प्रापयेत् ॥ २१३ ॥

**रम्या** तुरीयां दशामवस्थामधिगम्य देवं स्वरूपानुभवानुषक्तं स्वस्वरूपानुभवयोगयुक्तम् आनन्दघनं धिया ध्यायन् तं सुरक्ष्य संवृत्य यवनिकयाच्छाद्य शेषां क्षपां रात्रिं क्षपयेत् अतिवाहयेत् ॥ २१४ ॥

**काल्योचितम्** उषसि योग्यं सन्ध्यावन्दनादिकं कर्म विधाय साधु यथावत् सविग्रहीभूतसमर्चितात्मा सकलीकरणं शङ्खपूरणमात्माराधनं च

---

1. 'श्च सुभगां म' क. पाठः.

तारेण मूलेन च पञ्चतत्त्वैः
संव्याप्य तं ध्यायतु जागरूकम् ॥ २१५ ॥
उत्थाप्य धेन्वादिकमङ्गलानि
प्रदर्श्य कृत्वार्घ्यसमर्पणाद्याम् ।
प्रारब्धपूजासुसमाप्तिमिष्टे
पीठे च कृत्वा सकलीकरोतु ॥ २१६ ॥
इज्योदितानि पुनराचमनावसाना-
न्यस्मै सदन्तरसनापवनानि दत्त्वा ।
गण्डूषकं बहु समर्प्य सपाद्यकाद्यं
संस्नाप्य पाद्यमथ साचमनं प्रदद्यात् ॥ २१७ ॥
प्रोक्ष्यापोहिपुरस्सरैर्मधुघृतेनाक्त्वा हरिद्रादिभि-
र्घृष्ट्वासिच्य शुभैर्जलैः समभिषिञ्चेन्मन्त्रतोयैरपि ।

---

कृत्वा तारेण मूलेन पञ्चतत्त्वैश्च तं संव्याप्य सम्यक् केशादिपादान्तं व्याप्य जागरूकं जाग्रदवस्थां गतं तं ध्यायतु ॥ २१५ ॥

पुनरुत्थाप्योत्थानं कारयित्वा धेन्वादिकमङ्गलानि धेन्वादीनि शुभदर्शनयोग्यानि मङ्गलानि प्रदर्श्य अर्घ्यसमर्पणाद्यां प्रारब्धपूजासुसमाप्तिं पूर्वदिवसकृतायाः पूजायाः समाप्तिमवसानीयार्घ्यदानेलयाङ्गाद्यां कृत्वाथ इष्टे पीठे कृत्वा स्थापयित्वा सकलीकरोतु ॥ २१६ ॥

पुनरिज्योदितानि पूजापटलोक्तानि पुनराचमनावसानानि अर्घ्यादीनि पाद्यादीनि वा सदन्तरसनापवनानि दन्तकाष्ठजिह्वाशोधनसाधनसहितानि तान्यस्मै दत्त्वा बहु बहुशो गण्डूषकं सपाद्यकाद्यं समर्प्य संस्नाप्याथ पाद्यं साचमनं प्रदद्यात् ॥ २१७ ॥

आपोहिपुरस्सरैः 'आपो हि ष्ठा'दिभिर्मन्त्रैः प्रोक्ष्य मधुघृतेन मधुसहितघृतेन अक्त्वाभ्यज्य हरिद्रादिभिश्चूर्णैर्घृष्ट्वा शुभैर्जलैरासिच्य मन्त्रतोयैरपि 'प्राणापानव्याने'त्यादिभिः सप्तशुद्धिमन्त्रजलैः पुरुषसूक्तादिमन्त्रजलैरपि समभि-

---

१. 'मन्त्रैः सं' क. पाठः. २. 'ना' ख. ग. घ. ङ. च. पाठः.

वस्त्रादीनि समर्प्य चोपहरणानि त्रीणि दूर्वाङ्कुरान्
पुष्पं चन्दनमञ्जनागरुरसौ चास्मै प्रदद्यात् क्रमात् ॥

सम्भूष्यादर्शमपि परिदर्श्यार्चयित्वा गणेशं
दत्त्वा गोभ्यो यवसमितिहासादिकं श्रावयित्वा ।
विप्रेभ्यस्तण्डुलघटसुवर्णादि दत्त्वाथ देवं
प्राच्योद्वास्य प्रकृतशयनाद्यं नयेन्मूलधाम ॥ २१९ ॥

मूलार्चामभिषिच्य पीठमभिपूज्यात्र प्रकल्प्यार्णवीं
मूर्तिं तत्र सुयोज्य कौतुकगतं देवं पुरोक्ताणुभिः ।
अन्वावाह्य निजेन मूलमनुना कृत्वा सहाङ्गीक्रियां
तस्मिन् साम्प्रतिकार्चनादिकविधिं कुर्वीत सर्वं ततः ॥

यात्राहोममथादधीत विनिधायाग्निं यथोक्तक्रमात्
कृत्वास्मिन् परिवारहोमचरमं सर्पिर्हुनेदेकशः ।

---

षिञ्चेत् । वस्त्रादीनि त्रीणि वस्त्रोपवीतभूषणान्युपहरणानि समर्प्यास्मै दूर्वाङ्कुरान् पुष्पं चन्दनमञ्जनागरुरसौ च क्रमात् प्रदद्यात् ॥ २१८ ॥

संभूष्यालङ्कृत्य आदर्शं दर्पणमपि परिदर्श्य गणेशमर्चयित्वा गोभ्यो यवसं दत्त्वा इतिहासादिकं महाभारतपुराणादीनि श्रावयित्वा विप्रेभ्यः तण्डुलघटसुवर्णादि तण्डुलपूर्णघटं सुवर्णं तिलं गवादिकं च दत्त्वाथ देवं प्राच्र्य प्रकृतशयनाद्यं प्रस्तुतशयनबीजाङ्कुराद्यमुद्वास्य देवं मूलधाम प्रासादं नयेत् ॥ २१९ ॥

पुनर्मूलार्चामभिषिच्य पीठमभिपूज्यात्रार्णवीं मन्त्रमयीं मूर्तिं प्रकल्प्य तत्र पुरोक्ताणुभिः पुरोक्तप्रकारेण कौतुकगतं देवं सुयोज्यान्वावाह्य स्वस्मादपि निजमन्त्रेणावाह्य सहाङ्गीक्रियां सकलीक्रियां कृत्वा सांप्रतिकार्चनादिकविधिं संप्रति योग्यं पूजादिकं च सर्वं ततः कुर्वीत ॥ २२० ॥

अथ यात्राहोममादधीत । कथं, यथोक्तक्रमात् स्वगृह्योक्तक्रमादग्निं विनिधायास्मिन् सामान्यन्यायेन परिवारहोमचरमं कृत्वा कनिक्रदत्प्रभृतिभि

षण्मन्त्रैश्च कनिक्रदत्प्रभृतिभिः स्वस्त्यादिपञ्चाणुभि-
श्चाथ स्वेन जुहोतु मूलमनुना द्रव्याणि चत्वार्यपि[1] ॥
गत्वा गर्भगृहं समिष्टनिजपीठे देवमास्थापितं
संस्नाप्याचमनीयकावधि समर्प्य प्रोक्ष्य चाप्यादिभिः ।
चूर्णैस्तण्डुलमुद्गमाषयवहेमादिक्षपागन्धजैः[2]
स्थाणावग्निहृदाजिते द्रुपदया शेषेषु चोद्वर्तयेत् ॥ २२२ ॥
संस्नाप्य सम्पूज्य तथैव वा तं
कृत्वा तदग्रे शुचि कर्मबिम्बम् ।
तीर्थेति मन्त्रेण गुहे गणेशे-
ऽप्यन्येषु कर्मेत्यणुनार्थयेत ॥ २२३ ॥
तीर्थादिगमनाद् यावद् देवाभिगमनं पुनः ।
तावत् त्वं कौतुकमिदमधिष्ठाय प्रसीद नः ॥ २२४ ॥
कर्मार्चा तीर्थयात्रार्थं तवेयं कल्पिता विभो! ।
तीर्थयात्रां कुरुष्वास्यां सङ्कल्पानुग्रहाय नः ॥ २२५ ॥

---

षण्मन्त्रैः स्वस्त्यादिपञ्चाणुभिश्च एकशः एकैकशः सर्पिर्हुनेत् । अथ स्वेन मूलमनुना चत्वारि द्रव्याण्यपि जुहोतु ॥ २२१ ॥

**पुनर्गर्भगृहं** गत्वा समिष्टनिजपीठे आस्थापितमावाहितं (देवं) संस्नाप्य आचमनीयकावधि पाद्यार्घ्याचमनीयानि समर्प्य च आप्यादिभिः 'आपोहिष्ठा'दिपुण्याहमन्त्रैः प्रोक्ष्य तण्डुलमुद्गमाषयवहेमादिक्षपागन्धजैः । हेमादीत्यादिशब्देन लोहचूर्णानि गृह्यन्ते । गन्धाः स्वस्वकलशोक्ताः । तैश्चूर्णैः स्थाणौ अग्निहृदा[3] अघोरास्त्रेण, अजिते द्रुपदया 'द्रुपदादिवेन्मुमुचान' इत्यनया ऋचा, शेषेषु स्वस्वमूलेन चोद्वर्तयेत् ॥ २२२ ॥

**तं संस्नाप्य** संपूज्य निवेद्य प्रसाद्य वा तथैवोद्वर्तनानन्तरमेव वा तदग्रे शुचि पूर्ववच्छोधितं कर्मबिम्बं कृत्वा विन्यस्य गुहे गणेशेऽपि 'तीर्थाभिगमनादि'ति अन्येषु 'कर्मार्चा तीर्थयात्रे'ति मन्त्रेण चार्थयेत ॥ २२३ ॥

मन्त्रद्वयं पठति — तीर्थेति कर्मेति च ॥ २२४, २२५ ॥

---

१. 'पि ॥ तीर्थार्थमत्रैव जुहोतु वाज्यं स्वैः पञ्चमन्त्रैः पृथगष्टसङ्ख्यम् । तीर्थोपकण्ठाहितपावके वा कुर्यात् ततः स्विष्टकृदादिशेषम् ॥ ग' ग. घ. पाठः. २. 'श्च चूर्णैः' क. पाठः. ३. 'ह्री' ङ. पाठः.

**सम्पातं प्रसमर्प्य मूलमनुबिम्बात् कर्मबिम्बे ततो**
**देवं प्रोक्तविधानतः समभिवाह्याधाय साङ्गीक्रियाम् ।**
**मूलार्चां परिरक्ष्य कौतुकगतं देवं गृहीत्वा बहि-**
**र्निर्गच्छेन्निजमूर्तिपैः सह सुधीर्मङ्गल्यवादं[2] वदन् ॥**
**जगन्निर्माणसंहारस्थित्यनुग्रहहेतवः ।**
**देवानामीश्वरा देवा मङ्गलं प्रदिशन्तु नः ॥ २२७ ॥**
**अन्तर्विकीर्य बलिमेकपरिक्रमेण**
**बाह्ये च तद्ध्वजचितीः प्रविलाप्य देवे ।**
**क्षेत्रेशगुप्तसदनोऽन्यगणैः प्रयातु**
**देवं निजे समधिरोप्य रथादियाने ॥ २२८ ॥**
**द्वाःस्थादियज्वा यजमानयुक्तो**
**दिङ्मन्त्रतः सालबहिः परीत्य ।**

---

**पुनर्यात्राहोमजं संपातं** तन्मन्त्रैः **प्रसमर्प्य** ततो **मूलबिम्बात् कर्मबिम्बे प्रोक्तविधानतः** 'प्रष्ठोद्गीथोपचारै[1]रि'त्यादिश्लोकोक्तविधानतः **देवं समभिवाह्य साङ्गीक्रियामाधाय मूलार्चां परिरक्ष्य कौतुकगतं देवं गृहीत्वा निजमूर्तिपैः सह मङ्गल्यवादं वदन् निर्गच्छेत्** । **सुधी**रिति मङ्गल्यवादे सावधानतोक्ता ॥ २२६ ॥

मङ्गल्यवादस्यादिश्लोकपठनेन तच्छेषमपि जप्तव्यमिति सूचयति— **जगन्निर्माणे**ति ॥ २२७ ॥

**पुनरन्तर्बहिश्च एकपरिक्रमेण** एकैकेन प्रदक्षिणेन तत्तद्दिशि पूर्वप्रापानां परिवाराणां पूर्वपूर्वक्रमयोगेन **बलिं** भूतबलिं **विकीर्य** तदा **तद्ध्वजचितीश्च देवे विला**प्योद्वास्य **क्षेत्रेशगुप्तसदनः** क्षेत्रपालं तत्पुररक्षणार्थं तत्रैव स्थितं कल्पयित्वा **अन्यगणै**रन्यपरिवारैः सह **देवं निजे रथादियाने** । निज इत्यनेन यानस्य स्वस्ववाहनत्वकल्पनं स्वस्ववाहनमन्त्रेणाराधनं च सूचितम् । तत्र **समधिरोप्य** सम्यक् स्थापयित्वा **प्रयातु** गच्छेत् ॥ २२८ ॥

**यजमानयुक्तो** महामर्यादाप्राकारगोपुरे **द्वाःस्थादियज्वा** द्वाःस्थाविष्ट्वा बलिं दत्त्वा बहिरपि सर्वभूतेभ्यो बलिं दत्त्वा **दिङ्मन्त्रतः** 'ये भूता' इत्यादिमन्त्रेण **सालबहिः** प्राकारबहिर्भागे बलिं दत्त्वा **परीत्य** हविष्याम्बुघटादि-

---

१. 'च्कामेन्नि', २. 'दान्' क. पाठः.

अर्वाग् व्रजेद् योजनतः समेतो
विप्रैर्हविष्याम्बुघटादिहस्तैः ॥ २२९ ॥

शङ्खप्रेङ्खच्चटुलपटहोत्तालतालोरुभेरी-
रङ्गच्छृङ्गोड्डुमरडमरूद्दीप्रवीणाप्रवीणाः ।
ढक्काढुक्काविरलमुरलीकर्मठाश्चाभियायुः
स्फायद्दीपास्तमिह महितोद्दामहेला महेलाः ॥ २३० ॥

पञ्चवाद्यवरवादनाविधाचुञ्चवोऽस्य पुरतः प्रयान्त्विह ।
छत्रचामरविधारिणोऽभितः पृष्ठतो जयजयादिवादिनः ॥

---

हस्तैः बलिदानसाधनसहितैर्विप्रैः समेतो योजनतोऽर्वाक् योजनात् किञ्चिदून-मध्वानं व्रजेत् गच्छेत् ॥ २२९ ॥

इह गमने तं देवं शङ्खप्रेङ्खच्चटुलपटहोत्तालतालोरुभेरीरङ्गच्छृङ्गोड्डुम-रुडमरूद्दीप्रवीणाप्रवीणाः शङ्खेन सह प्रेङ्खति शब्दायमाने चटुले समीचीने पटहे वाद्यविशेषे, उत्ताले उद्गच्छत्कालक्रियामानयुक्ते ताले च वाद्यविशेषे, उर्व्यां बृहत्यां भेर्यां च, रङ्गति शब्दविशेषं कुर्वति शृङ्गे मुखवाद्यविशेषे च, उड्डुमरे शब्दायमाने च डमरौ वाद्यविशेषे च, उद्दीप्रायां प्रकाशनशीलायां वीणायां च प्रवीणाः कुशलाः ढक्काढुक्कादिरलमुरलीकर्मठाश्च ढक्कायां ढुक्कायां च वाद्यविशेषयोः अविरलायामन्यूनायां मुरल्यां च कर्मठाः कर्मणि कुशलाश्च स्फायद्दीपाः प्रज्वलद्दीपयुक्ताः महितोद्दामहेलाः महनीयाश्च विशृङ्खलविलासयुक्ताः महेलाः प्रौढा युवतयश्च अभियायुः अग्रे गच्छेयुः ॥ २३० ॥

इहैव गमने पञ्चवाद्यवरवादनाविधाचुञ्चवः तेषां विशिष्टवाद्यानां वादनाविधायां प्रयोगे चुञ्चवः प्रसिद्धाः अस्य देवस्य पुरतः प्रयान्तु । छत्रचामरविधारिणः छत्राणि चामरादीनि च विशेषेण धारिणः अभितः पार्श्वयोश्च जयजयादिवादिनः स्तुतिपाठकाश्च पृष्ठतश्च प्रयान्तु ॥ २३१ ॥

---

१. 'यां च मु' क. च. पाठः.

आसाद्य नद्यादिविशिष्टतीर्थे तत्सम्मुखं न्यस्य सभिष्टपीठे।
साङ्गीक्रियाद्यं प्रविधाय तस्मै दद्याद् द्वितीयाचमनावसानम्॥
विशोधिते तीर्थजले जलेशादीज्यातदर्हाहुतिजाज्यसिद्धे।
त्रिर्मज्जयेत् तज्जलसम्मुखीनं देवं सुधीः स्वैरथ पञ्चमन्त्रैः॥
पीठेऽत्रैव निधाय देवमुपचर्याचामनिष्ठं क्रमा-
न्मन्त्री तन्मनुभिः प्रमार्ज्य महितैश्चूर्णैः समुद्वर्त्य च।
नाभीदघ्नजले स्थितोऽसुयमनं कुर्वन्नृतंचादिभि-
र्मन्त्रैस्तत्र कृताघमर्षणविधिस्तीर्थे पुनः स्नापयेत्॥
पीठे निवेश्य वसनाद्यमथोपहृत्य
देवं समर्च्य विनिवेद्य निवेद्यमग्नौ।

---

पुनर्नद्यादिविशिष्टतीर्थे नदीनदादिप्रसिद्धतीर्थे पुण्यजलस्थानमासाद्य तत्समीपे सभिष्टपीठे तत्सम्मुखं तीर्थाभिमुखं यथा तथा न्यस्य साङ्गीक्रियाद्यं प्रविधाय तस्मै देवाय द्वितीयाचमनावसानमुपहरणं दद्यात्॥ २३२॥

धारणादिभिर्विशोधिते जलेशादीज्यातदर्हाहुतिजाज्यसिद्धे तीर्थे वरुणदेवं च पृथक् पृथगावाह्य पूजिते तद्योग्यपञ्चतत्त्वमन्त्रादिहुतसंपातसंस्पृष्टे च तीर्थजले तज्जलसम्मुखीनं तज्जलाभिमुखीकृतं देवमथ स्वैः स्वैः पञ्चमन्त्रैः सुधीस्तज्जलैर्देवस्याप्यायनं स्मरन् त्रिः त्रिवारं मज्जयेत्॥ २३३॥

अत्रैव पूर्वपीठ एव निधाय आचामनिष्ठं पाद्यार्घ्याचमनान्युपचर्य मन्त्री 'आपोहिष्ठा'दिमन्त्रज्ञः तन्मनुभिः प्रोक्षणमन्त्रैः क्रमात् प्रमार्ज्य अभ्युक्ष्य महितैः पूजितैः हेमनिशादिभिश्चूर्णैः समुद्वर्त्य नाभीदघ्नजले नाभिप्रमाणजले स्थितो भूत्वा 'ऋतं च सत्यं चादि'भिर्मन्त्रैः असुयमनं प्राणायामं कुर्वन् कृताघमर्षणविधिः कृताघमर्षणकर्मा तत्र तीर्थे पुनरपि स्नापयेत्॥२३४॥

अथ पीठे[1] पुनरपि निवेश्य वसनाद्यं वस्त्रोपवीताद्यमुपहृत्य देवं समर्च्य निवेद्यं विनिवेद्य अग्नौ हुत्वा पूजाहोमं विधाय उक्तवत् तीर्थे बलिमपि

---

१. 'ठे नि' ख. ग. घ. ङ. च. पाठः.

हुत्वोक्तवद् बलिमपि प्रविकीर्य पूजा-
शेषं समाप्य मनुनेति निवेदयेच्च ॥ २३५ ॥

तीर्थेऽस्मिन् पावने पुण्ये स्नातोऽसि पुरुषोत्तम! ।
अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेण नः ॥ २३६ ॥

हरिविषये मनुरेवं परेषु परमेश्वरादिपदमत्र ।
पुरुषोत्तमपदविषये कुर्यात् स्वस्वोचितं मन्त्री ॥ २३७ ॥

उद्वास्य तीर्थं निजवाहने त-
मारोप्य मूलालयमागमय्य ।
तस्मिन्नहन्येव नियोज्य मूल-
बिम्बेऽभिषिच्य प्रयजेच्च देवम् ॥ २३८ ॥

तस्मिन् परस्मिन्नथवाह्नि देवं समुक्तनीत्या कलशैः प्रभूतैः ।
संस्नाप्य यात्रोदितदोषशान्त्यै समर्चयेद् भूतबलिं किरेच्च ॥

---

प्रविकीर्य पूजाशेषं समाप्य इति वक्ष्यमाणमनुना निवेदयेच्च ॥ २३५ ॥

तन्मनुं पठति — तीर्थेऽस्मिन्निति ॥ २३६ ॥

हरिविषये विष्णौ एवं मनुः । परेषु देवेषु अत्र पुरुषोत्तमपदविषये पुरुषोत्तमशब्दस्थाने मन्त्री मन्त्रपदयोजने कुशलः स्वस्वोचितं स्वस्वयोग्यं परमेश्वरादिपदं कुर्याद् योजयेत् ॥ २३७ ॥

ततस्तीर्थमुद्वास्य तं देवं निजवाहने पूर्ववदारोप्य मूलालयमागमय्य तस्मिन्नहन्येव मूलबिम्बे नियोज्याभिषिच्य देवं यथावत् प्रयजेच्च ॥ २३८ ॥

तस्मिन् परस्मिन् वा अह्नि तद्दिने उत्तरदिवसे वा समुक्तनीत्या कलशपटलोक्तरीत्या प्रभूतैर्बहुभिः कलशैर्देवं यात्रोदितदोषशान्त्यै स्वस्थानाद् दूरगमनदोषशान्त्यै संस्नाप्य समर्चयेत् । भूतबलिं च किरेत् ॥ २३९ ॥

---

१. 'त्वाभितो ब' ख. पाठः. २. 'म्बे'. ३. 'कुर्यात् ॥' क पाठः.

इति तन्त्रसमुच्चये ध्वजेज्या-
बलिसंवेशनतैर्थिकक्रियाढ्यः ।
नवमोऽनवमार्थदायिदेवो-
त्सववादी पटलः प्रगुम्फितोऽभूत् ॥ २४० ॥

इति तन्त्रसमुच्चये
नवमः पटलः ।

---

पटलमुपसंहरति — इतीति । तन्त्रसमुच्चये ग्रन्थे नवमः पटलः प्रगुम्फितो बद्धोऽभूत् । कथंभूतः, अनवमार्थदायिदेवोत्सववादी अनवमानुत्कृष्टानर्थान् धर्मादिपुरुषार्थान् (दायिनः) दानशीलस्योत्सवस्य वादी । कथंभूतः पुनरुत्सवपरिकरः, ध्वजेज्याबलिसंवेशनतैर्थिकक्रियाढ्यः ध्वजेज्यया ध्वजस्थापनपूजया, बलिना भूतबलिनोत्सवबलिना च, संवेशनेन स्वापनेन च, तैर्थिकक्रियया तीर्थस्नानक्रियया च आढ्यः परिपूर्णः ॥ २४० ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
नवमः पटलः ।

---

1. 'जनादिभिः व' क. घ. पाठः

## अथ दशमः पटलः ।

देवे स्वभक्तजनतानुजिघृक्षयार्चो-
पाधौ तथा नियतसन्निधिमादधाने ।
श्रेयोदुरासदतया तदपासनार्थं
स्याच्चेन्निमित्तमथ निष्कृतिमादधीत ॥ १ ॥

क्षेत्रे मृतिर्जननमङ्गणमण्डपादौ
मूत्रासृगादिपतनं पतितादिवेशः ।
सोलूकगृध्रकरटश्वखरोष्ट्रकोल-
क्रोष्टृवृक्षडुण्डुभपुरस्सरगर्भवेशः ॥ २ ॥

---

एवं नवभिः पटलैः भूमिपरिग्रहादितीर्थाभिषेकावधिकं क्रमेण[1] तूक्तं कर्मकलापमभिधायाथ प्रतिष्ठितस्य देवस्यावश्यकर्तव्याया नित्यपूजायाः केनापि निमित्तेन विरोधे प्राप्ते तत्परिहाराय दशमपटलेन निष्कृतिं वदन् तत् प्रस्तौति — देव इति । स्वभक्तजनतानुजिघृक्षया स्वस्मिन् भक्तस्य जनसमूहस्यानुग्रहेच्छया अर्चोपाधौ प्रतिमारूपे स्वाश्रये तथा उक्तक्रियाभिः नियतसन्निधिं नित्यसान्निध्यम् आदधाने कुर्वाणे देवे पूजकस्य श्रेयोदुरासदतया श्रेयसो दुष्प्रापकत्वाद्धेतोर्गर्हितं निमित्तं स्याच्चेत् संभवेद् यदि अथ तदनन्तरमेवाविलम्बितं तदपासनार्थं तस्य दुर्निमित्तस्य परिहाराय निष्कृतिं प्रायश्चित्तमादधीत ॥ १ ॥

निमित्तानि गणयति — क्षेत्र इति । क्षेत्रे मर्यादासीमाया अन्तर्भागे मृतिर्जननं च मनुष्याणां मरणं जननं च । अङ्गणमण्डपादौ प्रासादालिन्दाङ्गणमण्डपबलिपीठिकादौ मूत्रासृगादिपतनम् आदिशब्देन पुरीषादिकं च । पतितादिवेशः पतिताः स्वकुलाद् भ्रष्टाः तेषां चण्डालादीनां च गोपुरादन्तः प्रवेशः । सोलूकगृध्रकरटश्वखरोष्ट्रकोलक्रोष्टृवृक्षडुण्डुभपुरस्सरगर्भवेशः सोलूकः उलूकश्च (ഉലൂകം=ഊമൻ. ഗൃധ്രം=കഴുക്. കരടം=കാക്ക) श्वा सारमेयः (ഖരം=കഴുത. ഉഷ്ട്രം=ഒട്ടകം. കോലം=പന്നി. ക്രോഷ്ടാ=കുറുനരി. ഋക്ഷം=വാനരം. ഡുണ്ഡുഭം=ചേര) । पुरस्सरशब्देन श्येनकुक्कुटादयः । एतेषां गर्भगृहप्रवेशः ॥ २ ॥

---

१. 'णेत्युक्तं' ख. ग. घ ङ. च. पाठः.

**बिम्बस्य पातचलनादिरथ प्रदाह-**
**स्वेदप्ररोदहसितानि तथाद्भुतानि ।**
**छत्राकनाकुमधुकादिसमुद्गमाश्च**
**पूजाविलुप्तिरपि चासति दिष्टदोषे ॥ ३ ॥**

**क्षुद्रान्यमन्त्रयजनं प्रतिषिद्धदुष्ट-**
**पुष्पादिपूजनमथो मरिचादिलेपः ।**
**एतानि तन्त्रकथितानि निमित्तकानि**
**ज्ञेयानि तत्र गुरुलाघवभेदवन्ति ॥ ४ ॥**

**प्रासादोऽर्चा च विश्वेशितुरिह वपुषी स्थूलसूक्ष्मे यतोऽतो-ऽत्राधाराधेयभावादितरतरभवोऽन्यत्र चाभ्येति दोषः ।**

---

अथ बिम्बस्य पातचलनादिः पतनचलनस्फुटनादीनि । तथाद्भुतानि आश्चर्यभूतानि प्रदाहस्वेदप्ररोदहसितानि प्रदाहः औष्ण्यं, स्वेदः स्वेदजलस्रवः, प्ररोदः भावे दुःखप्रतिभानम् । छत्राकनाकुमधुकादिसमुद्गमाश्च (ഛത്രാകം=കൂൺ. നാകം=പുററ്. മധുകം=തേൻ. ആദിശബ്ദേന കടന്നൽക്കൂടാദി)। दिष्टदोषे निर्दिष्टदोषे असति अभावे निमित्ताभावे पूजाविलुप्तिरपि । अनेन निमित्ते सति पूजा न कार्येत्यपि सूचितम् ॥ ३ ॥

क्षुद्रान्यमन्त्रयजनम् आभिचारकर्मणे क्षुद्रमन्त्रेण पूजनं च । प्रतिषिद्धदुष्टपुष्पादिपूजनं निषिद्धैरशुद्धैर्वा पुष्पादिभिः पुष्पगन्धजलनिवेद्यादिभिः पूजनम् । अथो मरिचादिलेपः मरिचादितीक्ष्णद्रव्यैर्लेपनं च । एतानि तन्त्रकथितानि तन्त्रेषु कथितानि निमित्तकानि । तत्र तेषु मध्ये गुरुलाघवभेदवन्ति एतद् गुरु एतल्लघ्विति भेदेन साधकैर्ज्ञेयानि ॥ ४ ॥

तच्छोधनादिकं प्रस्तौति — **प्रासाद** इति । इह दोषे सति प्रासादोऽर्चा च विश्वेशितुः देवस्य स्थूलसूक्ष्मे वपुषी प्रासादः स्थूलं वपुः प्रतिमा सूक्ष्मं वपुरिति यतः यस्मात् अतोऽस्माद्धेतोः अत्रानयोराधाराधेयभावात् प्रासाद आधारः प्रतिमा त्वाधेयमिति व्यवस्थापितत्वाद् इतरतरभवः तयोरेकस्मिन्नुद्भूतो दोषोऽन्यत्र चाभ्येति प्राप्नोति प्रासादस्थो दोषः प्रतिमां प्राप्नोति प्रतिमास्थः प्रासादं च । अत्रानयोरेकस्थितेऽपि दोषे प्रासादे प्रति-

**दोषेऽत्रैकस्थितेऽप्याचरतु तदुभयोः शोधनं स्थानसंस्थे**
**तद्वत् तच्छोधनाद्यं यदि न परकृतावस्तुतोक्षा स्थलेऽलम्[1] ॥**

**खननं हरणं दाहः पूरणं गोनिवासनम् ।**
**विप्रोच्छिष्टं च गव्यं च सप्तैताः स्थानशुद्धयः ॥ ६ ॥**

**खदिरकृतखनित्रेणास्त्रमन्त्रेण खात्वा**
**निर्ऋतिदिशि बहिस्तत्पांसुजातं निरस्य ।**
**दहतु हुतभुजा दर्भादिना भस्म हृत्वा-**
**प्लुतयतु पशुमूत्रब्रह्मपादोदगव्यैः ॥ ७ ॥**

**कौशादिमृद्भिरभिपूर्य विलोड्य दार्ढ्य-**
**मापाद्य हस्तिचरणैरथ गा निवास्य ।**

---

मायां वापि स्थिते दोषेऽपि तदुभयोः शोधनमाचरतु । प्रासादप्रतिमाभ्याम-न्यत्र कुत्रचित् स्थाने स्थितो दोषश्चेत् किं कर्तव्यमित्यत्राह — स्थानसंस्थ इत्यादिश्लोकशेषेण । दोषे स्थानसंस्थे सति तच्छोधनाद्यं स्थानशोधनमाद्यं यथा भवति तथा तद्वत् प्रासादप्रतिमयोः शोधनमाचरतु । न यदि दोषः स्थानसंस्थो न चेत् स्थले सर्वत्र परकृतावस्तुतोक्षा इतरत्र कृतेन सम्पादि-तेनावस्तुतेनोक्षणमेव अलं पर्याप्तं भवति ॥ ५ ॥

स्थानशुद्धिं क्रमेणादिशति — **खननमिति** । एताः सप्त स्थानशु-द्धयः स्युः ॥ ६ ।'

एताः क्रमेण विवृणोति — **खदिरेति** । खदिरेण कृतेन खनित्रेण खननसाधनेनास्त्रमन्त्रेणाशुद्धस्थलं यथादोषं खात्वा बहिर्निर्ऋतिदिशि तत्पां-सुजातं दोषयुक्तं पांसुपटलं निरस्य दर्भादिना तद्गर्ते दर्भसमित्कुशादिकं नि-क्षिप्यास्त्रमन्त्रेण हुतभुजा अग्निना तत्स्थलं दहतु । तद्भस्म हृत्वा त्यक्त्वा पशुमूत्रब्रह्मपादोदगव्यैः गोमूत्रैर्ब्राह्मणपादोदकैः पञ्चगव्यैश्च आप्लुतयतु आ-प्लुतं करोतु ॥ ७ ॥

**कौशादिमृद्भिः** कुशदर्भादिस्थानाद् गृहीताभिर्मृद्भिस्तद्गर्तमभिपूर्य वि-लोड्य शुद्धैर्जलैरार्द्रीकृत्य हस्तिचरणैर्गजपादाकारैः पालाशादिकाष्ठविशेषैः

---

1. 'लम् ॥ सद्यः शवादिकमशेषमपास्य तत्र संमार्जनादिषु कृतेषु यथोपपत्ति । सं-क्षालने प्रथमतो बहुवारिभिर्वा स्नानादिकृद् गुरुवरः खननादि कुर्यात् ॥ ख' क. ग. घ. पाठः.

स्थानं विशोध्य परिकल्पितमण्डपेऽत्र
सम्भोजयेद् द्विजवरान् सघृतं पयोन्नम् ॥ ८ ॥
उच्छिष्टमुद्धृत्य विशोध्य भूमिं
गव्येन सिञ्चेद् विकिरैः किरेच्च ।
मूलेन तत्राष्टदले सरोजे
देवं यथावत् परिपूजयेच्च ॥ ९ ॥
दोषे[2] सति स्थानगतेऽस्य शुद्धिं
कृत्वेति सूत्रत्रयवेष्टनाद्याम् ।
प्रासादशुद्धिं प्रविधाय पुण्या-
हान्तां विदध्यादथ बिम्बशुद्धिम् ॥ १० ॥
क्षालनप्लावनस्नानमार्जनानि यथाक्रमम् ।
धारावगाहसेकाश्च सप्तैता बिम्बशुद्धयः ॥ ११ ॥

---

दार्ढ्यं स्थैर्यमापाद्याथ गाः धेनूर्निवास्य पुनस्तत्स्थानं विशोध्य परिकल्पितमण्डपे मण्डपाकारेण चतुर्दिशमावृत्यात्र द्विजवरान् आभिजात्यविद्यातपोयुक्तान् ब्राह्मणश्रेष्ठान् सघृतं पयोन्नं संभोजयेत् इच्छाभोजनं कुर्यात् ॥ ८ ॥

उच्छिष्टमुद्धृत्य भूमिं विशोध्य गव्येन सिञ्चेत् । विकिरैश्च किरेत्। अष्टदले सरोजे अष्टदलपीठादियुक्तं पद्मं कृत्वा तत्र मूलेन देवमावाह्य यथावत् परिपूजयेच्च ॥ ९ ॥

दोषे स्थानगते सति अस्य स्थानस्य शुद्धिम् इति उक्तप्रकारेण कृत्वा तत्र सूत्रत्रयवेष्टनाद्यां पुण्याहान्तां प्रासादशुद्धिं तृतीयपटले[3] प्रोक्तक्रमेण प्रविधायाथ बिम्बशुद्धिं विदध्यात् ॥ १० ॥

बिम्बशुद्धीरुद्दिशति — क्षालनेति । क्षालनप्लावनस्नानमार्जनानि चत्वारि, धारावगाहसेकास्त्रयः सेकः पञ्चस्नानम् एताः सप्त यथाक्रमं बिम्बशुद्धयो भवन्ति ॥ ११ ॥

---

१. 'विधिज्ञः प' क. ग. पाठः. २. 'स्थानं विशोध्येति यथार्हमुप्तबीजोऽथ सू.' क. ग. घ. पाठः. ४. 'ल' ख. ग. घ. ङ. च. पाठः.

पात्रं पीठसमर्चनाद्युदितक्लृप्त्या दर्भमृत्त्वग्जलै-
रेकं साक्षतगन्धपुष्पसलिलैर्न्यक्कूर्चकं चापरम् ।
अन्यत् कूर्चयुतं हिरण्यफलयुक्तैस्तैः पिधानान्वितं
तुर्यं चापि तथा प्रपूर्य मनुवित् प्राच्यं प्रसाध्याग्रतः ॥

तूष्णीं दर्भमृदादिभिः प्रथमतः सङ्घृष्य संक्षाल्य तद्
बिम्बं पीठयुतं द्वितीयसलिलैराप्लाव्य चामन्त्रतः ।
संप्लाव्य स्नपने तृतीयसलिलैः शान्तिं स्मरन् मन्त्रतः
कूर्चाग्रैर्विधिवत् प्रमार्ज्य च तुरीयैर्देवमभ्यर्चयेत् ॥१३ ॥

---

ता. बिम्बशुद्धीर्विवृणोति — पात्रमिति । मनुवित् क्षालनादिचतुश्शुद्धौ[२] मन्त्रसम्बन्धं क्रमेण योजयेत् । गुरुरग्रतो देवस्याग्रभागे पीठसमर्चनाद्युदितक्लृप्त्या प्रत्येकं पीठपूजापात्रशोधनादिक्लृप्त्या चतुर्षु पात्रेषु मध्ये एकमग्निकोणस्थितं, न्यक्कूर्चकमिति सर्वत्र सम्बध्यते, दर्भमृत्त्वग्जलैः दर्भशकलैर्वल्मीकमृदा क्षीरिद्रुमत्वग्भिर्जलैश्च, अपरं निर्ऋतिकोणस्थितं पात्रं साक्षतगन्धपुष्पसलिलैश्च, अन्यद् वायुकोणगतं कूर्चयुतम् अपरेणापि कूर्चेण युतं हिरण्यफलयुक्तैः साक्षतगन्धपुष्पसलिलैश्च, तुर्यं चतुर्थम् ईशकोणगतं तैरुक्तैर्द्रव्यैः पिधानान्वितं चापि तथा क्रमेण प्रपूर्य प्राच्यं प्रसाध्य सम्पाद्य प्रथमतः प्रथमद्रव्यैर्दर्भमृदादिभिः तूष्णीं मन्त्रसम्बन्धं विना पीठयुतं तद् बिम्बं संघृष्य संक्षाल्य द्वितीयसलिलैश्चामन्त्रत आप्लाव्य स्नपने स्नानकाले शान्तिं स्मरन् मन्त्रतः संस्नाप्य तुरीयैश्च कूर्चाग्रैर्विधिवत् प्रमार्ज्य प्रोक्ष्य देवमभ्यर्चयेत् । प्रत्येकं देवं पूजयेदिति केचित् ॥ १२, १३ ॥

---

१. 'त् ॥
दोषे भूयसि मुष्टिभिस्तु तिसृभिर्वल्मीकतीर्थाकर-
क्ष्माभृन्मृद्भिरहार्यवारमिह तूष्णीं क्ष्रौं निजास्त्रेण च ।
पिष्टैर्दुग्धतरुत्वचामपि विघृष्यार्चां पृथक् क्षालयेत्
तत्तोयैर्मतिमानघोर इह शर्वादौ नृसिंहास्पदे ॥
पूर्णं प्रोक्तनयेन शान्त्युपनिषन्मूलैर्महत्पात्रमि-
ष्ट्वावर्त्याष्टशतं च बिम्बममुना मन्त्रं परिप्लावयेत् ।
तैरेव स्नपयेदतो वसुशतं पात्रान्तरेणाणुभिः
प्रोक्षेत् तैः क्रमविद् गुरुः सपवमानाब्लिङ्गहोत्रादिभिः ॥
ऐ' क, 'त् ॥ ऐ' घ. पाठः. २. 'बि' ख. घ. च. पाठः.

आप्यैश्च पावमानैश्च होतृभिश्चेह मार्जनम् ।
कुर्वीत सर्वदेवेषु ब्रह्मभिश्चापि शूलिनि ॥ १४ ॥

ऐशान्यां धान्यराशौ हरिति[1] सुमहिते योगपीठे[2] कटाहं
लौहं संसाद्य संस्कृत्य च तदनु समुत्तानितेऽधोग्रकूर्चम् ।
विन्यस्यापूर्य वारा नवपटपरिपूतेन[3] मन्त्री जलेऽस्मिन्
विन्यस्येन्मत्स्ययुग्मं कमठयुगमपि स्वर्णदुर्वर्णक्लृप्ते ॥

पद्मिनीं ससुमनोमृणालिनीं न्यस्य तत्र वरुणं सतीर्थकम् ।
प्रार्च्य देवमपि सन्निधाप्य तत्संस्पृशन् जपतु वारुणादिकम् ॥

पालाशादित्रिपदकलितं लोहजं हेमरन्ध्रं
धारापात्रं स्नपनसमयेऽधोग्रकूर्चं प्रकल्प्य ।

---

इह मार्जने सर्वदेवेषु आप्यैः 'आपोहिष्ठे'त्यादिभिः, पावमानैः 'स्वादिष्ठये'त्यादिभिः होतृभिः 'चित्तिस्रुगा'दिभिश्च मार्जनं कुर्वीत । शूलिनि एतैः पञ्चभिर्ब्रह्मभिश्चापि ॥ १४ ॥

चतुश्शुद्ध्यनन्तरमेव धारां कुर्यादित्याह — ऐशान्यामिति । देवस्य ऐशान्यां हरिति दिशि धान्यराशौ सुमहिते पूजिते योगपीठे लौहं लोहमयं कटाहं संसाद्य संस्कृत्य तदनु समुत्तानिते अधोग्रकूर्चं विन्यस्य नवपटपरिपूतेन नवीनवस्त्रगालितेन वारा जलेनापूर्यास्मिन् जले स्वर्णदुर्वर्णक्लृप्ते सुवर्णेन रजतेन च क्लृप्ते मत्स्ययुग्मं कमठयुगमपि विन्यस्येत् ॥ १५ ॥

तत्र ससुमनोमृणालिनीं पुष्पपत्रमृणालवतीं पद्मिनीं न्यस्य सतीर्थकं वरुणमावाह्य प्रार्च्य देवमपि सन्निधाप्य सम्पूज्य तत् पात्रं संस्पृशन् मन्त्री पञ्चवारुणादिमन्त्रज्ञः वारुणादिकम् 'अवते हेलः' 'उदुत्तमं वरुण' 'इमं मे वरुण' 'तत्त्वायामि' 'त्वन्नो अग्ने' इति पञ्चवारुणम् आदिशब्देन 'प्रसुव आप' इत्यादिसूक्तं च जपतु ॥ १६ ॥

पुनर्देवस्य पीठपूजापूर्वमावाह्य स्नपनसमये पालाशादित्रिपदकलितं पालाशादियाज्ञिकवृक्षक्लृप्तपादत्रयधृतं लोहजं लोहेन निर्मितं हेमरन्ध्रं हेम्ना क-

---

१. 'दिशि महितमहायो' ख. पाठः. २. 'विष्टरे स्वे क' क. ग. घ. पाठः. ३. 'वविमलपट्टीगालितेनोदकेऽस्मिन्' ख. पाठः.

'पादानिष्ट्वा प्रणवलिपिभिस्तेन पात्रं च कूर्चं
चास्मिन् पात्रे न्यसतु च पुनर्गन्धपुष्पाक्षतानि ॥ १७ ॥
पात्राद् वार्यथ वारुणादधिदरं कृत्वाञ्चितेनामुना
तत् पात्रं परिपूर्य मूलमनुना तच्छेषतोयैरपि ।
तत्कूर्चाग्रविनिर्गतामविरलां धारां समापातये-
दर्चामूर्धनि याममात्रमभिजप्यैतान् मनूंस्तन्मनाः ॥१८॥
मन्त्रान् पञ्च निजान् जपेयुरभितः पात्रं स्पृशन्तो द्विजाः
गायत्रीं दशतारकां सकलवेदादीन् स्वकीयान्यपि ।
सूक्तादीनि सपावमानपुरुषाम्नायान्तिकानि क्रमा-
ज्जप्या वाखिलसंहितात्र कथितान्याद्यन्तजप्यानि च ॥

---

लिपतरन्ध्रप्रदेशं धारापात्रमधोग्रकूर्चं च प्रकल्प्य प्रणवलिपिभिः 'अं नमः' 'उं नमः' 'मं नमः' इति पादानिष्ट्वा तेन प्रणवेन पात्रं कूर्चं चेष्ट्वास्मिन् पात्रे । गन्धपुष्पाक्षतानि च न्यसतु ॥ १७ ॥

**वारुणात्** पात्रात् अधिदरं शङ्खे वारि कृत्वा अञ्चितेन पूजितेनामुना मूलमनुना तच्छेषतोयैरपि तत्पात्रं परिपूर्य अर्चामूर्धनि प्रतिमाया मूर्ध्नि याममात्रं कालम् एतान् वक्ष्यमाणान् मन्त्रानभिजप्य तन्मना भूत्वा तत्कूर्चाग्रविनिर्गतां तत्कूर्चाग्रात् स्यन्दमानां धारामविरलामविच्छिन्नां समापातयेत् ॥

**तत्काले** अभितः परितः उपविश्य पात्रं दर्भैः स्पृशन्तो द्विजाः पूर्वं निजान् वक्ष्यमाणान् पञ्च मन्त्रान् जपेयुः । दशतारकां गायत्रीं दशप्रणवगायत्रीमित्यर्थः । सकलवेदादीन् ऋग्यजुस्सामाथर्वणादीन् । स्वकीयानि वैष्णवादीनि सूक्तादीन्यपि सपावमानपुरुषाम्नायान्तिकानि । पावमानं 'स्वादिष्ठा'दिकम् । पुरुषसूक्तं 'सहस्रशीर्षा'दिकम् । आम्नायान्तिकं 'वात आवात्वा'दिकम् । अथवा अखिलसंहिता क्रमाज्जप्या । अत्र तथाचेत् कथितानि सर्वाणि आद्यन्तजप्यानि स्युः ॥ १९ ॥

---

१. 'क्षिपतु' क. ग. घ. पाठः. २. 'ह', ३. 'सावित्रीम्' इति मूलकोशपाठः. ४. 'दि' ख. पाठः. ५. 'न् प' क. ख. ग. घ. च. पाठः.

रुद्रे कद्रुद्रपूर्वं स्वभुवि पुनरतोदेवपूर्वं द्वयं त-
च्छार्ङ्गीशे यातऊत्यादिकमिदमुभयं चार्यके तारकारौ ।
अग्निर्होतादिकं स्वं प्रजपतु गणपेऽथो गणानांपदाद्यं
रुद्रोक्तं च द्वयेऽस्मिन् महिषजिति सजातादिकं वैष्णवं च॥
यामावसाने सुसमाप्य धारां देवं यथाविध्यभिपूजयेत ।
न चालयेद् वारुणमत्र पात्रं दिनत्रये यत्र करोति धाराम्॥
और्ध्वाह्निके पर्युषिताम्बु हृत्वा
कृत्वान्यदिष्ट्वा प्रकरोतु शेषम् ।
वारे तृतीये वरुणं च देवे
प्रोद्वास्य तत्पूजनमादधीत ॥ २२ ॥

---

स्वस्वसूक्तान्याह — रुद्र इति । रुद्रे कद्रुद्रपूर्वं 'कद्रुद्राय प्रचेतस' इत्यादिकं प्रजपतु । स्वभुवि विष्णौ 'अतो देवा' इत्यादिकं, शार्ङ्गीशे तद् द्वयं 'कद्रुद्रा'दिकम् 'अतो देवा'दिकं च, आर्यके यातऊत्यादिकं 'या तं ऊतिरव-मे'त्यादिकम् इदमुभयं रौद्रं वैष्णवं च, तारकारौ 'अग्निर्होता नो अध्वर' इत्यादिकम्, अथो गणपे गणानांपदाद्यम् , अस्मिन् द्वये स्कन्दे गणपे च रुद्रोक्तं च, महिषजिति सजातादिकं 'जातवेदस' इत्यादिकं वैष्णवं च प्र-जपतु ॥ २० ॥

यामावसाने त्रिपादसहितत्रिनाडिकावसाने धारां सुसमाप्य देवं यथा-विध्यभिपूजयेत । यथाविधीत्यनेन तदानीमेव पूजायाः योग्यतेत्यभिप्रायः। यत्र दिनत्रये धारां करोति, तत्र वारुणं पात्रं न चालयेत् । एतेन दिनत्रये धारा कर्तव्या; आपत्पक्षे त्वेकदिनमित्यपि सूचितम् ॥ २१ ॥

और्ध्वाह्निके अनन्तरंदिवसगतायां[2] धारायां पर्युषिताम्बु अतिक्रान्त दिवसगतं जलं हृत्वा त्यक्त्वा अन्यच्छुद्धजलं कृत्वा सम्पाद्य इष्ट्वा तीर्थवरु-णादिकमिष्ट्वा शेषं प्रकरोतु । तृतीये वारे दिवसे धारावसाने वरुणं[3] देवं च देवे प्रोद्वास्य तत्पूजनं धारापूजनम् आदधीत ॥ २२ ॥

---

१. 'त्रां' क पाठः. २. 'यां च प'-ख. पाठः. ३. 'ण' ङ पाठः.

पात्रे पीठसमर्चनादिमहिते न्यक्कूर्चके स्वाणुभि-
गोमूत्रप्रमुखानि पञ्च परिमीयायोज्य गव्यान्यथ ।
तानि ब्रह्ममथा विलोड्य मपरेणाभ्यर्च्य मूलाणुना
गन्धोदं च तथावगाहविधये सम्पूज्य संसाधयेत् ॥२३॥
गोमूत्रं निजवाञ्छया परिमितं मूत्रार्धकं गोमयं
क्षीरं सप्तगुणं दधि त्रिगुणितं गोमूत्रमात्रं घृतम् ।
प्राहुस्तत्सवितुर्वरेण्यमिति गन्धद्वारपूर्वं तथा-
प्यायस्वेति दधीति तेज इति गोमूत्रादिमन्त्रान् क्रमात्॥
देवे पुनः स्नपनकर्मणि कर्मठोऽथ
ब्रह्मद्रुमादिकृतपञ्जरमाकलय्य ।
संवेष्ट्य बिम्बमपि साधु सदर्भवस्त्रै-
र्गव्यैः प्रपूर्य तनुयादवगाहकर्म ॥ २५ ॥

---

अवगाहविधिमाह — पात्र इति । अथावगाहविधये पीठसमर्चनादि-महिते पीठपूजापात्रशोधनतत्पूजादिके न्यक्कूर्चके अधःकूर्चयुक्ते पात्रे स्वाणुभिः स्वस्वमन्त्रैः गोमूत्रप्रमुखानि पञ्च गव्यानि परिमीयायोज्य परिमाणेन योजयित्वा ब्रह्ममथा पालाशेन मथनसाधनेन तान्यालोड्य एकीकृत्य मपरेण प्रणवेनाभ्य-र्च्यापरस्मिन् पात्रे मूलाणुनार्घ्यगन्धोदकं चाभ्यर्च्य संसाधयेत् वस्त्रेणाच्छा-द्याधिवास्य रक्षेत् ॥ २३ ॥

तेषां परिमाणं मन्त्रं चाह—गोमूत्रमिति । तत्र गोमूत्रं निजवाञ्छया परिमितं स्यात् । मूत्रार्धकं गोमूत्रार्धकं गोमयं स्यात् । गोमूत्रात् सप्तगुणं क्षीरं स्यात् । गोमूत्रात् त्रिगुणितं दधि स्यात् । गोमूत्रमात्रं तत्तुल्यं च घृतं स्यात् । गोमूत्रादिमन्त्रान् क्रमात् 'तत् सवितुर्वरेण्यमि'ति, गन्धद्वारपूर्वं 'गन्धद्वारां दुराधर्षाम्' इत्यादि, तथाच 'आप्यायस्वे'ति, 'दधिक्राव्ण' इति, 'तेजो-ऽसी'ति आचार्या आहुः ॥ २४ ॥

अथ कर्मठः कर्मणि कुशलो गुरुः स्नपनकर्मणि पीठपूजादिस्नानकाले प्राप्ते देवे ब्रह्मद्रुमादिकृतपञ्जरं पलाशादियाज्ञिकैर्वृक्षैः कृतं पञ्जरम् आकलय्य निश्छिद्रं सन्धयित्वा बिम्बमपि सदर्भवस्त्रैः साधु संवेष्ट्य गव्यैः प्रपूर्यावगाह-कर्म तनुयात् ॥ २५ ॥

---

१. 'ना पुष्पग' क. पाठः.

धारावदत्र परिजप्य मनूंश्च विप्रै-
स्तद्द्रव्यजातमपनीय सुगन्धतोयैः ।
अन्तेऽवगाह्य परिशोध्य समस्तमेतद्
देवं यथोक्तविधिना परिपूजयेच्च ॥ २६ ॥

तारं नादं शरलिपि महाव्योमविद्यादि पञ्च
ब्रह्म श्रीरुद्रकमपि शिवे गाह्यमाने जपेयुः ।
सम्पातं संस्पृशतु च शतं ब्रह्मभिस्तत्र सर्पि-
र्हुत्वा चत्वार्यहिशतमघोरेण च द्रव्यकाणि ॥ २७ ॥

व्यस्तैः समस्तैरपि पञ्चगव्यैर्गन्धोदनिष्ठैः सुगरिष्ठदोषे ।
कार्योऽवगाहः क्रमशो दिनेषु तत्सेकमात्रेण च तल्लघिम्नि ॥

न्यक्कूर्चानर्चितैकासनसमधिगतान् पञ्च कुम्भान् क्रमेण
प्रापूर्येशादिसूक्तैः स्मरजिति सकलेष्वेव वा पञ्चतत्त्वैः ।

---

अत्र च विप्रैः सह धारावत् धारायामिव मनून् परिजप्य तद्द्रव्यजातमपनीय त्यक्त्वान्ते सुगन्धतोयैरवगाह्य एतत् समस्तं परिशोध्य यथोक्तविधिना देवं परिपूजयेच्च ॥ २६ ॥

तत्र शिवे गाह्यमाने अवगाह्यमाने तारं, नादं, प्रासादं, शरलिपि पञ्चाक्षरं, महाव्योमविद्या महाव्योमव्यापिचतुश्शताक्षरी । आदिशब्देन दशाक्षर्यादिकमुच्यते । पञ्चब्रह्म सद्योजातादीनि प्रसिद्धानि, श्रीरुद्रं च प्रसिद्धम्, एतानि मूर्तिपाः पात्रं स्पृशन्तो जपेयुः । तत्र शिवेऽग्रतोऽग्निमाधायाग्निमुखावसाने पञ्चभिर्ब्रह्मभिः शतं सर्पिः, अघोरेण अहिशतम् अष्टोत्तरं शतं चत्वारि द्रव्यकाणि च हुत्वा तदानीं तत्सम्पातं संस्पृशतु च ॥ २७ ॥

सुगरिष्ठदोषे सुतरां गुरुतरे दोषे दिनेषु एकैकदिनेष्वपि व्यस्तैः पृथग्भूतैः समस्तैर्युक्तैश्च पञ्चगव्यैः गन्धोदनिष्ठैः गन्धोदावसानैः क्रमशोऽवगाहः कार्यः । तल्लघिम्नि तस्य दोषस्य लघुतायां तत्सेकमात्रेण पञ्चगव्याभिषेकमात्रेणालम् ॥ २८ ॥

सप्तमीं शुद्धिमाह — न्यक्कूर्चानिति । अर्चितैकासनसमधिगतान् अर्चित एकस्मिन्नेव पीठे स्थितान् न्यक्कूर्चान् अधःकूर्चान् पञ्च कुम्भान् स्मरजिति ईशादिसूक्तैः 'ईशानः सर्वविद्यानामि'त्यादिभिर्मन्त्रैर्वा मध्यादिक्रमेण, सकलेषु

तैरेवेष्ट्वा ध्रुवैकीकृत इह निजमूलाणुनावाह्य देवं
साङ्गीकृत्यार्चयित्वा विधिवदथ पृथङ् मन्त्रयेच्च स्वमन्त्रैः[1]॥
पीठार्चनादिस्नपनावसानं कृत्वाथ मध्यादिघटैः[2] क्रमेण ।
स्वपञ्चमन्त्रैरभिषिच्य देवं तन्न्यासपूर्वं परिपूजयेच्च ॥ ३० ॥
कृत्वा शुद्धिमिहावगाहचरमां तत्संस्थतत्त्वव्रजं
संहृत्य प्रविलाप्य चात्मनि परस्मिन् धारणाभिस्ततः ।
बिम्बं साधु विशोध्य तात्त्विकमयं प्रोद्भाव्य दिव्यं वपु-
र्मन्त्राध्वप्रसमिद्धमेभिरभिषिञ्चेद् वा घटैः पञ्चभिः[3] ॥

---

सप्तस्वपि देवेषु पञ्चतत्त्वैरेव वा प्रापूर्य तैरेवेष्ट्वा ध्रुवैकीकृते प्रणवेनैकीकृत इह निजमूलाणुना देवमावाह्य साङ्गीकृत्य विधिवदर्चयित्वाथ स्वस्वमन्त्रैः पृथङ् मन्त्रयेत् जपेच्च ॥ २९ ॥

अथ देवस्य पीठार्चनादिस्नपनावसानं कृत्वा स्वस्वपञ्चमन्त्रैर्मध्यादिघटैः क्रमेण देवमभिषिच्य तन्न्यासपूर्वं पञ्चतत्त्वन्यासादि पूर्वं यथा भवति तथा परिपूजयेच्च ॥ ३० ॥

दोषाधिक्ये विशेषमाह — कृत्वेति । इहावगाहचरमां शुद्धिं कृत्वा तत्संस्थतत्त्वव्रजं तद्बिम्बस्थिततत्त्वसमूहमधिवासपटलोक्तक्रमेण संहृत्य परस्मिन्नात्मनि प्रविलाप्य ततो धारणाभिर्बिम्बं साधु उक्तक्रमेण विशोध्य तात्त्विकमयं तत्रैवोक्तक्रमेण तत्त्वस्वरूपं दिव्यं वपुः प्रोद्भाव्य प्रकर्षेणोद्भूतं कारयित्वा मन्त्राध्वप्रसमिद्धं मूलमन्त्रावाहनषडध्वन्यासादिभिः प्रकर्षेण सन्दीप्तं तम् एभिः पञ्चभिर्घटैरभिषिञ्चेत् । वेति समुच्चयार्थः ॥ ३१ ॥

---

१. 'न्त्रैः ॥ दिश्यैश्यां धान्यपीठे कुशयुजि कलशान् पञ्च हेमाश्मगर्भान् गन्धाद्भिः संप्रपूर्यार्णकमलयजनाद् येषु कृत्वोक्तमन्त्रैः । सर्वैरावाह्य साङ्गीकरणयजनकृत्तानथाभ्यर्च्य तेषामेकैकेनाभिषिच्यार्चयेत्तु महति दोषे कुमध्यादिभिस्तम् ॥ पी' क. पाठः.
२. 'टैर्दोषवित् ॥' क. ग. घ. पाठः. ३. 'भिः ॥
पुण्याहमुक्तविधिना सहमूर्तिपालो बिम्बे विधाय महितेन सगव्यकेन ।
राज्यक्षतेन सुविकीर्य च पञ्चमन्त्रैः शेषेण वोक्षतु किरत्वपि सर्वतोऽत्र ॥
कुर्याद् दोषे महति तु पुनः प्रोक्षणं मृद्विलिप्ते
शन्नोवार्भिः सशुचिभिरिमा गन्धवार्भिः समुक्षेत् ।
प्रासादान्तर्बहिरपि तथा सर्वतः पञ्चतत्त्वै-
र्गव्यैश्चाज्येन विकिरतु राज्यक्षतैश्चाथ मन्त्री ॥

**पुण्याहावधि शुद्धिरेवमखिले कार्या गुहे वाग्रतः**
**कौमारं कलशं पुरोवदभिपूर्यावाह्य चार्घ्यादिदः ।**

अखिले देवे एवमुक्तप्रकारेण शुद्धिः पुण्याहावधि पुण्याहप्रोक्षणमवसाने यथा भवति तथा कार्या । गुहे दोषाधिक्ये महाकुम्भप्रोक्षणं कुर्यादित्याह — गुहे वेत्यादिना । अत्राग्रतो मार्जनादिभिः शोधिते स्थले षड्दलं

कृत्वा भद्रकमत्र संरांचतपीठे रत्नगर्भे महा-
कुम्भे पौरुषसूक्तशुद्धजलपूर्णे स्विष्टवर्णाम्बुजे ।
मूलेन प्रयजेद्धरिं विधिवदाधारेषु विष्णुं महा-
विष्णुं सन्त्रविदर्चयेदथ सदाविष्णुं त्रितत्त्वान्वयात् ॥
अग्रेण वर्धनीं तद्वामत इष्ट्वा हुतं विधाय ततः ।
सम्पातशान्तितोयं तयोर्निषिच्याभिमन्त्रयेतापि ॥
पुंविष्णोर्मनुभिर्जुहोत्वथ च चित्तिस्रुक्सप्तहोत्राचतु-
ष्षड्ढोत्राज्यमथैषुतत्त्वजितसावित्र्याख्यभूरादिभिः ।
मन्त्री हंस इति त्रिमूलजिनवर्णैर्मूलतः खादिरी-
व्रीह्मीर्वा सघृतान्नलाजतिलराजीश्चाष्टयुक्तं शतम् ॥
बिम्बेऽर्कवर्णविससूत्रजकौतुकाढ्ये कुम्भे गुहे तु समिदादिहुतान्ततोऽत्र ।
वेदाणुमात्रकृतवास्तुहुताज्यभाजि सम्पातशेषत उपस्पृशतु त्रिमूलैः ॥
प्रातः स्विष्टासनावाहितविभुविहिताध्यादिरिष्ट्वा परीवा-
राढ्यं तं कुम्भमत्रानयतु करकधारापथेनाथ मन्त्री ।
तेन प्रोक्ष्याभिषिच्यार्चयतु च शमणोरित्यदश्शेषतोऽन्त-
र्धाम्नः प्रोक्षेद् बहिश्चावृतिगणमणुभिः स्वैरितीत्थं हरौ स्यात् ॥
कृत्वा स्वस्तिकभद्रकं त्विह महाकुम्भं हरे पञ्चर-
त्नाढ्यं ब्रह्मभिरन्तरष्ट परिकुम्भान् दिक्षु चापूरयेत् ।
मन्त्री घोरकलाणुभिर्यजतु तैर्मन्त्रैर्यथाहं सुधीः
सम्पातं हुतकृत् सशान्त्युदकमिष्ट्वासिच्य मन्त्रान् जपेत् ॥
मध्याशास्वीशपूर्वैर्जुहुयुरिह समित्पायसव्रीहिलाजान्
व्याशासु त्र्यम्बकाद्येन च सहतिलराजीफलानाज्यनिष्ठाम ।
प्रत्येकं चाष्टयुक्तं शतमिह समिधो ब्रह्मसालोद्भवाः स्युः
पश्चात् प्रासादसंस्थं प्रयजतु विधिवत् कर्मवित्तं च देवम् ॥
सद्यो वीतापरेद्युर्विधिवदुपचिते पीठ आवाह्य देवं
स्नानान्तं प्राप्य संस्नापयतु मनुविदेनं महाकुम्भतोयैः ।
पूजाशेषं च कुर्यादथ तदुपघटैरष्टमूर्त्यादि सर्वं
संस्नाप्यावसुतेनायतनभुवमपि प्रोक्ष्य रक्षोदितीशे ॥

कृत्वा षड्दलमण्डलं शिखिमुखद्रव्याढ्यमत्रेषुजे कौमारं' क. ग. घ. पाठः.

पुण्याहं स्नपने विधाय परिपूर्याप्च्छेषतोऽभ्यर्चयेद्
गव्यं तत्सविधे निधाय विकिरं चास्त्रेण संसाधयेत् ॥
विकिरमिह व्रीहियवं तिलतण्डुलमाषसर्षपं च तथा ।
दूर्वादर्भकुशाग्रं तुलसीदलनलिनकेसरं चाहुः ॥ ३३ ॥
आद्यं रौद्रं घटमभिमृशन्तो निजं शाकुनं च
स्वस्तिश्रीदैवतमपि जपेयुः शमाद्यं नृसंज्ञम् ।
सूक्तं यस्मिन्प्रभृतिकमथो वातआद्यं द्विमूलं
साङ्गं गायत्र्यणुमपि तथा षड्द्विषण्णामतारान् ॥ ३४ ॥

---

मण्डलमालिख्य विरचिते पीठे 'पीठान्ते ब्रह्माणमि'त्याद्युक्तप्रकारेण ब्रह्मादिभिः साकं पीठपूजां कृत्वा कौमारं कुमारदेवत्यं कलशं निधाय यथोक्तक्रमेण संशोध्योत्तानीकृत्य पुरोवद्धिरण्मयान् पद्मगजशिखिशक्तिवज्रान् निधायाभिपूर्य लिपिपङ्कजमिष्ट्वात्र स्कन्दमावाह्यार्घ्यादिदः अर्घ्याद्युपहारदो भूत्वा स्नपने स्नपनकाले कलशस्य पुण्याहं विधाय अप्च्छेषतः पुण्याहजलशेषेण च परिपूर्य परिवारपूजायां वज्रादेः प्रागित्यादिभिः सह पुरोवदभ्यर्चयेत् । तत्सविधे तस्योदग्भागस्थस्वस्तिकयोर्गव्यं विकिरं च निधायास्त्रेणाभ्यर्च्य संसाधयेत् ॥ ३२ ॥

तत्रत्यं विकिरद्रव्यमाह— विकिरमिति । इह व्रीहियवं तिलतण्डुलंमाषसर्षपं च तथा दूर्वादर्भकुशाग्रं दूर्वादर्भकुशानामग्राणि तुलसीदलं पद्मकेसरं च विकिरमाहुः ॥ ३३ ॥

अथो मूर्तिपाः घटमभिमृशन्तः स्पृष्टवन्तः आद्यम् 'अग्निमील' इत्याद्यं सूक्तं, रौद्रं 'कद्रुद्राये'त्याद्यं श्रीरुद्रं च, निजम् 'अग्निर्होता नो अध्वर' इत्याद्यं, शाकुनं 'कनिक्रदादि'त्याद्यं, स्वस्तिश्रीदैवतं 'स्वस्ति नो मिमीतामि'त्याद्यं 'हिरण्यवर्णामि'त्याद्यं च, शमाद्यं 'शन्न इन्द्राग्नी' इत्याद्यं, नृसंज्ञं पुरुषसूक्तं, यस्मिन्प्रभृतिकं 'यस्मिन् ऋक्षे सुपलाश' इत्याद्यं, वातआद्यं 'वात आवात्वि'त्याद्यं, साङ्गम् अङ्गसहितं द्विमूलं मूलमन्त्रद्वयं, गायत्र्यणुमपि, षड्द्विषण्णामतारान् षण्मन्त्रान् द्वादशनाममन्त्रान् प्रणवं च जपेयुः ॥ ३४ ॥

---

१. 'गादिद्या' ख. ग. घ. च. पाठः. २. 'लं' क. पाठः.

स्नाने तत्कलशेन देवमभिषिच्याब्लिङ्गमूलाह्वयै-
स्तच्छेषेण कुशद्विजद्रुमशमीशाखाग्रकैः प्रोक्ष्य च ।
गव्योक्षां विकिरार्पणं च सुविधायैतत्त्रिशेषार्पणं
कृत्वा तत्परिषत्सु शेषभुजि चाथो देवमभ्यर्चयेत् ॥ ३५ ॥

निमित्तवित्ताद्युपपत्तिक्लृप्तपारायणाढ्यं प्रविधाय चैवम् ।
सामान्यशुद्धिं विदधीत तत्तद्दोषोपशान्त्यै विहितं हुतं च ॥

अर्धेन्दुरूपे दिशि दक्षिणस्यां सुरालयस्यारचितेऽग्निकुण्डे ।
महेशविष्ण्वीशगुहप्रभेशाविघ्नेश्वरेषु प्रथमं जुहोतु ॥ ३७ ॥

वज्राणूल्लिखितेऽस्त्रमन्त्रविहितोक्षेऽग्न्याश्रिते विष्टरे
स्थाणौ सेशहरौ सवामभुवनेड्यावाह्य चेष्ट्वानया ।

---

अथान्तर्गत्वा पीठपूजापुरस्सरं देवमावाह्य स्नाने स्नानकाले तत्कलशे-नाभिषिच्य तच्छेषेण कुशद्विजद्रुमशमीशाखाग्रकैः कुशपलाशशम्यग्रैः अ-ब्लिङ्गमूलाह्वयैः 'आपोहिष्ठा'दिभिर्मूलाभ्यां षण्णामभिर्द्वादशनामभिश्च प्रोक्ष्य तथास्त्रमन्त्रेण गव्योक्षां विकिरार्पणं च सुविधाय तत्परिषत्स्वपि एतत्त्रिशेषार्पणं कलशजलगव्यविकिरैरर्पणं कृत्वा शेषभुजि धूर्तसेनेऽपि कृत्वाथो देवमभ्यर्च-येत् ॥ ३५ ॥

निमित्तवित्ताद्युपपत्तिक्लृप्तपारायणाढ्यं निमित्तस्यार्थस्य, आदिशब्देन कालदेशादेरप्युपपत्त्या कल्पितेन वेदत्रयजपपारायणेनाढ्यं परिपूर्णं यथा भ-वति तथा सामान्यशुद्धिमेवं विधाय तत्तद्दोषोपशान्त्यै विहितं हुतं च विद-धीत ॥ ३६ ॥

तत्र शङ्करप्रोक्तादीन् होमान् विधत्ते — महेशविष्ण्वीशगुहप्रभेशावि-घ्नेश्वरेषु पञ्चसु देवेषु प्रथमं प्रायश्चित्तादिहोमेभ्यः पूर्वं सुरालयस्य प्रासादस्य दक्षिणस्यां दिशि अर्धेन्दुरूपे अर्धचन्द्राकारेणारचितेऽग्निकुण्डे जुहोतु ॥३७॥

तत्र शङ्करप्रोक्ताख्यस्य होमस्य पूर्वोक्तादग्निजननाद् विशेषमाह — वज्राणूल्लिखित इति । सेशहरौ स्थाणौ वज्राणूल्लिखिते द्वादशपटले वक्ष्यमाणः प्रणवद्वयमध्यगतो हुंफट्कारो वज्रमन्त्रः तेनोल्लेखने कृते अस्त्रमन्त्रविहितोक्षे

---

१ 'ष्ट्या' क. पाठः.

सद्यात्तेशसुजसघोरमहिताजक्षिप्तहृत्पूजिते
पञ्चाग्नौ शिववामघोरनृशिवैः कुर्यात् क्रमेण क्रियाः ॥
प्रारभ्य तत्राग्निमुखं निजोक्तनीत्यास्य पार्श्वे कलशं प्रपूज्य।
पक्वं च पञ्चप्रणवादिनास्येनाहृत्य पूजामनुभिश्च सर्पिः॥३९॥
भीमाजाह्वयवामवक्त्रमनुभिः सौदुम्बरीमार्गजा-
ज्यान्नान्यष्टसहस्रकं वसुशतं पुंसा तिलान् सर्षपान्।
मुद्गव्रीहियवान् घृताक्तनवदूर्वाग्राष्टसाहस्र-
मप्येतेनाष्टशतं जुहोतु दधिमध्वाज्यानि जुंसाणुना॥
आज्यं प्राग्वज्जनितदहनेऽत्र प्रधानादि कृत्वा
षड्भिः षड्विंशतिपरिमितैः स्वाह्वयैश्च प्रभेशे ।

---

अस्त्रमन्त्रेण विहिता उक्षा उक्षणं यत्र अत्र अञ्चिते पूजिते विष्टरे पीठे सवाम-भुवनेश्या वामदेवयुक्तया भुवनेश्वर्या आवाह्य अनया भुवनेश्वर्या च सद्यात्ते-शसुजसघोरमहिताजक्षिप्तहृत्पूजिते सद्योजातेनात्ते गृहीते ईशानेन सुतरां जस्ते अघोरेण पूजिते अजेन सद्योजातेन निक्षिप्ते प्रासादहृदयेन पूजिते चाग्नौ शिववा-मघोरनृशिवैः ईशानवामदेवाघोरतत्पुरुषेशानैः क्रमेण गर्भाधानपुंसवनसीमन्त-जातकर्मनामकरणाख्याः पञ्च क्रियाः कुर्यात् ॥ ३८ ॥

तत्र शङ्करप्रोक्ते निजोक्तनीत्या स्वगृह्योक्तक्रमेणाग्निमुखं प्रारभ्य परिधि-स्थापनात् पूर्वं तत्पार्श्वदेशे कलशं प्रपूज्य परिधिस्थापनाद्यनन्तरं पञ्चप्रणवादिना आस्येन तत्पुरुषेण पक्वं पूजामनुभिः सर्पिश्चाहृत्य भीमाजाह्वयवामवक्त्रमनुभिः अघोरसद्योजातवामदेवतत्पुरुषमन्त्रैः सौदुम्बरीमार्गजाज्यान्नानि उदुम्बरापामा-र्गघृतहवींषि प्रत्येकमष्टसहस्रं जुहोतु । तिलान् सर्षपान् मुद्गव्रीहियवांश्च पुंसा तत्पुरुषेण वसुशतमष्टोत्तरशतं च जुहोतु । घृताक्तनवदूर्वाग्राष्टसाहस्रं घृताक्तानां नवीनानां दूर्वात्रिकाणाम् अष्टोत्तरं सहस्रमपि एतेन तत्पुरुषेण जुहोतु । दधि-मध्वाज्यानि प्रत्येकमष्टशतं जुंसाणुना मृत्युंजयमन्त्रेण च जुहोतु ॥ ३९,४० ॥

अत्र रेवन्तप्रोक्तस्कन्दप्रोक्तयोर्होमयोः प्राग्वद् अष्टक्रियाभिर्जनितदहने प्रधानादि पक्वहोमादिपूजामन्त्रहोमान्तं कृत्वा प्रभेशे द्वादशे पटले वक्ष्यमाणैः षड्भिः षड्विंशतिपरिमितैश्च स्वाह्वयैः स्वनामभिः 'ओं रेवन्ताय स्वाहा' इत्या-

---

१. 'याः ॥ भी' ख. पाठः.

षण्मूलाणुद्वितयजिनवर्णाणुभिर्बाहुलेये
षड्द्वन्द्वाख्यामनुभिरपि भूरादिमन्त्रैश्च हुत्वा ॥ ४१ ॥

बैल्वीरार्येऽत्र नैपीः शरभुवि समिधोऽथ द्वयोराज्यमन्नं
षण्मन्त्रैर्लाजराजीयवतिलमपि हुत्वा शतं द्व्युत्तरं तु ।
आज्यं क्षीरं दधि क्षौद्रमपि वसुशतं व्याहृतीभिः क्रमेण
त्रिस्वाद्वक्तास्त्रिसाहस्रकमपि जुहुयात् जुंसमन्त्रेण दूर्वाः ॥

षण्मन्त्रैर्घृतमेकशो वसुशतं वैतैरधीवासगं
द्रव्यं बिल्वसमिद् घृतादिकमपूपान्तेऽत्र वा लड्डुकम् ।
भूराद्यैः क्रमशो दधिस्तनजमध्वाज्यं गणानामृचा
गौलं चाष्टशतं जुहोतु गणपे गव्यं च मूलाणुना ॥ ४३ ॥

---

दिभिः, बाहुलेये स्कन्दे षण्मूलाणुद्वितयजिनवर्णाणुभिः षण्मन्त्रैः मूलमन्त्रद्वयेन गायत्र्या च षड्द्वन्द्वाख्यामनुभिः द्वादशनाममन्त्रैरपि भूरादिमन्त्रैरपि व्याहृतिभिश्चाज्यं हुत्वा, आर्ये बैल्वीः समिधः, शरभुवि नैपीः कदम्बोद्भवाश्च समिधः। अथ द्वयोः आर्यस्कन्दयोः आज्यमन्नं लाजराजीयवतिलमपि समिदादिसप्तद्रव्यं षण्मन्त्रैः स्वस्वषण्मन्त्रैः सप्तदशकृत्व आवर्त्तितैः द्व्युत्तरं शतं हुत्वा आज्यं क्षीरं दधि क्षौद्रमपि व्याहृतीभिश्चतसृभिः क्रमेण वसुशतमष्टोत्तरशतं त्रिस्वाद्वक्ताः त्रिमधुरसिक्ता दूर्वाश्च जुंसमन्त्रेण मृत्युञ्जयेन त्रिसाहस्रमपि जुहुयात् ॥ ४१,४२ ॥

गणपे पूजामन्त्रहोमान्ते षण्मन्त्रैरेकशो वा वसुशतम् अष्टोत्तरशतं वा प्रथमं घृतं जुहोतु । पुनरेतैः षण्मन्त्रैः अधीवासगम् अधिवासगतं बिल्वसमिद्घृतादिकं बिल्वसमिदाज्यचरुलाजपृथुकलड्डुकापूपशष्कुल्याज्यानि नवद्रव्याणि । अत्र विघ्नप्रोक्ते अपूपान्ते वा लड्डुकाष्टशतं च जुहोतु । पृथुकादिनामान्युक्तानि । पुनर्भूराद्यैः क्रमशो दधिस्तनजमध्वाज्यं दधिक्षीरमध्वाज्यानि चाष्टशतं जुहोतु । गणानामृचा गौलं च, मूलाणुना गव्यं चाष्टशतं जुहोतु। अत्र गव्यशब्देन घृतमेवोच्यते इति केचिदाहुः । तथा क्रियासारे वैघ्ने—

विश्वद्रव्यैरिति शिवशिवश्रीशयोः स्कन्दशास्त्रो-
रेकन्यूनैर्द्विरदवदने द्व्युत्तरैश्चापि देवम् ।
हुत्वा मन्त्रैर्हवनविहितैः स्नापयेत् तद्धटाद्भि-
स्तत्र स्थानाद्यधिगतमहोत्पातदोषोपशान्त्यै ॥ ४४ ॥

अथाग्रतोऽग्निं प्रजनय्य कुण्डे
तत्पार्श्वदेशे कलशं प्रपूज्य ।
कुर्यात् कृशानौ परिधानपक्व-
होमार्चनामन्त्रहुतिक्रियाद्यम् ॥ ४५ ॥

---

"विघ्नगायत्रिया पक्वं षण्मन्त्रैर्जुहुयाद् घृतम् ।
अष्टोत्तरशतं भूयः समिदादीनि होमयेत् ॥
पूर्णाहुतिं तु मूलेन सर्वत्रैव ददीत पृथक् ।
बैल्वास्तु समिधः प्रोक्ता हुनेदष्टोत्तरं शतम् ॥
समिदाज्य चरून् लाजान् पृथुकापूपलड्डुकान् ।
क्रमाद् वै शष्कुलीनाज्यं व्याहृतीभिरतः परम् ॥
पृथक् पृथक् समस्ताभिरन्त्यमष्टशतं पृथक् ।
दधि क्षीरं मधु घृतं गणानांत्वेत्यृचा गुलम् ॥
मूलेनाष्टोत्तरशतं गव्यं होमं समापयेत् ॥"

इति ॥ ४३ ॥

शिवशिवश्रीशयोः विश्वद्रव्यैः त्रयोदशद्रव्यैः स्कन्दशास्त्रोः एकन्यूनैः द्वादशद्रव्यैः, द्विरदवदने द्व्युत्तरैः पञ्चदशद्रव्यैश्चापि हुत्वा होमं कृत्वा हवनविहितैः होमार्थमुक्तैर्मन्त्रैः तद्धटाद्भिः तत्तद्धोमकलशजलैः तत्र तत्र स्थानाद्यधिगतमहोत्पातदोषोपशान्त्यै स्थानादौ संभूतानां 'क्षेत्रे मृतिर्जननमि'त्याद्युक्तानां महोत्पातदोषाणामुपशान्त्यै देवं स्नापयेत् ॥ ४४ ॥

प्रायश्चित्तहोमं वक्ति — अथाग्रत इति। अथ देवस्याग्रतः कुण्डेऽग्निं यथोक्तक्रमेण प्रजनय्य तत्पार्श्वदेशे कलशं च प्रपूज्य कृशानौ परिधानपक्वहोमार्चनामन्त्रहुतिक्रियाद्यं परिधिस्थापनादिपक्वहोमपूजामन्त्रहोमपूर्णाहुतीः कुर्यात् ॥ ४५ ॥

मन्त्रैः पञ्चकचोदितैस्त्रिगुणसाहस्रं घृतं साष्टकं
साहस्रं समिदाज्यशालितिललाजानां पृथङ् मूलतः।
भूराद्यैर्जुहुयात् पलाशसमिधोऽथ द्वादशोर्ध्वं शतं
सावित्र्याष्टशतं सदुग्धदधिमध्वाज्यानि चान्ते पृथक्॥
एकत्रेति समन्ततोऽस्य चतसृष्वाशासु चाष्टासु वा
तद्वद्राशिषु वा विहृत्य दहनं कुण्डेषु तन्मन्त्रतः।
तत्तद्दोषबलाबलानुसरणाद्धुत्वा समुक्तक्रमात्
तत्सम्पातघटैर्गुरुः स्नपयेद् देवं च मध्यादिभिः॥ ४७॥
ब्राह्मी मूलविभावसौ परिहुताशेष्वब्धिसङ्ख्येषु चेत्
क्षीर्युत्थाष्टसु चेत् पलाशखदिराश्वत्थोत्थिता प्लक्षजा।

---

पञ्चकचोदितैः पञ्चकाभिषेके कथितैर्मन्त्रैः त्रिगुणसाहस्रं स्वस्वपञ्च-मन्त्रैः षट्छतावृत्त्या त्रिसहस्रं घृतं जुहुयात्। समिदाज्यशालितिललाजानां पञ्चानां द्रव्याणां साष्टकं साहस्रं पृथगष्टोत्तरसहस्रं मूलतो जुहुयात्। अथ पलाशसमिधः भूराद्यैरष्टविंशत्यावर्तितैश्चतुर्भिर्मन्त्रैः द्वादशोर्ध्वं शतं च, पुनरन्ते सदुग्धदधिमध्वाज्यानि चत्वारि सावित्र्या 'तत्सवितुरि'त्याद्यया पृथगष्टशतं जुहुयात्॥ ४६॥

तत्तद्दोषबलाबलानुसरणात् तस्य तस्य दोषस्य दौर्बल्यप्राबल्यानुसारेण इत्येकत्र कुण्डे वास्य कुण्डस्य समन्ततः चतसृष्वष्टास्वाशास्वपि वा तद्वद्राशिषु मेषादिद्वादशराशिगतस्थानेषु वा कुण्डेषु दहनमग्निं तन्मन्त्रतः विहरणोक्तमन्त्रैर्विहृत्य गुरुमूर्तिपाः समुक्तक्रमात् हुत्वा गुरुरेव मध्यादिभिस्तत्सम्पातघटैर्देवं स्नपयेत्॥ ४७॥

मूलविभावसौ मध्यकुण्डस्थाग्नौ ब्राह्मी पालाशी समित्। परिहुताशेषु परितः स्थितेष्वग्निषु अब्धिसंख्येषु चतुस्संख्येषु चेत् क्षीर्युत्था स्वस्वतोरणक्रमेण क्षीरवृक्षोद्भवा समित्। परिहुताशेष्वष्टसु चेत् पलाशखदिराश्वत्थोत्थिता पलाशोत्थिता खदिरोत्थिता अश्वत्थोत्थिता च प्लक्षजा वटभवा बैल्वी

---

१. ब्रह्मद्रुजास्तु समिधो गुरुकुण्डहोम्यास्ता वा स्वतोरणभुवोऽथ चतुर्दिशासु। ईशाधिवासविहिताश्च तथाष्टदिक्षु पालाश्य एव दहनेषु पुनर्दिषट्सु। पत' क. ख. ग. पाठः

प्रागादिक्रमतः समिद् वटभवा बैल्वी तथौदुम्बरी
काश्मर्यप्यखिलेषु वा द्विजभवा सैवार्कसङ्ख्येषु चेत् ॥
पतनादिषु दोषेषु प्रकरोतु हरौ हरे च हुतमेवम् ।
शिवशार्ङ्गिण्युभयं वै शेषेष्वपि कैश्चिदिष्यते कुहचित् ॥
प्रासादस्य त्रिकोणं शशिदिशि यमदिश्यर्धचन्द्राभमेतत्
कुण्डं चाधाय वह्निं पृथगथ जनयित्वा समुक्तक्रमेण ।
होमं कुर्यात् कुमार्यां हरिवरुणदिशोश्चापि तुर्यश्रवृत्ते
कुण्डे दोषे गरिष्ठे चरतु हवनकर्मोत्तरैन्द्रादिक्लृप्त्या ॥५०॥
हुत्वात्र प्रथमं दिगुत्तरशतं दुर्गाभिराज्यं ततो
जाताद्यैर्निजमूलतश्च पृतनाद्यैश्च त्रिभिर्व्युत्क्रमात् ।

---

औदुम्वरी काश्मर्यपि प्रागादिक्रमतः समित् । अखिलेष्वपि परितः स्थितेषु चतुर्ष्वष्टसु च द्विजभवा पालाशी वा । अर्कसंख्येषु द्वादशसु चेत् सैव पालाश्येव समित् स्यात् ॥ ४८ ॥

पतनादिषु 'बिम्बस्य पातचलनादिरि'त्याद्युक्तेषु दोषेषु सत्सु हरौ हरे च एवं हुतं होमं प्रकरोतु । शिवशार्ङ्गिणि उभयं द्विविधं होमं प्रकरोतु । शेषेषु देवेषु कुहचिद् विघ्नादिष्वपि कैश्चिदिष्यते ॥ ४९ ॥

दुर्गायां प्रायश्चित्तहोमविशेषमाह—प्रासादस्येति । (कुमार्यां)प्रासादस्य शशिदिशि उत्तरभागे त्रिकोणं कुण्डं, यमदिशि दक्षिणभागेऽर्धचन्द्राभम् एतत् प्रस्तुतं कुण्डं चाधाय समुक्तक्रमेण सप्तक्रियाभिर्वह्निं पृथग् जनयित्वाथ होमं कुर्यात् । होममिति जातावेकवचनम् । दोषे गरिष्ठे गुरुतरे सति हरिवरुणदिशोः प्राक्पश्चिमदिशोश्चापि तुर्यश्रवृत्ते चतुरश्रे वृत्ते चापि कुण्डे तद्वदग्निं पृथग् जनयित्वा उत्तरैन्द्रादिक्लृप्त्या हवनकर्म होमं चरतु । तत्र उत्तरैन्द्रादिक्लृप्त्येति उत्तरप्राग्दक्षिणपश्चिमादिक्क्रमेणेति केचिद्, उत्तरदक्षिणप्राक्पश्चिमदिक्क्रमेणेति केचिदाहुः ॥ ५० ॥

अत्र होमे प्रथमं दुर्गाभिः 'जातवेदस' इत्यादिभिः पञ्चभिर्दुर्गाभिः दिगुत्तरशतं द्वाविंशत्यावृत्त्या दशोत्तरशतमाज्यं हुत्वा ततो जाताद्यैः 'जातवेदस' इत्याद्यैः पञ्चभिः, निजमूलतः, पृतनाद्यैः 'पृतनाजितमि'त्याद्यैः व्यु-

---

1. 'ण्डद्वयं चा' ङ. पाठः.

मन्त्रैरष्टशतं हुनेत् खदिरविप्राश्वत्थकप्लक्षजा
 नैयग्रोधमयूरबिल्वसमिधः सौदुम्बरीः साञ्जलीः ॥५१॥
तिलसर्षपनीवारान् मूलेन दधिमाक्षिकम् ।
आज्यं च मृत्युञ्जयतो जुहुयात् तावदन्ततः ॥ ५२ ॥
प्रासादं परितो विहृत्य गुरुकुण्डादग्निमग्राहितात्
 कुर्युः शान्तिहुतानि पञ्च नव वाथाग्रेऽखिलान्येव वा ।
स्कन्दे द्वादशवासराद्यहरहस्तत्स्नानपूजादिभि-
 स्त्र्यावृत्त्यैकदिनेऽथवात्र च घटाः कार्याः पृथक् कर्मसु ॥
अष्टोर्ध्वं समिधः शतं सकलनाम्ना बीजनाम्ना चरुं
 गोसर्पिर्महताऽत्र सर्षपतिलान् बीजाणुना जुह्वतु ।

---

त्क्रमात् त्रिभिः 'पृतनाजितं' 'विश्वानि नः' 'अग्ने त्वं पारये'ति त्रिभिः एवं नवभिर्मन्त्रैः खदिरविप्राश्वत्थकप्लक्षजाः नैयग्रोधमयूरबिल्वसमिधः सौदुम्बरीः साञ्जलीश्च नव समिधः क्रमेणाष्टशतं हुनेत् । (മ[illegible]ലാടി. അറങ്ങ ലി-മുക്കാറി.) ॥ ५१ ॥

पुनः तिलसर्षपनीवारान् मूलेन, दधिमाक्षिकमाज्यं च मृत्युञ्जयतश्च अन्ततः अवसाने तावद् अष्टशतं जुहुयात् । तत्कलशैरपि तामभिषिञ्चेदित्यपि सिद्धं भवति ॥ ५२ ॥

अथ स्कन्दे अग्राहितात् पुरोभागे स्थितात् गुरुकुण्डाज्जनितमग्निं प्रासादं परितः प्रासादस्य परितश्चतसृषु दिक्ष्वष्टासु दिक्षु वा कुण्डेषु विहृत्य गुरुमूर्तिपाः पञ्च नव वा शान्तिहुतानि शान्त्याह्वयानि हवनानि कुर्युः । अखिलान्यपि हुतानि अग्र एव वा कुर्युः । एतान् होमांस्तु द्वादशवासरादि-नियमेनाहरहः तत्स्नानपूजादिभिः कुर्युः । अथवा आपत्पक्षेऽपि एकदिनेऽपि त्र्यावृत्त्या त्रिकृत्वः कुर्युः । आपत्पक्षे कर्मसु त्रिष्वपि पृथक् घटाः कार्याः, पृथगेव होमाः कलशाभिषेकाश्च कार्या इत्यर्थः ॥ ५३ ॥

अत्र होमे सकलनाम्ना सकलाभिधानमन्त्रेण समिधः (अष्टोर्ध्वं शतं) जुह्वतु । बीजनाम्ना बीजाभिधानमन्त्रेण चरुं जुह्वतु । महता महन्मन्त्रेण गोसर्पिः । गोसर्पिरित्यनेन गवामाज्यमेव सर्वकर्मणि ग्राह्यमित्युक्तं भवति ।

**मध्ये दिक्षु विदिक्षु नीपवटजाः सोदुम्बराश्वत्थजाः**
**प्लक्षब्रह्ममधूकजाश्च समिधो जम्बूकपित्थोत्थिताः ॥५४॥**
**शान्तिहोममथ शर्वदिशि श्रुत्यश्रकुण्डजनितात्महुताशे ।**
**आदधीत सकलेष्विह पक्केज्याणुहुत्यवधिकर्म पुरोवत् ॥**
**सर्पिः स्वोपनिषद्द्विषड्वसुजिनार्णाणूपचारैर्नृसू-**
**क्तोत्थाभिर्जिनवारमृग्भिरपि हुत्वाज्यान्तरालेषु तैः ।**
**विष्णौ मार्गभवामृताः सहसैन्द्रीभद्रिकाः साञ्जली-**
**दूर्वासर्षपशालिकान् यवतिलान्नं चोक्तसङ्ख्यं हुनेत् ॥५६॥**

---

सर्षपतिलान् सर्षपान् तिलांश्च बीजाणुना पूर्वोक्तेन बीजमन्त्रेण जुहुतु । अत्र मध्ये दिक्षु विदिक्षु च क्रमात् नीपजाः वटजाः उदुम्बरजाः अश्वत्थ-जाः प्लक्षजाः ब्रह्मजाः मधूकजाः जम्बूत्थिताः कपित्थोत्थिताश्च समिधः स्युः ॥५४॥

**अथ** सकलेषु शर्वदिशि ईशकोणे श्रुत्यश्रकुण्डजनितात्महुताशे चतुर-श्रकुण्डजनितस्वस्वाग्नौ शान्तिहोममादधीत। इह पक्केज्याणुहुत्यवधिकर्म पक्कहो-मपूजामन्त्रहोमान्तं कर्म पुरोवत् पूर्ववदादधीत ॥ ५५ ॥

**विष्णौ** स्वोपनिषद्द्विषड्वसुजिनार्णाणूपचारैः स्वोपनिषदः स्वस्य पञ्चतत्त्वानि, द्विषडर्णं द्वादशाक्षरं, वस्वर्णमष्टाक्षरं, जिनार्णं गायत्री, उपचारो 'जितं त' इति एतैर्नवभिर्मन्त्रैः, पुनर्नृसूक्तोत्थाभिः पुरुषसूक्तभवाभिः षोड-शभिः ऋग्भिः, इति पञ्चविंशत्या मन्त्रैः जिनवारं जिनाश्चतुर्विंशतिः ताव-द्वारं सर्पिः प्रथमं हुत्वा तैरेव मन्त्रैः आज्यान्तरालेषु मार्गभवामृताः अपामा-र्गसमिधोऽमृतलतोद्भवाश्च, सहसैन्द्रीभद्रिकाः सहाभिः सहिता ऐन्द्रीभद्रिकाः सहाः, ऐन्द्रीः, भद्रिकाश्च, साञ्जलीः अञ्जलिभिः सहिताः अञ्जलीश्च, दूर्वासर्षपशालिकान् दूर्वाः, सर्षपान्, शालींश्च, यवतिलान्नं च यवांस्ति-लान्, अन्नं च एतानि द्वादशद्रव्याणि उक्तसंख्यं चतुर्विंशतिवारं हुनेत् ॥ ५६ ॥

---

१. 'शायां क्लृप्तकु' क. ख. ग. पाठः.

गायत्र्या निजया पयोद्रुसमिदाज्यान्नानि दूर्वा मधु-
क्षीराज्यस्नपिता वसूत्तरशतं लाजाः सराजीतिलाः ।
होतव्या यवशालिसक्तुघृतयुक्ता धूर्जटौ ते समि-
त्सर्पिर्मध्यगदौर्व्यक..स्तिलयवव्यत्यासिनश्चेषुजे ॥ ५७ ॥

विघ्नेशे हवनं गिरीशवदिदं प्रायोऽत्र लाजादिकं
षट्कं स्वोदितमेव शास्तरि पुनः साहस्रमष्टाधिकम् ।
गायत्र्यैव तिलान् घृतं च जुहुयाद् यागाणुना केवलं
तावत् सुम्भरिपौ घृतं हरिहरे द्व्युक्तं पृथक् प्राचरेत् ॥

धूर्जटौ शिवे पयोद्रुसमिदाज्यान्नानि पयोद्रुमाः क्षीरवृक्षाः प्लक्षो-दुम्बरवटाश्वत्थक्रमगताः तेषां समिधः, आज्यमन्नं च, पुनः मधुक्षीराज्यस्नपि-ताः त्रिमधुरसिक्ता दूर्वाः । अत्र सर्वत्र त्रिमधुरोक्तौ मधुक्षीराज्यान्येवेत्यप्य-नेनोक्तं भवति । लाजाः, सराजीतिलाः सर्षपास्तिलाश्च, यवशालिसक्तुघृतयुक्ताः यवाः शालयः सक्तवो घृतं च एते चतुर्दश निजया गायत्र्या तत्पुरुषेण वसू-त्तरशतमष्टाधिकं शतं होतव्याः । इषुजे त[1] एव समित्सर्पिर्मध्यगदौर्व्यकाः समित् दूर्वा सर्पिः क्रमात् तिलयवव्यत्यासिनः तिलयवव्यत्यासयुक्ता यवति-लक्रमेणेत्यर्थः । स्कन्दे त्वेतत्क्रमेण स्वगायत्र्यैवाष्टशतं चतुर्दश द्रव्याणि होत-व्यानीत्यर्थः ॥ ५७ ॥

विघ्नेशे इदं हवनं प्रायो गिरीशवत् शिवोक्तवत् । अत्र तु लाजादिकं षट्कं स्वोदितमेव लाजपृथुकलड्डुकापूपशष्कुल्याज्यानि । शास्तरि पुनर्गाय-त्र्यैव तिलान् घृतं च पृथगष्टाधिकं साहस्रं जुहुयात् । सुम्भरिपौ वक्ष्यमाणेन यागाणुना केवलं घृतं तावदष्टसाहस्रं जुहुयात् । हरिहरे द्व्युक्तं शैवोक्तं वैष्णवोक्तं च पृथगुभयत्राचरेत् ॥ ५८ ॥

१. 'तु ॥

पूर्वोदितेषु दहनादिषु घोरसत्त्वैः क्षेत्रे श्रितेऽनवधृतावपि निष्क्रियायाः ।
हुत्वेति संस्नपितयेत् कलशेन शेषेणोक्षेच्च तत्र मनुविन्मधुसम्भवादौ ॥

कुर्याद् वान्यां तु शान्तिं शिवहरिति यतः स्वस्तिदाः पक्षमाज्यं
वास्तोर्वास्तोश्च हुत्वाशमिति च पुनरिन्द्राग्न्यूर्वाभो कयानः ।

**हुत्वेति तत्तदुदितक्रमतोऽभिषिच्य**
**तं तं तदीयकलशेन यजेच्च देवम् ।**

---

इति तत्तदुदितक्रमतः तत्र तत्र हुत्वा तदीयेन तदीयेन च कलशेन तं तं देवमभिषिच्य यजेच्च । अत्र चशब्देनापरः शान्तिहोमोऽपि सूचितः । तथा पाशुपते —

"यत इन्द्रादिमन्त्राभ्यां पक्वं द्वाभ्यां तु होमयेत् ।"

'यत इन्द्र भयामहे', 'स्वस्तिदा विशस्पतिरि'ति मन्त्रद्वयेन पक्वं होमयेदित्यर्थः ।

"वास्तोष्पते वास्तोष्पते शन्नो देवीरभीत्यृचा ॥"

'वास्तोष्पते प्रतिजानीहि', 'वास्तोष्पते शग्मया', 'शन्नोदेवीरभिष्टये ।'

"इन्द्राग्नीरोचना भूयः कयानश्चित्र इत्यपि ।
को अद्य युङ्क्तेति हुत्वा भवतन्न इति क्रमात् ॥
षड्भिः कनिक्रदाद्यैस्तु भूयः स्वस्त्यादि चाष्टभिः ।
वास्तोष्पते ध्रुवाद्यैस्तु षड्भिर्जातादिपञ्चभिः ।"

जातादीति सद्योजातादिभिरित्यर्थः ।

"जातवेदादिभिस्तावच्छन्नवर्गैश्च पौरुषैः ।
व्याहृतीभिः क्रमाद्धुत्वा सम्पातविधिना घृतम् ॥
ततो ब्रह्मसमिच्चान्नलाजसिद्धार्थकांस्तिलान् ।
यवान् मुद्गान् क्रमादेतैः पृथगाज्यान्तरे हुनेत् ॥
पुंसा चतुर्दशद्रव्यैरष्टोत्तरशतं पृथक् ।
होमं समाप्य तस्याग्रे शमीपर्णेषु दापयेत् ॥
हुतशेषं विधानेन शन्नोदेवीरिति ब्रुवन् ।

---

तद्वत् को अद्य मन्त्री भवतामिति ततश्शाकुनस्वस्तिवास्तो
मन्त्रैः पञ्चाणुभिर्दौर्गमनुभिरनलेशं पृथग् व्याहृतीभिः ॥
गायत्र्या द्विजसमिदन्नलाजराजीर्हुत्वाज्यान्तरिततया तिलान् यवांश्च ।
मुद्गांश्चाहितबलिरन्नशेषतोऽग्रे शान्त्याम्भे स्नपयतु तद् घटेन देवम् ॥
सर्वेषु निष्कृतिहुतेषु गरिष्टदोषे शान्त्यम्बुसम्पतितशेषमवप्लुताम्भः ।
गव्यं समस्तमथ सर्वहुतावशेषं पात्रेषु षट्सु हुतभस्म च सन्निधाय ॥
स्वास्त्रेण तानि परिपूज्य समूर्तिपालस्तेनाभिमन्त्र्य सहसाष्टसहस्रवारम् ।
तैर्मृष्टलिप्तसनिमित्तभुवि क्रमेण प्रोक्ष्यास्त्रतो यजतु चाष्टदले तदब्जम् ॥
श्रीनारा' क, ग, घ, पाठः।

श्वस्पर्शनादिविषये सकलेष्वथैश्यां
दिश्येव शान्तिहवनं तनुयादथैतत् ॥ ५९ ॥
श्रीनारायणसूक्तजैर्मनुमितैर्मन्त्रैरिहैकैकशः
श्रीसूक्तप्रभवैस्त्रिपञ्चभिरतोदेवेति षड्भिस्तथा ।
नासत्षोडशभिर्द्विसप्तदशकेनांहोमुचां संसमि-
त्पूर्वैरब्ध्यणुभिः सभद्रचरणैः सारायिपञ्चाणुभिः ॥ ६० ॥
गायत्र्या निजया स्वपञ्चमनुभिश्चाहुत्य सर्पिः क्रमात्
पश्चात् साष्टशतं जुहोतु समिधोऽश्वत्थोत्थिताः खादिरीः ।
प्लाक्षीर्ब्रह्ममयीः सपाटलवटोद्भूताः स्वमूलाणुना
होमान्ते कलशेन देवमदसीयेनापि सिक्त्वा यजेत् ॥ ६१ ॥

---

हुतमन्त्रैश्च संस्नाप्य सम्पातकलशेन तम् ॥
प्रोक्षयित्वा च तत्स्थानं दक्षिणां गां प्रदापयेत् ।"

इति ।

"महत्स्वहुषु चोग्रेषु निमित्तेषूभयं स्मृतम् ।
अल्पेष्वन्यतमं वापि प्रायश्चित्तमथानयोः ॥"

इति । अथ सकलेषु श्वस्पर्शनादिविषये श्वचोरस्पर्शनादिनिमित्तेऽपि ऐश्यां दिश्येव एतदपि शान्तिहवनं तनुयात् । अत्र पूर्वं पञ्चगव्यावगाहानन्तरं

"शुद्धाद्भिस्त्वग्रसैर्गन्धैस्तीर्थतोयैश्च शोधयेत् ।"

इत्युक्तप्रकारेण शोधयित्वा प्रायश्चित्तशान्तिहोमाद्यनन्तरमेतच्छान्तिहोमं कुर्यात् ॥ ५९ ॥

इह होमे पूजामन्त्रहोमानन्तरं श्रीनारायणसूक्तजैर्मनुमितैश्चतुर्दशमन्त्रैः, श्रीसूक्तप्रभवैः त्रिपञ्चभिः पञ्चदशमन्त्रैः, 'अतो देवे'ति षड्भिः, तथा नासत्षोडशभिः 'नासदासीदि'त्यादिषोडशमन्त्रैः, पुनरंहोमुचां द्विसप्तदशकेन चतुस्त्रिंशता, संसमित्पूर्वैः 'संसमिदि'त्यादिभिः अब्ध्यणुभिश्चतुर्मन्त्रैः, सभद्रचरणैः 'भद्रं नो अपी'त्यादिपादयुक्तैरेतैः, सारायिपञ्चाणुभिः 'आरायिकाण' इत्यादिपञ्चमन्त्रैर्युक्तैरेतैः, निजगायत्र्या, स्वपञ्चमनुभिः स्वस्वपञ्चतत्त्वैश्च इत्येकाधिकशतमन्त्रैरेकैकशः क्रमात् सर्पिराहुत्य पश्चात् अश्वत्थोत्थिताः खादिरीः प्लाक्षीः ब्रह्ममयीः, सपाटलवटोद्भूताः, (പാടലം=പാതിരി) एताः षट्

---

१. 'स्वैकत' ख. घ. च. पाठः. २. 'र्शादि' ख. घ. पाठः. ३. 'क्रमेण' ख. घ ङ. च. पाठः.

देवाग्रे प्रजनय्य वह्निमथ तत्पार्श्वेऽष्टपत्रेऽम्बुजे
पीठाराधिपुरस्सरेण विधिना संपूर्य कुम्भं गुरुः ।
तत्त्वावाहननिष्ठमत्र सुविधायावाह्य मूलाणुना
साङ्गीकृत्य यजेत तं हुतवहे कुर्यात् परिध्यादि च ॥ ६२ ॥
पूजामन्त्रहुतान्तमत्र सुविधायापीनिरीत्याखिलै-
स्तत्त्वैराज्यहुतिं विधाय मनुबिम्बेऽन्तः समायोज्य च ।
सम्पातं परिकल्प्य विश्वविलयं भूयः सिसृक्षार्थना-
पूर्वं प्राप्य बहिः स्वमूलमनुनाष्टाज्याहुतिं चाचरेत् ॥
सृष्टिक्रमात् स्वाखिलतत्त्वमन्त्रै-
राज्यं यथाशक्ति पृथग् जुहोतु ।
हुत्वाथ मूलेन समिद्घृतादि-
द्रव्याणि होमं सुसमापयेच्च ॥ ६४ ॥

---

सामिधः स्वमूलाणुनाष्टशतं जुहोतु । होमान्ते अदर्शियेन अमुष्मात् सम्भूतेन कलशेन देवमपि सिक्त्वा यजेत् ॥ ६०, ६१ ॥

अथ तत्त्वहोममाह — **देवाग्र** इति । अथ गुरुः स्वयं देवाग्रे देवस्याग्रगतमण्डपे चतुरश्रकुण्डे वह्निं प्रजनय्य तत्पार्श्वे अष्टपत्रेऽम्बुजे पीठाराधिपुरस्सरं पीठपूजापूर्वं विधिना ब्रह्मकलशोक्तप्रकारेण कुम्भं सम्पूर्य तत्त्वावाहननिष्ठं तत्त्वावाहनपर्यन्तं कर्म सुविधायात्र मूलाणुनावाह्य साङ्गीकृत्य तं देवं कलशस्थं यजेत । हुतवहेऽग्नौ परिध्यादि परिधिस्थापनादि च कुर्यात् ॥ ६२ ॥

**अत्रापि** पूजामन्त्रहुतान्तं सुविधाय स्वैः स्वैरखिलैस्तत्त्वैरपीति रीत्या संहारक्रमेणाज्यहुतिं विधायान्तर्गत्वा मनुबिम्बे तत्त्वैर्मन्त्रैः संहारक्रमेण (सम्पातं) समायोज्य विश्वविलयं सर्वतत्त्वानां लयं परिकल्प्य भूयः सिसृक्षार्थनापूर्वं सृष्टिविधानाय देवं प्रार्थ्य नाडीसन्धानकृद् बहिरग्निसमीपं स्वमूलमनुनाष्टाज्याहुतिं चाचरेत् ॥ ६३ ॥

**स्वाखिलतत्त्वमन्त्रैः** स्वस्य स्वस्याखिलैस्तत्त्वमन्त्रैर्यथाशक्तिसंख्यमाज्यं पृथक् पृथक् (सृष्टिक्रमात्) जुहोतु । यथाशक्तीत्यनेन शिवे स्वानुरूपात् पञ्चतत्त्वैर्होमश्च सूचितः । अथ मूलेन समिद्घृतादिद्रव्याणि चत्वारि हुत्वा होमं सुसमापयेच्च ॥ ६४ ॥

---

१. 'त्रा' ग. पाठः. २. 'द्धि' ख., 'ति' म. पाठः. १. 'त्येकशस्त' इति मूलकोशपाठः.

सम्पातं प्रसमर्प्य वह्निगतचैतन्यं समुद्वास्य त-
त्कुम्भे तं प्रतिजप्य साधितसमग्रात्मोदयं भावयेत् ।
पीठेज्यादिविधानतः स्नपितयेत् संशुद्धतत्त्वोन्मिष-
त्स्वाङ्गं तत्कलशेन देवमथ तद्विन्यासपूर्वं यजेत् ॥ ६५ ॥

प्रागुक्तक्लृप्त्या कलशान् यथार्हं
सम्पूर्य सम्पूज्य ततोऽभिषिच्य ।
सम्पूजयेद् देवमवस्रुतेन
सम्प्रोक्ष्य कुर्यात् परिषद्बलिं च ॥ ६६ ॥

---

सम्पातं तत्कुम्भे प्रसमर्प्य वह्निगतचैतन्यं च समुद्वास्य तान् मन्त्रान् प्रतिजप्य तं देवं साधितसमग्रात्मोदयं साधितः सम्पादितः समग्रः सम्पूर्णः आत्मनः देवस्योदयः प्रादुर्भावो यस्मिन् कलशे तं तथा भावयेत् । अथ पीठेज्यादिविधानतः (तत्कलशेन) स्नपितयेत् स्नपितं कुर्यात् । संशुद्धतत्त्वोन्मिषत्स्वाङ्गं सम्यक् शुद्धैस्तत्त्वैः प्रकाशीभवत्स्वाङ्गयुक्तं देवं तद्विन्यासपूर्वं तत्त्वन्यासादिकं पूर्वं यथा भवति तथा यजेच्च ॥ ६५ ॥

ततः प्रागुक्तक्लृप्त्या कलशपटलोक्तप्रकारेण (कलशान्) यथार्हं यथायोग्यं सम्पूर्य सम्पूज्य देवमभिषिच्य सम्पूजयेत् । अवस्रुतेन सर्वत्र प्रोक्ष्य परिषद्बलिं च कुर्यात् ॥ ६६ ॥

---

१. च ॥ सवत्सां गां दाहादिषु गुरुरुपाहूय शान्त्याख्ययेष्ट्वा
प्रदायास्यै दूर्वां तदहनि पयः पद्मपत्रेऽथ दुह्यात् ।
सुमृत्पात्रे त्वातप्य घृतमपि कुर्याद् दधीति द्वितीये
तृतीये तु क्षीरं शकृदपि च गोमूत्रमप्यादधीत ॥
स्वमन्त्रैराज्यान्तान्यधिकमलपत्रेष्वधः कूर्चपत्रे-
ष्वमून्याधायेष्ट्वा विधिवदपरास्मिन्नथायोज्य तानि ।
मथित्वा तारेणाभिहतमभिमन्त्र्येषुमन्त्रैः सहस्रं
स्थलं प्रोक्षेद् दग्धं निखिलमनुना क्षालयेच्चैव बिम्बम् ॥
खननादि ततः करोतु शुद्धोदकपूरेण तु पूरणं पुरोऽत्र ।
चरतूदितगव्यशोधनं प्रागथवा प्लावनकं स्थलोक्षणं च ॥
लेपादौ त्विष्टपीठे न्यसतु ससहा भद्रा निशा राजिदूर्वा-
क्षीरित्वक्पिष्टमग्रे शरमनुभिरधः कूर्चपात्रेऽक्षता वा ।

## इति प्रतिष्ठापितमन्त्रबिम्बके विशोधनं किञ्चन सम्प्रदर्शितम् ।

इति उक्तप्रकारेण प्रतिष्ठापितमन्त्रबिम्बके भूपरिग्रहादितीर्थस्नानपर्यन्तैः कर्मभिः सम्यक् स्थिरीकृत्य स्थापिते मन्त्रमये बिम्बे उत्पातेषु सत्सु विशोधनं विविधं शोधनं किञ्चन किञ्चिन्मात्रं सम्प्रदर्शितम् । निमित्तानां शोधनानां च बाहुविध्यान्नैः सकलं प्रतिपादयितुमशक्यमेव । अत्र प्रासादादिस्थाने दग्धे सति शान्तिनाम्ना पयस्विनीं सवत्सां धेनुमाहूय दूर्वादिकं तस्यै दत्त्वा 'शान्त्यै नम' इत्यनेनेष्ट्वा पद्मपत्रे पयो दुहेत् । तत्क्षीरं नवीने मृत्पात्रे

---

तद्वत् प्राच्यं प्रसाध्य प्रतिकृतिममुना स्नानकाले त्रिसप्ता-
वृत्त्योद्धृष्याथवोल्लिप्य यजतु च पुरः सेकतोऽन्यत् पुरोवत् ॥

क्षीरित्वगद्भिरभिषिच्य च पिप्पलत्वङ्नागाब्जकेसरसहानिजगन्धलक्ष्माः ।
तेन स्त्रपञ्चमनुभिस्तु यथोक्तक्लृप्त्या सिद्धेन वा समनुलिम्पतु देशिकशः ॥

श्वस्पर्शनादिविषये सकलेषु शुद्धाद्द्ववगन्धतीर्थसलिलैरपि चावगाहः ।
गव्यावगाहमनुकार्य इहापि शर्व्यां दिश्येत्र शान्तिहवनं तनुयादथैतत् ॥

श्वसृगालादिप्रसवे तूष्णीमनिनीय तत्र दिवसानि ।
त्रीण्यथ तत् स्पर्शनवत् कुर्यात् सकलं विशेषज्ञः ॥

चोरकार्वन्त्यजैः स्पृष्टे बिम्बे च ब्रह्महादिभिः ।
राज्यादिलिप्ते क्षुद्राणुपूजिते चोक्तशुद्धिकृत् ॥

कृत्वैश्यां हुतभुङ्मुखादि दश होत्राज्यं सहस्रावरं
सावित्र्या च तिलान् स्वमूलमनुना तावत्समित्सर्पिषी ।
सर्पिस्तु द्विषडर्णतो मुररिपौ होमावसाने पुन-
स्तत्सम्पातघटेन देवमभिषिच्याभ्यर्चयेत् कल्पवित् ॥

भूसङ्ग्रहे स्यादिह शङ्कुसूत्रभङ्गादिषु स्वात्रत आज्यहोमः ।
तत्कर्षणे साष्टशतादिसङ्ख्यं युगादिभङ्गादिषु मूलतो वा ॥

वर्षैस्त्रिभिः कर्षणमिष्टकोषधै(कै)केन गर्भो दिवसैर्द्विषड्भिः ।
आवर्त्यतां शान्तिहुते च कुर्यात् तदेव वर्षेण गृहे प्रवृत्ते ॥

स्यात् स्थानशुद्धिर्मृतिसम्भवादौ सशान्तिहोमोऽपि यथोपपत्ति ।
स्वनिष्कृतिः श्वप्रसवादिदोषे गृहे प्रवृत्तेष्वखिलेषु चापि ॥ नष्टेषु' क ग. घ. पाठः.

१. 'न' घ. ङ च. पाठः.

अथाङ्कुरादेश्च तदङ्गभावतः
प्रवर्तितस्योपहतौ तदुच्यते ॥ ९७ ॥

---

प्रताप्य तक्रेण च योजयित्वा दधिभूतं तत् पलाशदण्डेन निर्मथ्य नवनीतमाहृत्य तत् प्रताप्याज्यमाहरेत् । अपरेद्युस्तथा तामेव गां तत्पूजापुरस्सरं पद्मपत्रे दुग्ध्वा तथातप्य दधि चाहरेत् । तृतीयेऽह्नि गोमूत्रं गोमयं क्षीरं च तथैव पद्मपत्रेष्वानीय पृथक् पृथगधःकूर्चेषु पद्मपत्रेषु संस्थाप्य पञ्चमन्त्रैः सम्पूज्य पुनरपरस्मिन् पद्मपत्रे गोमूत्रादिक्रमेण स्वस्वमन्त्रैः संयोज्य प्रणवेन मथित्वा सम्पूज्याष्टसहस्रं स्वस्वपञ्चतत्त्वानि संजप्य तेन दग्धस्थानं सर्वं संप्रोक्ष्य प्रतिमां चाभिषिच्य भस्मादिकं त्यक्त्वा शुद्धजलैराप्लाव्य खननादिविधिं कुर्यात् । तथाच विष्णुसंहितायां —

"दाहे पयस्वतीं धेनुं शान्तिनाम्ना समाह्वयेत् ।
दूर्वादिकं निवेद्येष्ट्वा पद्मपत्रे पयो दुहेत् ॥
आतप्य दधि निर्मथ्य तत्संस्कृत्याज्यमाहरेत् ।
अपरेद्युस्तथा दुग्ध्वा दधि चैवं प्रकल्पयेत् ॥
तृतीयेऽह्नि शकृन्मूत्रं क्षीरं चैवं तथाहरेत् ।
पद्मपत्रेषु सम्पूज्य क्रमान्मूत्रादिपञ्चकम् ॥
पञ्चमन्त्रैस्तु संयोज्य मथित्वा प्रणवेन च ।
सम्पूज्याष्टसहस्रं तु पञ्चोपनिषदो जपेत् ॥
तेन संप्रोक्ष्य सर्वत्र स्नापयेत् प्रतिमां ततः ।
हृत्वा भस्मादिकं तोयैः प्लावयित्वा समन्ततः ॥
गोनिवासादि कर्तव्यं प्रायश्चित्तं यथाक्रमम् ।"

इति । यद्यपि सामान्यशोधनानि सामान्यप्रायश्चित्तहवनानि चात्रोक्तान्येव । तथापि एतदादीनां शोधनानामनुक्तत्वाद् विशोधनं किञ्चन सम्प्रदर्शितमित्यभिहितम् । अथ तदङ्गभावतः तस्य प्रतिष्ठाकर्मणोऽङ्गतया प्रवर्तितस्य सम्पादितस्याङ्कुरादेः उपहतौ विनाशादिदोषे प्राप्ते तत्प्रायश्चित्तमुच्यते ॥ ९७ ॥

नष्टेषु दुष्टेष्वथवोप्तबीजेषूप्त्वा स्वपात्रेष्वपरेषु वाथ ।
विशुद्धया स्वीयचिता सुयोज्य मूलाणुनावाह्य समर्चयेच्च ॥

तत्र त्र्यहात् प्राङ् निजबीजवापं
समाचरेत् तण्डुलवापमूर्ध्वम् ।
हुत्वेषुतत्त्वैरिषुवर्गसङ्ख्यं
पृथग् घृतं तत्र समर्पयेच्च ॥ ६९ ॥

सतारकव्याहृतिपीठमन्त्रः
स्वमूलमन्त्राष्टघृताभिरुद्धः ।

---

तत्र बीजाङ्कुराणामुपहतौ प्रायश्चित्तमाह —**नष्टेष्विति**। अथ यथा-कालं यथोक्तविधिनोप्तबीजेषु कृतवापेषु बीजेषु सत्सु केनचिद्धेतुना नष्टेषु अथवा केनचिद्धेतुना दुष्टेषु तत्र नष्टेषु चेत् स्वपात्रेषु वा दुष्टेषु चेदपरेषु वा यथायोगम् उप्त्वा वापं कृत्वा विशुद्धया स्वीयचिता स्वचैतन्येन सुयोज्य मूलाणुनावाह्य समर्चयेच्च । अत्रायं प्रकारः — बीजानि केवलं नष्टान्येव चेत् तत्पात्रेष्वेव तद्बीजशिष्टैर्वापं कृत्वा तत्प्रायश्चित्तं कुर्यात् । अशुद्धियुक्तानि चेत् तद्गतचैतन्यमादर्शे हेम्नि वा समुद्वास्य दोषसम्पर्कितं सर्वं त्यक्त्वा स्नात्वा शोधिततत्स्थान एव पूर्ववत् सर्वं द्रव्यान्तरेण सम्पाद्य तथा वापं च कृत्वा संक्रामितचैतन्ये वस्तुनि यथावसरं सप्तशुद्धीः कृत्वा तच्चैतन्यमारोज्यान-न्तरवक्ष्यमाणं प्रायश्चित्तं कृत्वा तत्सम्पातं तत्र समर्प्य मूलाणुनावाह्य समर्चये-च्चेति ॥ ६८ ॥

तत्रोपहतौ त्र्यहात् अहस्त्रयात् प्राक् अर्वाक् चेद् निजबीजवापं निज-निजानां बीजानां वापं समाचरेत् । तत ऊर्ध्वं चेत् तण्डुलवापं पालिकादिषु तण्डुलेन वापम् आचरेत् । पुनस्तत्प्रायश्चित्तमाह — हुत्वेति । इषुतत्त्वैः पञ्चतत्त्वैः पृथग् इषुवर्गसंख्यं पञ्चविंशतिसंख्यं घृतं हुत्वा तत्र बीजेषु समर्प-येच्च ॥ ६९ ॥

अत्रत्यानां तत्तदङ्गप्रायश्चित्तानां नियममाह — **सतारेति** । अत्र बी-जाङ्कुराद्यङ्गसम्बन्धिनि प्रायश्चित्तेऽखिलो होमविधिरेवं कर्तव्यः । कथं, तस्य तस्य पुरतः स्थण्डिलं कृत्वा यथोक्तक्रमेणाग्निमाधायाज्यसंस्कारं कृत्वा पीठ-

---

१. 'पि' ग. घ. पाठः. २. 'खिलेषु' क. ग. घ पाठः. ३. 'पिवा के' क. ख. घ. पाठः. ४. 'अ' ङ. पाठः. ५. 'होमे इ' क. ख. ग. घ. च. पाठः.

अत्राखिलो होमविधिः समुक्तः
पूजामनुव्याहृतितारनिष्ठः ॥ ७० ॥

बीजेष्वरूढेषु पुनश्च वाप-
मिच्छन्ति निष्कृत्युदितं हुतं च ।
श्यामेषु तिर्यक्प्रसृतेषु चैवं
केचित् परे निष्कृतिहोममात्रम् ॥ ७१ ॥

बलिग्रहद्रव्यविपर्यये त-
ल्लोपेऽपि मूलाष्टशताज्यहोमम् ।
कुर्याद् यथार्हं च बलिं करोतु
तथा सपर्यासवनात्ययेऽपि ॥ ७२ ॥

---

पूजापूर्वं मूलेन देवमावाह्य सम्पूज्य होमः कर्तव्यः । स तु होमः सतारकव्या-हृतिपीठमन्त्रः प्रथमं प्रणवव्याहृतिपीठमन्त्रहोमैर्युक्तः, स्वमूलमन्त्राष्टघृताभि रुद्धः तत्र तत्र विधीयमानः प्रायश्चित्तहोमः स्वस्वमूलमन्त्राष्टावृत्तिघृतहोमपु-ष्टितो भवति । पूजामनुव्याहृतितारनिष्ठः पूजामन्त्रव्याहृतिप्रणवहोमावसानश्च भवति । एवं कृत्वा समाप्य तत्तत्सम्पातं तत्र तत्र समर्पयेदिति ॥ ७० ॥

केचिदत्र बीजेष्वरूढेषु अङ्कुररहितेषु पुनर्वापं निष्कृत्युदितं प्राय-श्चित्तार्थमुक्तं हुतं चेच्छन्ति । श्यामेषु श्यामवर्णेष्वङ्कुरेषु तिर्यक्प्रसृतेषु तिर्य-गेव प्रसृतेष्वपि एवं पुनर्वापं प्रायश्चित्तं चेच्छन्ति । परे तु पुनर्निष्कृतिहोममात्रं न पुनर्वापमिच्छन्ति ॥ ७१ ॥

बलिग्रहद्रव्यविपर्यये बलिदेवतानां बलिद्रव्याणां वा व्यत्यासे, तल्लोपे बलेरभावेऽपि मूलाष्टशताज्यहोमं कुर्यात् । यथार्हं स्वस्वयोग्यं च बलिं क-रोतु । सपर्यासवनात्यये त्रिषु कालेष्वप्युक्तलक्षणपूजाकालातिपातेऽपि तथा मूलाष्टशताज्यहोमं करोतु ॥ ७२ ॥

---

१. 'पि ॥ बिम्बं प्रागुदवासतोऽशुचि यदि प्रक्षाल्य पुण्याहकं
कुर्याद् द्रव्यघटाभिषेकमुदवासं चोदवासे यदि ।
पश्चाचेन्निजशुद्धिशान्तिहवनं स्वद्रव्यकुम्भाभिषे-
काद्यं स्थापनतो नवीकरणमेव त्वाभिषेकाद् बुधः ॥ व' ख. ग. घ. पाठः.

२. 'क्ष' क. ख. घ. च. पाठः,

नन्द्यादितत्तन्मनुना ध्वजोपघाते घृतं साष्टशतं जुहोतु ।
कुर्वीत शर्वे क्षुरिकाणुनैवं तदन्यतोऽस्त्रेण च वस्त्रदाहे ॥
प्रपूरितद्वारघटोपघाते तत्स्थानसंस्थं परिपूर्य चान्यम् ।
[1]तत्सिद्धतोयेन परेण वेष्ट्वा स्वास्त्रोत्थसम्पातमिहार्पयेच्च[3] ॥

सामान्यजातदहनापदि भस्म हृत्वा
त्रिर्गोशकृद्गुलिकयायतनं विशोध्य ।
कृत्वाग्निमष्टगुणितेरितसंस्क्रियाभि-
सङ्ख्यं सुधीर्ध्रुवघृताहवनं विधाय ॥ ७५ ॥

---

ध्वजोपघाते ध्वजानां विनाशे नन्द्यादितत्तन्मनुना तत्तद्ध्वजदेवता-मन्त्रेण साष्टशतं घृतं जुहोतु । शर्वे वस्त्रदाहे वक्ष्यमाणेन क्षुरिकाणुना, तदन्यतः तदन्यदेवेषु अस्त्रेण च एवमष्टशतं घृतहोमं कुर्वीत ॥ ७३ ॥

प्रपूरितद्वारघटोपघाते द्वारघटोद्वासनात् प्राग् विनाशे सति तत्स्थान-संस्थमन्यं घटं तत्सिद्धतोयेन भिन्नघटात् तोयं लभ्यते चेत् तेन, न लभ्यते चेत् परेण जलेन परिपूर्य इष्ट्वा इह स्वास्त्रोत्थसम्पातं स्वास्त्राष्टशतघृतहोमस-म्पातमर्पयेच्च ॥ ७४ ॥

अथाग्निनाशादिप्रायश्चित्तमाह — सामान्येति । सामान्यजातदहन-पदि सामान्येन प्रायश्चित्तहोमाद्यर्थमुत्पादितस्याग्नेर्विनाशे सति तत्रस्थं भस्म हृत्वा त्यक्त्वा तदायतनं तत्कुण्डान्तर्भागं गोशकृद्गुलिकया गोमयपिण्डेन त्रिस्त्रिधा विशोध्याग्निं कृत्वा निक्षिप्य अष्टगुणितेरितसंस्क्रियाभिसंख्यम् अष्ट-भिर्गुणिता प्राक्प्रोक्ता संस्कारसंख्या यथा भवति तथा ध्रुवघृताहवनं तारेण घृतहोमं सुधीः गर्भाधानादिसंस्कारविशेषज्ञो गुरुः विधाय मनस्वत्या 'मनो ज्योतिरि'त्यनेन विधिवत् चतुर्ग्रहघृतं चतुरवदानेन परिगृहीतमाज्यं स्रुचा

---

१. 'ताशेषघ' क. ग. घ. पाठः. २. 'स्त्राणुस' इति मूलकोशपाठः. ३. 'च्च ॥
भिन्दाहुतिश्चापि सजीवनिद्राब्रह्माख्यकुम्भेशघटोपघाते ।
निरम्बरे कादिषु मूलमन्त्राभिमन्त्रितापूरितमर्चयेच्च ॥
पादादिश्चक्रिकादीनां यदि स्यात् तद् यथापुरम् ।
कृत्वान्यद् वा बुधः कुर्यान्मूलमन्त्राभिमन्त्रणम् ॥
ध्वजतोरणमङ्गलादि चेत् स्यात् स्खलितोऽङ्कितामिमदग्धमत्र ।
निजशान्तिहुतं चरेद् निभेदेऽप्यशुचिस्पृश्यपि चारं च कल्प्यम् ॥ सा
क. ग. घ. पाठः.

हुत्वा चतुर्ग्रहघृतं विधिवन्मनस्व-
त्याज्यं स्रुवेण च सभूःप्रभृतीषुतत्त्वैः ।
आवाह्य मूलमनुना परिपूज्य मूले-
नास्त्रेण चाष्टशतमाज्यहुतिं विदध्यात् ॥ ७६ ॥

दुष्टाग्निं मुकुरोदरे प्रतिफलय्य क्षालनाद्याः क्रियाः
कृत्वोद्वास्य ततोऽन्यतो हुतवहं सन्त्यज्य भस्मादिभिः ।
आलिप्यात्र विभावसुं विधिवदुत्पाद्येष्टपीठस्थत-
न्मूर्तौ पूर्वचितिं प्रणीय सकलं नाशोक्तवत् प्राचरेत् ॥ ७७ ॥

अशुचौ शुचौ त्रिमनुनेत्यथाग्नये-
पवमानपावकशुचिप्रभेदिना ।
स्रुवतः स्रुचा सचतुराज्यया हुनेद्
विधिवत् तदृग्भिरथवा यथाबलम् ॥ ७८ ॥

---

हुत्वा सभूःप्रभृतीषुतत्त्वैः भूरादिभिः पञ्चतत्त्वैश्च स्रुवेण च हुत्वा मूलमनुना-वाह्य परिपूज्य पुनर्मूलेनास्त्रेण चाष्टशतमाज्यैर्हुतिं विदध्यात् ॥ ७५, ७६ ॥

दुष्टाग्निम् अग्निरशुद्धो भवति चेत् तमग्निं मुकुरोदरे आदर्शान्तर्भागे प्रतिफलय्य संक्रमय्य क्षालनाद्याः क्रियाः सप्तशुद्धीः कृत्वा ततोऽन्यतः आदर्शहिरण्यादावुद्वास्याशुद्धस्थलगतैर्भस्मादिभिः सह तं हुतवहमग्निं सन्त्यज्य गोमयजलेनालिप्यात्र विभावसुमग्निं विधिवत् पूर्ववदेवोत्पाद्य जनयित्वा इष्टपीठस्थतन्मूर्तौ पीठपूजानन्तरं मूर्तिकल्पनायां कृतायां पूर्वचितिं शुद्धामादर्शादिषु स्थितां तत्र प्रणीय योजयित्वा नाशोक्तवत् 'मनस्वत्या' चतुर्ग्रहघृतहोमादिकं सकलं प्राचरेत् ॥ ७७ ॥

अशुद्धौ विशेषमाह— अशुचाविति । शुचावग्नौ अशुचौ अशुद्धे अथ अग्निनाशोक्तप्रायश्चित्तानन्तरम् अग्नयेपवमानपावकशुचिप्रभेदिना 'अग्नये पवमानाय स्वाहा' 'अग्नये पावकाय स्वाहा' 'अग्नये शुचये स्वाहा' इति भेदत्रययुक्तेन त्रिमनुना मनुत्रयेण यथाबलम् अशुद्धेर्बलाबलवशात् स्रुवतो वा सचतुराज्यया चतुर्गृहीतघृतयुक्तया स्रुचा वा हुनेत् । अथवा तदृग्भिः 'अग्न आ-

---

१. 'सहभूः' क. ग. घ. पाठः. २. 'ज्या' ग. ङ. पाठः.

**प्रागाद्याशाहुताशापदि सपदि निधायाग्निमाचार्यकुण्डा-
दाज्ये सिद्धेऽत्र हुत्वा समिधमपि चतुस्सङ्गृहीतं स्रुचाज्यम् ।
तत्तद्दिक्चोदितेनाहितशिखिनि हुनेत् पञ्चहोत्रादिकेन
स्वीयेऽपादानवह्नौ स्रुवहुतिदशकं चैकहोत्रादिमन्त्रैः ॥**

**प्राग्याम्यसौम्यदिक्षु स्युः पञ्चचतुष्षडादिहोतारः ।
प्रत्यग्विदिक्षुविहिता मनस्वती च क्रमेण तन्मन्त्राः ॥**

**करोतु सावान्तरपूर्णमष्टशः
स्रुवाहुतिं व्याहृतिपञ्चतत्त्वकैः ।**

---

यूंषि पवसे', 'अग्ने पवस्व', 'अग्ने पावकरोचिषा', 'सनः पावकदीदिवः', 'अग्निः शुचिव्रततमः', 'उदग्ने शुचयस्तव' इति द्वौद्वौ मन्त्रावुक्त्वा विधिवत् तिष्ठन् पूर्णां हुनेत् ॥ ७८ ॥

**प्रागाद्याशाहुताशापदि** अधिवासप्रायश्चित्तादिहोमेषु दिक्षु विहृताना-मग्नीनां नाशे सपदि तदानीमेव भस्मादित्यागा(न)न्तरं गोशकृद्धुलिकयायतने शुद्धे सति आचार्यकुण्डादग्निं पुरोवन्निधाय आहिताशिखिनि निक्षिप्ताग्नौ आज्ये सिद्धे सति अत्रैकां समिधमपि हुत्वा चतुस्सङ्गृहीतमाज्यं स्रुचा तत्तद्दि-क्चोदितेन पञ्चहोत्रादिकेन मन्त्रेण हुनेत् । आचार्यः स्वीयेऽपादानवह्नौ स्वकुण्डस्थाग्नौ एकहोत्रादिमन्त्रैः 'ब्राह्मण एको होता', 'अग्निर्द्विहोता', 'पृ-थिवी त्रिहोता', 'अन्तरिक्षश्चतुर्होता', 'वायुः पञ्चहोता', 'चन्द्रमाष्षड्ढोता', 'अन्नं सप्तहोता', 'द्यौरष्टहोता', 'आदित्यो नवहोता', 'प्रजापतिर्दशहोता' इत्येभिर्दशाभिः स्रुवहुतिदशकं च हुनेत् ॥ ७९ ॥

**प्राग्याम्यसौम्यदिक्षु** पूर्वदक्षिणोत्तरदिक्षु क्रमात् पञ्चचतुष्षडादिहोतारः पञ्चहोता चतुर्होता षड्ढोता च । प्रत्यग्विदिक्षु च प्रत्यग्भागे कोणेषु च । मनस्वती च तन्मन्त्रा विहिताः । पञ्चहोत्रादीनां मन्त्रान् वक्ष्यति ॥ ८० ॥

**अथ** प्रणीतवह्नौ निक्षिप्ताग्नौ व्याहृतिपञ्चतत्त्वकैः नवभिर्मन्त्रैः सा-वान्तरपूर्णम् अन्तरान्तरा स्वस्वपूर्णाहुत्या संयुतमष्टशः स्रुवाहुतिं करोतु ।

---

१. 'ग्निः' क. पाठः. २. 'सहितं' ख. घ. ङ. पाठः.

प्रणीतवह्नावथ मूलपावके
स्वमूलमन्त्रेण शतं च साष्टकम् ॥ ८१ ॥

नष्टे मूलविभावसौ वसुपदिकुण्डान्निधायाखिलं
तस्मिन्नष्टगुणेष्टसंस्कृतिहुतिं तन्निष्कृतिं चोक्तवत् ।
कृत्वोदग्दहनं प्रणीय विनिधायास्मिन् स्वनाशोदितं
कुर्यान्निष्कृतिकर्म मूलदहने तद्वद् दशात्माहुतिम् ॥ ८२ ॥

नष्टेऽस्मिन् दहनद्वये विधिवदुत्पाद्य स्वकुण्डेऽनलं
चित्तिस्रुक्प्रमुखैः पृथक् चतुरवत्ताज्यं स्रुचा होतृभिः ।
षड्भिः सर्पिरपि स्रुवेण दशमन्त्रैरेकहोत्रादिभि-
र्भूराद्यैश्च पृथक् चतुर्ग्रहघृतं भङ्क्त्वाष्टधात्राहुनेत् ॥ ८३ ॥

प्रत्येकं शरतत्त्वकैश्चतुरवत्ताज्यं विभज्याष्टधा
हुत्वात्राजुहुयात् स्रुवाहुतिशतं मूलेन चाष्टाधिकम् ।

मूलपावके आचार्यकुण्डे स्वमूलमन्त्रेण साष्टकमष्टैसाहितं शतं च स्रुवाहुतीः करोतु ॥ ८१ ॥

मूलविभावसौ आचार्यकुण्डस्थाग्नौ नष्टे सति वसुपदिक्कुण्डाद् उत्तर-दिग्गतात् कुण्डाद् अखिलमग्निं तस्मिन् आचार्यकुण्डे निधाय अष्टगुणेष्टसं-स्कृतिहुतिं खस्वसंस्कारसंख्याष्टगुणसंख्याहुतिम् उक्तवत् पूर्वोक्तप्रकारेण त न्निष्कृतिं सामान्यनाशप्रायश्चित्तं च कृत्वा उदग्दहनम् उदक्कुण्डेऽग्निं प्रणीय नीत्वा निधायास्मिन् कुण्डे स्वनाशोदितं निष्कृतिकर्म विधिवत् कुर्यात् । मूल-दहने तद्वत् तदुक्तप्रकारेण एकहोत्रादिमन्त्रैर्दशात्माहुतिं च कुर्यात् ॥ ८२ ॥

अथास्मिन् दहनद्वये आचार्यकुण्डोदक्कुण्डस्थाग्निद्वये नष्टे सति विधि-वदाचार्यः स्वकुण्डेऽनलमुत्पाद्य चित्तिस्रुक्प्रमुखैः षड्भिर्होतृभिः पृथक् चतुर-वत्ताज्यं स्रुचाहुनेत् । पुनरेकहोत्रादिभिर्दशभिर्मन्त्रैः सर्पिः स्रुवेणापि हुनेत् । अत्रोभयस्यापि नाशे भूराद्यैश्चतुर्भिश्चतुर्ग्रहघृतं पृथगष्टधा भङ्क्त्वाष्टधा मन्त्रं चोक्त्वा आहुनेत् ॥ ८३ ॥

पुनः शरतत्त्वैः पञ्चतत्त्वैः प्रत्येकं चतुरवत्ताज्यं तथा विभज्य हुत्वा अत्रैवाष्टाधिकं स्रुवाहुतिशतं मूलेनाजुहुयात् । पुनरमुतोऽस्मात् कुण्डात् सौ-

१. 'द्याद्यकु' क. ग. घ. पाठः. २. 'ष्टकस' ख. घ. च. पाठः. ३. 'ज्यं जुहु' क. पाठः.

नीत्वा सौम्यविभावसुं विधिवदाधायामुतो निष्कृतिं
तन्नाशाभिहितां दशात्महवनं मूलानले चाचरेत् ॥ ८४ ॥

दशचतुरक्षरपूर्वौ पञ्चषडाद्यौ च सप्तपूर्वश्च ।
वागाद्यश्च षडेते होतारः संस्मृताः क्रमेण स्युः ॥ ८५ ॥

चित्तिः स्रुक् पृथिवीहोताग्निर्होता ततश्च सूर्यन्ते ।
तदनु महाहविराद्यो वागाद्यः स्युर्दशादिहोतारः ॥ ८६ ॥

प्रासाददक्षिणदिगाद्युदिताग्निनाशे-
ऽप्युत्पाद्य तं स्वहरिदुक्तचतुर्ग्रहाद्यम् ।
कुर्वीत वैवमथ तत्त्वहुताशनादि-
नाशेऽखिलं गुरुकृशानुविनाशवच्च ॥ ८७ ॥

---

म्यविभावसुम् उदक्कुण्डेऽग्निं नीत्वा तन्नाशाभिहितां तन्नाशे विहितां निष्कृतिं विधिवदाधाय मूलानले एकहोत्रादिमन्त्रैर्दशात्महवनं चाचरेत् ॥ ८४ ॥

षण्णां होतॄणां संज्ञाः क्रमेण कथयति — दशेति । दशचतुरक्षरपूर्वौ दशहोता चतुर्होता च, पञ्चषडाद्यौ च पञ्चहोता षड्ढोता च, सप्तपूर्वश्च सप्तहोता च, वागाद्यश्च वाग्घोता च, एते षट् क्रमेण होतारः संस्मृताः ॥८५॥

होतॄणां मन्त्रान् क्रमेण कथयति — चित्तिः स्रुगिति । एते दशादिहोतारः । चित्तिः स्रुगिति दशहोता, पृथिवीहोतेति चतुर्होता, अग्निर्होतेति पञ्चहोता, सूर्यन्त इति षड्ढोता, महाहविरित्याद्यः सप्तहोता, वागाद्यो वाग्घोता, इति विभागः ॥ ८६ ॥

प्रासाददक्षिणदिगाद्युदिताग्निनाशे प्रासादस्यापि दक्षिणादिदिग्विभागेनोत्पादितानामग्नीनां नाशे तमग्निं सामान्यनाशोक्तक्रमेणोत्पाद्य एवं स्वहरिदुक्तचतुर्ग्रहाद्यं स्वस्वदिगुक्तहोत्रा चतुर्ग्रहधृतहोमाद्यं कुर्वीत । वा अथवा सामान्योग्निनाशवदेव कुर्वीत । अथ तत्त्वहुताशनादिनाशे तत्त्वहोमादिप्रधा-

---

१. 'च ॥
कल्पोक्तवत् सति जुहोतु मिथोऽग्निसंसर्गादाविहातिविहतिप्रभृतेर्यथार्हम् ।
देन्ताख्यया स्रुवहुतिं निजमन्त्रतो वा पूर्णां स्रुवाष्टहुतिमप्यथ मूलतश्च ॥ म'
क. ग. घ. पाठः. २. 'यामि' क. ख. घ. च. पाठः

**मनोज्योतिरयाश्चाग्ने यदस्मिन् स्वस्तिनोऽपि च ।**
**मिन्दाद्वयं व्याहृतयश्चोक्ताः स्युः सर्वनिष्क्रियाः ॥ ८८ ॥**

**कृष्णलाविंशतिमितं जातरूपं द्विजोत्तमे ।**
**दत्तं स्यात् सर्वदोषेषु प्रायश्चित्तमनुत्तमम् ॥ ८९ ॥**

**क्रियामध्येऽन्तरा गच्छेद् यदि तत्र मनस्वतीम् ।**
**जुहोतु सर्वयज्ञं वा तत्तद्दोषोपपत्तितः ॥ ९० ॥**

**स्नानाय क्लृप्तकलशेऽशुचितां प्रपन्ने**
**स्वर्णेऽमुना समभिषिच्य विशोध्य तत्स्थम् ।**
**चैतन्यमन्यकलशे सुविशोधितैत-**
**त्स्थानस्थिते समधिरोप्य यथाविधीष्ट्वा ॥ ९१ ॥**

---

-नाग्नेर्नाशे दोषयुक्ते च गुरुकृशानुविनाशवद् आचार्यकुण्डस्थाग्निनाशवद् मखिलं प्रायश्चित्तं कुर्वीत ॥ ८७ ॥

प्रायश्चित्तेऽपरिज्ञाते सर्वप्रायश्चित्तं पूर्वैरुक्तं विमृशति — **मनोज्योतिरिति** । 'मनो ज्योतिः', 'अयाश्चाग्ने', 'यदस्मिन् कर्मणः', 'स्वस्ति नः', मिन्दाहुतिद्वयं व्याहृतयश्च दशैताः सर्वनिष्क्रियाश्चोक्ताः ॥ ८८ ॥

अथ प्रायश्चित्तानामूनातिरेकपरिहाराय ब्राह्मणतर्पणादिकमपि कार्यमित्याह — **कृष्णलेति** । कृष्णलाविंशतिमितं कृष्णला गुञ्जाफलं[1] तद्विंशतिमितं जातरूपं हिरण्यं द्विजोत्तमे वैदिकविषयं तान्त्रिकविषयं च प्रायश्चित्तविधानज्ञे ब्राह्मणे दत्तं सर्वदोषेष्वनुत्तमं प्रायश्चित्तं स्यात् ॥ ८९ ॥

अथान्तरागमने प्रायश्चित्तविशेषमाह — **क्रियामध्य इति** । यत्र कुत्रचित् क्रियामध्ये यः कश्चिदन्तरा मध्ये गच्छेद् यदि तत्र मनस्वतीं जुहोतु । अथवा तद्गौरवे सर्वयज्ञं जुहोतु । पञ्चदुर्गामनस्वतीव्याहृतिभिः पूर्णाहुतिः सर्वयज्ञमित्युच्यते ॥ ९० ॥

अथ कलशानामशुद्धिसंभवादौ प्रायश्चित्तमाह — **स्नानायेति** । स्नानाय देवाभिषेचनाय क्लृप्तकलशे पूजिते कलशे अशुचितामशुद्धतां प्रपन्ने प्राप्ते अमुना कलशेन स्वर्णेऽभिषिच्य विशोध्य सप्तशुद्धीः कृत्वा तत्स्थं चैतन्यं सुविशोधितैतत्स्थानस्थिते तत्त्यागपूर्वं तत्स्थानं संशोध्य तत्रैव पूरितान्यकलशे

---

1. 'णि' क. पाठः

स्वैः पञ्चतत्त्वमनुभिः पृथगष्टवारं
सर्पिः स्रुवेण चतुरात्तघृतं स्रुचा च ।
हुत्वाष्टधा पृथगथाष्टशतं स्वमूले-
नास्त्रेण चार्प्य घृतमत्र जपेच्च तावत् ॥ ९२ ॥

भिन्ने घटेऽन्यं प्रविधाय तत्र तच्छेषयुक्तान्यजलैः प्रपूर्य ।
इष्ट्वा स्रुवाज्याहुतिमुक्तनीत्या विधाय शेषं विधिमादधीत ॥

विज्ञापिते वा कलशाधिवासे
तदेकदेशस्नपने कृते वा ।
उपाहृतिश्चेत् कलशे च मन्त्र-
बिम्बे च तन्निष्कृतिमादधीत ॥ ९४ ॥

दुष्टे वा बलिकौतुके निपतिते वात्रैव संशोध्य त-
त्प्रायश्चित्तहुतिं स्वपञ्चमनुमूलास्त्रादिभिर्युक्तितः ।

---

समधिरोप्य संयोज्य यथाविधीष्ट्वा यथायोगं तत्पुरतःस्थाग्नौ वाधिवासकुण्डस्थाग्नौ वा स्वैः पञ्चतत्त्वमनुभिः पृथक् पृथक् अष्टवारं सर्पिः स्रुवेण वा स्रुचा (वा) चतुरात्तघृतं पृथगष्टधा हुत्वाथ स्वमूलेन स्वेनास्त्रेण चाष्टशतं घृतं च हुत्वा सम्पातं कलश आर्प्य संस्पृश्य तावत् जपेच्च । अथ तेन यथाविध्याभिषिञ्चेत् ॥ ९१,९२ ॥

घटे कलशे भिन्ने सति अन्यं कलशमत्र प्रविधाय तत्र कलशे तच्छेषयुक्तान्यजलैः भिन्नस्य कलशस्य जलं लभ्यते चेत् तच्छेषजलयुक्तान्यजलैः प्रपूर्येष्ट्वा उक्तनीत्या पञ्चतत्त्वहोमाद्युक्तनीत्या स्रुवाज्याहुतिं विधाय शेषं विधिमादधीत ॥ ९३ ॥

कलशाधिवासे देवार्थं[1] विज्ञापिते वा तदेकदेशस्नपने कृते कलशाभिषेकमध्ये वा उपाहतिर्विरोधश्चेत् कलशे मन्त्रबिम्बे च तन्निष्कृतिं तत्प्रायश्चित्तसम्पातस्पर्शनमादधीत ॥ ९४ ॥

अथ बलिकौतुकादीनामशुद्ध्यादिसम्भवे प्रायश्चित्तमाह — दुष्टे वेति । बलिकौतुके बल्यर्थं नीयमाने कर्मबिम्बे दुष्टेऽशुद्धे वा निपतिते वा अत्रैव

---

१. 'लय' क. पाठः.

**कृत्वा कर्म समाप्य मूलमनुबिम्बे योजयित्वा तत-**
**स्तत्तद्दोषबलाबलानुसरणात् कुर्याद् गुरुर्निष्कृतिम् ॥**

**भग्ने पथि प्रस्थितकर्मबिम्बे**
**देवं समायोज्य ततोऽन्यबिम्बे।**
**निष्कृत्य शेषं सुसमाप्य मूले**
**नीत्वाचरेन्निष्कृतिकर्म सम्यक् ॥ ९६ ॥**

**भूरादिमन्त्रोक्तचतुर्गृहीतं मनस्वतीपूर्वदशाहुतिश्च ।**
**स्वपञ्चतत्त्वोदितसास्त्रमूलाहुतिद्विजेज्यादिरिहापि योज्याः।**
**अभिहितामिह निष्कृतिमाचरेदनुदितास्वपि कर्मविपत्तिषु।**
**समनुचिन्त्य दुरिष्टबलाबलं त्वनुगुणं प्रकृतेर्विकृतेरपि ॥**

---

स्थले तन्निधाय संशोध्य सप्तशुद्धीः कृत्वा स्वपञ्चमनुमूलास्त्रादिभिः पूर्वोक्तैर्युक्तितो यथाबलं तत्प्रायश्चित्तैर्हुतिं कृत्वा बलिकौतुके सम्पातं संस्पृश्य शेषं कर्म समाप्यान्तरत्ये मूलमनुबिम्ब योजयित्वा ततो गुरुः परापरदोषविशेषज्ञः तत्तद्दोषबलाबलानुसरणाद् निष्कृतिं कुर्यात् ॥ ९५ ॥

प्रस्थितकर्मबिम्बे बल्यर्थं तीर्थस्नानाद्यर्थं वा प्रस्थापिते कर्मबिम्बे पथि मार्गे भग्ने सति ततोऽन्यबिम्बे देवं समायोज्य निष्कृत्य सप्तशुद्ध्यनन्तरं स्वस्वपञ्चतत्त्वहोमाद्युक्तं प्रायश्चित्तं कृत्वा शेषं विधिं सुसमाप्य प्रकृतकर्मशेषं विधिवत् कृत्वा मूलबिम्बे नीत्वा तत्र निष्कृतिकर्म सम्यक् उत्तमविधानेनाचरेत् ॥ ९६ ॥

इहापि निष्कृतौ पूर्वोक्तप्रकारेण भूरादिमन्त्रोक्तचतुर्गृहीतं 'भूराद्यैश्च पृथक् चतुर्ग्रहघृतं भङ्क्त्वाष्टधात्राहुनेत्' इत्युक्तादिकं, मनस्वतीपूर्वदशाहुतिश्च 'मनो ज्योतिः', 'अयाश्चाग्ने' इत्युक्तं सर्वप्रायश्चित्तं, स्वपञ्चतत्त्वोदितसास्त्रमूलाहुतिद्विजेज्यादिः स्वस्वपञ्चतत्त्वैरष्टाष्टहोमः स्वास्त्रेण स्वमूलेन चाष्टशतहोमो ब्राह्मणतर्पणादिरपि योज्याः युक्तितः कार्याः ॥ ९७ ॥

उक्तान्यपि प्रायश्चित्तानि अनुक्तेष्वप्यातिदिश्य कुर्यादित्याह — अभिहितामिति । अनुदितासु अनुक्तासु कर्मविपत्तिषु कर्मविनाशेषु प्रकृते-

---

१. 'त' इति मूलकोशपाठः. २. 'ज्यं' ग. पाठः ३ 'त्ता' क. ङ. पाठः. ४ 'स्था' ख. घ. च. पाठः. ५ 'प्य कृ' क. ख. घ. च. पाठः. ६. 'यथावे' ख. घ, ङ. च. पाठः.

**अर्चास्थानविशुद्धीः काश्चन गुरुशिक्षितास्त्ववोचाम ।**
**अर्चकतत्साधनयोः काश्चन ताश्च ब्रवीमि विदिता याः ॥**

**काये स्नानाचमनमथ विष्णोत्वमित्यादिजापो**
**वाचि स्वान्ते भगवदभिमर्शश्च सामान्यतः स्यात् ।**
**कृच्छ्रं चान्द्रायणमपि घृतब्रह्मकूर्चाशनादि-**
**श्चोक्ता मन्वादिभिरिह विशुद्धिर्गरिष्ठे तु दोषे ॥ १००॥**

**देहे महाभूतविलायनादिः प्रत्याहृतिः स्यादखिलाक्षकेषु ।**
**देहिन्यथ स्वोन्नयमानसेज्ये विशेषशुद्धिर्विहितार्चनादौ ॥**

---

विकृतेरपि अस्य दोषस्येदं प्रायश्चित्तमिति स्थिरीकृतं , प्रकृतिः, अस्मिन् दोषे किं कर्तव्यमिति विचारो विकृतिः, तयोर्द्वयोरपि दुरिष्टबलाबलं दोषस्य तारतम्यं समनुचिन्त्य युक्तिज्ञैराचार्यैः सह सम्यग् विचिन्त्य तु विशेषतः अनुगुणं प्रायश्चित्तं यथा भवति तथा इहाभिहितामुक्तामेव निष्कृतिमाचरेत् ॥ ९८ ॥

**अर्चास्थानविशुद्धीः** प्रतिमायाः स्थानस्य च विशेषयुक्ताः शुद्धीः गुरुशिक्षिताः गुरुभिरुपदिष्टाः यास्ताः काश्चनावोचाम उक्तवन्तो वयम् । अर्चकतत्साधनयोः पूजकस्य पूजासाधनस्य च याः काश्चन शुद्धीः मया विदिताः अवधृतास्ताश्च ब्रवीम्यहम् ॥ ९९ ॥

अर्चकशुद्धिमाह — **काय** इति । काये देहे स्नानाचमनं स्नानमाचमनं च सामान्यतः शुद्धिः स्यात् । वाचि अभाष्यं प्रति वाग्विसर्गे विष्णोत्वमित्यादिजापः, स्वान्ते मनसि ग्राम्यचिन्तासम्भवे भगवदभिमर्शः भगवद्ध्यानं च सामान्यशुद्धिः स्यात् । गरिष्ठे गुरुतरे दोषे सति इह मन्वादिभिः स्मृतिकोविदैः कृच्छ्रं सान्तपनादिकं, चान्द्रायणं, घृतब्रह्मकूर्चाशनादिश्च घृतप्राशनं ब्रह्मकूर्चाशनादिश्च विशुद्धिर्विशेषशुद्धिरुक्ता ॥ १०० ॥

**अथार्चनादौ** देहे महाभूतविलायनादिः भूतसंहारः शोषणादिश्च, अखिलेषु चक्षुरादिष्विन्द्रियेषु प्रत्याहृतिः विषयेभ्यो निवृत्यान्तर्मुखतापादनं, देहिनि जीवे स्वोन्नयमानसेज्ये स्वोन्नयः स्वस्य जीवस्य उन्नयो द्वादशान्तस्थपरमात्मानि योजनं मानसपूजा तं हृदयकमले संस्थाप्य पञ्चभूतात्मकैरुपहारैरर्चनम्, एषा देहात्मनो[1]र्विशेषशुद्धिर्विहिता ॥ १०१ ॥

---

१. 'दोषात्म' क. पाठः.

शुद्धिस्तक्षणदाहभस्मकमृजानिर्णेजनं दारुमृ-
त्तेजस्तन्तुमये तथोत्पवनदर्भाद्योतने सर्पिषि।
ताम्रेऽम्लोदमृजा शकृज्जलमृजा दुर्वर्णशङ्खादिके
वस्त्रे क्षारजलोक्षणं रविकरस्पर्शश्च पट्टांशुके ॥ १०२ ॥
धान्ये शूर्पपरिभ्रमस्तदवघातौ तण्डुले लेपग-
न्धापायः सकले समित्कुसुमदर्भाद्येषु सम्प्रोक्षणम्।
पुण्याहं सलिलाशये शिखिशिखोद्द्योतश्च रात्र्यां क्षितौ
कर्षोल्लिखनविप्रभोजनमथास्त्राणूक्षणं वाखिले ॥ १०३ ॥
अजुगुप्सितरूपा चेदुपहतिरखिलेषु साधनीयैवम्।
तच्छुद्धिरन्यथा चेत् त्यागः श्रेयानकुप्यतोऽन्येषु ॥ १०४ ॥

---

पूजासाधनशुद्धिमाह —शुद्धिरिति । दारुमृत्तेजस्तन्तुमये दारवे मृण्मये स्वर्णादिमये तन्तुमये च वस्तुनि क्रमेण तक्षणदाहभस्मकमृजानिर्णे-जनं[1] दारवे तक्षणं, मृण्मये दाहः, तेजोमये भस्मजलाभ्यां मार्जनं, तन्तुमये निर्णेजनं क्षालनं शुद्धिः स्यात्। तथा सर्पिषि उत्पवनदर्भोद्द्योतने गालनं, दर्भगताग्निनोद्द्योतनं च, ताम्रे ताम्रमये वस्तुनि अम्लोदमृजा अम्लजलाभ्यां मार्जनं, दुर्वर्णशङ्खादिके रजतशङ्खादौ शकृज्जलमृजा गोमयजलाभ्यां मार्जनं, वस्त्रे क्षारजलोक्षणं, पट्टांशुके रविकरस्पर्शश्च शुद्धिः स्यात् ॥ १०२ ॥

धान्ये व्रीह्यादौ शूर्पपरिभ्रमः, तण्डुले तदवघातौ शूर्पपरिभ्रमणमवह-ननं च शुद्धिः स्यात्। सकले वस्तुनि लेपगन्धापायः मलादेर्लेपापायो गन्धा-पायश्च शुद्धिर्विहिता। समित्कुसुमदर्भाद्येषु सम्प्रोक्षणं, सलिलाशये तटाकादौ पुण्याहं पुण्याहप्रोक्षणं, रात्र्यां रात्र्यास्तमोमयत्वात् शिखिशिखोद्द्योतः अ-ग्निज्वालयोद्द्योतनं शुद्धिः। क्षितौ कर्षोल्लिखनविप्रभोजनं कर्षणम् उल्लेखनं वि-प्रभोजनं च यथावकाशं शुद्धिः। अथवा अखिले वस्तुन्यस्त्राणूक्षणं शुद्धिः स्यात् ॥ १०३ ॥

अखिलेषु वस्तुषु उपहतिः अशुद्धिः अजुगुप्सितरूपा चेत् उद्वेगो न जायते यदि एवमुक्तप्रकारेण तच्छुद्धिस्तस्य तस्य शुद्धिः साधनीया। अन्यथा चेत् जुगुप्सा जायते चेत् अकुप्यतः मणिहिरण्यादेरन्येषु वस्तुषु तेषां त्याग एव श्रेयान् ॥ १०४ ॥

---

१. 'जा हिं नि' क. ख. घ. च. पाठः.

उक्तेष्वनुक्तेष्वपि चोपघाते-
ष्वालोच्य तज्ज्ञैः सह साधकेन्द्रः ।
श्रुतिस्मृतिन्यायपरैः प्रकुर्यात्
तन्निष्क्रियां पुष्कलता तथैव ॥ १०५ ॥
इति तन्त्रसमुच्चये श्रुतार्चा-
क्रमगुप्त्यै रविजन्मसम्प्रणीते ।
प्रकटोदितनिष्क्रियाकलापः
पटलोऽभूद् दशमोऽपि संप्रपूर्णः ॥ १०६ ॥

इति तन्त्रसमुच्चये
दशमः पटलः ।

---

उक्तेष्वनुक्तेषु चोपघातेषु दोषेषु सत्सु साधकेन्द्रः स्वयं साधकश्रेष्ठः सन्नपि श्रुतिस्मृतिन्यायपरैः श्रुतेर्वैदिककर्मणः स्मृतेः स्मार्तकर्मणः न्यायस्याचारस्य च तात्पर्ययुक्तैस्तज्ज्ञैः सहालोच्य विविच्य तन्निष्क्रियां तत्तन्निष्कृतिं कुर्यात् । तथैव तथा भवति चेदेव पुष्कलता परिपूर्णता स्यात् ॥ १०५ ॥

पटलमुपसंहरति — इतीति । इति उक्तप्रकारेण श्रुतार्चाक्रमगुप्त्यै गुरुमुखाच्छ्रुतस्य पूजाक्रमस्य गुप्त्यै अविस्मरणाय रविजन्मसंप्रणीते रविपुत्रेण नारायणेन विरचिते तन्त्रसमुच्चये तन्नाम्नि ग्रन्थे दशमः पटलोऽपि संप्रपूर्णोऽभूत् । कथंभूतः, प्रकटोदितनिष्क्रियाकलापः प्रकटेन व्यक्तेनोक्तो निष्क्रियाणां प्रायश्चित्तानां कलापः समूहो यस्मिन् सः ॥ १०६ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
दशमः पटलः ।

## अथैकादशः पटलः ।

आकल्पान्तस्थास्नुभावेन भक्त्या
देवस्यैवं सम्प्रतिष्ठापितस्य ।
प्रासादादिस्वाङ्गजीर्त्तिर्यदि स्या-
दुद्धृत्यातस्तं नवाङ्गीकरोतु ॥ १ ॥

निष्क्रामणेन विधिनात्र तदन्तरङ्गे
वैकल्यभाजि वितनोतु यथापुरं तत् ।
सङ्कोचनेन बहिरङ्गविपद्यदश्च
निष्क्रामणेन चिरकालचिकीर्षितं चेत् ॥ २ ॥

बालालयादिसहितं कलशैककार्यं
चेति द्विधात्र खलु निष्क्रमणं स्मरन्ति ।

---

एवं दोषेषु सत्सु प्रायश्चित्तमभिहितम् । तत्र कालादिवशात् प्रासादादीन्यङ्गानि जीर्यन्ते चेत् तत्परिहाराय एकादशेन पटलेन जीर्णोद्धारं वदन् आदौ तस्योद्देशं करोति— आकल्पान्तेति । भक्त्या हेतुना आकल्पान्तस्थास्नुभावेन प्रलयकालपर्यन्तं स्थिरतया स्थितिबुद्ध्या एवमुक्तप्रकारेण सम्प्रतिष्ठापितस्य देवस्य प्रासादादिस्वाङ्गजीर्तिः प्रासादबिम्बादीनां स्वाङ्गानां श्लथनं यदि स्यात् अतो जीर्णादङ्गादुद्धृत्य तं देवं नवाङ्गीकरोतु प्रत्यग्रावयवं करोतु ॥ १ ॥

अत्र जीर्णोद्धारे तदन्तरङ्गे बिम्बादौ वैकल्यभाजि विकलाङ्गतां प्राप्ते निष्क्रामणेन प्रासादाद् निर्यापनेन विधिना तदङ्गाद् देवमुद्धृत्य तदङ्गं यथापुरं पूर्ववदेव वितनोतु विरचय्य स्थापयतु । बहिरङ्गविपदि प्रासादादौ वैकल्यं प्राप्ते संकोचनेन परिवारांस्तत्त्वानि च संहृत्य हृदयकमले योजयित्वा तन्मुकुलविधिना यथापुरं वितनोतु । अदः बहिरङ्गं चिरकालचिकीर्षितं चेत् चिरेणैव कालेन तदङ्गं क्रियते चेत् निष्क्रामणेन तद् यथापुरं वितनोतु ॥ २ ॥

अत्र खलु जीर्णोद्धारे बालालयादिसहितं बालालयोऽल्पगृहं तेन सहितं, कलशैककार्यम् एकेन कलशेनैव निर्वर्त्यं चेति द्विधा द्विप्रकारेण निष्क-

---

१. 'तम् । ये त' क. पाठः.

सङ्कोचनं स्वविभवस्वनिगूहनं स्या-
न्निष्क्रामणक्रममिह प्रथमं ब्रवीमि ॥ ३ ॥
मूलालयादक्षिणभागसंस्थं तत्सम्मुखं बालगृहं विधाप्य ।
समण्डपं शिल्पिभिरल्पबिम्बं प्रकल्पयेल्लौहिकमाङ्घ्रिपं वा ॥
अत्राप्यङ्कुररोपणं प्रथमतः कृत्वा गृहीत्वा नवं
बिम्बं वार्यधिवास्य बालनिलयं संशोध्य तन्मण्डपम् ।
संस्कृत्योदकतोऽल्पबिम्बमुपनीय स्नापयित्वा पुन-
स्तत्तद्बिम्बघटैः प्रणीय शयनीये शाययेद् देशिकः[1] ॥
तत्र त्रिसूत्राकलनादि मूलप्रासादशुद्धिं विधिवद् विधाय ।
प्रक्षालनाद्याश्च यथार्हकालं कुर्वीत मूलप्रतिमाविशुद्धीः ॥

---

मणं स्याद् बिम्बादुद्वास्य बहिःप्रापणं स्मरन्ति विद्वांसः । संकोचनं तु स्वविभवस्वनिगूहनं स्वस्य विभवस्य तत्त्वरूपेण परिवाररूपेण च व्याप्तेः स्व-स्मिन्नेव निगूहनं हृदयकमल एव गोपनं स्यात् । इह प्रथममहं निष्क्रामणक्रमं ब्रवीमि ॥ ३ ॥

तत्र मूलालयादक्षिणभागसंस्थं मूलप्रासादस्याग्रतो वामभागस्थितं त-त्संमुखं मूलप्रासादाभिमुखं समण्डपं तत्पुरोभागस्थितेशमण्डपेन च सहितं बा-लगृहमल्पगृहं शिल्पिभिः विधाप्य कारयित्वा लौहिकं लोहमयम् आङ्घ्रिपं दारवं वाल्पबिम्बं प्रकल्पयेत् ॥ ४ ॥

अथ देशिकः अल्पगृहाल्पमण्डपाल्पप्रतिमादीनां लक्षणज्ञो गुरुः अ-त्रापि कर्मणि प्रथमतः पूर्वं बालालयोदग्भागस्थगृहे सप्ताहादिकालेऽङ्कुरा-रोपणं कृत्वा नवं बिम्बम् अल्पबिम्बं गृहीत्वा वारि जलेऽधिवास्य बालनिल-यमल्पगृहं संशोध्य यथाक्रमं प्रासादशुद्धिं कृत्वा तन्मण्डपं बालालयाग्रगतं मण्डपं संस्कृत्य उदकतो जलात् अल्पबिम्बमुपनीय तत्तद्बिम्बघटैः तस्य तस्य देवस्योक्तैर्बिम्बशुद्धिकलशैः स्नापयित्वा पुनः शयनीये तन्मण्डपस्थशय्यायां प्रणीय शाययेत् यथोक्तविधिनाधिवासं कुर्यात् ॥ ५ ॥

तत्र पुनर्यथार्हकालं त्रिसूत्राकलनादि तन्तुवेष्टनमारभ्य मूलप्रासाद-शुद्धिं विधिवत् यथोक्तप्रकारेण विधाय प्रक्षालनाद्याः सप्त मूलप्रतिमाविशुद्धीः कुर्वीत ॥ ६ ॥

---

1. 'ने संवेशयेद्' ख. पाठः.

संस्नाप्य देवमथ निष्कृतितत्त्वहोम-
सम्पातसिद्धकलशैः कलशैः परैश्च ।
प्राच्यर्य प्रसाद्य परिषत्सु बलिं विकीर्य
प्रार्थ्यारभेत सुसमीहितकर्म[1] मन्त्री ॥ ७ ॥

मूलालयाग्राहितमण्डपस्थे कुण्डे समुत्पाद्य कृपीटयोनिम्
तत्पार्श्वदेशे कलशं प्रपूर्य कुर्याद् गुरुः संहृतितत्त्वहोमम् ॥

सम्पातमस्मिन् प्रसमर्प्य कुम्भे पूजामनुद्रव्यहुतिप्रसिद्धम् ।
सृष्टिक्रमेणाखिलतत्त्वमन्त्रैः सकृत् सकृत् सर्पिरथो जुहोतु ॥

गत्वा गर्भगृहं समिष्टनिजपीठे देवमास्थाप्य तं
तत्त्वन्यासपुरस्सरं सकलितं कृत्वा समभ्यर्च्य च ।

---

अथ मन्त्री प्रायश्चित्तपटलोक्तविधिज्ञो गुरुः निष्कृतितत्त्वहोमसंपातसिद्धकलशैः प्रायश्चित्तहोमादिभिः सिद्धैः संपातकलशैः तत्त्वहोमसंपातकलशेन च देवं संस्नाप्य पुनः परैः स्वस्वोक्तद्रव्यकलशैश्च संस्नाप्य प्राच्यर्य विशेषतः पूजां कृत्वा प्रसाद्य परिषत्सु परिवारेषु भूतबलिं च विकीर्य वक्ष्यमाणरीत्या प्रार्थ्य सुसमीहितकर्म सङ्कल्पितं निष्क्रामणं कर्म सावधानं प्रारभेत ॥

पुनर्गुरुः स्वयमवहितो भूत्वा मूलालयाग्राहितमण्डपस्थे मूलप्रासादस्याग्रमण्डपस्थिते कुण्डे कृपीटयोनिमग्निं समुत्पाद्याग्निमुखं कृत्वा परिधिस्थापनात् पूर्वं तत्पार्श्वदेशे कलशं यथोक्तरीत्या प्रपूर्य संपूज्य परिधिस्थापनादिपूर्वं संहृतितत्त्वहोमं संहारार्थं तत्त्वहोमं कर्यात् ॥ ८ ॥

तत्क्रियाक्रममाह — संपातमिति । अस्मिंस्तत्त्वमये कुम्भे पूजामनुद्रव्यहुतिप्रसिद्धं पूजामन्त्रहोमात् प्राप्तं तदनन्तरमेव द्रव्यहोमं च कृत्वा तत्र सिद्धं च संपातं प्रसमर्प्य अथो अखिलतत्त्वमन्त्रैः सृष्टिक्रमेण सकृत् सकृत सर्पिर्जुहोतु ॥ ९ ॥

ततो गर्भगृहं गत्वा समिष्टनिजपीठे पीठपूजानन्तरं देवमास्थाप्य आवाह्य तत्त्वन्यासपुरस्सरं तत्त्वन्यासादिभिः तं देवं सकलितं कृत्वा समभ्यर्च्य

---

१. 'र्म सम्यक् ॥' ख. पाठः.

तत्सम्पातघृतं समर्प्य परिपूर्णं भावयित्वा ततः
संहारानुमतिं विकीर्य कुसुमं सम्प्रार्थयेत् साञ्जलिः ॥
लब्धाज्ञो गृहमूर्तिकुण्डकलशार्चोदर्चिरम्भश्चितां
नाडीयोगकृते ध्रुवेण कुसुमं दत्त्वा समेत्यानलम् ।
कृत्वा तत्र हुताशने च कलशे चैवं प्रसूनाञ्जलिं
मूलेनाष्ट घृताहुतीर्वितनुयात् तत्कर्मसांमुख्यदाः ॥ ११ ॥
क्षेत्राधिपादिप्रतिहारकान्तैर्निर्माल्यधार्यादिगुरूत्तमान्तैः ।
हुत्वैकशः पूर्वमथो यथाशक्त्यावृत्य सर्पिर्जुहुयादमीभिः ॥
पुरः कोपतत्त्वेन तद्वत्यशेषे
ततः क्ष्मादिकाव्यक्तपर्यन्ततत्त्वैः ।

---

तत्सम्पातघृतं च समर्प्य तं निखिलैः परिवारैर्निखिलैस्तत्त्वैश्च परिपूर्णं भावयित्वा ततः कुसुमं विकीर्य साञ्जलिः अञ्जलिमुद्राबन्धपूर्वं संहारानुमतिं संहारार्थमनुज्ञां देवं प्रार्थयेत् ॥ १० ॥

ततो लब्धाज्ञः गृहीतानुज्ञो भूत्वा नाडीसन्धानं कुर्यात् । तत्परिपाटीमाह — गृहेत्यादिना । गृहमूर्तिकुण्डकलशार्चोदर्चिरम्भश्चितां प्रासादमूर्तेः कुण्डस्य कलशस्य च क्रमात् प्रतिमाया अग्नेर्जलस्य च तेषां चैतन्यानां च नाडीयोगकृते तत्त्रितयस्य नाडीनां योगार्थं प्रथमं देवाय ध्रुवेण प्लुतप्रणवेन कुसुमं त्रिशो दत्त्वा अनलं कुण्डस्थाग्निसमीपं समेत्य तत्र हुताशने अग्नौ च कलशे च एवं प्लुतप्रणवेन त्रिस्त्रिवारं प्रसूनाञ्जलिं कृत्वा एवं नाडीसन्धानानन्तरं पुनर्मूलेन तत्कर्मसांमुख्यदाः तस्य संहारकर्मण आभिमुख्यदाना याष्ट घृताहुतीर्वितनुयात् ॥ ११ ॥

ततः क्षेत्राधिपादिप्रतिहारकान्तैः क्षेत्रपालमारभ्य संहारक्रमेण द्वाःस्थपर्यन्तैर्बलिपरिवारमन्त्रैः पुनर्निर्माल्यधार्यादिगुरूत्तमान्तैः स्वस्वनिर्माल्यधारिणमारभ्य संहारक्रमेण स्थितैः परिवारमन्त्रैः समष्टिमारभ्य प्रतिलोमस्थितैः गुरुपर्यन्तैः पीठमन्त्रैश्च एकशः सकृत् सर्पिर्हुत्वा अथो अमीभिः वक्ष्यमाणैर्मन्त्रैर्यथाशक्ति अष्टशतादिसंख्यमावृत्य सर्पिर्जुहोतु ॥ १२ ॥

ततः तद्वति कोपतत्त्ववति विष्ण्वादौ पुरः आदौ कोपतत्त्वेन, अशेषे सर्वदेवेषु ततः क्ष्मादिकाव्यक्तपर्यन्ततत्त्वैः पृथिवीतत्त्वादिप्रकृत्याख्यत्राणपर्यन्तैः

कृशान्वादिहृत्पुण्डरीकावसानै-
विंशेषान्वितैः स्वैर्हुनेचेषुतत्त्वैः ॥ १३ ॥

जीवेन सर्वेषु शिवेऽन्तिमेन शिवेन चैतत्परमीक्रियायै ।
यथोक्तसङ्ख्यावसितौ जुहोतु पूर्णाहुतिं च प्रतितत्त्वमत्र ॥
सर्वत्र सङ्ख्याष्टशतं समुक्ताथाष्टोत्तरा विंशतिरष्ट वात्र ।
जुहोतु शर्वे निजपञ्चतत्त्वैरुद्घातवृत्त्यैकश एव वान्यैः ॥१५॥
सूत्रच्छिदाकर्मणि हुंफडन्तान्युक्तानि तत्त्वानि न चापरत्र ।
तथैव निष्क्रामणकर्मवर्जं विशेषयत्त्वं न च पञ्चसूक्तम् ॥

श्चतुर्विंशतितत्त्वैः, शिवे तु शक्तितत्त्वान्तैः पञ्चत्रिंशत्तत्त्वैः, पुनः सर्वेषु कृशान्वादिहृत्पुण्डरीकावसानैः अग्निमण्डलसोममण्डलसूर्यमण्डलहृत्पुण्डरीकैः, पुनर्विंशेषान्वितैः द्वादशे पटले वक्ष्यमाणविशेषयुक्तैः स्वैः स्वैः इषुतत्त्वैः पञ्चतत्त्वैश्च हुनेत् ॥ १३ ॥

पुनः एतत्परमीक्रियायै एतस्य देवस्य परत्वप्राप्तये सर्वेषु देवेषु जीवेन जीवतत्त्वेन शिवे अन्तिमेन शिवतत्त्वेन च जुहोतु । यथोक्तसंख्यावसितौ उक्तानां संख्यानामवसाने प्रतितत्त्वं तत्त्वे तत्त्वे च यथोक्तपूर्णाहुतिं च जुहोतु ॥ १४ ॥

अथ अत्र सर्वत्र तत्त्वेषु अष्टशतं वा अष्टोत्तरा विंशतिर्वा अष्ट वा संख्या समुक्ता । शिवे निजपञ्चतत्त्वैः उद्घातवृत्त्या जुहोतु । उद्घातावृत्तिर्नाम ऊर्ध्वोर्ध्वं हननेन ह्रासेनावृत्तिः । तत्र प्रथमेन तत्त्वेन पञ्चविंशत्यधिकं शतं, द्वितीयेन शतं, तृतीयेन पञ्चसप्ततिः, चतुर्थेन पञ्चाशत्, पञ्चमेन पञ्चविंशतिरित्यादिसंख्याविभागेनेत्यर्थः । अन्यैः पञ्चत्रिंशत्तत्त्वैः एकैकश एव वा जुहोतु ॥ १५ ॥

सूत्रच्छिदाकर्मणि सूत्रच्छेदो नामायतनाद् बिम्बस्योद्धारः तत्र होमादौ योजनीयानि तत्त्वानि हुंफडन्तान्येवोक्तानि । अपरत्र सूत्रच्छेदेन विनं

१. 'त्वैः ॥
सर्वाद्यादिषु तत्त्वकेषु निजमूर्ध्यन्तेषु गन्धादित-
तन्मात्रोल्लसितस्वरूपपदमादायान्तमन्ते पुनः ।
ह्रेन्तात्मान्तसमानपूर्वकनिजप्राणान् नमोन्तान् वदे
देवं संहृतिपञ्चतत्त्वमनवः प्रोक्ता विशेषान्विताः ॥
ग्रीं ख. पाटः. २. जुहोतु पूर्णाहुतिं [illegible] इति मूलकोशपाटः.

कनिक्रदत्स्वस्तिसमुत्थमन्त्रैः सकृत् सकृन्निष्क्रमणे जुहोतु ।
सूत्रच्छिदायां च चतुर्गृहीतं वास्तोष्पतेप्रत्यृगणुद्वयेन ॥

गत्वा गर्भगृहं विधाय परमान्नप्रीणनाद्यं विभो-
स्तद्धोमं सुसमाप्य तत्त्वकलशे सम्पातपातादिकम् ।
कृत्वा स्वस्तिकविष्टरेऽन्तरुपनीयं स्थापयेदग्रतो
यात्राद्याहुतिसाधिताज्ययुगलं चास्थाप्य रक्षेत् क्वचित् ॥

निष्क्रमादौ न हुंफडन्तत्वमुक्तम् । तथैव निष्क्रामणकर्मवर्जं निष्क्रामणकर्मणोऽन्यत्र पञ्चसु तत्त्वेषु विशेषवत्त्वं विशेषयोजनं च नोक्तम् ॥ १६ ॥

**निष्क्रमणे** तु कनिक्रदत्स्वस्तिसमुत्थमन्त्रैः 'कनिक्रदज्जनुषम्' इत्यादिमन्त्रैः 'स्वस्ति नो मिमीताम्' इत्यादिमन्त्रैश्च सकृत् सकृत् सर्पिर्जुहोतु । सूत्रच्छिदायां सूत्रच्छेदनिमित्ते वास्तोष्पतेप्रत्यृगणुद्वयेन 'वास्तोष्पते प्रतिजानीहि' 'वास्तोष्पते शग्मया' इति मन्त्राभ्यां चतुर्गृहीतं चतुर्गृहीतपूर्णाहुतिं च जुहोतु ॥ १७ ॥

एवं कृत्वा गर्भगृहं गत्वा विभोर्देवस्य परमान्नप्रीणनाद्यं पायसं निवेद्य तत्कुण्डस्थाग्नावेव पूजाहोमं विधायान्तर्गत्वा निवेद्यविसर्जनं कृत्वा प्रसाद्य प्रसन्नपूजानन्तरं बहिरागत्य तद्धोमं स्विष्टकृद्धोमादिना सुसमाप्य तत्त्वकलशे सम्पातपातादिकं सम्पातस्पर्शाग्न्युद्वासनादिकं कृत्वा अन्तः देवस्याग्रतः स्वस्तिकविष्टरे पूजितपीठे स्वस्तिके तत्त्वकलशमुपनीय स्थापयेत् । यात्राद्याहुतिसाधिताज्ययुगलं च 'कनिक्रदा'दिहोमसाधितं 'वास्तोष्पति'होमसाधितं च संपातं क्वचित् प्रदेशे आस्थाप्य रक्षेत् ॥ १८ ॥

---

१. 'न ॥
होमं समाप्य कलशे प्रसमर्प्य तत्त्वसम्पातसर्पिरितराद्वितयं सुरक्षेत् ।
अग्ने निधाय दहनं कलशं च पार्श्वे संपूज्य तस्य तनुयादथ शान्तिहोमम् ॥

सावित्र्याष्टसहस्रमत्र जुहुयाद् दूर्वांत्रिमध्वाप्लुता
भूराद्यैरपि वा पयोद्रुसमिधः संपातमेतद्घटे ।
सिक्त्वाज्यं निजपञ्चतत्त्वमनुभिर्हुत्वाष्टशस्तद्भवं
सम्पातं परिरक्ष्य वह्निगतचैतन्यं घटे योजयेत् ॥

तेनाभिषिच्य विधिवत् प्रयजेच्च देवमुद्वास्य तत्त्वकलशे चितिमग्निसंस्थाम् ।
उद्याप्य चिन्मयतया परिकल्प्य नीत्वा देवाग्रतो न्यसतु तं सुसमिष्टपीठे ॥ निर्गत्य' ख. पाठः,

२. 'या' इति मूलकोशपाठः

निर्गत्य विप्रान् विदुषः समूह्य प्रसाद्य हेमादिसमर्पणेन ।
देवं च तत्तन्मनुना प्रणम्य कृताञ्जलिः कर्म निवेदयेत ॥

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २० ॥

नमः शिवाय साम्बाय सगणाय ससूनवे ।
प्रधानपुरुषेशाय सृष्टिस्थित्यन्तहेतवे ॥ २१ ॥

पूजाबिम्बमिदं विष्णोः स्थापितं पूर्वसूरिभिः ।
अनेन दूषणेनाद्य दूषितं चेह वर्तते ॥ २२ ॥

दुष्टबिम्बस्य चोद्धारः कर्तव्य इति शासनम् ।
आगमस्य वयं कर्तुं व्यवसायमुपास्महे ॥ २३ ।

अत्रेदं यदि कर्तव्यमागमार्थतया भवेत् ।
भवन्तो नोऽनुजानन्तु भवेमाज्ञाकरा वयम् ॥ २४ ॥

इति ॥

आद्योऽजितेऽणुः प्रणतौ द्वितीय-
स्त्र्यक्षे स्वमूलादिरतःपरेषु ।
विज्ञापनेऽन्यत् त्रितयं हरौ तत्
परेषु किञ्चिद्विदुराद्यपादम् ॥ २५ ॥

---

पुनर्निर्गत्य विदुषः प्राज्ञान् विप्रान् समूह्य अग्रमण्डपे समूहीकृत्य हेमादिसमर्पणेन सुवर्णादिदानेनप्रसाद्य तत्तन्मनुना स्वस्वोक्तमन्त्रेण देवं च प्रणम्य तत्र कृताञ्जलिः स्थित्वा तच्चिकीर्षितं कर्म निवेदयेत ॥ १९ ॥

प्रणामादौ विहितान् मन्त्रान् लिखति—नम इत्यादि ॥ २०–२४ ॥

उक्तानां स्तोत्रमन्त्राणां विभागमाह — आद्य इति । एषु मन्त्रेष्वाद्यो 'नमो ब्रह्मण्यदेवाये'त्याद्योऽजिते प्रणतौ नमस्कारे अणुः [1] द्वितीयो 'नमः शिवाये'त्याद्यस्त्र्यक्षे प्रणतावणुः । अतःपरेषु शिवनारायणादिषु स्वमूलादिरणुः । अन्यत् त्रितयं 'पूजाबिम्बमिदमि'त्यादिपद्यत्रयं हरौ विषये ब्राह्म-

---

१. 'त' ख. पाठः.

क्रियतामिति तैः समीरिते सुविमृश्यागमशासनं मुहुः ।
अथ विश्वजनावबोधकं वचनं चागमिकं निवेदयेत् ॥ २६ ॥

यथैव देवपूजायां विनियुक्तमनिन्दितम् ।
द्रव्यं पुष्पादिकं पश्चान्निर्माल्यमिति निन्द्यते ॥ २७ ॥

एवं बिम्बमदुष्टं यत् पूजायां विनियुज्यते ।
तदेव दूषितं पश्चान्निर्माल्यमिति निन्द्यते ॥ २८ ॥

तस्माद् दुष्टमिदं बिम्ब सवद्भिर्मुक्तसंशयैः ।
निर्माल्यबुद्ध्या त्यक्तव्यमिति शास्त्रस्य शासनम् ॥
इति ॥

संवावदूकेषु जनेषु कर्तॄन् कियन्तमित्याद्यणुनानुयुज्य ।
कालावधिं तद्गतदेवताभ्यो देवाय चैवं विनिवेदयेच्च ॥

कियन्तं कालमत्रेशः प्रवासवसतिं वसेत् ।
मासादूर्ध्वं द्वादशाब्दादर्वाक् कालावधिः स्मृतः ॥ ३१ ॥
नार्वागूर्ध्वं क्लेशवासं वासुदेवोऽनुमन्यते ॥

शृण्वन्तु देवताः सर्वाः प्रासादमिममाश्रिताः ।
यदुच्यमानमस्माभिरनुगृह्णन्तु तेन नः ॥ ३२ ॥

---

णेभ्यो विज्ञापनेऽणुः स्यात् । परेषु देवेषु किञ्चिद्भिदुराद्यपादं 'पूजालिङ्गमिदं शम्भोरि'त्यादिभेदिताद्यपादं तदेव त्रयम् ॥ २५ ॥

**अथ तैः** विप्रैः आगमशासनम् आगमानां नियोगं विमृश्य मुहुर्मुहुः क्रियतामिति निस्सन्दिग्धं समीरिते सत्यथ विश्वजनावबोधकं सामान्यजनप्रबोधकम् आगमिकम् आगमोक्तं वचनं च निवेदयेत् ॥ २६ ॥

तान्याह — **यथैव** देवपूजायामित्यादि ॥ २७—२९ ॥

**संवावदूकेषु** तस्मिन् कर्मणि संवदनशीलेषु जनेषु सत्सु कर्तॄन् प्रति 'कियन्तं कालमि'त्याद्यणुना कालावधिमनुयुज्य पृष्ट्वा तद्गतदेवताभ्यः तत्क्षेत्रस्थितदेवताभ्यः एवं 'शृण्वन्त्वि'त्याद्यणुना, देवाय 'भगवन् वास्त्वभिनवमि'-त्यादिना च निवेदयेत् ॥ ३० ॥

त्रिविधं मन्त्रं पठति — **कियन्तमित्यादि** ॥ ३१—३८ ॥

पूर्वैः पूर्वं कृतमिदं देवालयमसारवत्।
प्राप्तं कालवशाद् भूयो वयं तत् कर्तुमुद्यताः ॥ ३३ ॥
कालेनैतावता भूयः प्रासादेऽस्मिन् पुनर्नवे।
स्थापयामो वयं सत्यं तदनुज्ञातुमर्हथ ॥ ३४ ॥
भगवन्! वास्त्वभिनवं बिम्बं वा तव शोभनम्।
कारयिष्यन्ति ते भक्तास्तदनुज्ञातुमर्हसि ॥ ३५ ॥
क्लेशवासस्त्वया देव! रोचनीयोऽल्पके गृहे।
यावन्नवं शुभं कृत्वा पुनः संस्थापयामहे ॥ ३६ ॥
जीर्णं बिम्बमिदं देव! सर्वदोषावहं नृणाम्।
अस्योद्धारे कृते शान्तिरित्येवं भाषितं त्वया ॥ ३७ ॥
तत् त्वयाधिष्ठितं देव! उद्धरामि तवाज्ञया।
तदुपक्रान्तमस्माभिस्तदनुज्ञातुमर्हसि ॥ ३८ ॥

इति ॥

एते तु विष्णुविषये प्रायो मन्त्राः परेष्वमी।
कार्याः स्वस्वागमाद्यास्स्वविशेषपदान्विताः ॥ ३९ ॥

देवं समिष्टसरसीरुहमात्रपीठे
सङ्कल्प्य सन्निहितमप्ययतत्त्वतारैः।
उद्वाप्य तत्त्वकलशेन ततोऽभिषिच्यो-
द्वाप्य प्रकल्पयतु केवलचिन्मयं तम् ॥ ४० ॥

---

एते तु मन्त्राः प्रायो (विष्णु)विषये भवन्ति। परेषु देवेष्वमी मन्त्राः स्वस्वागमाद्यास्स्वविशेषपदान्विताः स्वेषु स्वेष्वागमेषूक्तस्वस्वविशेषशब्देनान्विताः (कार्याः) तत्र तत्र शिवादिदेवप्रासादबिम्बादीनां शब्दा यथायोगं योजनीया इत्यर्थः ॥ ३९ ॥

पुनरन्तर्गत्वा समिष्टसरसीरुहमात्रपीठं केवलं 'पद्माय नमः' इत्येव पूजिते पीठे देवं सन्निहितं सङ्कल्प्य अप्ययतत्त्वतारैः प्रतिलोमतत्त्वैर्मूलेन प्रणवेन चोद्वाप्य संहारक्रमेण त्रिर्व्यापय्य ततस्तत्त्वकलशेन तैरेव मन्त्रैरभिषिच्य तैरेवोद्वाप्य तं केवलचिन्मयं प्रकल्पयतु ॥ ४० ॥

---

१. 'प्रा' क. पाठः. २. 'मन्त्राः प्रायः प' ख. पाठः.

अग्रे निषद्य प्रणवेन नाडीयुक्त्यैत्य देवाभिदया स्थितः सन् ।
सजाग्रदाद्यात्मदशादिभिन्नहारालयाद्यात्मदलाग्रकाद्यम् ॥
ध्यात्वा क्रमात् क्षेत्रमिदं गृहार्चा-
हृदम्बुरुट्कर्णिकमब्जयुग्मम् ।
तारेण तेजस्तडिदाभमन्त-
रास्तूपिकं[1] व्याप्य च मूलचक्रात् ॥ ४२ ॥
विकीर्य पुष्पाञ्जलिमादिनाथ प्लुतेन विष्वग् विषुवत्सरण्या ।
प्रसार्य संव्याप्तमिदं बहिष्ठप्राकारनिष्ठं परिकल्प्य तेन ॥
ग्रस्तं समस्तं परिवारजातं जालेन मीनानिव संविभाव्य ।
पुष्पाञ्जलिं संहृतिमुद्रयात्र कुर्वन् समाहृत्य ततः क्रमेण ॥

---

ततो ध्यानसङ्कोचनमाह — अग्रे निषद्येति । देवस्याग्रे निषद्य नाडीयुक्त्या नाडीयोगेन एत्य देवं मनसा गत्वा प्रणवेन देवाभिदया देवेनैकीभूतः स्थितः सन् इदं क्षेत्रं महामर्यादापर्यन्तं स्थानमब्जयुग्मं ध्यात्वा । कथमित्याकाङ्क्षायामाह — सजाग्रदाद्येत्यादि । सजाग्रदाद्यात्मदशादिभिन्नहारालयाद्यात्मदलाग्रकाद्यं जाग्रदाद्याः जाग्रत्स्वप्नसुषुप्तितुरीयाख्या दशाः अवस्थाः ताभिः सहिताः सजाग्रदाद्याः तत्स्वरूपाः सजाग्रदाद्यात्मानः तत्स्वरूपैरवस्थादिभिरन्यैश्च चतुर्विधैर्वर्गैः भिन्नाः संभिन्नाः युक्ताः हारालयाद्याः हाराद्याः आलयाद्याश्च, हाराद्याः बाह्यहारमध्यहारान्तर्हारान्तर्मण्डलानि आलयाद्याः प्रासादगर्भगृहपीठप्रतिमाश्च, हारालयाद्यात्मानो हारालयाद्यस्वरूपाः ते दलाग्रकाद्यं ययोरब्जयोः, दलाग्रकाद्याः दलाग्रदलदलान्तर्केसराः, तदब्जद्वयं गृहार्चाहृदम्बुरुट्कर्णिकं क्रमात् प्रासादकर्णिकं प्रतिमाहृदयकर्णिकं च एवं पद्मद्वयं ध्यात्वा, अन्तः सुषुम्नायां मूलचक्रात् मूलाधारादारभ्य आस्तूपिकं[2] द्वादशान्तास्मस्तूपिकाग्रपर्यन्तं[3] तडिदाभं विद्युदाकारं तेजः तारेण प्लुतप्रणवेन व्याप्य व्यापय्य, अथ प्लुतेनादिना प्रणवेन पुष्पाञ्जलिं विकीर्य विषुवत्सरण्या सुषुम्नानाड्या संव्याप्तमिदं तेजः विष्वक् परितः प्रसार्य, इदं बहिष्ठप्राकारनिष्ठं महामर्यादापर्यन्तं संव्याप्तं परिकल्प्य, तेन तेजसा समस्तं परिवारजातं परिवारसमूहं जालेन मीनानिव ग्रस्तं कवलीकृतं संविभाव्य, संहृतिमुद्रया पुष्पाञ्जलिं

---

1. 'वि' ख. पाठः. २.,३. 'पि' ग. पाठः.

सप्तोर्मिपञ्चाम्बुधिमात्रतारै-
रामध्यहारापदमान्तहारम् ।
आनीय चान्तर्गतमण्डलान्तं
प्रासादनिष्ठं च नयद् दशाभिः ॥ ४५ ॥

त्रिद्व्येकमात्रप्रणवैर्नयेत् त-
दागर्भमापीठमथाणुबिम्बम् ।
आकृष्य बिम्बात् तदपीतितत्त्व-
तारैश्चिदात्मन्यखिलं तदन्तः ॥ ४६ ॥

तत्कर्मकालप्रतिबोधनान्ते तत्रोपविष्टः सुसमाहितात्मा ।
समाधिसङ्कोचनमुक्तनीत्या निर्वर्त्य तस्मिन् सकलं सुयोज्य ॥

---

कुर्वन्, ततः तस्मात् तस्मादवधेस्तत्र तत्र स्थाने क्रमेण समाहृत्य संहृत्य । संहारक्रमे विशेषं दर्शयति — सप्तेति । सप्तोर्मिपञ्चाम्बुधिमात्रतारैः सप्तषट्प ञ्च चतुर्मात्रप्रणवैः आमध्यहारापदं मध्यहारापर्यन्तम् आन्तहारम् अन्तहाराप र्यन्तम् अन्तर्गतमण्डलान्तम् अष्टमूर्तिनिलयपर्यन्तं प्रासादनिष्ठं चानीय, दशाभिरवस्थाभिः सह परिवारान् नयेत् प्रापयेत् । तत्र सप्तमात्रप्रणवेन संहृतिमुद्रया पुष्पाञ्जलिं कुर्वन् महामर्यादाया आरभ्य मध्यहारापर्यन्तं स्थितान् परिवारांस्तेजसा संगृह्य जाग्रदवस्थया सहानीय तत्पर्यन्तमानयेत् । तथा [illegible]ात् षण्मात्रप्रणवेन पुष्पाञ्जलिं कुर्वन् स्वप्नावस्थया सह अन्तहारापर्यन्तं च, तथा पञ्चमात्रप्रणवचतुर्मात्रप्रणवाभ्यां च अन्तर्मण्डलान्तं प्रासादपर्यन्तं च क्रमेणानयेत् ॥ ४१—४५ ॥

पुनः त्रिद्व्येकमात्रप्रणवैः ।त्रमात्रप्रणवेन प्रासादाद् आगर्भ गर्भगृहपर्यन्तं, द्विमात्रप्रणवेन तस्माद् आपीठं पीठपर्यन्तम्, एकमात्रप्रणवेन तस्माद् आणुबिम्बं मन्त्रबिम्बपर्यन्तं चावस्थाभिः सहाकृष्य कबलीकृतपरिवारं तत् तेजो नयेत् । पुनर्बिम्बाद् अपीतितत्त्वतारैः प्रतिलोमतत्त्वैस्तारेण च तदखिलं तेजोभूतं तदन्तः बिम्बस्यान्तर्ग(तः?ते) चिदात्मनि चैतन्यमये नयेत् ॥ ४६ ॥

तत्र क्रियाक्रमे पक्षभेदं दर्शयति — तत्कर्मेति । तत्कर्मकालप्रतिबोधनान्ते तस्य कर्मणस्तस्य कालस्य च देवं प्रति विज्ञापनानन्तरं तत्र बिम्बाग्रतः

---

१. 'त् ॥ पुनः त्रिद्व्ये' क. ग. पाठः.

तद्[1] बिम्बकुम्भावपृथक् पृथक् च
व्याप्याभिषिच्याप्ययतत्त्वतारैः ।
तत्त्वकुम्भेन पुनश्च तैस्तद्[2]
व्याप्याहरेद् वा प्रतिमाहृदब्जे ॥ ४८ ॥

तत्तद्विभूत्या बहिरङ्गतोऽन्त-
रङ्गादपीतिक्रमतो विकृष्य ।
संयोज्य बिम्बस्थचिदात्मनीमं[3]
चिन्मात्रमाकल्प्य निरेतु चातः ॥ ४९ ॥

कृत्वाग्रतः स्वस्तिकक्लृप्तशालीदर्भाग्रकूर्चेऽर्चितयोगपीठे ।
सुसंस्कृतं लोहमयं सकूर्चं घटं सदूर्वाक्षतकाञ्चनाद्यम् ॥५०॥

---

उपविष्टः सुसमाहितात्मा सुतरां समाहितमना भूत्वा उक्तनीत्या उक्तमार्गेण समाधिसंकोचनं ध्यानसंकोचनं निर्वर्त्य कृत्वा तस्मिन् तत् सकलं परिवारतत्त्वादिकं सुयोज्य सुतरां योजयित्वा बिम्बकुम्भौ बिम्बतत्त्वकलशौ अपृथक् ऐकात्म्येन पृथक् च व्यस्तात्मतया च प्रणवेन व्याप्य अप्ययतत्त्वतारैः प्रतिलोमतत्त्वैस्तारेण तत्तत्त्वकुम्भेनाभिषिच्य पुनश्च तैस्तत्त्वतारैः प्रातिलोम्येन व्याप्य तत्तेजः (प्रतिमाहृदब्जे) आहरेद्वा ॥ ४७,४८ ॥

इतिक्रमतः पक्षयोरन्यतरक्रमेण बहिरङ्गात् प्राकारादिप्रासादपर्यन्ताद् अन्तरङ्गात् प्रासादादिप्रतिमाहृदयान्ताच्च तत्तद्विभूत्या तत्तदैश्वर्यांशेन सह विकृष्याकृष्य बिम्बस्थचिदात्मनि बिम्बहृत्कमलस्थचैतन्ये संयोज्य इमं देवं चिन्मात्रमाकल्प्य अतः अस्मात् स्वयं निरेतु निर्गच्छतु पृथग्भूतो भवतु ॥४९॥

पुनरग्रतो देवस्याग्रभागे स्वस्तिकक्लृप्तशालीदर्भाग्रकूर्चे स्वस्तिकादिभिः क्लृप्ते पीठे अर्चितयोगपीठे तत्र सुसंस्कृतं यथोक्तक्रमेण संस्कृतं लोहमयं घटं कृत्वा सकू(र्चकं:र्चं) कूर्चसहितं सदूर्वाक्षतकाञ्चनाद्यं दूर्वाक्षतकाञ्चननवरत्नादिसनाथं च कृत्वा पूतजलेन गालनतीर्थावर्तनेन च शुद्धजलैर्[4] मानसपूरणानन्तरं सावकाशमूर्ध्वाधिपर्यन्तं पूर्तिं च कृत्वा पुनः समिष्टार्णसरोरुहाद्यं संपूजितलिपिपङ्कजं कृतमूर्तिकलावाहनाद्यं च कृत्वा देवं 'नमस्तो सर्वलोकेशे'-

---

१. 'तू कुम्भाविम्बात्र' क. पाठः. २. तद्रुद् ' ख., 'तैश्चोव्याप्या' ग. पाठः.
३. 'मं प्रकल्पयेत् केवलमात्मरूपम् ॥ ' ख. पाठः ४. 'न शुद्धेन मा' क. ग. पाठः.

आपूरितं पूतजलेन सावकाशं समिष्टार्णसरोरुहाख्यम् ।
सम्प्रार्थ्य देवं मनुबिम्बके तत्सम्पातयुग्मं प्रसमर्पयेच्च ।
स्थूलं च सूक्ष्मं च परं च रूप-
मावाहयेद् व्युत्क्रमतोऽणुबिम्बात् ।
सर्वत्र गायत्र्यणुमूलतारै-
र्वैतैर्जिनार्णांशकृतोपचारैः ॥ ५२ ॥
हरौ वसुद्वादशवर्णतारैः
षडर्णनादप्रणवैर्हरे च ।
आवाहयेद् वेति पृथक् स्वमूल-
न्यासान्तमाधाय यजेच्च किञ्चित् ॥ ५३ ॥
यथापुरं वारि दरे प्रपूर्य तेन स्वमूलाणुसमर्चितेन ।
तत्त्वान्युदित्वा हृदयारविन्दाद् धुतक्रमेणाणुपराणि पञ्च ॥

---

त्यादिवक्ष्यमाणमन्त्रेण संप्रार्थ्य मनुबिम्बके तत्संपातयुग्मं कनिक्रदत्स्वस्त्यादिहुतजातं वास्तोष्पतिहुताज्जातं च संपातद्वयं प्रसमर्पयेच्च ॥ ५०,५१ ॥

ततः सर्वत्र देवेषु गायत्र्यणुमूलतारैः स्वस्वगायत्र्या स्वस्वमूलेन तारेण च क्रमात् स्थूलं सूक्ष्मं परं च रूपमणुबिम्बाद् व्युत्क्रमतः उद्वासनारूपेण कलशे आवाहयेत् । जिनार्णांशकृतोपचारैः स्थूलावाहने गायत्रीस्थाने स्वस्वोपचारैर्वा हरौ वसुद्वादशवर्णतारैः अष्टाक्षरद्वादशाक्षरप्रणवैर्वा हरे षडर्णनादप्रणवैः षडक्षरप्रासादप्रणवैर्वा इति स्थूलसूक्ष्मपराणि रूपाणि चावाहयेत् । पृथक् पृथक् स्वमूलन्यासान्तं स्वस्वमूलमन्त्रन्यासपश्चिमं कर्माधाय किञ्चित् किञ्चित् स्वमूलेन यजेच्च ॥ ५२, ५३ ॥

जीवोद्वासनप्रकारस्तु गुरूपदेशादेव ग्राह्य इति मत्वा तस्य सूत्रमात्रं प्रकाशयति—यथापुरमिति । यथापुरं यथा पुरा जीवावाहनकाले तथा वारि जलं दरे

---

१. 'शुद्धज' ख. पाठः. २. 'र्थ्यमेवं' ग. पाठः. ३. 'तश्च वि' इति मूलकोशपाठः. ४. तु ॥

प्रणवाद्यन्तरुद्धैस्तु बिन्दुनादान्तदीपितैः ।
पञ्चब्रह्मभिरंशेऽत्रावाहनविधिं नयेत् ॥

यं' क. पाठः.

द्विधापि तान्यन्वितचेतनानि
नीत्वा क्रमण्यात्मपदं पदादेः।
आवाह्य तस्मात् कलशस्थमूर्तौ
संयोज्य सर्वं विधिवद् विदध्यात्॥ ५५॥

प्रणवाद्यन्तरुद्धैस्तु बिन्दुनादान्तदीपितैः।
पञ्चब्रह्मभिरेवेशेऽत्रावाहनविधिं नयेत्॥ ५६॥

प्राणाणुविन्यासविवर्जमात्महृत्पङ्कजान्मन्त्रमहोऽभिवाह्य।
साङ्गीक्रियाद्यं प्रविधाय किञ्चिदिष्ट्वा निवेद्य प्रधिनोतु देवम्॥

सुवाससाच्छाद्य सदर्भदाम्ना
समर्प्य यात्राहुतिजाज्यशेषम्।

---

शङ्खे प्रपूर्य स्वमूलाणुसमर्चितेन तेन जलेन प्रतिमाया हृदयारविन्दाद् आवाह्य कलशस्थमूर्तौ संयोज्य प्राणाणुविन्यासविवर्जं प्राणन्यासं मुक्त्वा सर्वं कर्म विधिवद् विदध्यादिति योजना। हुतक्रमेणेति तत्त्वहोमक्रमेण क्षेत्रपालादिकं निर्माल्यधार्यादिकं चोदित्वा उक्त्वा। तत्त्वानि सर्वाणि तत्त्वानि त्वणुपराणि अणु मूलं परे ऊर्ध्वे भवन्ति येषां तान्यणुपराणि। अणोः पराण्यप्यणुपराणि। मूल पुटितपञ्चतत्त्वान्युदित्वेत्यर्थः। तान्यपि द्विधा च सृष्टिसंहारक्रमेण अन्वितचेतनानि। प्राणापानेत्यादिमन्त्रशेषः सूचितः। कं जलं पदादेः पादद्वयमारभ्य। पदादेरित्यनेनैव पादयोरादिरिति मूलाधारोऽप्युक्तः। तस्मादात्मपदं नीत्वा[1]। आ आत्मपदं द्वादशान्तरस्थपरमात्मपदपर्यन्तं नीत्वेत्यर्थः। मूलाधारहृदयभ्रूमध्यान्यप्यात्मपदान्येवेति त्रिस्थानादप्यावाहनं सूचितम्। ईशे तु अत्र कर्मणि बिन्दुनादान्तदीपितैः बिन्दुना नादेन तदन्ताभ्यां शक्तिशान्ताभ्यां च दीपितैः प्रकाशितैः एवंभूतैः प्रणवाद्यन्तरुद्धैः प्रणवैराद्यन्तरुद्धैः पञ्चब्रह्मभिरेव पञ्चब्रह्मसहितैः पञ्चतत्त्वैरेवावाहनविधिं नयेत्। तत आत्महृत्पङ्कजात् स्वहृदयपद्मात् मन्त्रमहः मन्त्रमयं तेजः मूलत आवाह्य साङ्गीक्रियाद्यं सकलीकरणाद्यं प्रविधाय किञ्चिदिष्ट्वा निवेद्य तत्रस्थं देवं प्रधिनोतु प्रीणातु॥ ५४–५७॥

पुनः सुवाससा अहतवस्त्रेण सदर्भदाम्ना दर्भदामयुक्तेनाच्छाद्य यात्राहुतिजाज्यशेषं कनिक्रदादिहुतसम्पातशेषं समर्प्य उत्तिष्ठमनुमजापी कलशमु

---

१ 'त्वा। आत्म' ङ च. पाठः.

उत्थाप्य चोत्तिष्ठमनुप्रजापी
सोष्णीषमूर्धोद्धृतजीवकुम्भः ॥ ५८ ॥
निर्गत्य पर्येत्य च शाकुनाद्यैः प्रासादमेतल्लघुमण्डपं च ।
अन्तर्यथाविध्युपनीय शय्यामारोप्य मूलेन समर्च्य रक्षेत् ॥
बिम्बोद्धारविधौ सशान्तिकलशं कृत्वाग्रतः पावकं
सावित्र्याष्टसहस्रमत्र जुहुयाद् दूर्वास्त्रिमध्वाप्लुताः ।
भूराद्यैरपि वा पयोद्रुसमिधः सम्पातमेतद्घटे
सिञ्चेत् पञ्चभिरष्टशश्च जुहुयात् तत्त्वैः ससम्पातकम् ॥
संहारक्रमतः स्वतत्त्वमनुभिर्होमे सुक्लृप्तेऽमुना
सिक्त्वा शान्तिघटेन पायसनिवेद्याद्यं प्रकुर्वीत वा ।
सिक्त्वा तत्त्वघटेन जीवकलशे प्रोद्वास्य नीत्वा बहि-
र्देवं बिम्बसमुद्धृतिं वितनुयाद् वासिच्य शान्त्यम्भसा॥

---

त्थाप्य सोष्णीषमूर्धा उष्णीषबन्धमूर्धा भूत्वा उद्धृतजीवकुम्भं शिरस्यधिरोप्य तस्मान्निर्गत्य शाकुनाद्यैः कनिक्रदत्स्वस्त्यादि जपन् प्रासादं पर्येत्य प्रदक्षिणीकृत्य एतल्लघुमण्डपम् अल्पमण्डपं च पर्येत्य मण्डपस्य प्रधानद्वारेण यथाविधि अर्घ्यदानपूर्वम् अन्तरुपनीय शय्यामारोप्य मूलेन समर्च्य रक्षेत् ॥ ५८,५९ ॥

अथ जीर्णस्य बिम्बस्योद्धारविधिमाह — बिम्बोद्धारेति । बिम्बोद्धारविधौ बिम्बत्यागपक्षे प्रासादस्याग्रतः पावकं सशान्तिकलशं कृत्वा पावकं[2] विधाय तद्दक्षिणे शान्तिदेवत्यं कलश च प्रपूज्य अग्निमुखान्तेऽत्र सावित्र्या मन्त्रेण त्रिमध्वाप्लुताः दूर्वाः अष्टसहस्रं जुहुयात् । भूराद्यैः व्याहृतिभिः पयोद्रुसमिधः पयोद्रुमाणां समिधो वा जुहुयात् । तत्संपातम् एतद्घटे शान्तिकलशे सिञ्चेत् । पुनः पञ्चभिस्तत्त्वैः प्रातिलोम्येन अष्टशश्च ससंपातं घृतं जुहुयात् ॥ ६० ॥

अत्र क्रियाक्रमे पक्षभेदमाह — **संहारक्रमत** इति । तत्त्वहोमकाले संहारक्रमतः स्वतत्त्वमनुभिः होमे सुक्लृप्ते सति अमुना शान्तिघटेन देवं सिक्त्वा पायसनिवेद्याद्यं प्रकुर्वीत वा । तत्त्वघटेन सिक्त्वा जीवकलशे प्रोद्वास्य देवं बहिर्नीत्वा शान्त्यम्भसा आसिच्य बिम्बसमुद्धृतिं वितनुयाद्वा ॥ ६१ ॥

---

१. 'त् ॥ अथेज्जि' ख. पाठः. २. 'नि' ख. घ. ङ. च. पाठः.

अथोज्जिहीर्षुः प्रतिमां विशीर्णा-
माचार्यवर्यः प्रणिपत्य देवम् ।
विप्रोत्तमैस्तत्र पुरः स्थितः सन्
प्रवाचयेच्छान्तिमनन्यचेताः ॥ ६२ ॥

शान्तिरस्तु शिवं चास्तु पुष्टिरस्तु सुमङ्गलम् ।
स्वस्ति चास्तु समृद्ध्यस्तु सर्वेषां सन्तु सम्पदः ॥ ६३ ॥

गोब्राह्मणेभ्यः क्षत्रेभ्यो विट्छूद्रेभ्यस्तथैव च ।
लोकेभ्यः सर्वभूतेभ्यो राज्ञे जनपदाय च ॥ ६४ ॥

ग्रामाय यजमानाय गुरवेऽस्मै गृहाय च ।
बिम्बोद्धारविधेरस्तु साकल्यमिह सर्वदा[1] ॥ ६५ ॥

इति ।

गर्भागारमथ प्रविश्य विधिवत् पुण्याहकृत् कौतुकं
बद्ध्वा स्वस्य सकर्तृमूर्तिपजनस्यारक्ष्य सर्वान् गुरुः ।
पुष्पैः संहृतिपञ्चतत्त्वहुतसम्पातान्वितैर्वासना-
शक्तिं भास्करमण्डले प्रणवतः प्रोद्वासयेत् तद्गताम् ॥

---

अथाचार्यवर्यो विशीर्णां भग्नां प्रतिमामुज्जिहीर्षुरुद्धर्तुमिच्छुः विप्रोत्तमैः सह देवं प्रणिपत्य तत्र पुरः स्थितः सन् अनन्यचेताः शान्तिं प्रवाचयेत् शान्तिवाचनं कुर्यात् ॥ ६२ ॥

शान्तिवाचनपद्यानि पठति — शान्तिरस्त्विति ॥ ६३—६५ ॥

अथ गुरुः स्वयं गर्भागारं प्रविश्य विधिवत् पुण्याहकृद् भूत्वा सकर्तृमूर्तिपजनस्य यजमानस्य मूर्तिपानां स्वस्य च कौतुकं बद्ध्वा सर्वानारक्ष्य संहृतिपञ्चतत्त्वहुतसम्पातान्वितैः पूर्वं संगृहीतैः पञ्चतत्त्वहोमसंपातैः सहितैः पुष्पैः तद्गतां प्रतिमागतां वासनाशक्तिं प्रणवतो भास्करमण्डले प्रोद्वासयेत् ॥ ६६ ॥

---

१. 'दा ॥ ग' क. ग. पाठः.

उच्छ्रंचस्वेत्यादिकं नासदाद्यं सूक्तं चाप्यातेपितःपूर्वकं च।
पुंसूक्तादीन् मूलमन्त्रादिकं च मन्त्री तत्रावर्तयेन्मूर्तिपालैः॥
सौवर्णलाङ्गलमुखेन विदार्य पीठ-
बन्धं सुबध्य पशुवालकुशादिरज्ज्वा।
प्रोद्धारयेत् सुकलितेन वृषेण बिम्बं
तद्योग्यमन्त्रकृतसावयवीक्रियाद्यः ॥ ६८ ॥
पीठिकाबन्धविश्लेषे स्वस्वमूलमनुर्मनुः।
व्याहृतित्रयतारात्मा ततो बिम्बसमुद्धृतौ ॥ ६९ ॥
पीठे याम्यशिरस्कमत्र विनिधाय क्षालयित्वा मना-
गिष्ट्वोद्वास्य च वासनां वसनसंवीतं शिरःपूर्वकम्।
नीत्वा न्यस्य बहिः सदर्भसिकते तद्याम्यदिक्स्थण्डिले
वामीकृत्य तिलाक्षतानि विकिरन् पर्येतु बिम्बं त्रिधा॥

मन्त्री मन्त्रविशेषज्ञो गुरुः तत्रोद्धारकाले मूर्तिपालैः सह 'उच्छ्रं च स्वे'त्यादिकं, 'नासदासीद्' इत्यादिकम्, 'आतेपितः'पूर्वकं च सूक्तं पुंसूक्तादीन् पुरुषसूक्तादीन् मूलमन्त्रादिकं चावर्तयेत् आवृत्य जपेत् ॥ ६७ ॥

पुनर्मन्त्री तद्योग्यमन्त्रकृतसावयवीक्रियाद्यः तद्योग्यस्य निर्माल्यधारिणो मन्त्रेण सकलीकृतो भूत्वा पशुवालकुशादिरज्ज्वा पशोर्बालरोमैः कुशादिभिश्च कृतरज्ज्वा सुकलितेन यथावद् बद्धेन वृषेण सौवर्णलाङ्गलमुखेन सुवर्णमयेन लाङ्गलाग्रेण पीठबन्धं विदार्य बिम्बं प्रोद्धारयेत् ॥ ६८ ॥

पीठिकाबन्धविश्लेषे पीठिकावियोगे स्वस्वमूलमनुर्मनुः स्यात्। बिम्बसमुद्धृतौ व्याहृतित्रयतारात्मा 'भूर्भुवःस्वरोमि'ति मनुः ॥ ६९ ॥

अत्र पीठे याम्यशिरस्कं दक्षिणशिरसं विनिधाय शाययित्वा क्षालयित्वा मनागीषदिष्ट्वा वासनां च पूर्ववदुद्वास्य वसनसंवीतं[2] वस्त्राच्छादितं[3] तत्[4] शिरःपूर्वकं बहिर्नीत्वा (सदर्भसिकते) तद्याम्यदिक्स्थण्डिले प्रासादस्य दक्षिणदिक्स्थमण्डले स्थण्डिलं कृत्वा सिकतादर्भांश्च विन्यस्य तत्र दक्षिणशिरस्कं न्यस्य तिलाक्षतानि विकिरन् वामीकृत्य वामीकारेण त्रिधा बिम्बं पर्येतु ॥ ७० ॥

१. 'वर्त्स ज' ख. घ. ङ. पाठः. २, ३, ४: 'तां' क. पाठः.

विसृज्य वस्त्राद्यभिषिच्य किञ्चिनो-
पहृत्य तत्स्थामपि शेषवासनाम् ।
रवौ समुद्वास्य सुवेष्ट्य वाससा
कुशैश्च नद्यादिजलाशयं नयेत् ॥ ७१ ॥

तत्रागाधे पाथसि स्विष्टपीठे
विष्वक्सेनाद्यं स्वनिर्माल्यभाजम् ।
तन्मन्त्रेणावाह्य सम्पूज्य यज्वा
तत्सात्कृत्य प्रक्षिपेद् बिम्ब... ॥ ७२ ॥

स्नात्वात्र कर्त्रा सह तर्पयेच्च स्वमूलम... यथाविधानम् ।
प्राचीनपीठाद्यपनीय मूलवेश्माभिरक्ष्य... च सर्वम् ॥

अथाधिवास्योक्तवदल्पबिम्बं
हुत्वा तथाभ्यर्च्य सजीवकुम्भम् ।
समण्डलं तत्परितो बलिं च
कृत्वा प्रसन्नापचितिं च कुर्यात् ॥ ७४ ॥

---

पुनर्वस्त्रादि विसृज्याभिषिच्य किञ्चनोपहृत्य तत्स्थां शेषवासनामपि रवौ समुद्वास्य वाससा कुशैश्च सुवेष्ट्य नद्यादिजलाशयं नयेत् ॥ ७१ ॥

तत्र यज्वा गुरुरगाधे पाथसि जले स्विष्टपीठे विष्वक्सेनाद्यं स्वं स्वं निर्माल्यभाजं तन्मन्त्रेण तत्तन्मन्त्रेणावाह्य संपूज्य बिम्बं तत्सात्कृत्य तादात्म्यं[3] कृत्वा अप्सु प्रक्षिपेत् ॥ ७२ ॥

अत्र कर्त्रा सह स्नात्वा स्वमूलमन्त्रेण यथाविधानं तर्पयेच्च । पुनरागत्य प्राचीनपीठादि निर्माल्यभूतं पीठनपुंसकशिलाद्यमपनीय मूलवेश्म मूलप्रासादमभिरक्ष्य सर्वं कर्मार्चयेत् ॥ ७३ ॥

अथोक्तवदल्पबिम्बं सजीवकुम्भमधिवास्य तथा पूर्ववदेव हुत्वा समण्डलं सजीवकुम्भमल्पबिम्बगतं देवमभ्यर्च्य तत्परितो मण्डपस्य परितः बलिं च कृत्वा प्रसन्नापचितिं प्रसन्नपूजां च कुर्यात् ॥ ७४ ॥

---

१. 'प्र' क. पाठः. २. 'स्नस्वनि' क. ख. पाठः. ३. 'त्म्यं तदधीनं कृ' ख, 'श्म्यादधीनं कृ' ङ. पाठः.

अथाल्पगेहे सुविशोधितेऽल्पपीठं च संशोध्य तथाधिवास्य।
संरक्ष्य गत्वाभिघटं निषद्य तद्रात्रिशेषं गमयेद् विनिद्रः।

कृत्वा विधिं साम्प्रतिकं प्रभाते
नान्दीमुखादिक्रमतोऽल्पगेहे।
पीठं प्रतिष्ठाप्य ततोऽर्चयित्वा
संरक्ष्य तन्मण्डपमभ्युपेत्य ॥ ७६ ॥

उद्वास्य बिम्बे महितेऽखिलं तन्नीत्वोक्तवद् बिम्बघटक्रमेण।
कृत्वा परावाहनपूजनाद्यं बिम्बं प्रतिष्ठापयतूक्तनीत्या ॥

निद्राघटस्नपनपश्चिममत्र कृत्वा
सम्प्रार्थ्य साधु भगवन्निति सन्नतात्मा।
जीवाभिवाहनविधौ कलशेन तेन
सिञ्चेत् तदर्हमनुविन्यसनं च कुर्यात् ॥ ७८ ॥

भगवन्नल्पगेहेऽस्मिन् वासः क्लेशोऽपि ते हरे!।
वस्तव्यो भगवंस्तावद् यावद् गेहं समाप्यते ॥ ७९ ॥
कारकस्य परामृद्धिमनुजानन्महोदयाम्।
भक्तानामनुकम्पार्थमिह त्वं स्थातुमर्हसि ॥ ८० ॥

इति।

---

अथ सुविशोधिते अल्पगेहेऽल्पपीठं संशोध्य तथाधिवास्य संरक्ष्य मण्डपं गत्वाभिघटं घटाभिमुखं निषद्य विनिद्रस्तद्रात्रिशेषं गमयेत् ॥ ७५ ॥

पुनः प्रभाते साम्प्रतिकं संप्रतियोग्यं विधिं सन्ध्योपासनादिकं कृत्वा नान्दीमुखादिक्रमतः पूर्वक्रमेणाल्पगेहे पीठं प्रतिष्ठाप्यार्चयित्वा संरक्ष्य तन्मण्डपमभ्युपेत्य महिते पूजिते बिम्बेऽखिलमुद्वास्य बिम्बघटक्रमेणोक्तवन्नीत्वा परावाहनपूजनाद्यं कृत्वा उक्तनीत्या बिम्बं प्रतिष्ठापयतु ॥ ७६, ७७ ॥

अत्र निद्राघटस्नपनपश्चिमं कर्म कृत्वा साधु सन्नतात्मा भूत्वा 'भगवन्नल्पगेहेऽस्मिन्'ति संप्रार्थ्य जीवाभिवाहनविधौ तेन जीवक[illegible]त्। तदर्हमनुविन्यसनं प्राणन्यासादिकं च कुर्यात् ॥ ७८ ॥

प्रार्थनामन्त्रं पठति— भगवन्निति ॥ ७९, ८० ॥

हरौ गेहविधावेवं मनुरन्येष्विहोन्नयेत्।
तत्तद्दैवतबिम्बादिसमीप्सितपदान्वयम् ॥८१॥

स्थूलाभिवाहनपुरस्सरमत्र सर्वं
निर्वर्त्य देवमभिपूज्य चरुं निवेद्य।
दत्त्वा बलिं परिषदां परितोष्य देवं
द्वारं पिधाय गमयेत् त्रिदिनं पुरोवत् ॥८२॥

चातुर्थिकस्नपनयागमहोत्सवाद्यं
मूलोदितं सकलमत्र समादधीत।
बालालयन्यसनकर्म नपुंसकाश्म-
गेहोपधानरहितं[1] विहितं तदेतत् ॥८३॥

तद्बिम्बे रचिते समग्रगुणसम्पन्ने सपीठादिके
प्रत्यासीदति च प्रतिश्रुतमुहूर्ते बीजवापादिकम्।

---

हरौ गेहविधौ प्रासादनवीकरणे एवं मनुः स्यात्। इहान्येषु देवेषु बिम्बादिषु च तत्तद्दैवतबिम्बादिसमीप्सितपदान्वयं हरे इति स्थाने तत्तद्देवतानां नाम 'यावद् गेहं समाप्यत' इत्यत्र 'यावद् बिम्बं समाप्यत' इत्यादीष्टपदानाम् अन्वयं योजनम् उन्नयेत् ऊहयेत् ॥ ८१ ॥

पुनरत्र स्थूलाभिवाहनपुरस्सरं सर्वं कर्म निर्वर्त्य देवमभिपूज्य चरुं निवेद्य परिषदां बलिं दत्त्वा देवं परितोष्य द्वारं पिधाय पुरोवत् त्रिदिनं गमयेत् ॥ ८२ ॥

चातुर्थिकस्नपनयागमहोत्सवाद्यं चतुर्थदिवसस्नानं यजनमुत्सवाद्यं च मूलोदितं मूलबिम्बे निर्दिष्टं सकलं कर्मात्रापि समादधीत कुर्यात्। तदेतद् बालालयन्यसनकर्म देवस्य बालालयस्थापनकर्म नपुंसकाश्मगेहोपधानरहितं नपुंसकशिलया प्रासादस्येष्टकादिना च रहितं विहितं स्यात् ॥ ८३ ॥

एवं बालालये स्थापितस्य देवस्य मूलप्रासादप्रवेशे विधानमाह — तद्बिम्ब इति। समग्रगुणसम्पन्ने सम्पूर्णगुणयुक्ते सपीठादिके पीठनपुंसकशिलादिभिः सहिते तद्बिम्बे रचिते सति, पूर्वं प्रतिश्रुते प्रतिज्ञाते मुहूर्ते च प्र-

---

[1] 'रत्नोप' क. ख. ग. पाठः.

कृत्वा तत् परिगृह्य कारुकरतो बिम्बं जले वासयेत्
तत्प्रासादविशोधनं च तनुयात् पुण्याहकर्मान्तिमम् ॥

उद्धृत्योदकतोऽभिषिच्य कलशैः स्वैर्बिम्बमग्राहिते
सम्यक्संस्कृतमण्डपेऽधिशयनं संवेश्य तत्पार्श्वतः ।
विन्यस्येत् परिशोधिताल्पनिलयप्राक्स्थापितार्चास्थितं
देवं प्रार्थ्य घटेऽभिवाह्य विधया सूत्रच्छिदासूक्तया ॥

यात्रां कुरुष्व देवेश! भक्तानामनुकम्पया ।
जीर्णमुद्धृत्य तद् भक्तैः कल्पितं बिम्बमुज्ज्वलम् ॥ ८६ ॥

तेन गेहं विशाद्येश! उत्तिष्ठ शिखिवाहन! ।
एवं गुहार्चाविषये मन्त्रोऽन्यत्रोन्नयेद् बुधः ॥ ८७ ॥

उत्पाद्योक्तवदल्पबिम्बमुपनीयातो बहिः सन्दहेद्
गोसर्पिःस्नपितं तदर्हदहने तद् दारवं चेद् गुरुः ।

---

त्यासीदिति समीपं प्राप्ते सति, तत्कालक्लृप्त्या बीजवापादिकं कृत्वा तद्योग्यकाले तद् बिम्बं च कारुकरतः पूर्ववत् परिगृह्य जले वासयेत् अधिवासयेत् । तत्प्रासादविशोधनं च पुण्याहकर्मान्तिमं यथा भवति तथा तनुयात् ॥ ८४ ॥

पुनर्बिम्बमुदकत उद्धृत्य स्वैर्बिम्बशुद्धिकलशैरभिषिच्य अग्राहिते मूलप्रासादस्याग्रतः स्थिते सम्यक्संस्कृतमण्डपे अधिशयनं शय्यायां संवेश्याधिवास्य तत्पार्श्वतः तस्याः शय्यायाः पार्श्वे एवं परिशोधिताल्पनिलयप्राक्स्थापितार्चास्थितं परिशोधितेऽल्पप्रासादे पूर्वं स्थापितायामर्चायां स्थितं देवं तत्त्वहोमाद्युपेतं सूत्रच्छिदासूक्तया विधया सूत्रच्छेद उक्तेन विधिना प्रार्थ्य घटे जीवकलशे अभिवाह्यानीय विन्यस्येत् ॥ ८५ ॥

प्रार्थनामन्त्रं पठति — यात्रां कुरुष्वेति । गुहार्चाविषये स्कन्दस्य बिम्बोद्धारे एवं मन्त्रो भवति । अन्यत्र देवेषु प्रासादादिषु च बुधः तत्तद्योग्यपदज्ञो गुरुः स्वस्वपदम् उन्नयेत् ऊहयेत् ॥ ८६,८७ ॥

ततः उक्तवत् पूर्वोक्तविधिनाल्पबिम्बमुत्पाद्य अतः तस्माद् बहिरुपनीय तद् दारवं चेत् गोसर्पिःस्नपितं कृत्वा तदर्हदहने अग्नौ निर्माल्यधारिण-

---

१. 'वेशं कलशेऽभि' ख. पाठः. २. 'ह' ग. पाठः. ३. 'वं' क. ख. ग. च. पाठः.

लौहं चेद् गुरवे समर्पयतु तद् विद्राव्य यज्वाथवा
छित्वा नालमिदं विशोध्य सुशुभं तत्कौतुकं कल्पयेत् ॥

आधाय प्रतिमाधिवासमधरेद्युस्तत्तदर्हार्हणा-
होमब्राह्मणतर्पणाद्युपरिषद्पीठाधिवासादिकम् ।
अन्येद्युः कृतरत्नकर्मणि समानीय प्रतिष्ठाप्य तत्-
पीठे बिम्बमथ स्वकीयकलशासेकादिकं चाचरेत् ॥ ८९ ॥

यत्राहैकेन तु सम्मुदितं कर्म निर्मेयमत्र
प्रोद्वास्यैवं कलशमधिवास्यार्चया साकमग्रे ।
मूलार्चादिच्युतिनिजविशुद्ध्यादिमन्मूलगेहे
संस्थाप्यैनां स्वचितिकलशासेचनाद्यं च कुर्यात् ॥ ९० ॥

---

मावाह्य सम्पूज्य तत्र गुरुः स्वयं सन्दहेत् । तल्लौहं चेत् यज्वा यजमानोऽल्प-
बिम्बं विद्राव्य लोहमात्रमापाद्य गुरवे समर्पयतु । अथवा नालं छित्वा इदं
विशोध्य सुशुभं तत्कौतुकं तस्य देवस्यैव कौतुकत्वेन कल्पयेत् ॥ ८८ ॥

अधरेद्युः पूर्वदिवसे तत्तदर्हार्हणाहोमब्राह्मणतर्पणाद्युपरिषद्पीठाधिवा-
सादिकं तत्तद्ध्यानाधिवासपूजाधिवासहोमब्राह्मणपूजनादिकानन्तरं पीठाधि-
वासादियुक्तं प्रतिमाधिवासमाधाय अन्येद्युरुत्तरदिवसे कृतरत्नकर्मणि कृतरत्न-
न्यासे तत्पीठे तद्बिम्बमानीय प्रतिष्ठाप्याथ स्वकीयकलशासेकादिकं कुम्भेशनि-
द्राकलशजीवकलशानामभिषेकं तदाद्यं चाचरेत् ॥ ८९ ॥

उक्त एव निष्क्रामणे विशेषमाह — यत्रेति । यत्रावस्थायामेकनवाहा
समुदितं सम्यगुक्तं कर्म निर्मेयं कर्तुं शक्यं बिम्बमात्रस्यैव चेद् वैकल्यं तत्रा
प्येवं प्रोद्वास्य कलशं जीवकलशं सर्वलक्षणयुक्तया गृहीतया कृतजलाधिवा-
साद्यया अर्चया साकमग्रे मण्डपे अधिवास्य मूलार्चादिच्युतिनिजविशुद्ध्या-
दिमन्मूलगेहे विशीर्णां प्रतिमां पीठादिभिः सह यथोक्तप्रकारेण उद्धृत्य त्यक्त्वा
कृतप्रासादशुद्ध्यादिके कृतरत्नन्यासे च तत्र प्रासादे प्रतिमां संस्थाप्य स्वचि-
तिकलशासेचनाद्यं जीवावाहनकाले जीवकलशाभिषेकाद्यं च कुर्यात् ॥ ९०

बिम्बाजीर्तिविधौ विधाय सकलं सूत्रच्छिदेकोदितं[1]
मुक्त्वा प्रार्थ्य नमस्त इत्यधिघटं संयोज्य निर्याप्य तम् ।
मूलार्चां परिरक्ष्य तक्षभिरभीष्टं कर्म निर्माप्य तत्-
कर्मान्ते परिगृह्य कारुकरतः प्रासादमुक्तक्रमात् ॥ ९१ ॥

पुण्याहावधिभिर्विशोध्य परिकल्प्यार्चिर्मयं तत्स्थितं
बिम्बं वारुणवारिणा सलिलवासे स्नापयित्वा सुधीः ।
स्वस्वोक्तक्रमबद्धकौतुकमिदं सम्भाव्य पीठेऽर्चिते
कृत्वा बिम्बघटाभिषेकयजनाद्यं कर्म तत्रैव तत् ॥ ९२ ॥

बिम्बेऽग्राहितमण्डपेऽधिशयनं न्यस्ते च बालालया-
न्नीत्वा जीवघटेऽधिवास्य विधिवन्मूलालयादेव वा ।
हुत्वा मण्डप एव जीवकलशे बिम्बे च संस्पृश्य त-
त्सम्पातं पृथगर्चनाद्यमखिलं निर्वर्त्य पूर्वोक्तवत् ॥ ९३ ॥

---

**बिम्बाजीर्तिविधौ** बिम्बस्य वैकल्याभावे प्रासादे जीर्णे सति तस्य चिरकालेनैव कर्तुं शक्यते चेत् तत्रोक्तेषु कर्मसु मध्ये सूत्रच्छिदेकोदितं सूत्रच्छिदमेकमेवोक्तं कर्म मुक्त्वा वर्जयित्वान्यत् सकलं कर्म विधाय उद्वासनात् पूर्वं 'नमस्ते सर्वलोकेशे'ति पद्याभ्यां प्रार्थ्य तं देवम् अधिघटं जीवकलशे संयोज्य निर्याप्य बहिर्नीत्वालयगृहे स्थापयित्वा मूलार्चां परिरक्ष्य तक्षभिरभीष्टं प्रासादकरणादिकं कर्म निर्माप्य तत्कर्मान्ते कारुकरतः प्रासादं परिगृह्य पुण्याहावधिभिः कर्मभिरुक्तक्रमाद् विशोध्य तत्स्थितं तत्र प्रासादे स्थितं बिम्बं संहृत्यार्चिर्मयमग्निमयं परिकल्प्य सलिलवासे सुधीः जलाधिवासशुद्ध्या वारुणवारिणा स्नापयित्वा स्वस्वोक्तक्रमबद्धकौतुकं स्वस्वकाले स्वस्वमन्त्रेण बद्धकौतुकम् इदं बिम्बम् अर्चिते पीठे सम्भाव्यावाह्य तत्रैव बिम्बघटाभिषेकयजनाद्यं कर्म कृत्वा तत्रैव तद्बिम्बे बालालयान्नीत्वा । मूलालयादिति बिम्बपीठिकादिचलनपरिहारार्थमुक्तम् । निष्क्रामणं क्रियते चेत् तथा सम्भवतीत्यभिप्रायः । अन्यथा चेत् तथा बालालयान्नीत्वा अग्राहितमण्डपे अधिशयनं शय्यायां न्यस्ते जीवघटे च उभयत्र सम्पूज्य विधिवद् अधिवास्य मण्डप एव हुत्वा जीवकलशे बिम्बे च तत्सम्पातं संस्पृश्य अर्चनाद्यम् अखिलं पृथक्

---

१. 'दे' इति मूलकोशपाठः.

रत्नन्यासविधिं विधाय मनसा सम्पूज्य गर्भालयं
नीत्वा जीवघटाद्यमत्र सुविभाव्यैतत्प्रतिष्ठापनम् ।
जीवन्यासविधौ स्वजीवकलशेनासिच्य पूर्वोक्तवत्
कुर्यात् कर्मकलापमित्यभिहिता निष्क्रामणप्रक्रिया ॥ ९४ ॥

नमस्ते सर्वलोकेश! भूतानामभयप्रद! ।
भक्तप्रिय! नमस्तेऽस्तु प्रसीद भुवनेश्वर! ॥ ९५ ॥
आगच्छ देवदेवेश! सर्वकारणकारण! ।
नवीकरणसिद्ध्यर्थं कुम्भेऽस्मिन् सन्निधिं कुरु ॥ ९६ ॥

इति ॥

निष्क्रामणैकविहितं विधिमत्र मुक्त्वा
शेषं विशेषविदिह प्रविधाय कर्म ।
सम्प्रार्थ्य तत्त्वकलशेन तथाभिषिच्य
सङ्कोचमाचरतु वा गृहमात्रजीर्णौ ॥ ९७ ॥

देवेश! प्रतिमामूर्ते! मन्त्रमूर्ते! परावरे ।
अत्र सङ्कुचितो भूत्वा वासं कुरु तवाज्ञया ॥ ९८ ॥

इति ॥

---

पूर्वोक्तवत् निर्वर्त्य पुनः उत्तरदिवसे रत्नन्यासविधिं मनसा विधाय उभयत्र संपूज्य जीवघटाद्यमखिलं गर्भालयं नीत्वा अत्र पीठे एतत्प्रतिष्ठापनं सुविभाव्य मनसा-कल्पयित्वा जीवन्यासविधौ (स्व)जीवकलशेनासिच्य पूर्वोक्तवत् कर्मकलापं कुर्यात् । इति निष्क्रामणप्रक्रिया क्रियारीतिरभिहिता ॥ ९१—९४ ॥

प्रार्थनापद्यद्वयं पठति — **नमस्त** इति ॥ ९५, ९६ ॥

**अत्र** गृहमात्रजीर्णौ प्रासादमात्रस्यैव वैकल्ये सति विशेषवित् निष्क्रामणात् संकोचकर्मणि विशेषं विद्वानाचार्यः निष्क्रामणैकविहितं निष्क्रामण-प्रधानत्वेन विहितं विधिं मुक्त्वा शेषं कर्म प्रविधाय 'देवेशे'ति संप्रार्थ्य तथा पूर्वोक्तप्रकारेण तत्त्वकलशेनाभिषिच्य संकोचमाचरतु वा । मासादधिकं प्रासादकरणकालश्चेत् निष्क्रामणं, ततोऽर्वाक् चेत् संकोच इति विकल्पस्य विभागः ॥ ९७ ॥

प्रार्थनामात्रं पठति — देवेशेति ॥ ९८ ॥

---

१. 'धाप्यैत' क. ग. पाठः. २. 'विध्यर्थं' क. घ. पाठः. ३. 'तां' ख. पाठः.

विष्वग्जागरिते विकृष्य बहिरङ्गादन्तरङ्गादपि
स्वस्मिन्नेव सुयोजिते स्वविभवोन्मेषे चिदेकात्मनि ।
ऊर्ध्वाधःक्रमतोऽत्र पद्मयुगलं ध्यात्वा तदावारकं
स्वेच्छाशक्तिविभावितं पृथगतः सम्भाव्य चात्मोद्भिदाम् ॥
तत्राधारसरोरुहाग्रदलमध्यास्योर्ध्वपद्मोदरा-
च्छ्च्योतद्भिः परितर्प्य देवमुपहारैश्चित्सुधैकात्मकैः ।
तस्मादेव तदीयमूर्ध्नि निपतन्तीमाविकासं सुधा-
धारां साधु विभाव्य तन्मुकुलितं कुर्याद् बहिष्ठोऽम्बुजम् ॥
ऊर्ध्वाब्जेन तदम्बुजं कबलितं कृत्वावतार्याथ तत्
संवेष्ट्य त्रिगुणात्मकेन मपरेणारक्ष्य चात्मौजसा ।

---

संकोचनप्रक्रियामाह — विष्वग्जागरित इति । स्वयं देवाभेदेन स्थितो भूत्वा स्वविभवोन्मेषे स्वस्य देवस्य संबन्धिनो विभवस्य व्याप्तेरुन्मेषे प्राकाश्ये विष्वग्जागरिते विष्वङ् महामर्यादापर्यन्तम् उद्बुद्धे तत्र बहिरङ्गादन्तरङ्गाच्च उक्तप्रकारेणैव बाह्यपद्मादन्तःपद्माच्च विकृष्याकृष्य स्वस्मिन्नेव चिदेकात्मनि चैतन्यमात्रे हृत्कमले सुयोजिते सति अत्र स्वेच्छाशक्तिविभावितं स्वस्येच्छाशक्तेरुद्भूतं तदावारकं तस्य चैतन्यात्मनः आवारकम् आच्छादनकरम् ऊर्ध्वाधःक्रमात् पद्मयुगलं ध्यात्वा अतो देवात् पृथग् आत्मोद्भिदां स्वस्य भेदं सम्भाव्य भावयित्वा तत्रानयोः पद्मयोर्मध्ये आधारसरोरुहाग्रदलम् आधारपद्मस्याग्रस्थं दलम् अध्यास्य अस्मिन्नुपविश्य ऊर्ध्वारविन्दोदरात् श्च्योतद्भिः स्रवद्भिः चित्सुधैकात्मकैः चैतन्यामृतमयैरुपहारैः देवं परितर्प्य संपूज्य प्रसाद्य तस्मादेव ऊर्ध्वपद्मोदरात् आविकासं यावद् विकासो भविष्यति तावत्पर्यन्तं तदीयमूर्ध्नि देवस्य ब्रह्मरन्ध्रे निपतन्तीं सुधाधारां साधु स्वगुरूपदेश[2]क्रमेण विभाव्य स्वयं तस्मादब्जाद् बहिष्ठो भूत्वा तदम्बुजं मुकुलितं कुर्यात् ॥ ९९,१०० ॥

ऊर्ध्वाब्जेनावतार्य [illegible]भागं नीत्वा तदम्बुजम् आधाराम्बुजं कबलितं ग्रसितं कृत्वाथ तत् पद्मं त्रिगु[illegible]त्मकेन सत्त्वरजस्तमोमयतन्तुरूपेण मपरेण

---

[illegible] क. पाठः. २. 'लं[illegible]' ग. पाठः.

स्वस्मिन् स्वोदितचित्सिराप्रसरविश्रान्त्या स्थितोऽर्चां वृतां
वस्त्राद्यैः परिरक्ष्य तक्षभिरिदं वेश्माञ्जसा कारयेत् ॥
प्रासादं परिगृह्य तद्विधिसमाप्तौ शोधयित्वाथ तद्-
बिम्बं स्वोदितसप्तशुद्धिहवनस्नानादिना शोधयेत् ।
धारायामिह तत्सरोरुहविकासाद्यं विधेयं धिया
प्राक्सङ्ख्योचिततत्त्वसृष्टिहवनादौ कर्मणा चाचरेत् ॥
जीर्णे सत्यष्टबन्धे तदधिगतचितिं स्वार्हसम्पातसिक्तां
देवे व्याप्त्यादिना तन्मलमपि परिशोध्याभिषिच्यार्चितेऽस्मिन् ।

---

संवेष्ट्य तद्बहिरस्त्रौजसा चारक्ष्य स्वोदितचित्सिराप्रसरविश्रान्त्या स्वस्मादुद्गतस्य सुषुम्नानाड्या मार्गस्य विश्रान्त्या छेदेन हेतुना स्वस्मिन्नेव स्थितो भूत्वा वस्त्राद्यैः वस्त्रदर्भाद्यैः वृतामर्चां परिरक्ष्य इदं वेश्म प्रासादं तक्षभिरञ्जसा यथावत् कारयेत् ॥ १०१ ॥

पुनस्तद्विधिसमाप्तौ प्रासादे कृते सति प्रासादं परिगृह्य शोधयित्वाथ तद्बिम्बं तत्रस्थं बिम्बं स्वोदितसप्तशुद्धिहवनस्नानादिना उक्तैः क्षालनादिसप्तशुद्धिभिः प्रायश्चित्तादिहोमैः उत्तमादिक्रमेणोक्तैः कलशस्नानादिभिश्च शोधयेत् । आदिशब्देन दिशाहोमोत्सवादय उक्ताः । इह शोधनसमये धारायामारभ्यमाणायां तत्सरोरुहविकासाद्यं पूर्वोक्तपद्मयोः सङ्कोचापनयनम् ऊर्ध्वाधोनयनं च विधेयं कर्म धियैवाचरेत् । प्राक्संख्योचिततत्त्वसृष्टिहवनादौ पूर्वप्रोक्तसंहारतत्त्वहोमे याभिः संख्याभिः परिच्छिन्नस्तत्त्वहोमः कृतः ततोऽधिकसंख्याभिः परिच्छिन्नेन सृष्टितत्त्वहोमे तत्त्वकलशस्नाने ब्रह्मकलशस्नाने च कर्मणा सङ्कोचविकासादिकमाचरेत् । तत्त्वहोमकलशस्नानादिकमेव पद्मद्वयस्य सङ्कोचविकासादिकर्मेत्यर्थः ॥ १०२ ॥

एवं बिम्बप्रासादादिजीर्णोद्धारमभिधायाथाष्टबन्धे जीर्णे कर्तव्यं कर्माह — जीर्णे सतीति । अष्टबन्धे जीर्णे शिथिले सति प्रासादशुद्ध्यादिकलशस्नानभूतबलिपर्यन्तां शुद्धिं यथोक्तमार्गेण कृत्वा शक्तिहोमकाले पूजामन्त्रहोमावसाने नवशक्तीनां संहारमार्गाद्धोमेन सम्पातितसम्पातं स्वीकृत्य पुन-

---

१. 'चो' इति मूलकोशपाठः. २. 'शो' ख. घ. च. पाठः. ३. 'याष्ट' ग. पाठः

**बीजेनावाह्य पीठे प्रकृतिमपि पुमांसं च मूलेन बिम्बे**
**साङ्गीकृत्योपहारान् स्नपनसमवसानान् समर्प्योभयोश्च ॥**
**पुण्याहप्रोक्षणान्ते द्वयमपि वसनाद्यैर्विभूष्योपहारै-**
**रिष्ट्वा कृत्वाष्टबन्धं विधिवदुभयसम्मेलनं भावयित्वा ।**
**मूलेनावाह्य देवं प्रयजतु सकलीकृत्य भक्त्योक्तनीत्या**
**कुर्यात् तुर्याह्निकोक्तस्नपनमपि तदिज्येह तद्बिम्ब एव ॥**
**शङ्खः षड्गुणितः पयोधिगुणितः सर्जो द्विवृद्धाभया**
**कार्पासोपलवालुकाः सजतुकाः प्रत्येकमेकांशकाः ।**

---

नवशक्तिभिः सृष्टिक्रमेण यथाशक्त्याज्यं हुत्वा चतुर्द्रव्यं स्विष्टकृदादिकं च हुत्वा होमं समाप्यान्तर्गत्वा स्वार्हसम्पातसिक्तां संहारहोमात् सम्पादितेन सम्पातेन सिक्तां तदधिगतचितिं जीर्णाष्टबन्धगतचैतन्यम् आदिना प्रणवेन देवे व्याप्य उद्वास्य तन्मलं जीर्णाष्टबन्धशकलमपि परिशोध्य परितः शोधयित्वा अभिषिच्य रत्नसुवर्णसिकताभिस्तद्विवरं प्रपूर्यार्चितेऽस्मिन् पीठे बीजेन स्वस्वशक्तिबीजेन प्रकृतिं, बिम्बे मूलेन पुमांसमप्यावाह्य उभयोश्च साङ्गीकृत्य पीठे लिपिन्यासपीठन्यासादिभिः, बिम्बे लिपितत्त्वन्यासादिभिश्च सकलीकृत्य स्नपनसमवसानान् स्नानपर्यन्तानुपहारान् समर्प्य पुण्याहप्रोक्षणान्ते 'अष्टबन्धदेवताः प्रीयन्तामि'त्यादिविशेषेण सह पुण्याहं कृत्वा द्वयं पीठं बिम्बमपि वसनाद्यैर्विभूष्यालङ्कृत्य जलगन्धादिभिरुपहारैः इष्ट्वा नवशक्तिहोमाज्जातं संपातं समर्प्य विधिवत् प्रतिष्ठापटलोक्तविधिनाष्टबन्धं कृत्वा स्थापयित्वा उभयसम्मेलनं प्रकृतिपुरुषयोरन्योन्यसंयोगं प्रणवव्यापकेन भावयित्वा मूलेन देवमावाह्य सकलीकृत्य भक्त्या तं देवं प्रयजतु । पुनरुक्तनीत्या प्रागुक्तविधिना तुर्याह्निकोक्तस्नपनमपि प्रतिष्ठावच्चतुर्थदिवसस्नानमपि कुर्यात् । इहाष्टबन्धे तदिज्या त्रिदिनगता पूजा तद्बिम्ब एव । नात्र कवाटबन्धनादिकं कर्तव्यमित्यर्थः ॥ १०३, १०४ ॥

अष्टबन्धद्रव्याणि सपरिमाणान्याह--शङ्ख इति । शङ्खः षड्गुणितः षड्भिर्भागैर्युतः । सर्जः पयोधिगुणितः चतुर्भिरंशैर्युतः । (സർജ്ജം=ചെഞ്ചല്യം) । अभया द्विवृद्धा द्विभागयुता । (അഭയാ=കടുക്കാ) । सजतुकाः जतुकसहिताः कार्पासोपलवालुकाः प्रत्येकमेकांशकाः । एतानि चत्वारि द्रव्याणि

लाक्षार्धामलकीसमेतमखिलं सञ्चूर्ण्य संयोजितं
तैलक्लिष्टसुपिष्टमात्मनवशक्त्यात्माष्टबन्धं विदुः ॥ १०५ ॥

बलिपीठमहाध्वजादिजीर्तौ
विहितैर्देवविशुद्धयवस्तुतैस्ततः ।
सुविशोध्य समर्च्य देवमस्मै
बलिमाधाय निबोधयेद् विधेयम् ॥ १०६ ॥

अथ तत्पुरतः प्रतीपवृत्त्या
शरतत्त्वैर्हवनं विधाय मन्त्री ।
अभिषिच्य च तद्घटेन तस्मिन्
स्वविभूत्यप्ययमञ्जसा प्रकल्प्य ॥ १०७ ॥

कलशे परिपूरिते तदग्रे
चितिमावाह्य ससूत्रमत्र संस्थाम् ।

---

प्रतिद्रव्यमेकैकांशयुक्तानि । (ജതുകം=അരക്ക്. കാർപ്പാസം=പരിത്തി. ഉപലം=കൊഴിപ്പരൽ. വാലുകാ=ആററുപാറ) । लाक्षार्धामलकीसमेतं लाक्षाया जतुकस्यार्धांशमानेन आमलकीफलेन युतम् । (ആമലകീ=നെല്ലിക്കാ)। एतदखिलं द्रव्याष्टकं संचूर्ण्य सम्यक् सूक्ष्मचूर्णानि सम्पाद्य संयोजितं सम्यगेकीकृतं तैलक्लिष्टसुपिष्टं तैलेन क्लेदितं सुतरां पेषितं च तद् आत्मनवशक्त्यात्म स्वस्वनवशक्तिस्वरूपमष्टबन्धं बुधा विदुः । अत्र कार्पासस्तत्काले योजनीय इत्युपदेशवशाद् भवति ॥ १०५ ॥

अथ परिवाराणां जीर्णोद्धारविधिमाह — बलिपीठेति । बलिपीठमहाध्वजादिजीर्तौ इन्द्रादिबलिपीठानां महाबलिपीठस्य महाध्वजरङ्गादेश्च जीर्तौ सत्यां विहितैः कृतैः देवविशुद्धयवस्तुतैः देवस्य सप्तशुद्धिशेषैः होमकलशशेषैः कलशशेषैश्च तज्जीर्णं महापीठादिकं सुविशोध्य देवं समर्च्य भूतबलिं चाधाय अस्मै देवाय विधेयमनुष्ठेयं निबोधयेत् विज्ञापयेत् ॥ १०६ ॥

अथ मन्त्री मन्त्रातिदेशे कर्मातिदेशे च कुशलो गुरुः तत्पुरतः तस्य बलिपीठादेः पुरतः प्रतीपवृत्त्या संहारक्रमेण शरतत्त्वैः स्वस्य देवस्य पञ्चतत्त्वैः हवनं तत्त्वहोमं विधाय तद्घटेन तत्तत्त्वहोमकलशेन तमभिषिच्य

---

१. 'प्र' ख. ग. पाठः.

उपनीय च गर्भधाम्नि सिक्त्वा
गमयेत् तत्सिरयैव देवदेवे ॥ १०८ ॥
गर्भन्यासप्रभृतिविधिना कारुणा कारयित्वा
तोयावासप्रभृतिविधिभिः शुद्धिभिः सप्तभिश्च ।
संशोध्यैतद् विधिवदधिवास्य प्रतिष्ठादि सर्वं
कुर्वीताथ प्रथमविधिवत् तुर्यवारोक्षणान्तम् ॥ १०९ ॥
जीर्णोद्धृतिं स्थापितमन्त्रबिम्ब-
गृहादिजीर्तौ सपदीति कुर्यात् ।
दुःस्थोऽन्यथा चेद् विपदे तथा चेत्
सुस्थोऽत्र देवो यदु[3] सम्पदे स्यात् ॥ ११० ॥

---

तस्मिन् महाबलिपीठादौ स्वविभूत्यप्ययं स्वस्वव्याप्तेः संहारमञ्जसा प्रकल्प्य तदग्रे परिपूरिते कलशे ससूत्रं सूत्रच्छेदविधानयुक्तं यथा भवति तथात्र संस्थां स्थितां चितिमावाह्य कलशे योजयित्वा तत्कलशमन्तरुपनीय देवाग्रे गर्भधाम्नि सिक्त्वा तत्सिरयैव तन्मार्गेणैव देवदेवे गमयेत् योजयेत् ॥१०७,१०८॥

पुनस्तत्र तत् सर्वं जले त्यक्त्वा संशोध्य गर्भन्यासप्रभृतिविधिना पूर्वोक्तविधिनैव पूर्ववदेव कारुणा कारयित्वा तदानीं तोयावासप्रभृतिविधिभिः जलाधिवासबिम्बशुद्ध्यादिभिः क्षालनादिसप्तशुद्धिभिश्च तत् संशोध्य विधिवत् पूर्वोक्तप्रकारेणैवाधिवास्य प्रतिष्ठादि सर्वं कर्म कुर्वीत । अथ प्रथमविधिवत् पूर्वप्रतिष्ठावत् तुर्यवारोक्षणान्तं चतुर्थदिवसस्नपनानन्तरं[2] तदवस्रावप्रोक्षणबलिदानपर्यन्तं कुर्वीत ॥ १०९ ॥

जीर्णोद्धारविधिमुपसंहरति — **जीर्णोद्धृतिमिति** । स्थापितमन्त्रबिम्बगृहादिजीर्तौ प्रतिष्ठापितस्य मन्त्रबिम्बस्य गृहादेः प्रासादादीनां च जीर्तौ वैकल्ये सति सपदि तदानीमेव इति उक्तप्रकारेण जीर्णोद्धृतिं नवीकरणं कुर्यात् । अन्यथा चेत् जीर्णोद्धरणं न क्रियते चेद् दुःस्थो दुःखरूपेण स्थितो देवो विपदे तत्संबन्धिनां विनाशाय स्यात्[3] । तथाचेत् जीर्णोद्धृतिः क्रियते चेत् सुस्थः सुखेन स्थितो देवोऽत्र स्थाने तत्संबन्धिनां च संपदे अभ्युदयाय स्यात् । यदु[4] यच्च यस्मात् तस्मात् जीर्णोद्धारं कुर्यादिति पूर्वत्र[5] संबन्धः ॥

---

१. 'दि' ग. घ. पाठः. २. 'राव' ग. पाठः. ३. 'त् । यस्मात् तथा' घ. ङ. च., 'त् । तस्मात् त' ख. पाठः ४. 'दुदय' ङ. पाठः. ५. 'र्वसं' ख. घ. ङ. च. पाठः.

**इत्येकबेरविषये स्थापनाद्यं समीरितम् ।**
**बहुबेरविधानेऽथ भेदमात्रं प्रदर्श्यते ॥ १११ ॥**

**शूलं वार्यधिवास्य बिम्बकलशैः सिक्त्वाधिवास्याग्रतः**
**प्रासादे परिशोधिते मणिगणन्यासादि कृत्वा गुरुः ।**

---

एकबेरप्रतिष्ठाकर्मोपसंहृत्य बहुबेरप्रतिष्ठां प्रस्तौति — इतीति । एकबेरविषये एक एव बेरो बिम्बं प्रतिमासाधनद्रव्यं यत्र स एकबेरः । तथा बहुबेरशब्दोऽपि ज्ञातव्यः । तत्रैकबेरविषये एकबेरं विषयीकृत्य स्थापनाद्यं स्थापनपूजनस्नानाद्यम् इति उक्तप्रकारेण समीरितं सम्यगुक्तम् । अथेदानीं बहुबेरविधाने बहुबेरकरणे तदनुष्ठाने च भेदमात्रं योऽयमुक्तकर्मणो भेदो विशेषः तन्मात्रमेवास्माभिः प्रदर्श्यते ॥ १११ ॥

अथ प्रस्तुतं बहुबेरानुष्ठानं सूत्रयति — शूलं वार्यधिवास्येति । तत्र

"रत्नलोहशिलाधातुमृत्काष्ठालेख्यभेदतः ।
प्रतिमा[1] सप्तधा ज्ञेया"

इति विष्णुसंहितायां प्रतिमायाः[2] सप्तविधत्वमुक्तम् । तथान्यत्र

"प्रतिमा योनिभेदेन पञ्चधा परिकीर्तिता ।
शैलं रात्नं तथा लौहं दारवं मार्त्तिकं तथा ॥"

इति पञ्चविधत्वमुक्तम् । "प्रतिमाष्टविधा स्मृते"ति भागवते । षोढेति सिद्धान्तसारे । तत्र मणिलोहशिलाप्रतिमाः एकबेरविधानेन स्थाप्याः । इतरा बहुबेरविधानेन । तत्र मुरारिराह —

"एकबेरं शिलालोहमणिजं सर्वदेष्यते ।
मृद्दारुजं तथालेख्यं बहुबेरमिति स्थितिः ॥"

इति । तत्र दारवी प्रतिमा यथोक्तप्रकारेण दारुं परिगृह्य यथोक्तप्रकारेण कारुभिः कारयित्वा वक्ष्यमाणबहुबेरानुष्ठानक्रमेण स्थापनीया । मृन्मयप्रतिमाविधानमिह किञ्चित् प्रकाश्यते । मृन्मयी प्रतिमा द्विविधा पक्वापक्व-

---

१. 'तद्भेद' क. पाठः. २. 'छा', ३. 'नां' ख. घ. ङ. च. पाठः.

**संस्थाप्य स्वपदेऽभिषिच्य कलशाभ्यां प्रार्च्य संरक्ष्य तत**
**तक्ष्णा मृन्मयमूलबिम्बमुपबिम्बं चेप्सितं कारयेत् ॥**

---

विभागेन । तत्र पक्वा नातिशुभा । अपक्वा तु सर्वाचार्यैः शुभेति प्रोक्ता । तथा नारदीयपद्धतौ —

"मृन्मयीं प्रतिमां वक्ष्ये यथावत् तां निबोध मे ।
पक्वापक्वे द्विधा प्रोक्ते मृन्मय्यौ प्रतिमे क्रमात् ॥
न सर्वलोकाः शंसन्ति प्रतिमां दग्धमृन्मयीम् ।
अपक्वा प्रतिमा शस्ता सैव कार्या विचक्षणैः ॥
सुधया नैव कुर्याद्धि नाश्मचूर्णैस्तु कारयेत् ।
मृदैव मृन्मयीं कुर्याद् यथावर्णानुरूपतः ॥
ब्राह्मणस्य सिता मृद्धि क्षत्रियस्यारुणा स्मृता ।
विशां पीता भवेन्मृद्धि कृष्णा शूद्रस्य कीर्तिता ॥
मृदं वर्णानुरूपेण गृह्णीयात् क्षेत्रसम्भवाम् ।
दधिसर्पिःपयोभिश्च अतसीस्नेहसंयुतैः ॥
शर्करालोहपाषाणैश्चूर्णं कृत्वानुपूर्वशः ।
समभागानि चूर्णानि मृत्तिकायां प्रयोजयेत् ॥
खादिरेण कषायेण आर्जुनेन च पेषयेत् ।
श्रीवेष्टकं सर्जरसं कुङ्कुमं कुष्ठमेव च ॥
कुन्दुरुश्च रसा ह्येते सर्वे + + रसान्विताः ।
नदीसंगमतीर्थेषु पुण्योद्यानेषु वा पुनः ॥
आदाय मृत्तिकां तत्र स्नेहचूर्णसमायुताम् ।
मासं पर्युषितां कृत्वा कारयेत् प्रतिमां ततः ॥
त्रिरात्रोपोषिता[1] सा तु शिलायससमा भवेत् ।"

इति । तत्र मुरारिराह —

"गर्तं कृत्वा निर्वाते तु स्थापयेत् तत्र मृत्तिकाम् ।
शर्करालोहपाषाणचूर्णं दध्यादिभिः समम् ॥

---

१. 'त्रौ' ङ. पाठः. २. 'पा' ख. ग. पाठः.

चतुर्थांशं मृदि क्षिप्त्वा कषायाभ्यां च पेषयेत् ।
कषाये सर्वमालोड्य श्रीवेष्टादिसमन्विताम् ॥
संगमादिमृदं पिष्टां सर्वचूर्णसमन्विताम् ।
मासोषितां पुनः पिष्ट्वा तनुयात् प्रतिमां शुभाम् ॥
त्रिरात्रेण शिलावच्चेज्ज्ञेया तत्र सुयुक्तता ।
पुनर्मासोषितत्वोक्तिरर्चाकाठिन्यसिद्धये ॥
ततो गर्भगृहे पीठं कुर्याच्छूलसमन्वितम् ॥"

इति । शर्करालोहपाषाणमिति । (ശക്കരാ=കൊഴിപ്പരൽ) । लोहं सुवर्णरजतताम्रकांस्यानि । (പാഷാണം=അറുപാറ) । एतानि समभागानि कृत्वा मृदश्चतुर्थांशं योजयेदित्यभिप्राय इति । रत्नावल्यामपि तथैवोक्तं — "पूर्वोक्तां मृदं संगृह्य विवातगतां कृत्वा स्थापयेदि"त्यादि । अथ मृत्परिग्रहे शिलापरिग्रहवदाचार्यो देवं संपूज्य शिल्पिभिः सह प्रशस्तं मृत्स्थानं गत्वा तत्रान्विष्य लब्ध्वा यथोक्तप्रकारेण होमादिकं सर्वं कृत्वा उपोष्य गृहीत्वा शिल्पिने ददेत । तथाच शूलार्थं प्रतिमार्थं विहितं वृक्षविशेषं गत्वा यथोक्तप्रकारेण छित्वानीय शिल्पिभिः शूलानि कारयेत् । तत्र शूलकरणे मुरारिराह —

"वंशदण्डेः[1] कटीदण्डो वक्षोदण्डस्तथैव च ।
बाहुदण्डाश्च चत्वारः प्रकोष्ठास्तावदेव तु ॥
पाददण्डावुभौ चैवं स्थूलदण्डास्त्रयोदश ।"

इति । स्थितस्य देवस्य शूलानि स्युः । तथाच तत्स्थिरीकरणाय चत्वारि शूलानि च योजयेत् । तथाच मुरारिराह —

"प्रतिमासंमितायामं पृष्ठतो वृत्तमेव च ।
उपघ्नशूलं कुर्वीत प्रतिमास्थितये पुनः ॥
केचिच्चरणशूलं च पाशशूलं च कुर्वते ।
चतुरः श्लेषयेद् दण्डान् द्विशिखानेव तान् पुनः ॥
दण्डाः[2] सप्तदशैते तु स्थाने प्रोक्ता विचक्षणैः ।"

---

1. 'क्षि'. 2. 'ण्डाः' ख. घ. ङ. च. पाठः.

इति। एवं स्थितस्य देवस्य सप्तदश वा त्रयोदश वा शूलानि कुर्वीत। आसीने देवे तु मुरारिराह —

"तत्र स्याज्जानुसन्धिकम्।
जङ्घादि द्विशिखं कुर्यादूरुमेकशिखं तथा॥
एकोनविंशतिर्ज्ञेयाः शूलदण्डास्तथासने।
शयने च तथा दण्डा अत ऊर्ध्वं न कारयेत्॥"

इति। इत्यासनशयनयोरप्येकोनविंशतिः शूलदण्डा भवन्ति। रत्नावल्यामपि तथैवोक्तं — "खादिरादीन् पूर्वोक्तान् वृक्षान् समानीय पुण्याहं कारयित्वा प्रोक्ष्य शिल्पिभिस्तक्षयित्वा शूलानि कारयेद् यथोक्तप्रमाणानी"त्यादि। तत्र शूलं वार्यधिवास्येति। शूलमिति जातावेकवचनम्। त्रयोदशसंख्यानि सप्तदशसङ्ख्यानि एकोनविंशतिसङ्ख्यानि वा शूलानि शिल्पिभ्यो यथोक्तप्रकारेण गृहीत्वा यथोक्तप्रकारेणैवैकरात्रं जलेऽधिवास्य उत्तरेद्युर्बिम्बकलशैः स्वस्वबिम्बशुद्धिकलशैः सिक्त्वाग्रतो मण्डपे यथोक्तप्रकारेणाधिवास्य अत्राधिवासहोमेन सह रत्नहोमं कृत्वा ततो यथोक्तकालं यथोक्तप्रकारेण वास्तुपुण्याहान्तकर्मणा प्रासादे परिशोधिते सति मुहूर्तदिने पुण्याहपूर्वं नपुंसकशिलां प्रतिष्ठाप्य मणिगणन्यासादि रत्नन्यासपीठस्थापनादिकं कृत्वा गुरुः प्रतिष्ठाविधानज्ञः मण्डपाच्छूलान्यानीय स्थितासीनशयानानां (स्वपदे) स्वस्वोक्ते स्थाने संस्थाप्य तानि शूलानि तत्र सम्यक् स्थिरीकृत्य कुम्भेशानिद्राकलशाभ्यामभिषिच्य प्रार्च्य तत् संरक्ष्य मृन्मयमूलबिम्बं स्वस्वपरिवारैर्युतं मृन्मयं मूलबिम्बं स्वेप्सितं तक्ष्णा कारयेत्। तथा उपबिम्बमर्चनाबिम्बादिकं चेप्सितं कारयेत्। अथ मूलप्रतिमा महती चेत् प्रासादरचनात् पूर्वमेव अधिष्ठाने कृते सति तत्र स्थले स्थलशुद्धिं कृत्वा यथोक्तनीत्या राक्षोघ्नहोमवास्तुहोमवास्तुबल्यादि कृत्वा रत्नहोमं च विधाय पुण्याहानन्तरं तद्गर्ते यथोक्तप्रकारेण संस्कृतां नपुंसकशिलां प्रतिष्ठाप्य तद्गर्तेषु रत्नन्यासं यथोक्तप्रकारेण कृत्वा तत्र शूलस्थापनं कृत्वा संपूज्य संरक्ष्य तक्षभिः लेप्यां महाप्रतिमां कारयेत्। उभयथापि मृल्लेपनात् पूर्वं शूलान्यन्योन्यं बन्धयेत्। तत्र तिष्ठतो देवस्य नपुंसकशिलाया उपरि पादशिलां पीठं च यथोपपत्ति निधाय पादशिलाया गर्तद्वये द्वे पादशूले नंपुसकशिलास्पृष्टे यथा भवति तथा कृत्वा ते पादशूले

---

१. 'क्यां' ख. ग. च. पाठः.

कटिपर्यन्ते कृत्वा तत्र कटिदण्डेन सह श्लेषयेत् । शूलानां श्लेषणे सुषिरं कीलं च न कारयेत् । त्रिशिखं द्विशिखं निम्नं[1] च कृत्वा पृथक् पृथक् श्लेषयेत् । वक्षोदण्डस्य मध्ये तथा कटिदण्डे च मध्ये निम्नं कृत्वा तयोर्निम्नयोर्मध्ये वंशदण्डं निश्छिद्रं बन्धयेत् । वंशदण्डं तु मुखाद् मूर्धान्तं किरीटान्तं च बुधाः प्राहुः । वक्षोदण्डं त्रिशूलाग्रं कुर्यात् । बाहुमूलानि त्रिशिखानि, प्रकोष्ठं द्विशिखं कुर्यात् । पुनर्दण्डान् सर्वान् यथावच्छ्लेषयेत् । श्लेषिताञ्छ्लेषितांस्ताम्रपट्टेन वेष्टयेत् । यथा सन्धेर्दार्ढ्यं भवेत्, तथा वेष्टयेत् । एवं शूलानि बन्धयित्वा रज्जुवेष्टनं कुर्यात् । तत्र मुरारिराह—

"नालिकेरत्वचां सारं गृह्णीयाद् रज्जुकर्मणि ।
समवृत्तायता रज्जुर्नातिस्थूला न वा कृशा ॥
शलाकामात्रनाहा सा शूलग्रन्थिविवर्जिता ।
न चैवातिदृढा कार्या नातिमृद्वी कदाचन ॥
एवं रज्जुमयं कृत्वा सर्वेष्वङ्गेषु वेष्टनम् ।
यथा शरीरे सर्वेषां चतुष्षष्टिः सिराः स्मृताः ॥
शूले तथैव पाशाः स्युः कर्तव्यास्तत्र कोविदैः ।
शूलमस्थि सिरा रज्जुर्मृन्मांसं त्वक् पटो भवेत् ॥
द्वाभ्यां द्वाभ्यां तु रज्जुभ्यां बद्ध्वा शूलं तु वेष्टयेत् ।
मृदं संगृह्य पूर्वोक्तां ततो मासद्वयोषिताम् ॥
चतुर्भिर्भाजिताभिश्च वालुकाभिर्विमिश्रयेत् ।
ततस्त्रैकटुकं चूर्णं विंशत्यंशं तु मिश्रयेत् ॥
नालिकेरत्वचां सारं छित्वा छित्वात्र मिश्रयेत् ।
आलोड्य त्रिफलातोये नालिकेररसान्विते ॥
नालिकेररसैः सार्धं सारयित्वा मृदं शनैः ।
श्लेषयेत् स्थूलबन्धेषु सर्वाङ्गेषु शनैः शनैः ॥
आर्द्रेष्वेव चतुष्केषु तेषु रज्ज्वा प्रवेष्टयेत् ।
वेष्टयित्वा समीकृत्य मृदा चैव शनैः शनैः ॥

---

१. 'म्ननं च' ख. घ. पाठः.

**सप्रासादमिदं प्रगृह्य मनुबिम्बं कर्मबिम्बं तथा**
**तत्कृत्यावसितौ प्रणीय सलिले तद् वासयेत् कौतुकम् ।**

---

त्रिरेव रज्जुबन्धं च त्रिशुष्कं चापि दापयेत् ।
अत ऊर्ध्वं न रज्जुं च न शुष्कं चापि दापयेत् ॥
मृदालिप्य शनैर्ज्ञात्वा शुष्काशुष्कं विचक्षणः ।
कुर्याच्छरीरसंवेष्टं छेदच्छिद्रविवर्जितम् ॥
हस्तेनैव मृदं दद्यात् कूर्चेन कटुशर्कराम् ।
पिष्ट्वा त्रिफलतोयैस्तु शर्कराकल्कमेव च ॥
कार्पासतूलसंयुक्तं सम्यक् कृत्वा विचक्षणः ।
कूर्चेनैव तु तत् कल्कं शनैरेव परामृशेत् ॥
ततः कृकणिकाग्रेण न्युप्ताङ्गानि च लेपयेत् ।
क्लृप्तेष्वङ्गेषु सर्वेषु पटैराच्छाद्य बुद्धिमान् ॥
शुक्तिकादिक्रियास्तत्र सर्ववर्णांश्च कारयेत् ।
वर्णयोगविधिं पश्चात् प्रकुर्वीत यथाक्रमम् ॥

इति । इत्याद्युक्तप्रकारेणोत्तमादिक्रमवशान्मूलप्रतिमाम् अतिमनोहराङ्गीं कृत्वा[1] मूलबिम्बत्रिभागादिप्रमाणनिर्मितां कर्मार्चामष्टांशादिप्रमाणकल्पितस्नानार्चादिकं च यथायोग्यं कारयित्वा कर्माण्यारभेत ॥ ११२ ॥

तत्र[3] प्रतिमापरिग्रहादिकमाह — **सप्रासादमिति** । तत्कृत्यावसितौ[2] तेषां शिल्पिनां कृत्यावसाने तत्रादौ यथाकालं बीजवापं कृत्वा तद्योग्ये दिने इदं मनुबिम्बं मूलबहुबेरबिम्बं[4] स्थिरीकृतं चेत् सप्रासादं प्रासादेन सहितम्, अन्यथा चेत् पृथगेव मूलबिम्बं तथा कर्मबिम्बं च पूर्वोक्तप्रकारेण प्रगृह्य तत् कौतुकं कर्मबिम्बं जलाशयं प्रणीय सलिले वासयेत् जलाधिवासं कुर्यात् । परिग्रहात् पुरः कर्तव्ये नयनोन्मीलने अन्तःस्थितमूलबिम्बे घृतमधुलेशयुक्तया हेममय्या तूलिकया यथोक्तप्रकारेण वा दर्पणप्रतिबिम्बिते सम्यगञ्जयित्वा[5] वा

---

१. 'भावये' ख. पाठः. २. 'त्वा वि' ख. च. पाठः. ३. 'त्र परि', ४. 'म्बे स्थिरीकरणं चे' ग. पाठः. ५. 'ग् वाञ्जयित्वा त' ख. ग. घ. च. पाठः.

**कृत्वा वास्तुविधिं सुवस्त्रपरिमाष्टर्यार्चां च संशोधयेत्**
**संहृत्याग्रभृताप्सु दर्पणकृतच्छायाधिवास्याथवा ॥११३॥**
**नक्तं नक्तन्दिनं च त्रिनिशमपि जले वासयेद् रत्नलोहा-**
**श्मार्चास्तत्रोपनीय स्नपयतु कलशैः स्वोदितैः कर्मबिम्बम् ।**
**बध्नीयात् कौतुकं च स्मरजिति सकले बिम्बकेऽघोरतः प्रा-**
**ङ्नेत्रोन्मेषं च कुर्यात् तदुदितमनुभिर्लक्षणोद्धारकाले ॥**
**कर्मार्चामधिवासयेत् समुपनीयालङ्कृते मण्डपे**
**मूलार्चामनुसन्धिक्लृप्तकलशासेकां च मूलालये ।**

---

तच्छेषेण कर्मार्चापरिग्रहात् पुरस्तस्यामपि नयनोन्मीलनं पूरणं च यथोक्तं कुर्यात् । पुनः वास्तुविधिं प्रासादशुद्धिं च यथोक्तप्रकारेण कृत्वा सुवस्त्रपरि- माष्टर्या मृदुतरवस्त्रपरिमार्जनेन मूलार्चां च संशोधयेत् । अथवा संहृत्य भूतसंहा- रादिकं कृत्वा अग्रभृताप्सु पुरोभागगतकटाहस्थे जले दर्पणकृतच्छाया दर्पणे प्रतिबिम्बिता छायाधिवास्या भवेत् ।। ११३ ॥

जलाधिवासस्य कालनियममाह — **नक्तमिति** रत्नलोहाश्मार्चाः रत्न- मय्यो लोहमय्यः शिलामय्यश्चार्चाः क्रमेण नक्तं रात्रिमात्रं नक्तंदिनमहोरात्रं त्रिनिशं त्रिरात्रमपि जले वासयेत् । मृद्दारुशिलालोहरत्नार्चाः क्रमेण सप्तरात्र- पञ्चरात्रत्रिरात्राहोरात्ररात्रिमात्रकालं जलाधिवासं कुर्यादिति केचिदाहुः । पुनः कर्मबिम्बं तत्र स्नानमण्डपे उपनीय स्वोदितैः स्वस्वोक्तैः बिम्बशुद्ध्यर्थं विहितैः कलशैः स्नपयतु । स्वस्वोक्तकाले कौतुकबन्धं नेत्रोल्लेखनं च कुर्यात् । तत्र स्मरजिति सकले बिम्बके बिम्बशुद्ध्यनन्तरम् अघोरतः 'अघोरेभ्य' इति मन्त्रेण कौतुकं च बध्नीयात् । तत्र प्राक् पूर्वं लक्षणोद्धारकाले लक्षणोद्धारस्य स्थाने तदुदितमनुभिः शिवनारायणस्य नेत्रोल्लेखनार्थमुक्तैर्मन्त्रैः विधिवन्नेत्रोन्मेषं च कुर्यात् ॥ ११४ ॥

**तदनु** कर्मार्चामलङ्कृते मण्डप उपनीयाधिवासयेत् । अनुसन्धिक्लृप्त- कलशासेकां ध्यानेन कृतबिम्बशुद्धिकलशां मूलार्चां मूलालये प्रासादे चाधिवा-

---

१. 'स्य मनुभिर्मधुवातेत्यादिभिः लक्षणोद्धार उक्तै' ग. पाठः.

छायावार्यधिवासनं यदि कृतं तस्यां पृथक् साम्प्रतं
छायाबिम्बघटाभिषेकमपि तच्छुद्ध्यै पृथक् प्राचरेत् ॥ ११५ ॥
बिम्बं प्रासादसंस्थं विधिवदखिलतत्त्वाप्ययोत्पत्तिमन्त्रा-
त्मोन्मेषाध्वौघमन्त्रन्यसनमनु यजेन्मानसैश्चोपहारैः ।
संशोध्यैतत् क्रियाबिम्बकमपि यजतां मण्डलेज्यादियुक्तं
तस्मिंस्तत्त्वाधिवासाहुतिभवमथ सम्पातमापातयेच्च ॥
लेप्यादिप्रतिमासमेतमभितः प्रासादमष्टासु दिक्ष्वा-
धेयान्यधिवासनोक्तहवनान्यग्निं प्रणीयाग्निजे ।
श्रीवृक्षप्रभवा निशाचरदिशि श्रीपर्णिकोत्थास्तथा
वायव्यां समिधोऽणुरस्त्रमुभयोः शेषः क्रमः पूर्ववत् ॥

---

सयेत् । तस्यां मूलार्चायां छायावार्यधिवासनं दर्पणच्छायायां जलाधिवासनं पृथक् कृतं यदि तर्हि साम्प्रतम् इदानीं तच्छुद्ध्यै तस्या मूलार्चायाः शुद्ध्यै (छाया)बिम्बघटाभिषेकमपि दर्पणच्छायायां पृथक् प्राचरेत् ॥ ११५ ॥

पुनः प्रासादसंस्थं मूलबिम्बं विधिवद् यथोक्तमार्गेण अखिलतत्त्वाप्ययोत्पत्तिमन्त्रात्मोन्मेषाध्वौघमन्त्रन्यसनमनु अखिलानां तत्त्वानां संहारं शोषणादिकं तत्त्वानां सृष्टिं मन्त्रोदयप्राणायामादिकं षडध्वन्यासादिकं च विस्तरेण कृत्वा 'मधु वाते'त्यादिभिर्लक्षणोद्धार उक्तैर्मन्त्रैः तदनु मानसैरुपहारैः यजेच्च । एतत् क्रियाबिम्बकमपि भूतसंहारादिभिः संशोध्य मूलमन्त्रप्राणायामन्यासादिसहितं मण्डलेज्यादियुक्तं मण्डलपूजादिभिः सह यजताम् । अथ तस्मिन् तत्त्वाधिवासाहुतिभवं संपातं तत्त्वहोमेनाधिवासहोमैः शान्तिहोमेन च सम्भूतं सम्पातमापातयेत् स्पृशेच्च ॥ ११६ ॥

तत्र कुमारे विशेषमाह — लेप्यादीति । अग्निजे लेप्यादिप्रतिमासमेतं मृन्मयादिबहुबेरबिम्बयुक्तं प्रासादमभितः परितोऽष्टासु दिक्षु कुण्डेष्वग्रस्थाद् गुरुकुण्डादग्निं प्रणीय गुरुमूर्तिपैरधिवासनोक्तहवनान्याधेयानि । तत्र निशाचरदिशि श्रीवृक्षप्रभवा बिल्वजाः, वायव्यां तथा श्रीपर्णिकोत्थाः काश्मर्यश्च समिधः स्युः । उभयोरस्त्रमेवाणुः । शेषः क्रमः पूर्ववदेव ॥ ११७ ॥

---

१. 'स्याः' इति मूलकोशपाठः. २. 'चा' ग. पाठः. ३. 'त्वा त' ग. ङ. पाठः.

नीत्वान्तः सकलं परेद्यवि परावाहादि कृत्वा सुधी-
मूलार्चान्यसनं विभाव्य विधिवद् विज्ञाप्य देवं ततः ।
कर्मार्चामपि तत्पुरः पुनरियं सा देवते मूर्तिरो-
मित्युच्चार्य मनुं विहीनमणिके संस्थापयेत् स्वे पदे ॥
शैलादिस्थिरकर्मकौतुकविधौ चेष्टोऽष्टबन्धोऽत्र तत्-
प्राणन्यासवियुक्तमुक्तमखिलं कृत्वा निवेद्यान्तिमम् ।
सूनैर्निस्सलिलैस्तदाहितचितिं संयोज्य मूले ततः
प्राणन्यासपुरस्सरं समुचितं सर्वं प्रकुर्वीत च ॥ ११९ ॥

परेद्यवि उत्तरदिवसे प्रातरेव प्रासादप्रतिष्ठां कृत्वा । बहुबेरबिम्बं तदानीमेव स्थाप्यते चेत् तद् यथायोग्यं कुर्यात् । लेप्यादिप्रतिमा निश्चला प्रासादे पूर्वमेव स्थापिता चेत् प्रासादप्रतिष्ठानन्तरं नपुंसकशिलास्थापनं रत्नन्यासं पीठप्रतिष्ठां च मनसा विधाय पीठपूजां च कृत्वा । अत्रार्चनामूर्तिः स्थिरा चेत् तन्नपुंसकशिलामपि स्थापयित्वा पीठं चास्थाप्य सम्पूज्य मण्डपमासाद्य संपूज्य तत्र मूलबेरसद्भावे तत्रान्यथा चेत् कर्मबिम्बे सर्वमुद्वास्य यथाक्रममन्तः सकलं नीत्वा मूलार्चायां परावाहनमवस्थावाहनं मन्त्रावाहनं च कृत्वा मूलार्चास्थापनं यथाविधि भावयित्वा 'ध्रुवा द्यौरि'त्यादिना स्थिरीकरणं विभाव्य 'विश्वतश्चक्षुरि'त्यादिना प्रार्थयेत् । कर्मार्चायां परावाहनं मन्त्रावाहनं च कृत्वा संपूज्य मूलार्चागतं देवं विज्ञाप्य तत्पुरोभागे विहीनमणिके रत्नन्यासरहिते स्वे पदे 'इयं सा देवते मूर्तिरोमि'ति मूलमन्त्रपुटितं पञ्चतत्त्वमूलं प्रणवं चोच्चार्य कर्मार्चां संस्थापयेत् । सुधीरिति मूलबेरप्रतिष्ठायां प्रतिष्ठाकर्मोक्तमखिलं ध्यायन्नित्यर्थः ॥ ११८ ॥

शैलादिस्थिरकर्मकौतुकविधौ शिलादिभिः स्थिरा कर्मार्चा स्थापिता चेदत्र अष्टबन्ध इष्टो योग्यः । अन्येष्वपि बिम्बेषु सत्सु तत्स्थापनं च कृत्वात्र कर्मार्चायां तत्प्राणन्यासवियुक्तमुक्तमखिलम् अष्टबन्धध्रुवमन्त्रजपाद्यनन्तरं कुम्भेशानिद्राघटाभ्यां यथोक्तप्रकारेणाभिषिच्य जीवावाहनं स्थूला[2]वाहनं स्तोत्रावाहनादिकं च कृत्वा मूलमन्त्रेणावाह्य संपूज्य पायसनिवेद्यान्तिमं च कृत्वा पुनै[3]: निर्जलैः पुष्पैस्तदाहितचितिं तत्रस्थं चैतन्यं मूलपुटितपञ्चतत्त्वैर्मूलार्चायां

---

१. 'रात्मबि' ख., 'रन्तबि' घ. च. पाठः. २. 'तिमञ्चतु पु' ख. पाठः. ३. 'नः शङ्कगतैः नि' ग. ङ. पाठः.

**पीठेज्यादिसमुज्ज्वले समभिवाह्यातः क्रियाबिम्बके**
**मन्त्रन्यासपुरस्सरं विधिवदत्राभ्यर्च्य देवं स्वयम् ।**
**नीत्वा मूलतनौ ततः स सकलीकृत्योपहारैः परै-**
**रेनं मानसजैः समर्च्य परिजप्य प्रीणयेद् भक्तितः ॥**
**तत्तत्कर्मकृते प्रणीय मनुबिम्बात् कर्मबिम्बेऽमुना**
**कुर्यात् तुर्यदिनाभिषेकयजनाद्यं कर्म सर्वं सुधीः ।**
**स्थास्नुन्यत्र ततोऽपि देवमुपनीयान्यत्र बिम्बेऽमुना**
**स्नानादीनि समाचरेदिह समिज्या कर्मबिम्बे सदा ॥**
**शुद्धौ चाखिलकर्म कर्मकृतबिम्बे योजयित्वा पृथक्**
**तत्त्वापीत्युदयादि मूलमनुबिम्बे कर्मबिम्बेऽपि वा ।**

---

संयोज्य प्राणन्यासपुरस्सर सर्वं समुचितं कर्म तत्त्वन्यासं षडध्वन्यासादिकं मानसपूजनं च प्रकुर्वीत च 'लोकानुग्रहेत्यादि'[1]स्तुत्यादिकं च कुर्यात् ॥ ११९॥

ततो नित्यपूजाविधिमाह — **पीठेज्यादीति** । पीठेज्यादिसमुज्ज्वले पीठपूजया मूर्तिकल्पनया च युते अतः मूलबिम्बात् क्रियाबिम्बके प्रोक्तक्रमात् समभिवाह्य मूलेन स्वहृदयादप्यावाह्य मन्त्रन्यासपुरस्सरं विधिवदत्र देवमभ्यर्च्य निवेद्य परिषद्बलिं तत्प्रार्थनं प्रसन्नपूजां च कृत्वा पुनः पूर्ववद् देवं स्वयं मूलतनौ नीत्वा ततः सकलीकृत्य मानसजैः परैरुत्कृष्टैरुपहारैः एनं समर्च्य परिजप्य भक्तितः प्रीणयेत् । पुनर्यथोक्तान् मन्त्रान् जपित्वा चिच्चेत्यसंमेलनादिकं[2] च कृत्वा समापयेत् ॥ १२० ॥

**पुनः** तत्तत्कर्मकृते तत्तत्कर्मविधानार्थं मूलमनुबिम्बात् कर्मबिम्बे प्रणीय अमुना कर्मबिम्बेन तुर्यदिनाभिषेकयजनाद्यं चतुर्थदिवसस्नानपूजादिकं सर्वं कर्म कुर्यात् । सुधीरिति तत्तत्कर्मानन्तरं तत्तत्कर्मसंस्कारं मूलबिम्बे योजयितुं समर्थ इत्यर्थः । अत्र कर्मबिम्बे स्थास्नुनि निश्चले ततः तस्मादप्यन्यत्र स्नानबिम्बे[3] देवमुपनीय अमुना स्नानादीनि समाचरेत् । अमुना स्नानबिम्बेन इह बहुबेरे समिज्या पूजा सदापि कर्मबिम्ब एव ॥ १२१ ॥

**शुद्धौ** प्राप्तायाम् अखिलकर्म क्षालनादीनि कर्माणि कर्मकृतबिम्बे कर्मार्थं कृते बिम्बे पृथक् पृथग् योजयित्वा पृथक् पृथक्[4] संपूज्य पृथक् पृथग्

---

१. 'दिकं' ग, पाठः. २. 'च्चे', ३. 'म्बे अमुना दे' ङ. पाठः. ४. 'क् कृत्वा पृ' ग. पाठः.

उद्धारे जनितत्त्वसर्पिरुपबिम्बस्थे समर्प्य स्वगे
हुत्वाभ्यर्च्य पुरोगते स्वपदगे विश्वं विलाप्याग्र्यगे ॥
सिक्त्वा मूलगतं प्रणीय कलशे सिक्त्वामुना कार्मिकं
तस्माज्जीवघटे सुयोज्य लघुगेहस्थाल्पबिम्बे नयेत्।
कृत्वा सर्वमिहैकबेरविधिना सम्पाद्य सर्वं ततः
प्रत्यापत्तिमपि प्रसिद्धवहुबेरन्यायतः प्राचरेत् ॥ १२३ ॥

इति तन्त्रसमुच्चये श्रुतार्चा-
क्रमसिद्ध्यै रविजन्मसम्प्रणीते।

---

योजयेत्। अत्र पञ्चकस्नानात् पूर्वमुक्तं[2] तत्त्वापीत्युदयादि तत्त्वसंहारादि मूल बिम्बे कुर्यात्, कर्मबिम्बेऽपि कुर्याद्वा। उद्धारे जीर्णोद्धारनिमित्ततत्त्वहोमे जनितत्त्वसर्पिः सृष्टितत्त्वहोमसंपातमुपविम्बस्थे देवे समर्प्य स्वगे मूलविम्बयोजिते देवे हुत्वा संहारतत्त्वहोमं कृत्वा ततः पुरोगते कर्मबिम्बे योजयित्वाभ्यर्च्य पायसं निवेद्य होमं समाप्य ससम्पातं तत्त्वकूलशमन्तर्नीत्वा स्वपदगे मूलबिम्बगते देवे विश्वं विलाप्य[3] ध्यानसंकोचं कृत्वा अग्र्यगे कर्मविम्बगते देवे सिक्त्वा तत्त्वकलशेनाभिषिच्य मूलगतं मूलविम्बयोजितं देवं यथोक्तप्रकारेण जीवकलशे प्रणीय अमुना जीवकलशेन कार्मिकं कर्मबिम्बगतं देवं सिक्त्वा तस्मादप्यग्रगते जीवघटे सुयोज्य मण्डपमानीय तत्र शय्यायां शायितेनाल्पबिम्बेन सहाधिवास्योत्तरेद्युः लघुगेहस्थाल्पबिम्बे बालालयेऽल्पबिम्बं संस्थाप्य अत्र नयेत् योजयेत्। इहाल्पबिम्बस्थे देवे चतुर्थदिवसस्नानादिकं सर्वं कर्मैकबेरविधिना कृत्वा ततः सर्वं मूलबिम्बकर्म प्रासादादिकं संपाद्य सम्यक् कारयित्वा ततस्तस्मात् प्रत्यापत्तिं स्वप्रासादप्राप्तिमपि प्रसिद्धवहुबेरन्यायतः पूर्वोक्तबहुबेरानुष्ठानन्यायेन प्राचरेत् ॥ १२२, १२३ ॥

पटलमुपसंहरति — इतीति। इति उक्तप्रकारेण श्रुतार्चाक्रमसिद्ध्यै गुरुमुखाच्छ्रुतस्य पूजाक्रमस्य सिद्ध्यै स्थिरतायै रविजन्मसंप्रणीते रविपुत्रेण नारायणेन सम्यग् विरचिते तन्त्रसमुच्चये ग्रन्थे जीर्णसमुद्धृतिक्रियाढ्यः जीर्णो-

---

१. 'प्र' इति मूलकोशपाठः. २. 'र्वं त', ३. 'प्याग्र्यसं' ग. पाठः.

दशमः सुसमापितः सहैकः
पटलो जीर्णसमुद्धृतिक्रियाढ्यः ॥ १२४ ॥

इति तन्त्रसमुच्चये
एकादशः पटलः ।

---

द्धारविधिभिः बहुबेरविधिना च परिपूर्णः सहैकः एकेन सहितो दशम एकादशः सुसमापितः सुष्ठु यथाक्रमं समापितः ॥ १२४ ॥

इति तन्त्रसमुच्चयविमर्शिन्याम्
एकादशः पटलः ।

## अथ द्वादशः पटलः ।

**अथाभिधास्यामि समुक्तकर्मसु**
**प्रसक्ततत्साधनलक्षणादिकम् ।**
**अवश्यमत्रौपयिकं परामृश-**
**न्ननीरिताः कर्मकलाश्च काश्चन ॥ १ ॥**

**साक्षे शङ्कुमिनाङ्गुलं समतले कृत्वा पृथक्कालज-**
**च्छायाग्रारचितत्रिबिन्दुपरिवृत्त्योत्पाद्य मत्स्यद्वयम् ।**
**तत्सौषुम्नसिरोत्थसूत्रयुगयोगाच्छङ्कुनाड्यन्तिमं**
**सूत्रं न्यस्य सुसाधयेद् यमधनेशाशे ततश्चेतरे ॥ २ ॥**

---

एवमेकादशसंख्यैः पटलैः सप्रायश्चित्तानि सजीर्णोद्धाराणि प्रतिष्ठा-कर्माण्यभिधाय द्वादशेन पटलेन सर्वपटलेष्वपि यत्किञ्चिदनुन्मीलितं कर्म विविच्याभिदधानः अत एवास्य पटलस्य कर्मशेषाख्या च भवतीति मन्यमानः तत्सङ्गतिं योजयन् पटलमारभते — **अथेति** । अथ कर्मणां कथनानन्तरं समुक्तकर्मसु सम्यगुक्तेष्वपि कर्मसु प्रसक्ततत्साधनलक्षणादिकं प्रकर्षेण सक्तानामनुबद्धानां तत्साधनानां लक्षणविनियोगादिकं परामृशन् अत्र साधनादौ यद्यदवश्यमौपयिकम् उपयोगि तत्तदहमभिधास्यामि वक्ष्यामि । अनीरिता अनुक्ताः काश्चन कर्मकलाश्चाभिधास्यामीति संबन्धः ॥ १ ॥

तत्र प्रथमं 'क्षमां क्षमीकृत्य दिशश्च सम्यग् ज्ञात्वे'त्यत्र प्रसक्तं दिग्विभागज्ञानविधानमाह — **साक्ष इति** । साक्षे दिग्विभागापरिज्ञाते प्रदेशे समतले समीकृततले इनाङ्गुलं द्वादशाङ्गुलं शङ्कुं शङ्क्वाख्यं काष्ठविशेषं कृत्वा स्थापयित्वा पृथक्कालजच्छायाग्रारचितत्रिबिन्दुपरिवृत्त्या पृथक् पृथक् कालवशाज्जातेषु त्रिषु बिन्दुष्वितरेतरान्तरालमानेन परिवृत्त्या वृत्तीकारेण मत्स्यद्वयं रेखाद्वयसंपुटितं मत्स्याकारं संस्थानविशेषम् उत्पाद्य जनयित्वा, तत्सौषुम्नसिरोत्थसूत्रयुगयोगात् तयोर्मत्स्ययोः सौषुम्नसिरे मध्यनाड्यौ ताभ्यामुत्थिताभ्यां सूत्राभ्यां युगं युग्मं यत् तस्य योगो दक्षिणे उत्तरे वा भवेत् । तस्माद् योगात् शङ्कुनाड्यन्तिमं शङ्कोर्मध्यनाडीपर्यन्तं सूत्रं न्यस्य प्रक्षिप्य तेन सूत्रेण यमधनेशाशे दक्षिणां दिशमुत्तरां दिशं च सुसाधयेत् सुतरां स्थिरीकुर्यात् ।

ततश्च तस्मादेव सूत्रात् इतरे च वक्ष्यमाणरीत्या पूर्वपश्चिमाशे च सुसाधयेत् । अयं भावः — दिग्विभागं ज्ञातुं समीहिते भूप्रदेशे आदित्यातपे च प्रसरति सति समीकृते स्थले समान्तरालं वृत्तत्रयं कृत्वा तन्मध्ये स्वलक्षणयुतं शङ्कुं समं निधाय यदा यदा तस्य छायाग्रं पृथक् पृथग् वृत्तं स्पृशति, तदा तदा तत्र तत्र वृत्ते शङ्कुं कुर्यात् । तद्बिन्दुत्रयं मिथोऽन्तरालमानेन वृत्तत्रयं कुर्यात् । तदा मध्यमवृत्ते द्वौ मत्स्यौ भवतः । तन्मत्स्ययोर्मध्यगते द्वे सूत्रे प्रसार्य दीर्घीकुर्वाणे यस्मिन् प्रदेशे तयोः संयोगो भवति, तत्राङ्कं कृत्वा तस्मादङ्कात् शङ्कुमध्यसूत्रान्तं सूत्रं प्रसारयेत् । तथा सति दक्षिणोत्तरदिग्विभागो भवतीति । तथाच गुरुदेव आह । तत्रायं शङ्कुलक्षणश्लोकः —

"भ्रमविरचितवृत्तस्तुल्यमूलाग्रभागो
द्विरददशनजन्मा सारदारूद्भवो वा ।
सममृजुरवलम्बादव्रणः षट्कवृत्तः
समतल इह शस्तः शङ्कुरर्काङ्गुलोच्चः ॥"

इति ।

"निरक्षदेशे लङ्कादौ स्यादयं दिग्विनिर्णयः ।
इत्याहुः केचिदित्यस्मात् साक्षदेशस्य कथ्यते ॥
विशेषः साक्षदेशानामस्त्येवार्कापसर्पणात् ।"

इति च ।

"छायात्रयाग्रोद्भववृत्तमत्स्यस्पृक्सूत्रयोर्यत्र युतिः प्रदेशे ।
याम्योत्तरा शङ्कुदिशा ककुप् स्यात् क्रमेण सौम्योत्तरगोलयोः स्यात् ॥"

इति शङ्कुस्थापनश्लोकः । तस्यायमभिप्रायः — जलसमीकृते स्थले प्रोक्तप्रमाणं शङ्कुं विन्यस्य पूर्वाह्णे वापराह्णे वा छायाग्रेष्वभिनिविष्टेषु त्रयो बिन्दवः कार्याः । तत एकं बिन्दुं मध्ये कृत्वा इष्टप्रमाणेन वृत्तमालिखेत् । तावतैव द्वितीयं बिन्दुमवलम्ब्य द्वितीयं वृत्तं, तद्वत् तृतीयं बिन्दुं मध्ये कृत्वा तृतीयं वृत्तं चालिखेत् । ततस्तावत्प्रमाणमेव वृत्तं तथाच लिखेत्, यथाच मध्यबिन्दुवृत्तं पार्श्वद्वयस्य खण्डमुत्पादयति । तथा कृते मत्स्यद्वयमुत्पद्यते । तयोश्च यस्यां दिशि महदन्तरं, ते मुखे भवतः । तयोश्च यस्यां दिशि सन्निकर्षः,

**स्तम्भोच्चस्य षडंशविस्तृततदष्टांशाधिकोच्चो घटः**
**पद्मोऽष्टांशसमुच्छ्रयोच्छ्रयनवांशोनप्रथोऽष्टच्छदः ।**
**अष्टांशायततद्द्विपांशरहितव्यासायतार्धोच्छ्रयः**
**कूर्मो नागयवाग्रतद्द्विगुणमूला योगनालप्रथा ॥ ३ ॥**

---

ते पुच्छे भवतः । मुखयोः सूक्ष्मकीलकौ विन्यस्य तयोः सूत्रे बद्ध्वा पुच्छमध्यगे निस्सार्य स्वगत्यैकैकं नयेत् । तयोः सूत्रयोः मुखपुच्छगत्यनुसारेण यत्र सन्निपातः, सा दिक् स्थिरा भवति । एवं शङ्कुमूलयुति बिन्दुगामि सूत्रं प्रसार्य रेखां कुर्यात् । सा दक्षिणोत्तरा भवति । तत एकैकं बिन्दुं मध्ये कृत्वा वृत्तत्रयेण मत्स्यमुत्पादयेत् । तस्य मुखपुच्छावगाहि सूत्रं पूर्वपरा दिग् भवति । एवं साक्षदेशे दिक्साधनत्वमुक्तमिति ॥ २ ॥

निधिकलशादीनां प्रमाणमाह — **स्तम्भोच्चस्येति** । स्तम्भोच्चस्य प्रासादस्तम्भायामस्य षडंशविस्तृततदष्टांशाधिकोच्चः स्तम्भायामस्य षडंशेन विस्तारयुक्तः विस्तारादष्टांशाधिकायामयुक्तश्च घटो निधिकलशः स्यात् । तदूर्ध्वगतः पद्मः शिलापद्मः, स तु अष्टांशसमुच्छ्रयोच्छ्रयनवांशोनप्रथः स्तम्भोच्चस्याष्टांशेनोन्नतियुक्तः उन्नतेर्नवांशहीनप्रथया विस्तारेण च युक्तः, अष्टच्छदः अष्टभिः पत्रैश्च युक्तः स्यात् । तदूर्ध्वस्थः कूर्मः शिलाकूर्मः अष्टांशायततद्द्विपांशरहितव्यासायतार्धोच्छ्रयः स्तम्भोच्चस्य अष्टांशेन दैर्घ्ययुक्तः, तस्यायतस्य अष्टांशेन रहितविस्तारः, आयतस्य अर्धांशेनोन्नतियुक्तश्च स्यात् । योगनालप्रथा कूर्मोर्ध्वभागस्थितस्य योगनालस्य प्रथा विस्तारः नागयवाग्रतद्द्विगुणमूला अष्टयवाग्रा एकाङ्गुलपरिमिताग्रविस्तारा तद्द्विगुणमूला तस्याग्रस्य द्विगुणेन द्व्यङ्गुलमानेन विस्तृतमूला च स्यात् । तथा चाहुः —

"स्तम्भायामषडंशे स्यादेकांशो घटविस्तरः ।
विस्ताराष्टमभागे स्यान्नवांशं चोच्छ्रयं भवेत् ॥
मूलविस्तारमष्टांशो वेदांशः कण्ठविस्तरः ।
वक्त्रान्तरेण भूतांशं कलशस्याकृतिर्भवेत् ॥"

इति ।

"स्तम्भोच्चे वसुभागे स्यादेकांशं पाद्ममुच्छ्रयम् ।
पद्मोत्सेधे नवांशे स्यादष्टभागं तु विस्तरम् ॥

**अष्टाशामिहिरैस्त्रिधायततदर्धव्यासपादोच्छ्रिता**
**यद्वार्काहियुगैर्मितातातिवितत्युत्सेधवत्योऽङ्गुलैः ।**
**मार्त्तिक्यः पुटपाकलोहितरुचः शैल्योऽथवाष्टेष्टकाः**
**कर्तव्याश्चतुरूनिताश्चतुरुपेता वा गृहौचित्यतः ॥ ४ ॥**

---

उत्सेधं विभजितं कृत्वा षड्भागं तु विधीयते ।
एकांशं पद्मपट्टं स्यादधः पद्मांशकंत्रयम् ॥
ऊर्ध्वं पद्मद्वियंशं तु अष्टपत्रादिशोभितम् ।"

इति ।

"योगनालोऽङ्गुलव्यासो द्व्यङ्गुलं मूलविस्तरम् ।"

इति ॥ ३ ॥

इष्टकानां प्रमाणमाह — अष्टेति । अष्टाशामिहिरैः अष्टभिर्वा दशभिर्वा द्वादशभिर्वाङ्गुलैः त्रिधा त्रिप्रकारेण आयततदर्धव्यासपादोच्छ्रिताः आयताः तदर्धव्यासाः तत्पादोच्छ्रयाश्च, यद्वा अथवा अर्काहियुगैः द्वादशाष्टचतुर्भिरङ्गुलैः क्रमेण मितातातिवितत्युत्सेधवत्यः एतैर्मानैः परिमितेनायामेन विस्तारेणोच्छ्रयेण च युक्ताः, मार्त्तिक्यः मृत्तिकाभिर्निर्मिताः, पुटपाकलोहितरुचः पुटस्यान्तर्भागस्य पाकवशाल्लोहितवर्णाः, अथवा शैल्यः शिलानिर्मिताः अष्टेष्टकाः कर्तव्याः । गृहौचित्यतः प्रासादवशात् चतुरूनिताः चतस्रो वा चतुरुपेताः द्वादश वा । तथाच गुरुदेवः —

"अङ्गुलैः संख्यया दीर्घा जगतीपङ्क्त्यनुष्टुभाम् ।
क्रमात् तदर्धविस्तारा विस्तारार्धसमुच्छ्रयाः ॥
उत्तमादिविमानानां निर्दिष्टाः प्रथमेष्टकाः ।"

इति । पाशुपते च —

"आयामतस्तालमात्रास्तारतोऽष्टाङ्गुलाः क्रमात् ।
अष्टौ सङ्कल्पयेदेवमुत्सेधाश्चतुरङ्गुलाः ॥"

इति ।

"चतस्रोऽष्टौ द्वादश वा प्रादक्षिण्येन विन्यसेत् ।"

इति च ॥ ४ ॥

---

१. 'कं', २. 'भः' ङ. पाठः.

स्तम्भायामद्वादशांशोपपन्न-
व्यासं व्यासार्धोच्छ्रयं गर्भपात्रम् ।
तुर्यश्रं तच्छुद्धशुल्बप्रक्लृप्तं
स्वोत्सेधाङ्घ्र्यूनोच्छ्रयोर्ध्वच्छदाढ्यम् ॥ ५ ॥

नागैर्भित्तितर्तिं विभज्य चतुरो बाह्ये विहायांशका-
नन्तस्त्रीनखिलेषु गोभिरजिते षड् द्वौ च षाण्मातुरे ।
भूतैस्त्रीनपि चैककं वितनुयाद् गर्भं परांशे स्थितं
विप्रस्योपरि पादुकस्य भुवि राज्ञोऽधः क्रमादन्ययोः ॥ ६ ॥

---

गर्भपात्रप्रमाणमाह — **स्तम्भायामेति** । स्तम्भायामद्वादशांशोपपन्न-व्यासं स्तम्भायामस्य द्वादशांशेन युक्तविस्तारं, व्यासार्धोच्छ्रयं विस्तारादर्धमात्रोच्छ्रयं च, स्वोत्सेधाङ्घ्र्यूनोच्छ्रयोर्ध्वच्छदाढ्यं स्वस्योच्चस्य पादहीनोच्चेनोर्ध्वच्छदेन च युक्तं, शुद्धशुल्बप्रक्लृप्तं निर्मलेन ताम्रेण निर्मितं, तुर्यश्रं चतुरश्रं तत् इष्टकागर्तमध्ये स्थाप्यं गर्भपात्रं स्यात् । क्रियासारे वैष्णवे—

"चतुरश्रं तदर्धोच्चं शोधयेत् तद् यथाविधि ।
सुगुप्तं तद् यथा भित्तौ भित्तिमानेन वा भवेत् ॥
भित्तिस्तम्भचतुर्भागत्रिभागैकं तु तद् विदुः ।"

इति ॥ ५ ॥

गर्भन्यासस्थानमाह — **नागैरिति** । नागैः अष्टाभिः भित्तिततिम् आरूढभित्तेर्विस्तारं विभज्य बाह्ये चतुरः अन्तस्त्रीनप्यंशकान् विहाय त्यक्त्वा परांशे इतरांशे बाह्यादारभ्य पञ्चमांशे अन्तरारभ्य चतुर्थांशे च स्थितं गर्भं वितनुयात् । एवम् अखिलेषु देवेषु । अजिते गोभिः नवभिर्भित्तितर्तिं विभज्य बाह्ये षड् अन्तः द्वौ च विहाय, षाण्मातुरे भूतैः पञ्चभिर्विभज्य बाह्ये त्रीन् अन्तरेककं च विहाय परांशे स्थितं गर्भं वितनुयात् । तत् तु गर्भं विप्रस्य विप्रो यजमानश्चेत् तस्य पादुकस्योपरिभागे, राज्ञः क्षत्रियस्य भुवि भूसामान्यस्थले, अन्ययोः वैश्यशूद्रयोः क्रमादधोधश्च स्थितं गर्भं वितनुयात् ।
पाशुपते —

**कृत्वा गर्भगृहं कुलाद्रिकृतिकोष्ठाढ्यं समन्तात् पदे**
**ब्राह्मे पञ्चदशांशकान् विरचयेत् सौम्याग्रसूत्रैः समम् ।**
**तत्पृष्ठस्थितदैवमानुषपिशाचावारकेषु क्रमाद्**
**विश्वोमेशनवांशकानपि ततः स्वं स्वं पदं कल्पयेत् ॥ ७ ॥**

---

"आरूढभित्तिविस्तारमष्टधा विभजेत् पुनः ।
बाह्येऽत्र चतुरो भागानन्तर्भागत्रयं त्यजेत् ॥
तन्मध्ये स्थापयेद् गर्भं गर्ते प्रासादमानतः ।"

इति । मञ्जर्यां च —

"तद्भित्तिविस्तारमथाष्टभागं कृत्वाथ बाह्ये चतुरोऽत्र भागान् ।
त्रिभागमभ्यन्तरतो विहाय तत्रान्तरे गर्भमथो न्यसेच्च ॥"

इति । विष्णुसंहितायां —

"द्वारस्य दक्षिणे भागे तृतीयांशे द्विशेषिते ।
गोमूत्रेणाप्लुते न्यस्येद् द्वारमूलस्य पार्श्वतः ॥"

इति । स्कन्दसंहितायां —

"भित्तिं तु पञ्चधा भङ्क्त्वा त्रीणि बाह्ये परित्यजेत् ।
अन्तरेकं तु तन्मध्ये"

इति ।

"पादुकोपरि विप्राणां नृपतेस्तत् समं भवेत् ।
अधस्ताद् वैश्यशूद्राणाम् "

इति च ॥ ६ ॥

एवं प्रथमपटले प्रस्तुतान् कर्मशेषानभिधाय द्वितीयपटले प्रस्तुतान्, वदन् प्रतिष्ठास्थाननियममाह — कृत्वा गर्भगृहमिति । गर्भगृहं समन्तात् सप्तसप्तविभागेन कुलाद्रिकृतिकोष्ठाढ्यम् एकोनपञ्चाशत्कोष्ठयुतं कृत्वा ब्राह्मे मध्यमे पदे सौम्याग्रसूत्रैः दक्षिणोत्तरायतैः सूत्रैः समं पञ्चदशांशकान् विरचयेत् । तत्पृष्ठस्थितदैवमानुषपिशाचावारकेषु तस्य ब्रह्मपदस्य पृष्ठ एव स्थितेषु त्रिषु दैविकमानुषपैशाचाख्येषु आवरणपदेषु क्रमात् विश्वोमेशनवांशकान् त्रयोदशैकाद(शे?श)नवभागानपि सौम्याग्रसूत्रैः समं कृत्वा ततः स्वं स्वं पदं स्थानं कल्पयेत् ॥ ७ ॥

ब्राह्मेंऽशेऽन्तरनन्तरे महति चाल्पे चेशलिङ्गे हरौ
तार्तीये द्रुहिणांशमध्यपदतस्तुर्ये गुहेशाच्युते ।
षष्ठे सुम्भजिति प्रतिष्ठितिपदं शार्ङ्गीश्वरे वाष्टमे
प्रोक्तं शास्तरि षोडशे गणपतौ विंशे तथैकोत्तरे ॥८॥

कृत्वोदङ्मुखमत्र सूत्रमथ मध्याद् द्वारविस्तारत-
स्तूत्कृत्याढ्यशतांशकं प्रतिगमय्योदीचि चैन्द्राग्रगम् ।
सर्वेष्वीशहरीशयोः पुनरिदं वार्चांशतो वाखिले
दिश्यैश्यां गमयेद् यवं यवयुगं वार्चोद्भवं सन्धितः ॥ ९ ॥

---

तत्र महति पञ्चकरादिदीर्घे ईशलिङ्गे स्थाप्ये सति ब्राह्मे अंशे अन्तः ब्रह्मांशस्य मध्यभाग एव प्रतिष्ठितिपदं प्रतिष्ठायाः स्थानं प्रोक्तं स्यात् । अल्पे एककरादिके ईशलिङ्गे तस्यानन्तरे अनन्तरपृष्ठपदमध्ये प्रोक्तम् । हरौ द्रुहिणांशमध्यपदतः ब्रह्मांशस्य मध्यपदमारभ्य गणने तार्तीये । गुहेशाच्युते स्कन्दे शङ्करनारायणे च तुर्ये चतुर्थे । सुम्भजिति षष्ठे पदे । शार्ङ्गीश्वरे अष्टमे वा । पूर्वं चतुर्थे प्रोक्तत्वाद् विकल्पः । शास्तरि द्रुहिणांशमध्यपदतः षोडशे दैविकांद्यपदादष्टमे । तथा गणपतौ द्रुहिणांशमध्यपदत एकोत्तरे विंशे दैविकान्त्यपदे प्रतिष्ठितिपदं प्रोक्तम् ॥ ८ ॥

एवं पृष्ठतो नीत्वात्र सीम्नि उदङ्मुखं दक्षिणोत्तराग्रं सूत्रं कृत्वा तदनन्तरं सर्वेषु देवेषु मध्यात् एतत्सूत्रस्य मध्यात् द्वारविस्तारतः द्वारस्य विस्ताराद् उत्कृत्याढ्यशतांशकम् उत्कृतिः षड्विंशतिः तदधिकशतांशं कृत्वा तदेकांशप्रमाणेनोदीचि च प्रतिगमय्य ऐन्द्राग्रगं प्राक्प्रत्यगग्रं सूत्रं च कृत्वा इदम् उक्तमेतदुद्गमनमीशहरीशयोः पुनरर्चांशतो वा कृत्वा अखिले सर्वदेवेषु सन्धितः तयोः सूत्रयोः सन्धेरर्चोद्भवं यवं यवयुगं वा प्रतिमाङ्गुलादष्टांशं चतुर्थांशं वा ऐश्यां दिशि च गमयेत् । अत्र विष्णुसंहितायां —

"सप्तसप्तविभागेन गर्भागारे विभाजिते ।
ब्रह्मदेवमनुष्याणां पिशाचानां पदानि च ॥
मध्यादारभ्य यत्नेन क्रमाज्ज्ञेयानि सर्वतः ।
ब्राह्मं पञ्चदशांशं स्याद् दैवे भागास्त्रयोदश ॥

एकादशनवांशाश्च शिष्टयोः प्रविभागतः ।
गमनं त्रिविधं प्रोक्तं पृष्ठसौम्येशभेदतः ॥

कल्पनीयं यथान्यायं द्रव्यसंस्थानयोगतः ।
स्थितासीनशयानानां स्थानानि परिकल्पयेत् ॥

ब्रह्मांशे मध्यमं त्यक्त्वा द्वितीयं चापि पृष्ठतः ।
स्थितैकवीरबिम्बस्य तृतीयं स्थानमिष्यते ॥

त्रिभक्ते द्वारविस्तारे त्रिसप्तांशेषु मध्यमे ।
मध्यार्धेनोत्तरं सूत्रं गमनार्थं तु कल्पयेत् ॥

पश्चिमोत्तरसंयोगे कर्णसूत्रं प्रकल्प्य तु ।
बिम्बाङ्गुलीयवेनैशे गमयेद् द्वियवेन वा ॥"

इति । तथा मञ्जर्यां च —

"पञ्चाशत्पदमेकहीनमभितः कृत्वा च गर्भालये
ब्राह्मं दैविकमानुषै च परितः पैशाचमन्त्यावृति ।
ब्राह्मं पञ्चदशांशकं बहिरतो द्वे द्वे विहीनं क्रमा-
देवं पश्चिमदिक्स्थितं च गमनं वक्ष्ये च सौम्याश्रितम् ॥

एकविंशतिविभागविभक्तं द्वारमत्र विनिधाय च मध्यम् ।
अग्निभक्तमभिकल्प्य च तेषां सोमसंस्थितपदद्वयमध्ये ॥

एकोनपञ्चदशकानि पदानि लिङ्ग-
विष्कम्भमाननिहितानि विधाय सम्यक् ।
तन्मध्यसंस्थमथ पञ्चकृतिप्रभिन्नं-
भागान् प्रकल्प्य चतुरो य(माङ्गां?मगां)स्त्यजेद् वा ॥

लिङ्गस्य पञ्चकृतिभिः परिणाहतोऽर्धे-[3]
भागैर्विभज्य यमदिक्स्थगतं त्यजेद् वा ।
एकोनपञ्चदशभिः प्रविभज्य युक्तै-
र्भागैश्च पीठमथ मध्यगतं त्यजेद् वा ॥

---

१. 'न्नं', २. 'तु' घ. ङ. च. पाठः. ३. 'र्ध्वे' ङ. पाठः.

**ब्राह्मे कौतुकमामरे न्यसतु मूलार्चां स्थितामासिता-**
**मीषन्मानुषसंयुते समनृदेवांशे शयानामपि ।**
**गर्भे षोडशवर्गभेदिनि पदैर्ब्राह्मं चतुर्वर्गकै-**
**स्त्रिद्व्येकोन्मितपङ्क्तिभिः सुरनृपैशाचान् प्रकुर्वीत वा ॥**

---

एवञ्च नीत्वा गमनं च सूत्रसङ्गात् ततोऽत्रापि यवद्वयं च ।
नीत्वा प्रतिष्ठां विदधीत चैशे भागे प्रवक्ष्याम्यथ पश्चिमेऽपि ॥
मध्ये महालिङ्गमथाल्पलिङ्गं नारायणः शङ्करकेशवौ च ।
तत्रैव षड्वक्त्रनिवासभूमिः स्याद् वासुदेवो भगिनी च पश्चात् ॥
सुखासनं सप्तपदे विदध्यादतोऽष्टमे वा हरवासुदेवौ ।
ततः परस्मिन् मणिलिङ्गधाम व्यासस्तथैकादशरुद्रभूमिः ॥
सूर्यस्तथाग्निर्भिषजौ वसूनां गणश्च शास्ता प्रहराणि भूयः ।
अष्टादशे मातृनिवासभूमिस्ततः परस्मादथवायुधानि ॥
स्याद् वाहनं सूकरवामनौ च लक्ष्मीश्च तत्रैव वसुन्धरा च ।
अनन्तमूर्तिप्रहराणि पञ्च पश्चादनन्तासनवाहनानि ॥
विघ्नेश्वराश्चाथ गणेश्वरांश्च मार्ताण्डचन्द्रौ मुनयः प्रदिष्टाः ।
पैशाचभागे तु ततोऽनवेक्ष्य प्रायः प्रतिष्ठात्र यतो न शस्ता ॥"

इति । क्रियासारे शङ्करनारायणे उत्तरगमनविधौ —

"बिम्बमध्यमवृत्तस्य चतुर्विंशतिभागतः ।
नीत्वोत्तरे यवं तस्मादीशे नीत्वा यथाविधि ॥"

इति ॥ ९ ॥

बहुबेरे स्थाननियममाह — **ब्राह्म** इति । ब्राह्मेंऽशे कौतुकं कर्मार्चां न्यसतु । आमरे दैविकमध्ये स्थितां तिष्ठन्तीं मूलार्चां च, ईषन्मानुषसंयुते किञ्चिन्मानुषांशयुक्ते दैविके आसितामुपविष्टां च, समनृदेवांशे दैविकं मानुषं च सममाश्रिते स्थाने शयानामपि मूलार्चां न्यसतु । ब्राह्मादिपदकल्पनायां विकल्पमाह — गर्भ इति । गर्भे गर्भगृहे षोडशवर्गभेदिनि आयामविस्ताराभ्यां षोडशपुटे सति मध्ये चतुर्वर्गैः षोडशभिः पदैः ब्राह्मं स्थानं प्रकुर्वीत । त्रिद्व्येकोन्मितपङ्क्तिभिः ब्रह्मस्थानाद् बहिः पुटत्रयेण पुटद्वयेन पुटैकेन च

---

१. 'णा' घ. च. पाठः.

**ब्राह्मे षोडशमंशकं स्वपुरतो मध्याद् दलाढ्यैककं**
**वामे चाप्यपहाय वह्निभुवि बिम्बं स्थापयेत् स्थास्नुकम् ।**
**एवं मानुषमध्यतोऽथ गमयित्वा पृष्ठतो वामत-**
**श्चांशे स्थापयतु स्वमूलमनुबिम्बं बाहुबेरे विधौ ॥ ११ ॥**

क्रमात् सुरनृपैशाचान् दैविकमानुषपैशाचानावरणभागान् प्रकुर्वीत वा तथा विष्णुसंहितायां —

"किञ्चिन्मानुषमाश्रित्य कुर्यादासनकर्म च ।
दैवमानुषभागाभ्यां कुर्याच्च शयनं बुधः ॥
अर्चनापीठिका ब्राह्मे स्थापना दैविके यदा ।
मानुषेऽस्य परीवाराः पैशाचे त्वायुधानि च ॥"

इति । तत्र किञ्चिन्मानुषमाश्रित्येत्येतस्यायमर्थः —नालं चतुर्धा विभज्यांशत्रये दैविके एकं मानुष इति । तत्र बहुवीरदैविके स्थापना स्थिता प्रतिमा विहिता इति च ॥ १० ॥

षोडशमंशकमित्यस्यायमभिप्रायः — षोडशांशीकृतस्य ब्रह्मभागस्य मध्यसूत्रात् पृष्ठगतं पदं त्र्यंशीकृत्य तमेकमंशं वा अर्धसहितं द्व्यंशं वा पृष्ठतो गमयेत् । तन्मानं तदर्धं वा वामतश्च नयेदिति । वह्निभुवि बाहुबेरे विधौ ब्राह्मे उक्तैकोनपञ्चाशत्कोष्ठैः कल्पितमध्ये[1] पदे षोडशमंशकं ब्रह्मभागस्य षोडशांशं मध्यात् स्वपुरतः अपहायातिक्रम्य दलाढ्यैककम् अर्धाधिकैकभागं वामे भागे चाप्यपहाय स्थास्नुकं निश्चलं यागबिम्बं वा स्थापयेत् । अथ मानुषमध्यतश्च एवमुक्तप्रकारेण पृष्ठतो वामतश्च गमयित्वा परस्मिन् अंशे स्वमूलमनुबिम्बं स्थापयतु । तथाच स्कन्दसद्भावे—

"पदान्येकोनपञ्चाशत् कल्पयित्वा विचक्षण ! ।
पदमेकं भवेद् ब्राह्मम् "

इत्यादि । पुनः—

"ब्राह्मं षोडशधा कृत्वा भागं सूत्रेण साधकः ।
तत्रत्र्यंशं वा तदर्धं वा मध्यात् प्रागुत्तरक्रमात् ॥
प्राङ्मुखे तु भवेदेवं पश्चिमे दक्षिणात् परम् ।
तन्मध्ये स्थापयेद् बिम्बं तैजसं शैलजं तु वा ॥

1. 'ध्य' ङ. पाठः.

**बहुबेरविधानमूलबिम्बं सुसमं द्वारसमुच्छ्रयेण कार्यम् ।**
**चरणांशविवृद्धमर्धवृद्धं चरणोनद्विगुणं द्विसंगुणं च ॥ १२ ॥**

---

मणिजं रत्नजं वापि इतरन्न कदाचन ।
मृन्मयं दारुजं चापि मानुषेऽप्येवमेव तु ॥
एकवीरासनं ब्राह्मे पश्चिमार्धे तु कल्पयेत् ।
एतदेवार्चनापीठं बहुबेरासने भवेत् ॥
बहुवीरासनं तद्वन्मानुषार्धे तु पश्चिमे ।"

इति । स्कन्दसंहितायां च —

"ब्राह्मं षोडशधा भङ्क्त्वा भागमेकं पुनस्त्रिधा ।
तद्भागगमनं प्राच्यां तदर्धं तत् तथोत्तरे ॥
प्राङ्मुखे तु भवेदेवं पश्चिमे दक्षिणात् परम् ।"

इत्यादि । नन्दिप्रोक्ते स्कान्दे च —

"ब्राह्मं षोडशधा भङ्क्त्वा नवमं विभजेत् त्रिधा
स्थितैकवीरबिम्बस्य तृतीयं स्थानमिष्यते ॥
तन्मानेन तदर्धेन सौम्ये चैशे यमेऽसुरे ।"

इति ॥ ११ ॥

तत्रैव वह्निभुवि बहुबेरप्रतिमाप्रमाणमाह — बहुबेरेति । बहुबेरविधानमूलबिम्बं द्वारसमुच्छ्रयेण द्वारोन्नत्या सुसमं कार्यम् । चरणांशविवृद्ध तच्चतुर्थांशयुक्तं द्वारोत्सेधं च, अर्धवृद्धम् अर्धेन सहितं द्वारोत्सेधं च, चरणोनद्विगुणं त्रिभागेन सहितं द्वारोत्सेधं, द्विसंगुणं द्विवृद्धं द्वारोत्सेधं च । तथा स्कन्दसंहितायाम् —

"एकवीरे भवेदेवं बहुवीरे त्वथोच्यते ।
अध्यर्धं पादहीनं वा द्विगुणं चोत्तमत्रयम् ॥
पादाधिकं पादमानं मध्यमं कन्यसं क्रमात् ।
दारुमृन्मयजान् नित्यं द्वारमानेन मानयेत ॥"

इति ॥ १२ ॥

---

1. 'स्क' ख. ङ. पाठः. 'परिमा' ख. पाठः.

पात्राणि वापविहितानि पृथग् द्विषड् वा
स्युः पालिकाश्च घटिकाश्च शरावकाश्च ।
तत्त्वाष्टिभानुभिरिह प्रमिताङ्गुलैस्त-
दुत्सेधक्लृप्तिरथवाष्टिचतुर्दशार्कैः ॥ १३ ॥

तत्त्वांशकोनमुदितोच्छ्रयमत्र कृत्वा
षोढा द्वयेन वदने क्रमशः परांशैः ।
तत्पीठदण्डगलसन्धिगलेषु कुर्याद्
दैर्घ्यं पुरोविरहितेन च पीठसन्धौ ॥ १४ ॥

अङ्घ्र्यूनमंशमधिपीठमिहाधिदण्डं
चैके समुच्छ्रयमुशन्त्यपरेऽर्धवृद्धम् ।

---

तृतीयपटले प्रस्तुतान् कर्मशेषानाह — **पात्राणीति** । वापविहितानि बीजवापार्थं विहितानि पात्राणि पृथक् प्रत्येकं द्विषट् द्वादश वा स्युः । 'तेषु विनिदध्यात् पालिकाः षोडशे'त्युक्तेन ग्रन्थेनायं विकल्पः । तानि क्रमेणाह — पालिकाश्च घटिकाश्च शरावकाश्चेति । संज्ञासंस्थानभेदाभ्यां योगात् त्रिविधानि तानीत्यर्थः । तत्त्वाष्टिभानुभिः चतुर्विंशतिषोडशद्वादशभिरङ्गुलैस्तदुत्सेधक्लृप्तिः तेषां पात्राणामुत्सेधस्थितिः । अथवा अष्टिचतुर्दशार्कैः क्रमेण षोडशचतुर्दशद्वादशभिर्वा तदुत्सेधक्लृप्तिः स्यात् ॥ १३ ॥

अथ श्लोकत्रयेण पालिकालक्षणमाह — **तत्त्वांशकोनमिति** । अत्र एषु पात्रेषु मध्ये । मङ्गलपालिकाया इति जातावेकवचनम् । मङ्गलभूतानां पालिकानाम् उदितोच्छ्रयम् उक्तमुत्सेधं तत्त्वांशकोनं चतुर्विंशांशोनं कृत्वा शेषं षोढा कृत्वा द्वयेन द्व्यंशेन वदने दैर्घ्यं कुर्यात् । परांशैः परैश्चतुर्भिरंशैः क्रमशः तत्पीठदण्डगलसन्धिगलेषु तासां पालिकानां पीठे दण्डे गलसन्धौ गले च दैर्घ्यं कुर्यात्, पुरोविरहितेन पूर्वं त्यक्तेन चतुर्विंशांशेन पीठसन्धौ च ॥ १४ ॥

एके बुधाः इह उक्ते दैर्घ्ये अधिपीठं पीठे अधिदण्डं दण्डे चोक्तषडंशाद् अङ्घ्र्यूनमंशं समुच्छ्रयं दैर्घ्यं कार्यमुशन्ति इच्छन्ति । अपरे बुधाः पीठं अर्धवृद्धम् अर्धेनाधिकम्, अपरत्र दण्डे अङ्घ्रिहीनम् उक्तादंशाद् अङ्घ्रिहीनं

पीठेऽङ्घ्रिहीनमपरत्र च शिष्टयुक्त्या
सन्धिं गलांशगतमास्यबिलं च कार्यम् ॥ १५ ॥

दण्डे स्वदैर्घ्यसुसमं द्विगुणं स्वदैर्घ्याद्
व्यासं परेषु वियुगांशमधः शिरोधेः ।
तत्पीठिकावितितिखण्डमितं च पीठ-
सन्धौ प्रकल्पयतु मङ्गलपालिकायाः ॥ १६ ॥

ऊर्ध्वार्धक्लृप्तपृथुवुध्नघटोत्तराङ्गे
दिक्षूर्ध्वतश्च घटिका घटितेषुवक्त्रैः ।
वर्णाङ्गुलप्रततिभिः सगलैरधोर्धे
तत्पालिकावदुदिताङ्घ्रिससन्धिदण्डा ॥ १७ ॥

अब्ध्यङ्गुलात् समधिके सति पालिकायाः
पीठोच्छ्रये तु घटिकाघटिताङ्घ्रिदण्डौ ।

---

च समुच्छ्रयमुशन्ति । शिष्टयुक्त्या शिष्टयोगेन सन्धिं पीठसन्धिं गलसन्धिं चेच्छन्ति । गलांशगतं गलांशेऽप्यधिगतम् आस्यबिलं मुखविवरं च कार्यम् । गलांशपर्यन्तमास्यबिलं च कार्यमिति वार्थः ॥ १५ ॥

दण्डे स्वदैर्घ्यसुसमं स्वदैर्घ्येण तुल्यं व्यासं प्रकल्पयतु । परेष्ववयवेषु स्वदैर्घ्यात् स्वस्वदैर्घ्याद् द्विगुणं, शिरोधेः (अधः) गलस्याधोभागे वियुगांशं गलाद् विगतचतुर्थांशं, पीठसन्धौ तत्पीठिकावितितिखण्डमितं तस्याः पीठिकायाः विस्तृतेरर्धमितं च प्रकल्पयतु ॥ १६ ॥

घटिकालक्षणमाह—ऊर्ध्वार्धेति । ऊर्ध्वार्धक्लृप्तपृथुवुध्नघटोत्तराङ्गे ऊर्ध्वार्धेन क्लृप्तो महदन्तर्भागयुतो घटो यथा भवति तथाभूतोर्ध्वप्रदेशे चतुर्षु दिक्षूर्ध्वतश्च वर्णाङ्गुलप्रततिभिः चतुरङ्गुलविस्तारैः सगलैः गलसहितैः इषुवक्त्रैः पञ्चभिर्मुखैः घटिता बद्धा घटिका स्यात् । अधोर्धे तत्पालिकावदङ्घ्रिससन्धिदण्डा अङ्घ्रिः पीठं पीठसन्धिसहितो दण्डश्च पालिकावदुदितेत्यर्थः ॥१७॥

पालिकायाः पीठोच्छ्रये अब्ध्यङ्गुलात् चतुरङ्गुलात् समधिके सति तत्र तु घटिकाघटिताङ्घ्रिदण्डौ घटिकायां योजितौ पीठदण्डौ त्रिव्यङ्गुलोच्छ्र-

---

१. 'ले' क. पाठः. २. 'द् उक्तपालिकावदङ्घ्रि' घ. च. पाठः.

त्रिद्व्यङ्गुलोच्छ्रयनिजोच्चसमप्रतानौ
स्यातामिनाङ्गुलमितः सकलोच्छ्रयो वा ॥ १८ ॥
व्यासेन दैर्घ्यसुसमं दहनांशहीनं
वास्ये ततो हुतवहांशततं च पीठे ।
कुर्याच्छरावमपकन्धरपालिकाव-
दूर्ध्वार्धमस्य घटिकावदथाधरार्धम् ॥ १९ ॥
पीठाग्रकार्श्यपरिशेषितमूलकार्श्य-
वृत्तिक्रियादिरचना सकलेषु कार्या ।
स्युस्तानि लोहरचितान्यथ मार्त्तिकानि
पात्राणि विष्णुविधिधूर्जटिदैवतानि ॥ २० ॥
क्षेत्रे षट्कृतिकोष्ठके पदचतुष्केऽन्तर्गते पालिका
न्यस्येद् द्वादश दिग्द्विकेष्वपि बहिः कोणत्रिकोष्ठेष्वथ ।

---

यनिजोच्चसमप्रतानौ क्रमात् त्रिद्व्यङ्गुलाभ्यामुच्चौ निजोच्चसमविस्तारौ च स्याताम् । घटिकायाः सकलोच्छ्रयः इनाङ्गुलमितः द्वादशाङ्गुलप्रमितो वा स्यात् ॥ १८ ॥

शरावलक्षणमाह—व्यासेनेति । शरावम् आस्ये मुखे व्यासेन विस्तारेण दैर्घ्यसुसमं दहनांशहीनं त्र्यंशहीनं वा कुर्यात् । पीठे ततो मुखविस्तारात् हुतवहांशततं त्र्यंशविस्तारं च । अस्य शरावस्योर्ध्वार्धम् अपकन्धरपालिकावत् अपगतगलपालिकावत्, अथास्याधरार्धं घटिकावच्च कुर्यात् ॥ १९ ॥

सकलेषु पालिकाघटिकाशरावेषु पीठाग्रकार्श्यपरिशेषितमूलकार्श्यवृत्तिक्रियादिरचना पीठे क्रमेणाग्रकृशता परिशेषितेषु दण्डादिषु मूलस्य कृशता च वृत्तीकरणं रेखाविशेषादीनां रचना च कार्या । तानि पात्राणि लोहरचितानि लोहानामन्यतमेन रचितानि, अथवा मार्त्तिकानि मृदा निर्मितानि स्युः । विष्णुविधिधूर्जटिदैवतानि पालिकादयः क्रमेण विष्णुब्रह्मरुद्रदेवत्यानि च स्युः ॥

बीजवापकाले तेषां स्थापने नियममाह—क्षेत्र इति । षट्कृतिकोष्ठके आयामतो विस्तार(त)श्च षट्पुटवशात् षट्त्रिंशत्पदे क्षेत्रे अन्तर्गते पदचतुष्के चतस्रः, बहिर्दिग्द्वि(दे?)केषु द्वादश शरावांश्च(?) । अथवा पालिकादि-

---

१. 'यश्च ॥' ख. पाठः. २. 'प' ख. घ. पाठः. ३. 'दे' इति व्याख्याकोशपाठः. ४. 'शात्षट्पदे' ख. पाठः.

अग्न्याद्यं[1] घटिकाः परेष्वपि शरावान् पालिकादित्रयं
प्राक्प्रत्यङ्मुखवीथिकाविनिमयाद् वा वह्निकोष्ठादितः ॥
तोरणानि युगहस्तमितानि क्ष्मोर्ध्वमर्धविवृतानि भवन्ति ।
केतवः सुरगृहोत्तरदीर्घाः स्वोक्तवर्णसुविचित्रपताकाः ॥
प्रागग्रं सूत्रमुर्व्यामृजुतरमभिकल्प्यास्य मूलाग्रगाभ्यां
सूत्राभ्यां मत्स्ययुग्मं यमशशिहरितोः कल्पयित्वात्र सूत्रम्

---

त्रयं पालिकाघटिकाशरावान् प्राक्प्रत्यङ्मुखवीथिकाविनिमयात् प्राङ्मुखानां प्रत्यङ्मुखानां षण्णां पङ्क्तीनां व्यत्यासेन वह्निकोष्ठादितः वह्निकोष्ठमारभ्य दक्षिणवीथ्यां, पश्चिमत आरभ्य तदुत्तरवीथ्यां च द्वादश पालिकाः न्यसेत् । तदुत्तरतः पूर्वादारभ्य पश्चिमत आरभ्य च वीथिद्वये घटिकाश्च, तथैव च तदुत्तरतो वीथिद्वये शरावांश्च न्यस्येत् ॥ २१ ॥

चतुर्थपटलगतान् कर्मशेषान् वदन् तोरणादीनां प्रमाणमाह — तोरणानीति । तोरणानि क्ष्मोर्ध्वं भूमेरुपरि युगहस्तमितानि चतुर्हस्तप्रमितानि अर्धविवृतानि आयामादर्धेन द्विकरेण विस्तृतानि च भवन्ति । केतवः ध्वजाः सुरगृहोत्तरदीर्घाः प्रासादोत्तरदैर्घ्यसमानदीर्घाः स्वोक्तवर्णसुविचित्रपताकाः स्वस्वदिक्षूक्तेन वर्णेनारुण्यादिना सुतरां विचित्राभिः पताकाभिश्च युक्ताः ।

"अरुणोऽग्निनिभः कृष्णश्वे[2]तः पीतस्तथा सित[3]: ।
श्वेतोऽन्यो बहुवर्णश्च कुमुदादिध्वजाः क्रमात् ॥"

इत्यादयः स्वागमेषूक्ता वर्णाः ॥ २२ ॥

पञ्चमपटलगतान् कर्मशेषान् वदन् कुण्डमण्डलादीनां निर्माणार्थं चतुरश्रसाधनक्लृप्तिमाह — प्रागग्रमिति । क्षेत्रक्लृप्तौ क्षेत्रकल्पनायां पुरः पूर्वम् उर्व्यां भूमौ ऋजुतरं यथा भवति तथा प्रागग्रं प्रत्यक्प्रागायतं सूत्रम् अभिकल्प्य आस्फाल्य अस्य सूत्रस्य मूलाग्रगाभ्यां मूलादग्राच्च गताभ्यां परस्परं समाभ्यां सूत्राभ्यां वृत्तीकरणेन यमशशिहरितोः दक्षिणोत्तरदिशोः मत्स्ययुग्मं कल्पयित्वा

---

१. 'द्या' घ. पाठः. २. 'श्वे' ख., 'श्वे' घ. पाठः. ३. 'चि' ङ. पाठः
४. 'स्वसूक्ता' ख. पाठः.

**कृत्वा दिक्ष्वङ्कयित्वा सममिह विहितैस्सूत्रकैः कोणम-**
**[त्स्यान्**
**कृत्वास्फाल्यैषु सूत्रं रचयतु चतुरश्रं पुरः क्षेत्रक्लृप्तौ ॥**
**दोर्मात्रं परिसूत्र्य तत्र चतुरश्रं क्षेत्रमर्काङ्गुलं**
**खात्वा तद्द्विगुणं तु वावटतटे तन्मेखलाः कल्पयेत् ।**
**मार्ताण्डाहियुगाङ्गुलोच्छ्रयमिताः श्रुत्यङ्गुलव्यासिनी-**
**स्तिस्रोऽन्तःक्रमतो निजावटनिभाद्याऽध्यश्ररूपे परे ॥ २४ ॥**

अत्र मत्स्यमध्ये दक्षिणोत्तरं सूत्रं कृत्वा चतसृषु दिक्षु समप्रमाणम् अङ्कयित्वा चिह्नं कृत्वा इह अङ्के विहितैः निक्षिप्तैर्मध्यपर्यन्तैः सूत्रैः कोणमत्स्यान् चतुर्षु कोणेषु मत्स्यान् कृत्वा एषु मत्स्येषु सूत्राण्यास्फाल्य चतुरश्रं कल्पयतु चतुष्पदोपेतं चतुरश्रं कुर्यात्[३] ॥ २३ ॥

तत्र सामान्यतः प्राप्तं चतुरश्ररूपं कुण्डमाह — **दोर्मात्रमिति** । अत्र कुण्डस्रुक्स्रुवमण्डलादिकरणे पूर्वोक्तपालिकादिकरणे च मात्राङ्गुलं प्रमाणं स्यात् । तथाच रत्नावल्याम् — "अङ्गुलप्रमाणं त्रिविधं मानाङ्गुलं मात्राङ्गुलं देहलब्धाङ्गुलमिति । वातायनपथं गत्वा ये रविरश्मयो भान्ति, तत्र सूक्ष्मं विसर्पन्तो रेणवः । ताभिरष्टाभिः केशम् । एवं लिक्षं यूकं यवमिति क्रमशोऽष्टगुणैर्वृद्धं मानाङ्गुलं भवेत् । यजमानस्याचार्यस्य वा मध्यमाङ्गुलिमध्यपर्वायामो मात्राङ्गुलं स्मृतम् । प्रतिमायामं तालगु[४]णितं दशधा विभज्य एकं भागं द्वादशधा कृत्वा एकं देहलब्धाङ्गुलम् । तत्र प्रासादमण्डपादीन् मानाङ्गुलेन गणयेत् । यागोपकरणानि मात्राङ्गुलेन । देहलब्धप्रमाणेन प्रतिमामिति" इति । अत्र कुण्डादीनां यागोपकरणत्वादत्र मात्राङ्गुलं प्रशस्तम् । तच्चतुर्विंशत्यङ्गुलमिह दोर्मात्रं विवक्षितम् । दोर्मात्रं करमितं चतुरश्रं क्षेत्रं परिसूत्र्य परितः सूत्रपातैः सम्पाद्य अर्काङ्गुलं द्वादशाङ्गुलं तद्द्विगुणं तु वा निम्नतायुक्तं खात्वा अवटतटे गर्तप्रान्ते एकामङ्गुलिं त्यक्त्वा वान्यथा वा तिस्रः तन्मेखलाः, तस्यावटस्य मेखलारूपाः संस्थानविशेषाः, कल्पयते । तास्त्व[५]न्तःक्रमतः अन्तरारभ्य क्रमेण मार्ताण्डाहियुगाङ्गुलोच्छ्रयमिताः द्वादशाष्टचतुस्संख्यैरङ्गुलैर्मितोत्सेधयुक्ताः श्रुत्यङ्गुलव्यासिनीः चतुरङ्गुलविस्तारयुक्ताः । तास्वाद्या अन्तर्गता निजावटनिभा चतु-

१. 'नि' क. पाठः. २. 'यु' इति मूलकोशपाठः. ३. 'त् । क्षेत्रं कुर्यात् ॥ त' ख. ङ. च. पाठः. ४. 'गु', ५. 'स्व' ङ. पाठः.

**योनिं पश्चिममेखलोपरि मितामर्काङ्गुलैरुच्छ्रया-**
**यत्योः सार्धयुगाङ्गुलैरपि तदूनैस्तैश्च विस्तारतः।**
**आम्नायाङ्गुलनालकां सशुषिरां स्वाख्यानयोग्याकृतिं**
**कुर्यात् कुण्डनतां स्वमूलपरिवृत्त्यग्रप्रक्लृप्त्यादिना॥ २५॥**

---

रश्रभगाकारधनुर्वक्रादिकुण्डेषु यादृशोऽवटः तादृशी भवेत्। परे मध्यमा बाह्या च अब्ध्यश्ररूपे चतुरश्रसंस्थाने च भवेताम्॥ २४॥

कुण्डानां योनिलक्षणमाह — योनिमिति। पश्चिममेखलोपरि पश्चिमदिग्भवानां मेखलानामुपरि उच्छ्रूयायत्योः उत्सेधे दैर्घ्ये च अर्काङ्गुलैः द्वादशाङ्गुलैर्मितां, विस्तारतः सार्धयुगाङ्गुलैः अर्धसहितयुगाङ्गुलैः। अर्काङ्गुलार्धं षडङ्गुलं, युगाङ्गुलं चतुरङ्गुलं, तैः दशाङ्गुलैरित्यर्थः। तदूनैः तस्मात् क्रमेणोनैः तैः सार्धयुगाङ्गुलैः। तत्राप्यर्धशब्देन षडङ्गुलमुच्यते। युगशब्देन चतुरङ्गुलं द्व्यङ्गुलं च। मध्ये दशाङ्गुलैः पुनः क्रमात् षडङ्गुलैश्चतुरङ्गुलैरग्रे द्व्यङ्गुलाभ्यां च मितां योनिं कुर्यात्। तथाच मञ्जर्याम् —

"तालायता जलपतेर्दिशि संस्थिता स्यादश्वत्थपत्रसदृशा क्रमशोऽथ निम्ना।
नाभिर्दशाङ्गुलषडङ्गुलतः क्रमेण विस्तारतश्च चतुरङ्गुलगोलकाग्रा॥"

इति। अथवा उच्छ्रूयायत्योः सार्धयुगाङ्गुलैरर्काङ्गुलैर्मिताम्। तत्पक्षे सार्धयुगाङ्गुलैरित्यस्यार्धसहितयुगाङ्गुलैस्त्र्यङ्गुलैरित्यर्थो भवति। ततः त्र्यङ्गुलसहितद्वादशाङ्गुलैः पञ्चदशाङ्गुलैरित्यर्थः। तत्र विस्तारतस्तदूनैः। अत्र तच्छब्देन युगाङ्गुलमेव गृह्यते। युग्माङ्गुलोनैः तैः दशाङ्गुलैरित्यर्थः। तैरिति द्वादशाङ्गुलैरिति चार्थः। तथाच प्रपञ्चसारे —

"उत्सेधायामकाभ्यां प्रकृतिविकृतिसंज्ञाङ्गुलाष्टाङ्गुला स्याद्
विस्तृत्या द्वादशार्धाङ्गुलमितनमिताग्रा प्रविष्टेव कुण्डे।"

इति। तथाच आम्नायाङ्गुलनालकां चतुरङ्गुलमितनालयुक्तां, सशुषिराम् अधोभागे परिस्तरणादिसिद्ध्यर्थं सुषिरेण युक्तां, स्वमूलपरिवृत्त्यग्रप्रक्लृप्त्यादिना स्वस्या योनेर्मूलप्रदेशस्य परिवर्तनेनाग्रक्लृप्त्यादिसंस्थानविशेषेण च स्वाख्यानयोग्याकृतिं स्वस्या योनेराख्यानस्य नाम्नः सदृशाकारयुक्तां, कुण्डनतां कुण्डे क्रमेणानतां च योनिं कुर्यात्॥ २५॥

क्षेत्रेऽत्राङ्घ्रिपुटे प्रतीच्यपुटयोः कर्णार्धसूत्रं निजं
संस्थाप्याप्पतिसन्धितः सुपरिवर्त्यार्कीन्दुसन्ध्यन्तिमम् ।
ताभ्यां सूत्रयुगं प्रसार्य हरिदिग्बाह्याहितेष्वंशत-
श्चिह्नेऽन्योन्यमिदं सुयोज्य शिखिकुण्डं योनिरूपं खनेत् ॥

क्षेत्रं विभज्य नवधोदगवाक् च भागौ
त्यक्त्वाचलांशकमितं परिवर्त्य सूत्रम् ।
प्रागादिकाप्यककुबन्तमुदग्भुजां च
तावत् प्रसार्य रचयेच्छशिखण्डकुण्डम् ॥ २७ ॥

षष्ठांशकं यमहिमांशुदिशोः प्रतीच्य-
सूत्रे सुयोज्य हरिदिग्बहिरङ्कयित्वा ।

---

योनिरूपकुण्डलक्षणमाह — क्षेत्र इति । अत्र चतुरश्ररूपे अङ्घ्रिपुटे चतुष्पदे क्षेत्रे प्रतीच्यपुटयोः पश्चिमदिग्गतयोः पदयोर्निजं कर्णार्धसूत्रं तयोरेव निजं निजं कर्णार्धं सूत्रं मध्ये संस्थाप्य अप्पतिसन्धितः पश्चिमसन्धेरारभ्य आर्कीन्दुसन्ध्यन्तिमम् आर्किर्यमः इन्दुः सोमः तयोः सन्ध्यन्तिमं दक्षिणपदमध्ये स्थापितं सूत्रं वारुणसन्धेरारभ्य याम्यसन्ध्यन्तिमम्, उत्तरपदे स्थापितं सूत्रं वारुणसन्धेरारभ्य सौम्यसन्ध्यन्तिमं च परिवर्त्य . ताभ्याम् (अर्के[1]आर्की)न्दुसन्धिभ्यां सूत्रयुगं प्रसार्य हरिदिग्बाह्याहितेष्वंशतः इन्द्रदिक्सूत्रबाह्ये स्वदैर्घ्यपञ्चांशेन कृते चिह्ने इदं सूत्रद्वयम् (अन्योन्यं) सुयोज्य योनिरूपं योन्याकारं शिखिकुण्डं खनेत् ॥ २६ ॥

अर्धचन्द्राकारकुण्डलक्षणमाह — क्षेत्रमिति । दक्षिणोत्तरदैर्घ्ये क्षेत्रं नवधा विभज्योदगवाक् च भागौ उत्तरगतं दक्षिणगतं च भागं त्यक्त्वा अचलांशकमितं सप्तांशकमितं सूत्रं प्रागादिकाप्यककुबन्तं प्रागादिपश्चिमदिग्भागान्तं परिवर्त्य उदग्भुजां चोदग्गतं भुजासूत्रं च तावत् प्रसार्य शशिखण्डकुण्डं रचयेत् ॥ २७ ॥

त्रिकोणकुण्डलक्षणमाह — षष्ठांशकमिति । चतुरश्रे चतुष्पदे क्षेत्रे प्रतीच्यसूत्रे पश्चिमसूत्रे यमहिमांशुदिशोः दक्षिणोत्तरदिशोः षष्ठांशकं क्षेत्रस्य षड्भागं सुयोज्याङ्कयित्वा हरिदिग्बहिः इन्द्रदिग्बाह्ये च तेनैव षड्भागेनाङ्क-

---

१. 'र्थि', २. 'हु' क. पाठः.

तेनैव तेषु सुविधाय च सूत्रपातं
कुर्यात् त्रिकोणपरिमण्डितवह्निकुण्डम् ॥ २८ ॥

कर्णार्धसूत्रस्य भुजार्धतोऽतिरिक्तांशकार्धं बहिरर्पयित्वा।
मध्यस्थसूत्रं परिवर्त्य कुण्डं कुर्वीत चण्डद्युतिमण्डलाभम्।

अङ्कौ प्रकल्प्य हरिपञ्चमदिक्पदिक्स्थौ
षष्ठांशतो बहिरतो निजमध्यतश्च।
द्वौ द्वौ झषौ परदिशोरपि मत्स्यचिह्न-
षट्सूत्रकैर्विरचयेद् रसकोणकुण्डम् ॥ ३० ॥

क्षेत्रं प्रकल्प्य फणिभागयुतं समन्तात्
तद्बाहुसूत्रदलतोऽथ परिभ्रमय्य।

---

त्विा तेषु चाङ्केषु सूत्रपातं सुविधाय त्रिकोणपरिमण्डितवह्निकुण्डं त्रिभिः कोणैरलङ्कृतं वह्निकुण्डं कुर्यात् ॥ २८ ॥

वृत्तकुण्डलक्षणमाह—कर्णार्धेति। चतुरश्रे चतुष्पदे क्षेत्रे कर्णार्धसूत्रस्य कर्णसूत्रार्धस्य भुजार्धतः भुजासूत्रस्यार्धाद् अतिरिक्तः अधिको योऽश तस्यार्धं दिक्सूत्राद् बहिरर्पयित्वा योजयित्वा मध्यस्थसूत्रं क्षेत्रस्य मध्यसन्धिस्थं सूत्रं परिवर्त्य चण्डद्युतिमण्डलाभम् आदित्यमण्डलाकारं वृत्तकुण्डं कुर्वीत ॥२९॥

षट्कोणकुण्डलक्षणमाह—अङ्काविति। चतुरश्रे चतुष्पदे क्षेत्रे क्षेत्रस्य षष्ठांशतः हरिपञ्चमदिक्पदिक्स्थौ हरिरिन्द्रः तत्पञ्चमो वरुणः अथवा हरिर्यमः तत्पञ्चमः सोमः तयोर्दिक्पयोः दिक्स्थितौ बहिः बाह्यभागे अङ्कौ प्रकल्प्य अतः अस्मात् अङ्कद्वयात् निजमध्यतः क्षेत्र[1]मध्यगतं[2]सन्धेश्च सूत्रप्रसरेणेन परदिशोः, प्राक्प्रत्यग्भागगतावङ्कौ चेद् दक्षिणोत्तरदिशोः दक्षिणोत्तरादिग्गतावङ्कौ चेत् प्राक्प्रत्यग्दिशोः द्वौ द्वौ झषौ मत्स्यावपि प्रकल्प्य मत्स्यचिह्नषट्सूत्रकैः चतुर्षु मत्स्येषु द्वयोश्चिह्नयोश्च विहितैः षड्भिः सूत्रकैः रसकोणकुण्डं षट्कोणकुण्डं विरचयेत् ॥ ३० ॥

पद्माकारकुण्डलक्षणमाह—क्षेत्रमिति। पूर्वोक्तं क्षेत्रं समन्तात् चतुर्दिक्ष्वपि फणिभागयुतं स्वस्याष्टभागसहितं प्रकल्प्याथ तद्बाहुसूत्रदलतः तच-

---

१ 'रि' क. ग. घ. पाठः. १. 'त्रे', ३. 'तः' ख. घ. च. पाठः. ४. 'रेण प' घ. च पाठः.

आख्यास्यमानविधिनाष्टदलं लिखित्वा
खात्वा प्रकल्पयतु पद्मनिभं च कुण्डम् ॥ ३१ ॥
क्षेत्रे तत्र समन्ततो दिनकरांशं न्यस्य तुर्यश्रिते
कोणेभ्यो भुजसूत्रकेषु निहितैः स्वैः कर्णसूत्रार्धकैः ।
द्वौ द्वौ दिक्षु झषान् प्रकल्प्य मकरेष्वास्फालितैरष्टभिः
सूत्रैरीश्वरदिङ्मुखे विरचयेदष्टाश्रकुण्डं सुधीः ॥ ३२ ॥
दोर्मात्रकुण्डे विधिरेष शेषेषून्नीय तन्वीत समस्तमस्मात् ।
कुण्डानि तत्तद्धवनोपपत्त्या द्वित्रादिदोर्निर्मितान्यपि स्युः ॥
कुर्यात् स्रुवं खदिरजं द्विजदारुजं वा
मित्राङ्गुलं शशधराङ्गुलमस्य वक्त्रम् ।

---

तुरश्रीकृतक्षेत्रस्य भुजासूत्रस्यार्धेन परिभ्रमय्य वृत्तीकृत्य आख्यास्यमानविधिना मण्डलनिर्माणे वक्ष्यमाणविधानेनाष्टदलं लिखित्वा खात्वा पद्मनिभं कुण्डं च प्रकल्पयतु ॥ ३१ ॥

अष्टाश्रकुण्डलक्षणमाह — क्षेत्र इति । चतुरश्रे क्षेत्रे समन्ततः चतुर्दिक्ष्वपि दिनकरांशं स्वस्य द्वादशांशं न्यस्य योजयित्वा तुर्यश्रिते चतुरश्रीकृते सति चतुर्भ्यः कोणेभ्योऽपि भुजसूत्रकेषु कोणानामुभयदिग्गतभुजासूत्रकेषु निहितैः निक्षिप्तैः स्वैः स्वीयैः कर्णसूत्रार्धकैः चतसृषु दिक्षु द्वौ द्वौ एवं समुदायतोऽष्टौ झषान् मत्स्यान् प्रकल्प्य मकरेषु मर्त्स्येष्वास्फालितैरष्टभिः सूत्रैरष्टाश्रकुण्डं विरचयेत् । ईश्वरदिङ्मुखे सुधीरिति पदयोः तत्तद्दिशि तत्तद्योग्यमेव कुण्डं विरचयेदित्यभिप्रायः ॥ ३२ ॥

एष विधिः दोर्मात्रकुण्डे हस्तमिते कुण्डे स्यात् । शेषेषु द्विहस्तादिषु अर्धहस्तादिषु अस्माद् एकहस्ताद् उन्नीय अतिदिश्य समस्तं गर्तमेखलायोन्यादिकं तन्वीत । तत्तद्धवनोपपत्त्या तत्तद्धोमसंख्यातारतम्येन द्वित्रादिदोर्निर्मितानि द्विकरत्रिकरादिमितानि अर्धकरादिमितानि च कुण्डानि स्युः ॥ ३३ ॥

होमसाधनकुण्डलक्षणमभिधाय पुनः स्रुवादीनां लक्षणमाह — कुर्यादिति । खदिरजं खदिरोद्भवं द्विजदारुजं वा पलाशोद्भवं वा मित्राङ्गुलं द्वाद-

---

१. 'ध्ये' ङ. पाठः.

अङ्गाग्निनेत्रयवदीर्घवितानिम्न-
गर्तद्वयं यवदलाहितनेमिवीतम् ॥ ३४ ॥

मूलाग्रशातयवनिम्नबिलार्गलाढ्य-
माश्यालपङ्कगतधेनुपदोपमं[2] च ।
मूले यवाष्टकततं यवहीनमग्रे
दण्डं स्रुवर्तुलमिलायववेष्टनाग्रम् ॥ ३५ ॥

मार्ताण्डाङ्गुलदैर्घ्यतच्छरदशांशव्यासतीव्रा जुहू-
र्ब्राह्म्यायामशरांशतोऽत्र चतुरश्रं पुष्करं कल्पयेत् ।
अध्यंशाहितमेखलावृतपदांशाखातगर्तान्वितं
तस्याग्रे गलमर्धविस्तृतितदर्धायामताभ्युज्ज्वलम् ॥३६॥

---

शाङ्गुलं स्रुवं कुर्यात् । अस्य स्रुवस्य वक्र शशधराङ्गुलम् एकाङ्गुलं कुर्यात् । अङ्गाग्निनेत्रयवदीर्घवितानिम्नगर्तद्वयं तद्वक्रे तु षड्यवदीर्घं त्रियवविस्तारं द्वियवनिम्नं च गर्तद्वयेन युक्तं च यवदलाहितनेमिवीतम् अर्धयवेन कृतया नेम्या परिवृतं च मूलाग्रशातयवनिम्नबिलार्गलाढ्यं मूलाग्रयोः कार्श्ययुक्तेन यवमात्राधोगतेन बिलमध्यस्थेन रेखारूपेणार्गलेन युक्तम्, आश्यानपङ्कगतधेनुपदोपमम् ईषदार्द्रपङ्कस्थितेन पशोः पदचिह्नेन समानं च । अस्य दण्डं सुवर्तुलं कुर्यात् । तस्य मूले यवाष्टकततम् अङ्गुलमात्रविस्तारयुक्तम् । अग्रे दण्डाग्रे ततो यवहीनं सप्तयवविस्तृतम् । इलायववेष्टनाग्रं दण्डाग्रे एकयवप्रमाणेन वलयाकारेण वेष्टनेन युक्तं च ॥ ३४,३५ ॥

जुहूलक्षणमाह— **मार्ताण्डेति** । ब्राह्मी पालाशी । मार्ताण्डाङ्गुलदैर्घ्यतच्छरदशांशव्यासतीव्रा द्वादशाङ्गुलदीर्घा दैर्घ्यपञ्चांशविस्तारा दैर्घ्यदशांशघना च जुहूः स्यात् । अत्र जुह्वाम् आयामशरांशतः दीर्घात् पञ्चभागेन चतुरश्रं पुष्करसंज्ञं स्थानं कल्पयेत् । तत्तु अध्यंशाहितमेखलावृतपदांशाखातगर्तान्वितं पुष्करस्य सप्तांशेन कृतया मेखलयावृ(ता?तं) चतुर्थांशनिम्नेन गर्तेन

---

१. 'खुरोप', २. 'मानम्' क. पाठः.

पञ्चांशायतततत्रिपादशशिपादव्यासमूलाग्रकं
कुर्याद् व्यासगुणांशखातघृतकुल्योल्लासितं तन्मुखम् ।
तच्छिष्टेन सुवृत्तपुष्करदलव्यासाढ्यमूलानलां-
शोनव्यासयुताग्रकं विरचयेद् दण्डं च गोपुच्छवत् ॥३७॥
हस्तायामयुगांशविस्तृतितदर्धोत्सेधयुक्ता महा-
स्रुक् स्याद् विस्तृतिदीर्घपुष्करगुणांशाखातवृत्तावटा ।
बाह्याद्यर्धतदर्धतद्दलवशाच्छेषे चतुर्धा कृते
कुर्यात् तद्दशनात्रयं त्रिभिरथान्तस्थैः क्रमादंशकैः ॥३८॥
बाह्येऽर्धे त्रियवं तदर्धमपरेंऽशे तद्दलं चान्यतः
संशोध्यावटमेखलां सुपरिवृत्तां पीठमब्जोज्ज्वलम् ।

---

चान्वितम् । तस्य पुष्करस्याग्रे अर्धविस्तृतितदर्धायामताभ्युज्ज्वलं पुष्करार्ध-प्रमाणविस्तारेण तदर्धमानदैर्घ्येण चाभ्युज्ज्वलं दीप्तं गलं च कुर्यात् ॥ ३६ ॥

तन्मुखं तु गलोपरि पञ्चांशायतत्रिपादशशिपादव्यासमूलाग्रकं स्व-दैर्घ्यपञ्चांशेनायतम् आयतत्रिपादविस्तारयुक्तमूलम् एकपादविस्तारयुक्ताग्रं च, तथा व्यासगुणांशखातघृतकुल्योल्लासितं स्वविस्तारत्रिभागखातया घृतकु-ल्यया चोल्लासितं शोभितं च कुर्यात् । तच्छिष्टेन पुष्करगलमुखेभ्यः शिष्टेन दण्डं च विरचयेत् । तं तु सुवृत्तपुष्करदलव्यासाढ्यमूलानलांशोनव्यासयुता-ग्रकं शोभनवृत्तं पुष्करार्धविस्तारमूलं तत्रिभागोनविस्तारयुक्ताग्रं गोपुच्छवद् गोपुच्छसदृशं विरचयेत् ॥ ३७ ॥

महास्रुग्लक्षणमाह — हस्तायामेति । हस्तायामयुगांशविस्तृतितदर्धो-त्सेधयुक्ता करमात्रायामा षडङ्गुलविस्तारा त्र्यङ्गुलघना च महास्रुक् स्यात् । सा तु विस्तृतिदीर्घपुष्करगुणांशाखातवृत्तावटा स्वविस्तारसमदीर्घे चतुरश्ररूपे पुष्करे तत्रिभागखातेन वृत्तरूपेणावटेनोपलक्षिता च । शेषे अवटाच्छिष्टे पुष्करे बाह्याद्यर्धतदर्धतद्दलवशात् बहिरारभ्यार्धे तदर्धे तस्याप्यर्धे च चिह्नं कृत्वा च-तुर्धा कृते अथान्तस्थैः त्रिभिरशंकैः क्रमात् तद्दशनात्रयं तस्यावटस्य मेखला-त्रयं कुर्यात् ॥ ३८ ॥

तत्र बाह्ये अर्धे त्रियवम् अपरे अंशे तदर्धम् एकार्धयवम् अन्यतस्त-दन्तस्तु तद्दलं पादोनयवं च संशोध्य संतक्ष्य अवटमेखलाम् अवटपरिवृतां मे-

---

१. 'पद्मांश' ख. पाठः.

दण्डं त्र्यंशततं गलं ससुषिरं पादत्रिभागातति-
व्यासं पादविहीनपुष्करमितं कुर्याज्जुहूवन्मुखम् ॥३९॥
कर्षार्धं घृतमोदनं प्रजुहुयाद् ग्रासार्धकं मुष्टिगान्
लाजान् स्वप्रसृतिप्रमान् सपृथुकाञ्छालीन् यवांस्तण्डुलान् ।
सक्तून् कर्षमितान् समुद्गतिलसिद्धार्थाह्वयान् पञ्चशो
दूर्वाग्राणि पुनस्त्रिशो दधिपयःक्षौद्रादि शुक्त्युन्मितम् ॥

एकाद्विसागरकरप्रमितानि तानि
स्युर्भद्रकप्रकृतिकान्यथ मण्डलानि ।
चक्राम्बुजं द्विकरमप्यवरं वरिष्ठं
तद् वेददोःप्रभृतिपन्नगहस्तानिष्ठम् ॥ ४१ ॥

---

खलां सुपरिवृत्तां शोभनवृत्तोपेतां कुर्यात् । इतरे चतुरश्रे चेत्यर्थाद् भवति । पीठं मेखलाभ्योऽवशिष्टं स्थानमब्जोज्ज्वलं पद्मेन शोभितं च कुर्यात् । दण्डं त्र्यंशततं द्व्यङ्गुलविस्तृतं च दण्डं कुर्यात् । गलं पुष्करादुपरि गतं कण्ठं पाद-त्रिभागाततिव्यासं पादेन सार्धैकाङ्गुलायामेन त्रिभागेनाङ्गुलद्वयविस्तारेण च युक्तं ससुषिरं घृतमार्गसुषिरयुक्तं च कुर्यात् । मुखं तदूर्ध्वभागं तु पादवि-हीनपुष्करमितं सार्धचतुरङ्गुलमितं जुहूवद् घृतकुल्यादिसमन्वितं च कुर्यात् ॥

होमद्रव्याणां प्रमाणमाह — कर्षार्धमिति । घृतं कर्षार्धं कर्षः पलाच-तुर्भागः तदर्धं प्रजुहुयात् । ओदनमन्नं ग्रासार्धं ग्रासस्यार्धं, लाजान् मुष्टिगान्, पृथुकान् शालीन् तण्डुलान् यवांश्च स्वप्रसृतिप्रमान् स्वकरप्रसृतिमितान्, अ-ङ्गुल्यग्रैरुद्धृता प्रसृतिः, सक्तून् कर्षमितान्, मुद्गतिलसिद्धार्थान् पञ्चशः दूर्वाग्राणि त्रिशः, दधिपयःक्षौद्रादिद्रवद्रव्यं शुक्त्युन्मितं, पुष्पफललड्डुकापू-पादीन्येकैकशश्च जुहुयात् ॥ ४० ॥

मण्डलानां लक्षणमाह — एकेति । अथ तानि अधिवासपटले प्रस्तु-तानि भद्रकप्रकृतिकानि भद्रकमूलानि मण्डलानि एकाद्विसागरकरप्रमितानि एकद्विचतुष्करमितानि अधममध्यमोत्तमक्रमेण स्युः । चक्राम्बुजमपि द्विकरम्

---

१. 'अवशि' ख. पाठः. २. 'त्र' क. पाठः.

विकृतिकृतिपुटे षट्त्रिंशतान्तःस्थकोष्ठै-
र्नलिनमवनिपङ्क्त्या पीठिका वीथिकाथ ।
पुटयुगपरिक्लृप्ता द्वारशोभोपशोभा-
श्रियुतपुटयुगल्या मुद्रिता भद्रके स्यात् ॥ ४२ ॥

अब्जक्षेत्रे यवांशं बहिरिह परितोऽपास्य वृत्तीकृतेऽर्धे
मित्रांशेऽग्रार्थमन्तः सुसममथ चतुर्धा विभक्ते दलार्थम् ।
सन्ध्यर्थं केसरार्थं भ्रमयतु परितः कर्णिकार्थं च सूत्रं
दिक्कोणाभ्यन्तरेऽष्टौ क्षिपतु च परितस्तत्र सूत्राणि तिर्यक् ॥

---

अवरम् अधमम् । वेददोःप्रभृतिपन्नगहस्तनिष्ठं चतुष्करादि अष्टहस्तावसानं तत् चक्राब्जं क्रमोत्कर्षेण वरिष्ठम् उत्तमं स्यात् ॥ ४१ ॥

विकृतिकृतिपुटे विकृतयः षोडश तासां विकृतीनां कृतिर्वर्गः आयामतो विस्तारतश्च षोडशपुटे क्षेत्रे इत्यर्थः । अत्रायं भावः—'प्रागग्रं सूत्रमुर्व्यामि'ति श्लोकोक्तप्रकारेण चतुरश्रं चतुष्पदं स्वेष्टमानामितं क्षेत्रं कृत्वा तेषु चतुर्षु कोणकोष्ठेषु कोणसूत्राण्युभयथाप्यास्फाल्य तन्मध्ये प्रागग्रमुदगग्रं च सूत्रमास्फाल्य चतुष्पुटं कृत्वा तत्कोणकोष्ठेष्वपि तथा कोणसूत्राण्यास्फाल्य तथा तन्मध्ये च दिक्सूत्राण्यास्फाल्य एवंक्रमेण षोडशपुटानि प्रत्यक्प्रागायतानि दक्षिणोत्तरायतानि च यथा भवन्ति तथा कृत इति । तत्र भद्रके षट्त्रिंशतान्तःस्थकोष्ठैः अन्तर्गतैः षट्त्रिंशत्कोष्ठैः नालिनं पद्मक्षेत्रं स्यात् । अवनिपङ्क्त्या[२] पद्मस्य परितो गतयैकपङ्क्त्या पीठिका च । अथ पुटयुगपरिक्लृप्ता तत्पीठबाह्यगतेन पुटद्वयेन परितः क्लृप्ता वीथिका च तथा तद्बाह्ये द्वारशोभोपशोभाश्रियुतपुटयुगल्या द्वारशोभोपशोभाश्रिभिः युतया पुटद्वय्या मुद्रिता च वीथिका स्यात् ॥ ४२ ॥

अब्जक्षेत्रे मध्यगते पद्मक्षेत्रे बहिर्यवांशं यवमात्रमंशं परितोऽपास्य त्यक्त्वा वृत्तीकृते इहार्धे मित्रांशे द्वादशांशे च अग्रार्थं दलाग्रार्थम्, अन्तः तदन्तर्भागे चतुर्धा सुसमं विभक्ते सति बाह्यादारभ्य परितो दलार्थं सन्ध्यर्थं दलसन्ध्यर्थं, केसरार्थं केसरसीमार्थं, कर्णिकार्थं च सूत्रं भ्रमयतु वृत्तीकरोतु । तत्र

---

१. 'ष्ट' इति मूलकोशपाठः. २. 'द्वाह्य', ३. 'र्थं के', ४. 'र्थं क', ५. 'तु । त' ख. घ. च. पाठः.

अग्रादिसन्धिचरमं दलमध्यसंस्थं
सूत्रं सुवर्त्य परिलिख्य दलं तदग्रम् ।
तत्सूत्रसम्मुखतयान्तिमवृत्तसंस्थं
तन्मात्रसूत्रमभिवर्त्य लिखेद् द्विपार्श्वे ॥ ४४ ॥

दिशि करयुगकोष्ठैर्द्वारमन्तर्बहिष्ठै-
स्त्रिशशिपदविपर्यस्तैश्च शोभोपशोभे ।
त्रिभुवनपदक्लृप्तं कोणमम्भोजपीठं
श्रुतिदहनपदोद्यद्गात्रपादान्वितं च ॥ ४५ ॥

पीता पङ्कजकर्णिका दलततिः श्वेतान्तरालं हरि-
द्वर्णं रक्तरुचोऽश्रयः सितपदारक्तेषकं पीठकम् ।

---

दिक्कोणाभ्यन्तरे[2] दिक्षु कोणाभ्यन्तरालेष्वपि अष्टौ तिर्यक् सूत्राणि च परितः क्षिपतु ॥ ४३ ॥

पुनर्दलमध्यसंस्थं दलानां मध्यगतसूत्रस्थितं सूत्रम् अग्रादिसन्धिचरमं दलाग्रगतवृत्तादारभ्य दलसन्ध्यन्तं सुवर्त्य दलं परिलिख्य तदग्रं दलाग्रं तु तत्सूत्रसंमुखतया दलसूत्राभिमुख्येन[3] अन्तिमवृत्तसंस्थम् अन्तिमवृत्तस्थितं तन्मात्रसूत्रं द्वादशांशतः क्षिप्त्वान्त्यवृत्तविस्तारमात्रं सूत्रं द्विपार्श्वे तस्याग्रस्य पार्श्वद्वयेऽभिवर्त्य लिखेत् ॥ ४४ ॥

पुनर्वीथ्या बहिर्द्वारशोभादिस्थाने[4] अन्तर्बहिष्ठैः अन्तर्गतैः बहिर्गतैश्च क्रमेण करयुगकोष्ठैः द्विचतुष्कोष्ठैः द्वारं स्यात् । त्रिशशिपदविपर्यस्तैः शोभोपशोभे अन्तस्त्रिभिर्बहिरेकेन शोभा, तद्व्यत्यासेनोपशोभा । त्रिभुवनपदक्लृप्तम् अन्तर्बहिश्च त्रिभिस्त्रिभिः कोष्ठैः कोणम् । अम्भोजपीठम् अष्टदलबहिर्गतं पीठं श्रुतिदहनपदोद्यद्गात्रपादान्वितं दिक्षु चतुष्पदगात्रान्वितं कोणेषु त्रिपदपादान्वितं च ॥ ४५ ॥

अथ पङ्कजकर्णिका पद्मस्य कर्णिका पीता पीतवर्णा । दलततिः दलसमूहः श्वेता । अन्तरालं दलान्तरालं हरिद्वर्णं श्यामम् । अष्टदलाद् बहिः पीठस्यान्तर्गताः अश्रयः रक्तरुचः रक्तवर्णाः । पीठकं सितपदारक्तेषकं सि-

---

१. 'षु' घ. पाठः. २. 'रे अ' ख. ग. घ. च. पाठः. ३. 'न दिग्गते द्वे कोणगते द्वे अन्तराले चतस्र इत्यत्राभिमुख्येन अ' घ. ङ. च. पाठः. ४. 'ने दिग्गते द्वे कोणगते द्वे अन्तराले चतस्र इत्यत्र अ' ख. पाठः.

वीथीं कल्पलतादिचित्रिततराथ द्वारशोभोपशो-
भाश्रि स्यात् सितरक्तपीतशितिवर्णाकीर्णचूर्णोज्ज्वलम् ॥

पीताणुमूलपृथुलारुणमध्यशुभ्र-
बिन्द्वग्रकाः प्रतिदलं युगलात्मकाः स्युः ।
तत्केसरा बहिरथ त्रिगुणात्मकाश्च
रेखा लघीयसि महीयसि भूतरूपाः ॥ ४७ ॥

चक्राब्जेऽत्र विकारवर्गपदवत्क्षेत्रेऽन्तरर्धेऽभितो
वीथीक्षेत्रशरद्विभागसहिते वृत्तीकृतेऽर्धीकृते ।

---

तवर्णपादम् आरक्तवर्णगात्रं च । वीथी कल्पलतादिचित्रिततरा कल्पलतादिभिर्वैचित्र्ययुक्ता । द्वारशोभोपशोभाश्रि क्रमेण सितरक्तपीताशितिवर्णाकीर्णचूर्णोज्ज्वलं श्वेतरक्तपीतकृष्णवर्णैः आकीर्णैः क्षिप्तैः चूर्णैः रजोभिः उज्ज्वलं दीप्तं स्यात् ॥ ४६ ॥

तत्केसराः तस्याष्टदलपद्मस्य केसराः पीताणुमूलपृथुलारुणमध्यशुभ्रबिन्द्वग्रकाः पीतवर्णकृशमूलाः अरुणवर्णस्थूलमध्याः सितवर्णबिन्दुयुक्ताग्रकाश्च प्रतिदलं दले दले युगलात्मकाः द्विद्विसंख्याश्च स्युः । अथ लघीयसि अल्पे मण्डले द्वारादीनां बहिः त्रिगुणात्मकाः सत्त्वरजस्तमोरूपाः श्वेतरक्तकृष्णवर्णाः रेखाश्च स्युः । महीयसि महत्तरे मण्डले भूतरूपाः पृथिव्यप्तेजोवाय्वाकाशात्मकाः पीतश्वेतरक्तश्यामकृष्णवर्णा रेखाः स्युः । तत्र सर्वमण्डलेष्वपि हरिद्रादिरजोभिरेव वर्णाः कल्पनीयाः । तथाच प्रपञ्चसारे—

"हारिद्रं स्याद् रजः पीतं ताण्डुलं च सितं भवेत् ।
तथा दोषारजः क्षारसंयुक्तं रक्तमुच्यते ॥
कृष्णं दग्धपुलाकोत्थं श्यामं बिल्वदलादिकम् ।"

इति ॥ ४७ ॥

अथ चक्राब्जे मण्डले विकारवर्गपदवत्क्षेत्रे पूर्वविधिना षट्पञ्चाशदधिकद्विशतपदसहिते क्षेत्रे अत्रान्तरर्धे अभितश्चतुर्ष्वपि दिक्षु वीथीक्षेत्रशरद्विभागसहिते वीथीक्षेत्रं पञ्चांशीकृत्य तद्विभागमन्तर्योजिते तत्र वृत्तीकृते

---

१. 'थिः' ख. पाठः. २. 'लाः' क. पाठः. ३. 'श्रीः' ङ. पाठः. ४. 'स्वाथ स्युः', ५. 'मिदैव', ६. 'अ' ग. पाठः.

बाह्यार्धे दहनांशनेमिपरिशिष्टं स्यादरक्षेत्रकं
शेषार्धे श्रुतिभागनाभिपरिशिष्टं चाम्बुजक्षेत्रकम् ॥ ४८ ॥

प्राग्वत् पञ्चविभक्तमम्बुजपदं त्रित्रिद्विभक्तं क्रमात्
कृत्वा नाभ्यरनेमिकं च परिवर्त्याराण्यथास्फालयेत् ।
दिक्सूत्रस्पृगरान्तवृत्तनिहितैराकर्णिकान्तायतैः
सूत्रैर्द्वादशधा क्रमादरपदं षोढा च भङ्क्त्वैकशः ॥४९॥

एष्वष्टादशकोष्ठवत्स्वरपदेष्वन्तःस्थषट्कोष्ठगा-
न्यन्तर्वृत्तगतैककोच्छुरितपार्श्वद्वन्द्वतुन्दीनि च ।
इत्यष्टाष्टपदैरराण्यपदिशं कुर्यादिह द्वादशा-
थैतावन्ति हरित्पदानि परिशिष्टान्यन्तरालान्यपि ॥५०॥

---

च सति, अर्धीकृते तद्वृत्तविस्तारस्यार्धेन वृत्तीकृते च सति, तयोरर्धयोर्बा-ह्यार्धे दहनांशनेमिपरिशिष्टं तृतीयांशं बहिर्नेम्यर्थं त्यक्त्वा तदवशिष्टमरक्षेत्रं स्यात् । शेषार्धेऽन्तरर्धे श्रुतिभागनाभिपरिशिष्टं चतुर्थांशं बहिर्नाभ्यर्थं त्यक्त्वा तदवशिष्टम् अम्बुजक्षेत्रकं च स्यात् ॥ ४८ ॥

पञ्चविभक्तं पञ्चधा विभक्तम् अम्बुजपदम् अष्टदलपद्मस्थानं प्राग्वत् भद्रकोक्तवत् कुर्यात् । नाभ्यरनेमिकं नाभ्यरनेमिस्थानानि क्रमात् त्रित्रिद्वि-भक्तं नाभ्यरस्थानं च त्रिविभक्तं नेमिस्थानं द्विभक्तं च कृत्वा तानि स्थाना-नि परिवर्त्य वृत्तीकृत्याथाराण्यास्फालयेत् । आस्फालनप्रकारमाह— दिक्सू-त्रेति । दिक्सूत्रस्पृगरान्तवृत्तनिहितैः दिक्सूत्रस्पृष्टेषु अरपर्यन्तवृत्तेषु निहितैः स्थापितैः आकर्णिकान्तायतैः कर्णिकामध्यपर्यन्तदीर्घैः सूत्रैर्क्रमात् अरपदम् अरस्थानं द्वादशधा भङ्क्त्वा पुनरेकशः षोढा च भङ्क्त्वा अष्टादशकोष्ठ-वत्सु एषु अरपदेषु अन्तःस्थषट्कोष्ठगानि अन्तर्गतषट्कोष्ठेषु गतानि अन्तर्वृ-त्तगतैककोच्छुरितपार्श्वद्वन्द्वतुन्दीनि मध्यमवृत्तगतैकैकस्योच्छुरणेन वर्धनेन पा-र्श्वद्वये तुन्दीनि उदरयुक्तानि च इति उक्तेन विधिनाष्टाष्टपदैः अपदिशं दि-ग्भ्योऽन्यत्र गतानि द्वादश अराणि कुर्यात् । अथेह एतावन्ति द्वादशसंख्यानि हरित्पदानि द्वादशपदानि दिग्गतानि च परिशिष्टानि अरेभ्यः परिशिष्टान्य-न्तरालान्यपि कुर्यात् ॥ ४९, ५० ॥

---

१. 'न च वृ' ग. पाठः. २. 'ध्यवृ' ख. घ. च. पाठः.

अन्तःस्थानरमध्यबध्नदुभयान्तान् द्वादशाथ *प्रथीन्
बाह्यानान्तरमध्यबद्धशिरसः कुर्यात् पुनस्तावतः ।
सत्त्वाद्युक्तरुचिस्त्रिनाभिररुणाराल्यन्तरं कृष्णरुक्
पर्यायारुणपीतरुक् प्रथिगणोऽन्यद् भद्रकोद्दिष्टवत् ॥५१॥
धृतिकृतिपुटक्षेत्रे मध्ये विधाय विधानतो
विकृतिकृतिसङ्ख्यातैः कोष्ठैः समीरितभद्रकम् ।
लिखतु परितः पङ्क्तौ शक्त्यष्टकं रसकोष्ठकै-
र्दिशि विदिशि च स्वोपान्तस्थोपकोष्ठदलाञ्चलम् ॥
मध्येशक्ति पदद्वयेन रचयेन्मुष्टिं दिशास्वश्रिषु
त्यक्त्वा कोणगतैककं पदयुजा तत्प्रान्तयुक्स्थास्नुना ।

---

अथान्तःस्थान् द्वादश प्रथीन् अरमध्यबध्नदुभयान्तान् अराणां मध्येषु सम्बन्ध्यमानोभयाग्रान् कुर्यात् । पुनर्बाह्यानपि आन्तरमध्यबद्धशिरसः अन्तरालानां मध्येषु बद्धशिरसः तावतः द्वादश कुर्यात् । त्रिनाभिः नाभित्रयं सत्त्वाद्युक्तरुचिः सत्त्वरजस्तमसामुक्तश्वेतरक्तकृष्णवर्णम् । अराली अराणां समूहः अरुणा रक्तवर्णा । अन्तरम् अन्तरालं कृष्णरुक् कृष्णवर्णम् । प्रथिगणः प्रथीनां गणः पर्यायारुणपीतरुक् पर्यायेण एकैकान्तरेणारुणपीतवर्णः । अन्यत् कर्णिकादि वीथीद्वारादि च भद्रकोद्दिष्टवत् भद्रकोक्तप्रकारेण ॥ ५१ ॥

शक्तिदण्डकभद्रकलक्षणमाह –– धृतीति । धृतिकृतिपुटक्षेत्रे धृतिरष्टादश तत्कृतिस्तद्वर्गः तत्संख्यपदे क्षेत्रे मध्ये विकृतिकृतिसंख्यातैः षोडशवर्गसंख्यैः कोष्ठैर्विधानतः समीरितभद्रकम् उक्तं भद्रकं विधाय परितः पङ्क्तौ रसकोष्ठकैः षट्कोष्ठैः दिशि विदिशि च अष्टदिक्षु शक्त्यष्टकं शक्तीनामष्टकं लिखतु । स्वोपान्तस्थोपकोष्ठदलाञ्चलं स्वानां स्वानां षण्णां कोष्ठानां समीपस्थेऽर्धकोष्ठेऽञ्चलमग्रं यथा भवति तथा लिखतु ॥ ५२ ॥

तत्र शक्तीनां लेखनप्रकारमाह — मध्येशक्तीति । दिशासु मध्येशक्ति शक्तेर्मध्ये पदद्वयेन मुष्टिं शक्तेर्मुष्टिप्रदेशं रचयेत् । अश्रिषु कोणगतैककं पदं त्यक्त्वा तत्प्रान्तयुक्स्थास्नुना तस्य कोणपदस्य समीपस्थितेन पदद्वयेन मुष्टिं

---

१. 'र्णः' क. पाठः.

---

* 'प्रथमे प्रथिरित्येके' इति क्षीरस्वामी.

मुष्टयुद्दिष्टपदान्तपार्श्वयुगदोस्सूत्रेण शक्त्यग्रके
तत्तार्तीयककोष्ठमध्यमिलिताग्रेणालिखेद् द्वे अपि ॥५३॥

विन्यस्यच्छोटिकां मुष्टयभिहितपदयुङ्मध्यदिक्सूत्रसंस्थां
सूत्रं तावत्प्रमाणं भ्रमयतु बहिरन्तश्च दोस्सूत्रसंस्थम् ।
सूत्रं तत्प्रान्तयोस्तद्दलमितमपि संवर्तयेत् कोणसिद्ध्यै
दिश्येवं कोणमुष्टिं विरचयतु तथा सन्धिभुग्नावलग्नम् ॥

शक्त्यग्रान्तरमुष्टिशिष्टपदवर्णं रक्तपीतारुणा-
कृष्णं श्यामलकोणगैककविराजद्देवताविग्रहम् ।
शोभे पीतहरिद्रुची विरचयेत् कोणं त्रिशूलोज्ज्वलं
पीतां वीथिमथाङ्घ्रिगात्रमसितारक्तं परं पूर्ववत् ॥५५॥

---

रचयेत् । द्वे शक्त्यग्रके शक्तीनां द्वे द्वे अग्रे अपि मुष्टयुद्दिष्टपदान्तपार्श्वयुग-दोस्सूत्रेण मुष्टयुद्दिष्टपदद्वयान्तस्य पार्श्वयुगमस्थितेन भुजासूत्रेण तत्तार्तीयककोष्ठमध्यामिलिताग्रेण तस्या मुष्टेरन्तद्वयात् तृतीयकोष्ठमध्ये संयुक्ताग्रेण सूत्रद्वयेनालिखेत् ॥ ५३ ॥

मुष्टयभिहितपदयुङ्मध्यदिक्सूत्रसंस्थाम् मुष्टेरुक्तपदद्वयमध्यगतदिक्सूत्रस्थितां छोटिकां छोटिकामुद्रां बहिरन्तश्च विन्यस्य तावत्प्रमाणं दोस्सूत्रसंस्थं सूत्रं भ्रमयतु । तत्प्रान्तयोः तस्य समीपयोः कोणसिद्ध्यै तद्दलमितं तदर्धसम्मितमपि संवर्तयेत् । एवं दिशि विरचयतु । तथा कोणमुष्टिं कोणगतां मुष्टिं सन्धिभुग्नावलग्नं सन्धिषु भुग्नं वक्रीभूतमवलग्नं मध्यं यथा भवति तथा विरचयतु ॥ ५४ ॥

तत्पूरणप्रकारमाह — शक्त्यग्रेति । शक्त्यग्रान्तरमुष्टिशिष्टपदवर्णं शक्त्यग्रस्य तदन्तरस्य मुष्टेरवशिष्टपदस्य च वर्णं क्रमात् रक्तपीतारुणाकृष्णं विरचयेत् । श्यामलकोणगैककविराजद्देवताविग्रहं श्यामलेषु कोणगतैकपदेषु शोभमानं देवताया भगवत्या विग्रहं च विरचयेत् । अत्र शोभे शोभोपशोभे पीतहरिद्रुची पीतश्यामवर्णे । कोणं त्रिशूलोज्ज्वलं कोणानि त्रिशूलेनोज्ज्वलानि । वीथिं पीताम् । अथ अङ्घ्रिगात्रं पीठस्य पादान् गात्राणि च असितारक्तं कृष्णानि रक्तानि च । परम् उक्तादवशिष्टं पूर्ववत् भद्रकोक्तवत् ॥ ५५ ॥

कुर्यात् षड्दलमब्धिवर्गपुटकेऽत्रान्तश्चतुष्कस्फुरद्-
वृत्तेषु त्रिषु कर्णिकां च दलसन्धिं षड्दलान्यंशकैः ।
सन्ध्यर्धेऽत्र तु केसरांश्च रचयेद् द्वाराणि दिक्षु द्विकैः
कोणान्येकपदैरितीषुजनुषि स्यात षड्दलं मण्डलम् ॥५६॥

सम्यक्साधितमण्डपेऽथ जनिमज्जाज्वल्यमानानलो-
द्दीप्ते स्वेप्सितमन्त्रदैवतसमिज्याभ्युज्ज्वलन्मण्डले ।
काथोदादिसुसम्भृताञ्चितघटाढ्ये दीक्षणीयं गुरुः
शुद्धं प्राशितगव्यमन्तरुपनीय स्थापयेदग्रतः ॥ ५७ ॥

---

अब्धिवर्गपुटके षोडशपदक्षेत्रे षड्दलं मण्डलं कुर्यात् । अत्र अन्तश्चतुष्कस्फुरद्वृत्तेषु अन्तर्गतचतुष्के स्फुरत्सु त्रिषु वृत्तेषु अंशकैः क्रमात् कर्णिकां दलसन्धिं षड्दलानि च रचयेत् । अंशकैरित्यनेन षड्दलानां विभागोऽप्युक्तः । तत्र दक्षिणोत्तरसूत्रस्पृष्टबहिर्वृत्ते स्थित्वा तस्मात् कर्णिकामध्यमानेन तस्मिन् वृत्ते चतुरोऽङ्कान् कृत्वा तेषु सूत्राण्यास्फाल्य षोढा विभजेदित्यर्थः । अत्र तु अत्रापि सन्ध्यर्धे दलसन्धेरर्धप्रमाणान् केसरांश्च रचयेत् । दिक्षु द्विकैर्द्वाराणि, एकपदैरेकैकपदैः[3] कोणानि च रचयेत् । अत्र पूरणं भद्रकोक्तवदेव । इति इषुजनुषि स्कन्दे षड्दलं मण्डलं स्यात् ॥ ५६ ॥

इति मण्डलान्यभिधाय तत्प्रसङ्गादाचार्यकर्तसिद्ध्येऽवश्यकरणीयं दीक्षाविधिं संक्षेपेणाह — सम्यगिति । अथ सम्यक्साधितमण्डपे यथोक्तप्रकारेण संस्कृते[5] मण्डपे जनिमज्जाज्वल्यमानानलोद्दीप्ते कृताग्निजननत्वात् कृताग्निमुखत्वाच्च प्रदीप्ताग्नौ स्वेप्सितमन्त्रदैवतसमिज्याभ्युज्ज्वलन्मण्डले च स्वस्येप्सितमन्त्रदेवतावाहनपूजनादिना प्रशोभमाने मण्डले काथोदादिसुसम्भृताञ्चितघटाढ्ये कषायपञ्चगव्यादिना सम्पूर्णेन पूजितेन कलशेन च युक्ते अन्तः अन्तर्भागे गुरुः दीक्षणीयं दीक्षायोग्यं, शुद्धम् उभयकुलपरिशुद्धं स्नानादिना च शुद्धं, प्राशितगव्यं दीक्षार्थमुपोषितं प्राशितपञ्चगव्यं शिष्यमुपनीय स्वस्याग्रतः स्थापयेत् ॥ ५७ ॥

---

१. 'न्धीन्' इति मूलकोशपाठः. २. 'य' क. पाठः. ३. 'दैः को' ख. ङ. च. पाठः. ४. 'त्व', ५. 'त' ख. घ. ङ. च. पाठः.

पृथ्व्यादिप्रतिसर्गविग्रहविशुद्ध्युत्पत्तिमन्त्रोदय-
न्यासार्चेशकराभिमर्शविधिभिः संशुद्धिबुद्धात्मनि ।
तत्राराधितमण्डलाधिगतदेवेक्षात्तपुण्योच्चये-
ऽन्वारब्धेऽथ करोतु तत्त्वहवनं तत्संस्क्रियार्हं सुधीः ॥
हुत्वाज्यं मनुभिः शतं विहितबीजस्थैः पृथिव्यादिभि-
र्मन्त्री तत्र निवृत्तिपूर्वककलात्मान्तैः क्रमात् पञ्चभिः ।
अन्त्यं स्वात्मनि पूर्णया परतरे नीत्वा समित्पूर्वकं
हुत्वा निष्कृतयेऽस्त्रतः प्रणवतः शान्त्यै च तावद् हुनेत् ॥
कृत्वा होमसमाप्तिमत्र परिशुद्धे धारणाभिस्ततः
क्षेत्रे क्षेत्रविदं सुयोज्य जनयित्वा तात्त्विकं विग्रहम् ।

---

अथ सुधीः दीक्षाविधानतत्त्वज्ञो गुरुः पृथ्व्यादिप्रतिसर्गविग्रहविशुद्ध्युत्पत्तिमन्त्रोदयन्यासार्चेशकराभिमर्शविधिभिः पृथ्व्यादिप्रतिसर्गेण पृथिव्यादितत्त्वानां संहारेण[2] विग्रहविशुद्ध्या शरीरस्य शोषणदाहनादिविशेषशुद्ध्या उत्पत्त्या तत्त्वसृष्ट्या मन्त्रोदयप्राणायामेन मन्त्रन्यासैरर्चनेन स्वस्येशस्य कराभिमर्शेन विष्णुहस्तादिभिः स्पर्शनेन च एवंविधैर्विधिभिः संशुद्धिबुद्धात्मनि[3] सम्यक्शुद्ध्या प्रबुद्धात्मस्वरूपे आराधितमण्डलाधिगतदेवेक्षात्तपुण्योच्चये आराधितपूर्णपुष्पाञ्जलौ मण्डलेऽधिगतस्य देवस्येक्षणेन परिगृहीतपुण्यसञ्चये तत्र शिष्ये अन्वारब्धे अग्निसमीपे दर्भेण संस्पृश्य दक्षिणत उपविष्टे सति तत्संस्क्रियार्हं तस्य शिष्यस्य संस्काराय योग्यं तत्त्वहवनं करोतु ॥ ५८ ॥

तत्र होमे मन्त्री दीक्षायां प्रसक्तानां मन्त्राणां प्रयोगकुशल आचार्यः विहितबीजस्थैः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं[4] इति बीजानामुपरिगतैः निवृत्तिपूर्वककलात्मान्तैः 'निवृत्तिकलात्मने स्वाहा[5]' 'प्रतिष्ठाकलात्मने स्वाहा' इत्याद्यवसाने युक्तैः पृथिव्यादिभिः पञ्चभिर्मनुभिः क्रमाच्छतं शतमाज्यं हुत्वा अन्त्यं तत्त्वं पूर्णया परतरे स्वात्मनि नीत्वा समित्पूर्वकं चतुर्द्रव्यकं[6] हुत्वा निष्कृतये प्रायश्चित्तायास्त्रतः शान्त्यै प्रणवतश्च तावत् शतं हुनेत् ॥ ५९ ॥

पुनर्गुरुः स्वयं होमसमाप्तिं कृत्वा ततो धारणाभिः[7] परिशुद्धेऽत्र क्षेत्रे क्षेत्रविदं जीवात्मानं सुयोज्य तात्त्विकं विग्रहं जनयित्वा साकल्यं परिकल्प्य

---

१. 'द्ध' ख. ग. पाठः. २. 'दिना वि' ग. ङ. पाठः. ३. 'द्ध' इति व्याख्याकोशपाठः. ४. 'स्वादिबी' ग. घ. ङ. पाठः. ५. 'हा इ', ६. 'व्यं हु' ग. पाठः. ७. 'णादिप' ङ. पाठः.

**साकल्यं परिकल्प्य पूर्णकलशेनासिच्य देवाग्रतः**
**संश्राव्याथाणुवरं तदर्हसमयाद्यं च स्वयं शिक्षयेत्[1] ॥**
**आद्येषुस्वरभान्तबिन्दुरुदितस्ताराभिधो मन्त्रराड्**
**ब्रह्माद्योऽस्य मुनिः प्रजापतिरथो दैव्यादिगायत्र्यपि ।**
**छन्दः स्यान्मनुदेवता च परमात्मा क्लीबहीनस्वर-**
**द्वन्द्वान्तर्गततारतोऽङ्गमथवा सत्योनभूरादिभिः ॥ ६१[2] ॥**
**अथ शिवनारायणयोस्तारनमोन्ते स्वनाम्नि ङेन्ते ।**
**रसवसुवर्णसमेतौ मूलमनू मन्त्रविद्भिरुद्दिष्टौ ॥ ६२ ॥**

---

पूर्णकलशेनासिच्य देवाग्रतोऽणुवरं संश्राव्य तदर्हसमयाद्यं च शिक्षयेत्[3] । संश्राव्येत्यस्यायमभिप्रायः — मन्त्रोपदेशकाले क्वचिच्छुद्धे भूतले अष्टवर्गिणीं मातृकामालिख्य तयैवावाह्य संपूज्य तस्या मातृकाया मन्त्रगतानक्षरानुद्धृत्य क्वचिदालिख्य तद्गतान् दोषान् परिहृत्य सम्पूज्य 'शिष्यायोपदिशे-दिति ॥ ६० ॥

अत्र प्रस्तुतान् मन्त्रानुद्धरन् पूर्वं प्रणवमुद्धरति — आद्येति । आद्येषुस्वरभान्तबिन्दुः आद्योऽक्षरः अकारः, इषुस्वरः पञ्चमस्वर उकारः, भान्तो मकारः, बिन्दुरनुस्वारः, एवं चतुर्भिर्वर्णैरुपेतः ताराभिधो मन्त्रराट् । सर्वेषां मन्त्राणामाधिपत्याद् राजशब्दोपचारः कृतः । अस्य तारस्य ब्रह्माद्यः प्रजापतिः ब्रह्मप्रजापतिः मुनिः ऋषित्वे उदितः । अथो दैव्यादिगायत्र्यपि दैवी गायत्री छन्दः स्यात् । परमात्मा मनुदेवता मन्त्रस्य देवता च स्यात् । क्लीबहीनस्वर-द्वन्द्वान्तर्गततारतः ऋ ॠ ऌ ॡ इति चत्वारः क्लीबाः नपुंसकानि, तैर्हीना अवशिष्टा द्वादशस्वराः, तेषां स्वरद्वन्द्वानामन्तर्गतैस्तारैः 'अं ओं आं हृदयाय नमः' इत्याद्यैरङ्गम् । अथवा सत्योनभूरादिभिः सत्यरहितैर्भूरादिभिः षड्भिः 'ओं भूरात्मने हृदयाय नमः' इत्याद्यैरित्यर्थः ॥ ६१ ॥

मूलमन्त्रानुद्धरति — अथेति । अथ मन्त्रविद्भिः शिवनारायणयोः शिवे विष्णौ च तारनामोन्ते 'ओं नम' इत्यवसाने ङेन्ते चतुर्थ्येकवचनान्ते

---

१. 'त् ॥ अथ शि' ख. पाठः. २. 'त् ॥ अत्र', ३. 'नि । संश्राव्येत्यस्यायमभिप्रायः — मन्त्रोपदेशकाले क्वचिच्छुद्धे भूतले अष्टवर्गिणीं मातृकामालिख्य तयैवावाह्य सम्पूज्य तस्या मातृकाया मन्त्रगतानक्षरानुद्धृत्य क्वचिदालिख्य तद्गतान् दोषान् परिहृत्य तत्तन्मन्त्रेण सम्पूज्य शिष्यायोपदिशेदिति । तैः' ख. घ. ङ. च. पाठः.

**तारोपरि सवसुस्वरलवावियदन्तस्थङेन्तनिजनाम ।**
**शिवनारायणमूलं नत्यन्तं मन्त्रिभिः समुद्दिष्टम् ॥ ६३ ॥**
**तारभुवनाधिनाथान्तस्थं निजनाम ङेनमोन्तमिह ।**
**दुर्गायां सप्तार्णं मूलं दुंबीजि नाम वस्वर्णं ॥ ६४ ॥**
**मेदःस्पृग्रसवर्णस्पृक्षोडशभिन्नतच्चतुर्विंशः ।**
**उद्योतितः षडर्णो वेनम इति षण्मुखेऽणुराद्यादिः ॥ ६५ ॥**
**स्पर्शतृतीयं गणपे प्रथमेन चतुर्दशेन वाचाढ्यम् ।**
**लवलसितमेकवर्णं मूलमुशन्त्यादिमादितोऽत्रापि ॥ ६६ ॥**

---

स्वनामनी 'शिवाय' 'नारायणाय' इति द्वे रसवसुवर्णसमेतौ षडक्षरयुक्तोऽष्टाक्षरयुक्तश्च मूलमनू उद्दिष्टौ ॥ ६२ ॥

**तारोपरि** प्रणवोर्ध्वभागे सवसुस्वरलववियदन्तस्थङेन्तानिजनाम वसुस्वरेण ऋकारेण लवेन बिन्दुना च सहितं वियत् हकारः 'हृं' इत्यर्थः, तदवसाने स्थितं चतुर्थ्येकवचनान्तं निजनाम 'ओं हृं' इत्यन्ते 'शिवनारायणाय' इति नत्यन्तं नमोन्तमेतद् मन्त्रिभिः शिवनारायणमूलं समुद्दिष्टमुक्तम् । मन्त्रिभिः समुद्दिष्टमित्यनेन अत्र नामान्तरं न युञ्ज्यादित्यभिप्रायः ॥ ६३ ॥

**दुर्गायां** तारभुवनाधिनाथान्तस्थं 'ओं ह्रीं' इत्यनयोरन्तस्थितं ङेनमोन्तं चतुर्थ्येकवचननमोन्तं निजनाम 'दुर्गायै नमः' इति सप्तार्णं मूलं, वस्वर्णे अष्टार्णे दुंबीजि दुंबीजयुक्तं नाम भवति ॥ ६४ ॥

**षण्मुखे** मेदस्पृग्रसवर्णस्पृग्षोडशभिन्नतच्चतुर्विंशः मेदो वकारः, स्पृग्रसवर्णः स्पर्शानां षष्ठश्चकारः, स्पृक्षोडशेन तकारेण भिन्नः सम्भिन्नो युक्तः, तच्चतुर्विंशो भकारः, स तु उद्योदितः उकारेणालङ्कृतः, वेनम इति स्वरूपम् इति षडर्णोऽणुः आद्यादिः आदिः प्रणवः स आदौ युक्तश्च भवति ॥ ६५ ॥

**गणपे** स्पर्शतृतीयं गकारः, प्रथमेनाकारेण चतुर्दशेन औकारेण वा अचा स्वरेणाढ्यं युक्तं लवलसितं बिन्दुनालङ्कृतं च एकवर्णं मूलम् उशन्ति इच्छन्ति । आचार्या इति शेषः । अत्राप्यादितः आदिं प्रणवं चेच्छन्ति॥ ६६॥

स्पर्शचतुर्थहुताशनषष्ठस्वरबिन्दुरूपबीजान्ते ।
सनतिपरायाष्टार्णं गोप्त्रेर्णं शास्तृमूलमाद्यादि ॥ ६७ ॥
साध्यनारायणो दैवी गायत्री हरिमूलके ।
ऋषिच्छन्दोदेवताः स्युः परमात्मापि च क्रमात् ॥ ६८ ॥
ऋष्याद्या गिरिशे वामदेवपङ्क्तिसदाशिवाः ।
ब्रह्मातिजगती स्थाणुहरौ हरिहरः क्रमात् ॥ ६९ ॥
क्रमान्नारदगायत्रीदुर्गा महिषविद्विषि ।
सनत्कुमारगायत्रीसुब्रह्मण्याः षडानने ॥ ७० ॥
गणकाख्यो निचृद्गायत्र्यथो गणपतिः स्वयम् ।
विघ्ने रेवन्तगायत्रीशास्तारो भूतनायके ॥ ७१ ॥
अङ्गान्यथ हृदयशिरःशिखाश्च कवचं च नेत्रमस्त्रमिति ।
प्रायोऽखिलेषु षट् स्युः सोदरपृष्ठानि तानि हरिमूले ॥ ७२ ॥

---

स्पर्शचतुर्थहुताशनषष्ठस्वरबिन्दुरूपबीजान्ते स्पर्शचतुर्थः घकारः, हुताशनो रेफः, षष्ठस्वर ऊकारः, बिन्दुरनुस्वारः, एतद्रूपबीजस्य 'घ्रूं' इत्यस्यान्ते सनतिपराय 'नमःपराय'सहितं 'गोप्त्र' इत्यर्णम् अष्टार्णं शास्तृमूलम् आद्यादि प्रणवादि च भवति ॥ ६७ ॥

तेषां मूलमन्त्राणामृष्यादिकं कथयति — साध्येत्यादिभिः । हरिमूलके साध्यनारायण ऋषिः, दैवीगायत्री छन्दः, परमात्मापि देवता च क्रमात् स्युः ॥ ६८ ॥

गिरिशे वामदेवपङ्क्तिसदाशिवाः ऋष्याद्याः । स्थाणुहरौ ब्रह्मा, अतिजगती, हरिहरश्च क्रमाद् ऋष्याद्याः ॥ ६९ ॥

महिषविद्विषि क्रमान्नारदगायत्रीदुर्गाः स्युः । षडानने सनत्कुमारगायत्रीसुब्रह्मण्याः ॥ ७० ॥

विघ्ने गणकाख्यः गणकः, निचृद्गायत्री, अथो गणपतिः स्वयं च । भूतनायके रेवन्तगायत्रीशास्तारश्च ॥ ७१ ॥

अङ्गनामान्याह — अङ्गानीति । अथाखिलेषु हृदयशिरःशिखाश्च कवचं च नेत्रमस्त्रमिति प्रायः सामान्येन षडङ्गानि स्युः । हरिमूले तानि सोदरपृष्ठानि उदरपृष्ठयुक्तानि ॥ ७२ ॥

---

१. 'य नवार्णं', २. 'शार्ङ्गांशे ब्रह्मजगतीशिवनारायणाः स्मृताः ॥' ख. पाठः.

नेत्रास्त्रक्रमविनिमयवन्ति हरिस्कन्ददुर्गासु ।
स्वोदितबीजार्णान्ते ङेन्ताख्यानानि जातियुक्तानि ॥७३॥

लवलसितमूलवर्णैर्हरौ हरे तैर्विसर्गिवर्णास्त्रैः ।
अङ्गानि मूलवर्णैः पञ्चमवर्णान्वितेक्षणानि गुहे ॥ ७४ ॥

अक्लीबसमकलालवयुतवियतेशाच्युतेऽमुनाग्निमता ।
व्यत्यस्तान्त्ययुगाचा दुर्गायैवर्णशालिनार्यायाम् ॥ ७५ ॥

गामाद्यैराचमनौ द्वितीयमन्त्रेऽङ्गकानि तैरेव ।
पञ्चदशस्वरनेत्रैर्विघ्ने षण्मन्त्रकैः प्रभानाथे ॥ ७६ ॥

---

हरिस्कन्ददुर्गासु तानि नेत्रास्त्रक्रमविनिमयवन्ति नेत्रास्त्रयोः क्रमस्य व्यत्यासयुक्तानि । अङ्गमन्त्रानाह — स्वोदितेति । स्वोदितबीजार्णान्ते स्वस्वोदितबीजरूपाणाम् अक्षराणामन्ते ङेन्ताख्यानानि चतुर्थ्यन्तानि नामानि । 'हृदयाय' 'शिरसे' इत्यादीनि जातियुक्तानि 'नमः' 'स्वाहे'त्यादिभिः वक्ष्यमाणाभिर्जातिभिर्युक्तानि ॥ ७३ ॥

अङ्गानां बीजान्याह — लवेति । हरौ लवलसितमूलवर्गैः बिन्दुसहितमूलाक्षरैः सहितान्यङ्गानि स्युः । हरे च विसर्गिवर्णास्त्रैः विसर्गसहितषष्ठाक्षरयुक्तास्त्रैः तैर्वर्णैः । गुहे च मूलवर्णैः लवलसितैरित्यवगन्तव्यम् । पञ्चमवर्णान्वितेक्षणानि मूलपञ्चमवर्णान्वितनेत्राण्यङ्गानीति ॥ ७४ ॥

ईशाच्युते अक्लीबसमकलालवयुतवियता क्लीबरहितयुग्मस्वरबिन्दुयुतेन हकारेण 'हां हृदयाय नमः' 'हीं शिरसे स्वाहा' इत्याद्येन । आर्यायाम् अग्निमता रेफयुक्तेन अमुना अक्लीबसमकलालवयुतवियता (व्यत्यस्तान्त्ययुगाचा) दुर्गायैवर्णशालिना प्रत्येकं 'दुर्गायै' इति वर्णयुक्तेन ॥ ७५ ॥

विघ्ने आचमनौ 'गं' इति मन्त्रे गामाद्यैः 'गां' 'गीं' इत्याद्यैः, द्वितीयमन्त्रे 'गौं' इति मन्त्रेऽपि तैरेवाङ्गानि । तत्र पञ्चदशस्वरनेत्रैरिति विशेषः । प्रभानाथे षण्मन्त्रकैः रेवन्तादिभिर्वक्ष्यमाणैः ॥ ७६ ॥

---

१. 'लस्य प' ख. पाठः.

उत्कपदैः क्रुद्धमहावीरद्युसहस्रपूर्वठयुगान्तैः ।
साख्याजातिभिरजिते पञ्चाङ्गान्यखिलमन्त्रयोग्यानि ॥७७॥

सनमःस्वाहावषडथ हुंवौषट्फट् च जातयः षट् स्युः ।
अस्त्रान्तेषु तदूर्ध्वं नम इति पञ्चाङ्गके न नेत्रविधिः ॥७८॥

नारायणाय विद्महे वासुदेवाय धीमहे ।
तन्नो विष्णुरि.ति श्रीशे गायत्री स्यात् प्रचोदयात् ॥७९॥

नारायणादित्रिपदस्थाने शङ्कर इत्यपि ।
नारायणश्च पुरुषः संयोज्याः शिवशार्ङ्गिणि ॥ ८० ॥

कात्यायन्यादिदुर्गान्तार्यायां कन्याकुमार्यपि ।
गुहेऽत्र शक्तिहस्तादिस्कन्दान्तश्च षडाननः ॥ ८१ ॥

---

पञ्चाङ्गमाह — **उत्कपदैरिति** । अजिते क्रुद्धमहावीरद्युसहस्रपूर्वठयुगान्तैः 'क्रुद्धमहावीरद्युसहस्र' इति पूर्वतो युक्तैः ठयुगान्तैः 'स्वाहा' इत्यन्ते युक्तैश्च । ठयुगान्तैरित्यनेनोत्कपदस्य[1] चतुर्थ्येकवचनान्तत्वमपि द्रष्टव्यम् । 'क्रुद्धोत्काय स्वाहा' इत्याद्यैरित्यर्थः । साख्याजातिभिः 'हृदयाय नम' इत्यादियुक्तैः पञ्चाङ्गानि[2] नेत्ररहितान्यखिलमन्त्रयोग्यानि सर्ववैष्णवमन्त्रेषु योग्यानि ॥ ७७ ॥

जातीः कथयति — **सनम** इति । अथ सनमःस्वाहावषट् नमः स्वाहा वषडिति युक्तं हुंवौषट्फडिति षड् जातयश्चास्त्रान्तेष्वङ्गेषु क्रमेण स्युः । तदूर्ध्वम् उदरादिषु नम इति । पञ्चाङ्गके नेत्रविधिर्न भवति ॥ ७८ ॥

गायत्रीः कथयति — **नारायणायेत्यादिभिः** । श्रीशे इति गायत्री स्यात् ॥ ७९ ॥

**शिवशार्ङ्गिणि** नारायणादित्रिपदस्थाने शङ्करः नारायणश्च पुरुष इत्यपि त्रयः शब्दाः संयोज्याः ॥ ८० ॥

**आर्यायां** दुर्गायां कात्यायन्यादिदुर्गान्ता कात्यायन्याद्या दुर्गान्ता च । मध्यगता कन्याकुमारी । गुहे अत्र त्रिपदं शक्तिहस्तादिस्कन्दान्तो मध्यस्थः षडाननश्च ॥ ८१ ॥

---

१. 'त्यंशेनो' ख. घ. ङ. च. पाठः. २. 'नि ता' घ. ङ. च. पाठः.

विनायकादिर्विघ्नान्तो[1] गजवक्त्रो गणाधिपे ।
भूताधिपादिशास्त्रन्तो भवपुत्रोऽत्र[2] शास्तरि ॥ ८२ ॥
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहे ।
ब्रवीतु शिवगायत्र्यां तन्नः शिवः प्रचोदयात् ॥ ८३ ॥
व्योमव्योमाय विद्महे व्योमेश्वराय धीमहे ।
ब्रवीतु व्योमगायत्र्यां तन्नो व्योमः प्रचोदयात् ॥ ८४ ॥
श्रियो बीजं वह्नीलवसहितमस्थ्यस्य च भृगु-
र्निचृच्छ्रीर्ऋष्याद्या गगनमिति शक्तेः पुनरजः ।
तथा गायत्री च प्रकृतिरपि मूलाक्षरयुता
द्वयोरङ्गं दीर्घाज्भिदुरनिजबीजेन गदितम् ॥ ८५ ॥
तारप्रणामौ भगवाक्षराणि तेवासुदेवाय हराविनार्णः ।
मन्त्रः प्रजापत्यभिधोऽस्य गायत्र्यृष्यादयो विष्णुरपि क्रमेण ॥

---

गणाधिपे विनायकादिः विघ्नान्तः मध्यस्थो गजवक्त्रश्च । शास्तरि अत्र भूताधिपादिशास्त्रन्तः 'भूतनाथाये'त्यादिशास्त्रन्तः । मध्यस्थो भवपुत्रश्च[3] ॥ ८२ ॥

शिवगायत्र्याम् एवं ब्रवीत्वित्यर्थः ॥ ८३ ॥

व्योमगायत्र्यां तद्वदेव व्याख्येयम् ॥ ८४ ॥

श्रीबीजादिकमुद्धरति — श्रिय इति । वह्नीलवसहितं रेफेण ईकारेण बिन्दुना च सहितम् अस्थि शकारः श्रियो बीजम् । अस्य बीजस्य भृगुर्निचृत् श्रीश्च ऋष्याद्याः । शक्तेः[4] पुनः इति एवंभूतं गगनं हकारः बीजम् । तथा अजः गायत्री मूलाक्षरयुता प्रकृतिः मूलप्रकृतिश्च ऋष्याद्याः । द्वयोः श्री-शक्तिबीजयोः दीर्घाज्भिदुरनिजमूलेन दीर्घाज्भिः भेदयुक्तेन निजमूलेन 'श्रां' 'श्रीं' इत्यादिना 'ह्रां' 'ह्रीं' इत्यादिना च अङ्गं गदितमित्यर्थः ॥ ८५ ॥

वैष्णवं द्वादशाक्षरमुद्धरति — तारेति । हरौ तारप्रणामौ 'ओं नम' इति, भगवाक्षराणि, 'भगव' इत्यक्षराणि तेवासुदेवाय इत्यक्षराणि च

---

१. 'विं' ख. पाठः. २. 'थ' घ. पाठः. ३. 'श्च भवति ॥' ख. घ. ङ. च. पाठः. ४. 'क्तेश्च पु' ग. पाठः.

मन्त्रार्णैर्द्विषडङ्गकान्युदितवत् तेष्वष्टकं कल्पयेद्
बाहूरुद्वयजानुपादसमभिख्यातानि चत्वार्यथ ।
पञ्चाङ्गानि मनोर्मनीषिभिरमुष्योक्तानि वर्णैः क्रमात्
पृथ्वीनेत्रपयोधिसायकमितैः सर्वैश्च मन्त्रोदितैः ॥ ८७॥

विष्णौ षड्वर्णमन्त्रो भुवनतिसहितं विष्णवेर्णं निराख्यै-
र्हूं कं शिं हुं ह इत्येभिरिह नतियुतैः स्युस्तदङ्गानि पञ्च।
तारान्ते हूंसमेतो यदि भवति सबीजोऽणुरङ्गानि तारा-
द्यर्णैर्हामादिमत्स्वाह्वयनतिसहितैर्नेत्रनिष्ठानि षट् स्युः॥

---

इनार्णः द्वादशाक्षरो मन्त्रः स्यात् । अस्य प्रजापत्यभिधः प्रजापतिः गायत्री विष्णुश्च ऋष्यादयः ॥ ८६ ॥

**अस्य** मन्त्रार्णैः द्विषडङ्गकानि द्वादशाङ्गानि । तेष्वङ्गेषु मध्ये अष्टकम् उदितवत् अष्टाक्षरोक्ताष्टाङ्गवत् । अथ बाहूरुद्वयजानुपादसमभिख्यातानि 'सुं बाहुभ्यां नमः' 'दें ऊरुभ्यां नमः' 'वां जानुभ्यां नमः' 'यं पादाभ्यां नमः' इति चत्वारि कल्पयेदित्यर्थः । अस्यैव मन्त्रस्य पञ्चाङ्गान्याह — पञ्चाङ्गानीति । अमुष्य मनोर्मनीषिभिः मन्त्रोदितैः मन्त्रोक्तैः पृथ्वीनेत्रपयोधिसायकमितैः एकद्विचतुष्पञ्चमितैः सर्वैश्च वर्णैः क्रमात् पञ्चाङ्गान्युक्तानि ॥ ८७ ॥

षडक्षरमाह — **विष्णौ षड्वर्णेति** । विष्णौ भुवनतिसहितं 'ओं नम' इति युक्तं 'विष्णवे' इत्यर्णं षड्वर्णमन्त्रः । इह मन्त्रे निराख्यैः हृदयादिनामरहितैः हूं कं शिं हुं हः इत्येभिर्बीजैर्नतियुक्तैः 'हूं नमः' 'कं नमः' 'शिं नमः' 'हुं नमः' 'हः नमः' इति तदङ्गानि पञ्च स्युः । तारान्ते हूंसमेतो यदि प्रणवान्ते 'हूं' इति युक्तश्चेत् तर्हि सबीजोऽणुः सबीजः षडक्षरो भवति । हामादिमत्स्वाह्वयनतिसहितैः 'हां' 'हीं' इत्यादियुक्तैः हृदयादिस्वस्वनाम्ना प्रत्येकं नत्या च युक्तैः ताराद्यर्णैः प्रणवादिभिः षड्भिरक्षरैः नेत्रनिष्ठानि षडङ्गानि स्युः । 'ओं हां हृदयाय नमः' 'नं हीं शिरसे नमः' 'मों हूं शिखायै नमः' इत्यादीत्यर्थः ॥ ८८ ॥

---

१. 'तैः कुर्वीत सर्वैरपि ॥' ख. पाठः.

**अन्तर्याम्यभिधः स्यादस्य मनो रसालिपेर्ऋषिः प्रोक्तः ।**
**गायत्री चच्छन्दो विष्णुः स्वयमेव देवता तद्वत् ॥ ८९ ॥**

**प्रोक्तस्तारसहस्रपूर्वमरहुंफट् चक्रमन्त्रोऽहिर-**
**स्यर्षिर्बुध्न्ययुतः सुदर्शनमहाविष्णुः स्मृता देवता ।**
**छन्दोऽनुष्टुबथाङ्गकानि गदितान्यायाग्निजायान्तिकै-**
**श्चक्रैराविसुधीसमित्यपि पुनर्ज्वालेति चादौ युतैः ॥९०॥**

**जितं ते पुण्डरीकाक्ष! नमस्ते विश्वभावन! ।**
**सुब्रह्मण्य ! नमस्तेऽस्तु नमः पुरुषपूर्वज ! ॥ ९१ ॥**

**उपचारमनुः सोऽयमजिते सम्प्रकीर्तितः ।**
**केवलाद्यद्वितीयोपान्त्यान्त्याच्प्रपुटिताः क्रमात् ॥ ९२ ॥**
**स्युर्वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धकाः ।**
**नमोभगवतेर्णाद्या ङेन्ताश्च हरिमूर्तयः ॥ ९३ ॥**

---

**अस्य** रसालिपेः षडर्णस्य सबीजस्याबीजस्यापि मनोरन्तर्यामी इत्य-भिधः ऋषिः प्रोक्तः स्यात् । गायत्री च छन्दः । तद्वद् विष्णुः स्वयमेव देवता ॥ ८९ ॥

सुदर्शनमन्त्रमुद्धरति — **प्रोक्त** इति । तारसहस्रपूर्वं प्रणवान्ते सहस्र इति पदपूर्वम् अरहुंफडिति चक्रमन्त्रः प्रोक्तः । अस्य ऋषिः बुध्न्ययुतः अहिः अहिर्बुध्न्यः, स ऋषिरित्यर्थः । सुदर्शनमहाविष्णुर्देवता स्मृता । अनु-ष्टुप् छन्दः स्मृतम् । अथ आयाग्निजायान्तिकैः 'आय स्वाहा' इत्यन्ते युक्तैः आविसुधीसमिति पुनः ज्वालेति चादौ युतैश्चक्रैः अङ्गानि गदितानि उक्ता-नि । 'आचक्राय स्वाहा हृदयाय नमः' 'विचक्राय स्वाहा शिरसे स्वाहा' इत्याद्यङ्गानीत्यर्थः ॥ ९० ॥

उपचारमनुं वदन् पूर्वं तदेव पठति — **जितं त** इति ॥ ९१ ॥

**अजिते स** पठितः अयमुपचारमन्त्रः सम्प्रकीर्तितः । मूर्तिमन्त्रानुद्धरति— केवलेत्यादिना । केवलाद्यद्वितीयोपान्त्यान्त्याच्प्रपुटिताः, अत्र केवलशब्दः प्रत्येकं संबध्यते, केवलेन आद्येन केवलेन द्वितीयेन उपान्त्येन अन्त्येन च अचा स्वरेण प्रपुटिताः, नमोभगवतेर्णाद्याः नमो भगवत इत्यक्ष(राणि?रैः) आदौ युक्ताः ङेन्ताः चतुर्थ्येकवचनान्ताः वासुदेवसंङ्कर्षणप्रद्युम्नानिरुद्धकाः क्रमात् हरिमूर्तयः स्युः ।

**तथैव ह्रादिशान्तार्णैः सप्रतिष्ठैः सबिन्दुभिः ।**
**शान्तिश्च श्रीसरस्वत्यौ रतिस्तन्मूर्तिशक्तयः ॥ ९४ ॥**
**किरीटकेयूरहारपदान्याभाष्य मन्त्रवित् ।**
**मकरान्ते कुण्डलं[2] च चक्रशङ्खगदा[3]दिकम् ॥ ९५ ॥**
**अब्जहस्त[4]पदं चोक्त्वा पीताम्बरधरेति च ।**
**श्रीवत्साङ्कित[5]माभाष्य वक्षःस्थलमथो वदेत् ॥ ९६ ॥**
**श्रीभूमिसहित[6]स्वात्मज्योतिर्द्वयपदं वदेत् ।**
**दी[7]प्त[8]मुक्त्वा करायेति सहस्रादित्यतेजसे ।**
**हृ[9]दन्तः प्रणवादिः स्यात् किरीटादिमनुस्त्वयम् ॥ ९७ ॥**

---

'अ ओं नमो भगवते वासुदेवाय अ' 'आ ओं नमो भगवते सङ्कर्षणाय आ' इत्याद्या इत्यर्थः ॥ ९२,९३ ॥

शक्तिमन्त्रानाह — **तथैवेति** । तथैवेत्यनेन चतुर्थ्येकवचनान्तत्वं गृह्यते । ह्रादिशान्तार्णैः हकारादिशकारान्तैः ह स ष श इत्यक्षरैः सप्रतिष्ठैः प्रतिष्ठया आकारेण युक्तैः सबिन्दुभिः बिन्दुयुक्तैः एवंभूतैर्बीजैर्युक्ताः शान्तिः श्रीसरस्वत्यौ रतिश्च तन्मूर्तिशक्तयः वासुदेवादीनां शक्तयः । 'ओं ह्रां शान्त्यै नमः' इत्याद्या इत्यर्थः ॥ ९४ ॥

किरीटमन्त्रमुद्धरति— **किरीटेति** । 'किरीटकेयूरहार' इति पदानि आभाष्य उक्त्वा । मन्त्रविदित्यनेन मकरान्ते 'मकर' इत्यन्ते 'कुण्डलालङ्कृत' इत्यध्याहार्यः । चक्रशङ्खगदादिकं 'चक्रशङ्ख[10]गदा' इत्यादिकम् अब्जहस्तपदम् 'अब्जहस्त' इति पदं चोक्त्वा 'पीताम्बरधर' इति च 'श्रीवत्साङ्कित' इति पदमाभाष्य 'वक्षःस्थल' इति पदं वदेत् । 'श्रीभूमिसहित' इति पदं स्वात्मज्योतिर्द्वयपदं 'स्वात्मज्योतिर्द्वय' इति पदं वदेत् । 'दीप्त[11]' इति पदं 'कराय' इति 'सहस्रादित्यतेजसे' इति च उक्त्वा इति किरीटादिमनुः । अयं हृदन्तः नमोन्तः अन्ते 'नम' इति युक्तः, प्रणवादिः स्यात् ॥ ९५—९७ ॥

---

१. 'यः ॥ ईशे' इति ख. ग. पाठः. २. 'लार्णे चक्र', ३, 'दान्ततः ॥', ४. 'स्तेति पीताम्बरेति चोक्त्वा धरेति च ।', ५. 'तशब्दान्ते वक्षस्थलपदं ततः ॥', ६. 'तात्मान्ते ज्यो', ७. 'ततो दीप्तिक' घ. पाठः. ८. 'प्ति' इति मूलकोशपाठः. ९. 'नम इत्युच्चरेदेष किरीटाख्यो महामनुः ॥ ई' घ. पाठः. १०. 'प्रो' इति व्याख्याकोशपाठः. ११. 'प्ति' घ. ङ. च. पाठः.

ईशे मनुस्वरलवोद्भिदुरं विहायः
प्रासादनाममनुरुक्तचराः शिवान्ताः ।
ऋष्यादिकाः सलवदीर्घकलाविभिन्न-
व्योम्नाङ्गषट्कमिह विश्वकलाक्ष्ण्यभीष्टा ॥ ९८ ॥

ईशानस्तत्पुरुषाघोराख्यौ वामदेवनामाथ ।
सद्योजातश्चोक्ता मन्त्रितमैः पञ्च मूर्तयो गिरिशे ॥ ९९ ॥

नाद्यैः पञ्चार्णविधौ नादविधौ विश्वपूर्वविषमाज्भिः ।
विक्लीबैर्बिन्दुयुतैर्भिदुरेण विहायसा युताः प्रोक्ताः ॥१००॥

पञ्चब्रह्ममहामनुराम्नायाम्नानतोऽत्र विज्ञेयः ।
ईशपुरुषाग्निवामादिकदेवहराश्च भूर्यनुष्टुबथ ॥ १०१ ॥

---

शैवान् मन्त्रानुद्धरति — ईश इति । ईशे मनुस्वरलवोद्भिदुरं चतुर्दशस्वरबिन्दुभ्यां युक्तं विहायः हकारः प्रासादनाममनुः प्रासादमन्त्रः स्यात् । शिवान्ता उक्तचराः षडक्षरे उक्तपूर्वाः ऋष्यादिकाः । सलवदीर्घकलाविभिन्न-व्योम्ना बिन्दुयुक्तदीर्घस्वरैः भेदितेन हकारेणाङ्गषट्कं स्यात् । इह प्रासादमन्त्रे अक्ष्णि विश्वकला त्रयोदशस्वरः अभीष्टा उक्ता । 'हौं नेत्रत्रयाय वौषट्' इत्यर्थः ॥ ९८ ॥

मूर्तिमन्त्रानाह — ईशान इति । मन्त्रितमैः गिरिशे ईशान इत्याद्याः पञ्च मूर्तय उक्ताः ॥ ९९ ॥

पञ्चार्णविधौ एताः नाद्यैः नकारादिपञ्चभिरक्षरैः युताः । नादविधौ प्रासादविधौ विक्लीबैः नपुंसकार्णरहितैः बिन्दुयुतैः विश्वपूर्वविषमाज्भिः त्रयोदशैकादशपञ्चमतृतीयप्रथमस्वरैः भिदुरेण भेदयुक्तेन विहायसा हकारेण युताः प्रोक्ताः ॥ १०० ॥

अत्र पञ्चब्रह्मोपदेशेने आम्नायाम्नानतः वेदपाठरीत्या पञ्चब्रह्ममहामनुर्विज्ञेयः । ऋष्यादीनाह — ईशेति । ईशपुरुषाग्निवामदेवहराः ऋषयः । अथ भूर्यनुष्टुप्, गायत्री, अनुष्टुप्, कृतिरनुष्टुप् च छन्दांसि । ईश्वरः अपः

---

१. 'ताश्चैताः ॥' इति मूलकोशपाठः. २. 'शन आ' ख. पाठः.

गायत्र्यनुष्टुभौ कृत्यनुष्टुभावीश्वरस्तथापश्च ।
आपो भगो भगश्चेतीशानादिक्रमात् तदध्यायाः ॥ १०२ ॥

पञ्चध्रुवोपरिष्टात् सर्वज्ञायेति हृन्मनुः प्रोक्तः ।
अमृतेतेजोमालिनितृप्तायैब्रह्मशिरस इति च शिरः ॥ १०३ ॥

ज्वलितशिखिशिखे च शिखा
अनादिबोधा समीरिता ङेन्ता ।
वर्ममनुर्वज्रिण इति
वज्रधराय द्विठः स्वतन्त्राय ॥ १०४ ॥

सौंचौंहौमितिपूर्वः प्रोक्तोऽत्रालुप्तशक्तयेऽक्षिमनुः ।
पाशुपतमन्त्रपूर्वः प्रोक्तश्चानन्तशक्तयेऽस्त्रमनुः ॥ १०५ ॥

ईशानादिकलाः स्युः शशिनी पुनरङ्गदेष्टदा च मरीचिः ।
ज्वालिन्यपि च निवृत्तिः प्रतिष्ठया विद्यया च शान्त्यभि-
[धाना ॥

---

आपः भगो भगश्च देवता । तदध्यायाः ईशानादिक्रमाज्ज्ञातव्या इत्यर्थः । ई-
शानादिक्रमादित्यनेन तथैवात्र मन्त्रपाठ इत्यपि सूचितः ॥ १०१,१०२ ॥

अङ्गमन्त्रानुद्धरति — पञ्चेति । पञ्चध्रुवोपरिष्टात् पञ्चप्रणवोपरि-
भागे 'सर्वज्ञाय' इति हृन्मनुः हृदयमन्त्रः प्रोक्तः । 'अमृते' इत्यादि 'शिरसे'
इत्यन्तः शिरोमन्त्रः ॥ १०३ ॥

ज्वलितशिखिशिखे इति ङेन्ता अनादिबोधा 'ज्वलितशिखिशिखे
अनादिबोधायै' इति शिखा समीरिता इत्यर्थः । वज्रिणे इति, वज्रधरायेति,
द्विठः स्वाहा इति, स्वतन्त्राय इति च 'वज्रिणे वज्रधराय स्वाहा स्वतन्त्राय'
इति वर्ममनुः कवचमन्त्रः ॥ १०४ ॥

सौं चौं हौमिति बीजत्रयपूर्वः 'अलुप्तशक्तये' इत्यक्षिमनुः नेत्रमन्त्रः
प्रोक्तः । पाशुपतमन्त्रपूर्वः वक्ष्यमाणपाशुपतास्त्रमन्त्रान्ते 'अनन्तशक्तये' इत्य-
स्त्रमनुः प्रोक्तः ॥ १०५ ॥

अष्टात्रिंशत्कला आह — ईशानादीति । इति ईशानादिकलाः, 'ई-
शानः सर्वविद्यानामि'त्यादिमन्त्रखण्डानामष्टात्रिंशत्संख्याः कलाः क्रमशः समी-

तामस्याख्या मोहा क्षया च निद्राह्वया पुनर्व्याधिः ।
अथ मृत्युरूपिणी च क्षुधा तृषाख्या ततो रजोरूपा ॥१०७॥
रक्षा रतिश्च कामा क्षमा च संयमनिका क्रिया सन्ध्या ।
स्थिरया च कालरात्रिर्भ्रामण्यपि मोहिनी तथा श्रीश्च ॥
सिद्धिरथर्द्धिर्द्युतिरपि मेधा कान्त्याह्वया तथा प्रज्ञा ।
भूयः प्रभा सुधा चेत्यष्टात्रिंशत् समीरिताः क्रमशः ॥१०९॥
मातङ्गोरगविश्वबाणनिगमैरष्टाष्टवेदाब्धिभि-
र्वेदेषुद्व्यृतुभूतवह्निशरबाणैस्तत्कलाः संयुताः ।
सप्तेष्विष्विषुदोर्नगेषुदृगगाङ्काशाश्विषड्भिः क्रमा-
दष्टाष्टाश्विगुणेषुवेदनयनाङ्गैश्चाक्षरैर्मन्त्रजैः ॥ ११० ॥

---

रिताः स्युः । शशिनी अङ्गदा इष्टदा मरीचिः ज्वालिनी इति पञ्चेशानकलाः । निवृत्तिः प्रतिष्ठा विद्या शान्तिश्च इति चतस्रस्तत्पुरुषकलाः । तामसी मोहा क्षया निद्रा व्याधिः मृत्युरूपिणी क्षुधा तृषा इत्यष्टावघोरकलाः । रजोरूपा रक्षा रतिः कामा क्षमा संयमनी क्रिया सन्ध्या स्थिरा कालरात्रिः भ्रामणी मोहिनी श्रीः इति त्रयोदश वामदेवकलाः । सिद्धिः ऋद्धिः द्युतिः मेधा कान्तिः प्रज्ञा प्रभा सुधा इत्यष्टौ सद्योजातकलाः इति ॥ १०६ — १०९ ॥

ईशानादीनामक्षरसंख्याविभागमाह — मातङ्गेति । तत्कलाः ईशानादीनां कलाः मन्त्रजैः अक्षरैः क्रमात् संयुताः इत्यन्वयः । मातङ्गाः अष्टौ, उरगाश्चाष्टौ, विश्वेदेवास्त्रयोदश, बाणाः पञ्च, निगमाः चत्वार इतीशानखण्डाः । अष्ट, अष्ट, वेदाश्चत्वारः, अब्धयश्चत्वार इति तत्पुरुषखण्डाः । वेदाश्चत्वारः, इषवः पञ्च, द्वि, ऋतवः षट्, भूतानि पञ्च, वह्नयस्त्रयः, शराः पञ्च, बाणाश्च पञ्च इत्यघोरखण्डाः । सप्त, इषुशब्दास्त्रयोऽपि पञ्चैव, दोरिति द्वे, नगाः सप्त, इषवः पञ्च, दृग् द्वे, अगाः सप्त, अङ्काः नव, आशा दश, अश्विनौ द्वौ, षडिति वामदेवखण्डाः । अष्टाष्ट, अश्विनौ द्वौ, गुणास्त्रयः, इषवः पञ्च, वेदाश्चत्वारः, नयने द्वे, अङ्गानि षडिति सद्योजातखण्डाः इति ॥ ११० ॥

---

१. 'वकलाख' ख. ग, पाठः.

तारान्ते बिन्द्वन्वितादित्रिदीर्घान्
बूयाद् व्योमव्यापिनेर्णं ध्रुवं च ।
सोऽयं व्योमव्यापिमन्त्रो दशार्णो
व्योमाद्यर्णैः स्युस्तदङ्गानि पञ्च ॥ १११ ॥

तारं व्योमव्यापिनेव्योमरूपायार्णं सर्वव्यापिनेर्णं शिवाय ।
भूयोऽनन्तायेत्यनाथाय चेति प्रोदीर्याथानाश्रिताय ध्रुवाय ॥

ङेन्तं ब्रूयाच्छाश्वतं योगपीठा-
र्णाद्यं तद्वत् संस्थितायेति वर्णम् ।
नित्यार्णाद्यं योगिनेवर्णमुक्त्वा
ध्यानाहारायेति वर्णं ब्रवीतु ॥ ११३ ॥

तारप्रणामसहितं च शिवायवर्णं
सर्वप्रभुं वदतु ङेसहितं शिवाय ।

---

व्योमव्यापिमन्त्रमुद्धरति — **तारान्त** इति । तारान्ते प्रणवान्ते बिन्द्व-न्वितादित्रिदीर्घान् बिन्दुयुक्तानादौ भवांस्त्रिदीर्घान् 'आं' 'ईं' 'ऊं' इति, 'व्योमव्यापिने' इत्यर्णं, ध्रुवं च प्रणवं ब्रूयात् । सोऽयं दशार्णो व्योमव्या-पिमन्त्रः स्यात् । व्योमाद्यर्णैः 'व्योमव्यापिने' इति पञ्चभिरक्षरैः पञ्च तदङ्गानि स्युः ॥ १११ ॥

महाव्योमव्यापिमन्त्रं पदविभागेन सहोद्धरति — **तारमिति** । प्रणव-माद्यं पदं, 'व्योमव्यापिने' इति 'व्योमरूपाय' चेत्यर्णम् अक्षराणि, 'सर्वव्या-पिने' इत्यर्णं, 'शिवाये'ति । अर्णमिति पदे पदे योज्यम् । भूयः 'अनन्ताये'ति 'अनाथाय'इति च प्रोदीर्य उक्त्वा अथ 'अनाश्रिताये'ति 'ध्रुवाये'ति च, शाश्वतं ङेन्तं 'शाश्वताये'ति ब्रूयात् । योगपीठार्णाद्यं संस्थितायेति वर्णम् अक्षराणि 'योगपीठसंस्थिताये'त्यर्थः । नित्यार्णाद्यं योगिनेवर्णं 'नित्ययोगिने' इत्युक्त्वे-त्यर्थः । 'ध्यानाहाराय' इति वर्णम् अक्षराणि ब्रवीतु ॥ ११२, ११३ ॥

**तारप्रणामसहितं** 'ओं नम' इति युक्तं शिवायेतिवर्णं 'ओं नमः शिवाये'त्येकं पदमित्यर्थः । ङेसहितं सर्वप्रभुं 'सर्वप्रभवे' इति वदतु, 'शिवा-ये'ति । इह ईशानपूर्वशरमूर्त्युपरि ईशानादिपञ्चमूर्तीनामूर्ध्वभागे मूर्धवक्त्रहृद-

ईशानपूर्वशरमूर्त्युपरीह ङेन्ताः
स्युर्मूर्धवक्त्रहृदयान्यपि गुह्यमूर्तौ ॥ ११४ ॥

तारप्रणामद्वितयं च गुह्यातिगुह्यमायार्णयुतं च गोप्त्रे ।
ब्रूयात् तदन्तेऽनिधनाय सर्वविद्याधिपायेति पदं च मन्त्री ॥

अथ वदतु सर्वयोगाधिगताय ज्योतिरादिरूपाय ।
परमेश्वरपरपदमथ चैकोनत्रिंशमीरयेन्ङेन्तम् ॥ ११६ ॥

अचेतनव्योमिपदे तथैव व्यापिन्नरूपिन् प्रथमेति तेजः ।
ज्योतिश्च सम्बोध्य वदेदचेतनादीनि सवीप्स्य पदानि सप्त ॥

भूयोऽरूपानग्नेऽधूमाभस्माक्षराण्यनादेर्णम् ।
नानाना घूघूघू व्याहृतयस्तारपूर्विकास्तिस्रः ॥ ११८ ॥

---

यानि गुह्यमूर्तौ च ङेन्ता मूर्तयः स्युः । 'ईशान*मूर्धाय' 'तत्पुरुषवक्त्राय' 'अघोरहृदयाय' 'वामदेवगुह्याय' 'सद्योजातमूर्तय' इति मूर्तिप्रधानानि पञ्च पदानि वदत्वित्यर्थः ॥ ११४ ॥

तारप्रणामद्वितयं 'ओं नमो नमः'[1] इत्येकं पदम्, 'आय' इत्यर्णयुतं गुह्यातिगुह्यं 'गुह्यातिगुह्याये'ति, 'गोप्त्रे' इत्यर्णं ब्रूयात् । तदन्ते 'गोप्त्रे' इति पदमुक्त्वा पुनः 'अनिधनाय' सर्वविद्याधिपाये'ति च पदं वदतु ब्रूयात् । मन्त्री पदविभागज्ञः ॥ ११५ ॥

अथ 'सर्वयोगाधिगताये'ति, ज्योतिरित्यादिरूपाय 'ज्योतीरूपाये'ति च वदतु । अथ ङेन्तं परमेश्वरपरपदं 'परमेश्वरपराये'ति ॥ ११६ ॥

भूयः 'परमात्मन्' 'अचेतनव्योमि'पदे 'व्यापिन्' 'अरूपिन्' 'प्रथमा' 'तेजः' 'ज्योतिः' इत्यष्टौ पदानि संबोध्य संबोधनविभक्त्या सह, तत्राचेतनादीनि सप्त पदानि सवीप्स्य द्विरुक्त्या च सह वदेत् । 'परमात्मन् अचेतनाचेतन' इत्यादिरूपः ॥ ११७ ॥

भूयः 'अरूप' 'अनग्ने' 'अधूम' 'अभस्म' इत्यक्षराणि, 'अनादे' इत्यर्णं च, 'नानाना' इति, 'घूघूघू' इति च, तारपूर्विकाः प्रणवाद्याः तिस्रो व्याहृतयः 'ओं भूः' 'ओं भुवः' 'ओं स्वः' इति स्युः इति दश पदानि वदेदित्यर्थः ॥ ११८ ॥

---

१. 'मो नमः' घ. ङ. च. पाठः.

---

* 'मूर्ध्ने' इति केषाञ्चित् पाठः.

अनिधननिधने निधनोद्भवशिवशर्वान् क्रमात् ससम्बुद्धीन्।
तद्वन्महेश्वरमहादेवेत्युक्त्वा ततश्च सम्बुद्ध्या ॥ ११९ ॥

सद्भावेश्वर समहातेजोऽथो योगसंयुताधिपते ।
मुञ्चप्रथमद्वितये शर्वयुगं भवयुगं भवोद्भव च ॥ १२० ॥

स्यात् सर्वभूतादिसुखप्रदान्ते
सर्वादिसान्निध्यकरेति वर्णम् ।
सब्रह्मविष्णवन्तनिविष्टरुद्र-
परेति चानर्चितयुग्मकं च ॥ १२१ ॥

भूयोऽसंस्कृतपूर्वस्थितसाक्षिपदानि तुरुपतङ्गौ[2] च ।
पिङ्गं ज्ञानं शब्दं सूक्ष्मं ब्रूयान्नव वीप्सया ससम्बुद्धीनि ॥

---

अनिधननिधने इति निधनोद्भवशिवशर्वान् सम्बुद्धियुक्तान् 'अनिधन' 'निधन' 'निधनोद्भव' 'शिव' 'शर्व' इति संबुद्ध्यन्तानि पञ्च पदानीत्यर्थः, 'महेश्वर' इति 'महादेव' इति च तद्वत् संबुद्ध्यन्तमुक्त्वा ततः संबुद्ध्या संबोधनविभक्त्या सह 'सद्भावेश्वर' इति, समहातेजः 'महातेज' इत्येकं पदं, योगसंयुताधिपते 'योगाधिपते', मुञ्चप्रथमद्वितये 'मुञ्च मुञ्चे'ति 'प्रथमप्रथमे'ति च, शर्वयुगं 'शर्वशर्वे'ति, भवयुगं 'भवभवे'ति, भवोद्भव च चशब्द एवार्थे, 'भवोद्भव' इति । स्यादिति पदे पदे योज्यम् । सर्वभूतादिसुखप्रद 'सर्वभूतसुखप्रद' इति, सर्वादिसान्निध्यकर इति वर्णं 'सर्वसान्निध्यकर' इति, सब्रह्मविष्ण्वन्तनिविष्टरुद्रपर ब्रह्मसहितविष्णोरन्ते निवेशितरुद्रपर इति 'ब्रह्मविष्णुरुद्रपर' इत्यर्थः, अनर्चितयुग्मकम् 'अनर्चितानर्चित' इति द्वादश पदानि संबुद्ध्या सह उक्त्वा भूयः 'असंस्कृतपूर्वस्थितसाक्षि'पदानि 'तुरुपतङ्गौ' 'पिङ्ग' 'ज्ञानं' 'शब्दं' 'सूक्ष्मम्' इति नव पदानि ससंबुद्धीनि संबुद्धियुक्तानि वीप्सया द्विरुक्त्या सह 'असंस्कृतासंस्कृत' 'पूर्वस्थित पूर्वस्थित' 'साक्षिन्साक्षिन्' 'तुरुतुरु' 'पतङ्गपतङ्ग' 'पिङ्गपिङ्ग' 'ज्ञानज्ञान'

---

1. 'द्वत् सम्बुद्ध्यन्तौ परमात्ममहेश्वरौ महादेवः ॥ सद्भा', 2. 'ङ्गौ ।' ख. पाठः

शिवशर्वसर्वदेति प्रणवनमोयुगमथो शिवायेति ।
प्रणवनमोयुगलमिति व्योमव्यापी मनुः समुद्धार्यः ॥ १२३॥
प्रोक्तोऽयं मनुराट् चतुश्शतलिपिः पञ्चादिनादादिम-
दीर्घत्रय्युदितं यदादिमपदं स्यात् सर्वदान्ते ततः ।
षड्वर्णं स्वयमेव शक्तिसुसमेतं शक्तिनादान्वितं
चास्य त्रीणि तदा पदान्यथ लिखाम्यङ्गानि चास्य क्रमात् ॥

'ओं नमः सर्वात्मने पराय परमेश्वरपराय योगाय योगसम्भवाय तुरुतुरु भवभव! भवोद्भव! वामदेव! सर्वकार्यप्रशमन! सदाशिव! नमोऽस्तु ते स्वाहा हृदयाय नमः । ओं सुं[3] शिवशिव! नमो ब्रह्मशिरसे[4] शिरसे स्वाहा । ओं शिवहृदये! ज्वालिनि! स्वाहा । ज्वालिन्यै शिखायै वषट् । ओं,

शिवात्मकं महादेवं सर्वज्ञं प्रभुमव्ययम् ।
आवर्तये महाघोरं कवचं पिङ्गलं शुभम् ॥ १२५ ॥

---

'शब्दशब्द' 'सूक्ष्मसूक्ष्म' इति ब्रूयात् । 'शिव' इति 'शर्व' इति 'सर्वदे'ति पदानि, अथो प्रणवनमोयुगम् 'ओं नमो नम' इति पदम्, 'शिवाय' इति, पुनरपि प्रणवनमोयुगलम् 'ओं नमो नम' इति पदमिति व्योमव्यापी मनुः समुद्धार्यः सम्यगुद्धरणीयः ॥ ११९—१२३ ॥

अत्र यदा पञ्चादिनादादिमद्दीर्घत्रय्युदितं पञ्चभिरादिभिः प्रणवैः नादेन प्रासादेन आदिना प्रणवेन च सहितेन दीर्घत्रयेण च उक्तं भवति 'ओं ओं ओं ओं ओं हौं ओं आं ईं ऊँ' इत्यादिमपदं स्यात्, तदा सर्वदान्ते सर्वदेतिपदावसाने षड्वर्णं स्वयमेव, ततः शक्तिसुसमेतं भुवनेश्वरीयुक्तं षड्वर्णं, शक्तिनादान्वितं भुवनेश्वरीप्रासादाभ्यां युक्तं षड्वर्णं चास्य मन्त्रस्य त्रीणि पदानि स्युः । एतस्मिन् पक्षे अयं मनुराट् चतुःशतलिपिः प्रोक्तः । अथास्य मन्त्रस्याङ्गानि क्रमाल्लिखामि ॥ १२४ ॥

अङ्गमन्त्रान् लिखति — ओं नमः सर्वात्मने परायेत्यादि ॥ १२५॥

---

१. 'कश्चाणुरयं च' ख. पाठः. २. 'त् ॥ न', ३. 'सु', ४. 'स स्वा' ग. पाठः. ५. 'न्म' घ. पाठः.

आयाहि पिङ्गल! महाकवच! शिवाज्ञया हृदयं बन्ध बन्ध ज्वलज्वल घूर्णघूर्ण किरिकिरि सूक्ष्मसूक्ष्म वज्रधर वज्रपाश वज्रशरीर मम शरीरमनुप्रविश्य सर्वदुष्टान् स्तम्भयस्तम्भय हुंफट् स्वाहा। पिङ्गलाय कवचाय हुं। ओं ह्रीं जुं सः ज्योतीरूपाय नेत्रत्रयाय वौषट्। ओं ह्रीं स्फुरस्फुरेत्याद्यघोरास्त्रान्तेऽस्त्राय फट् ॥

वसिष्ठोऽनन्तगायत्री चर्ष्याद्याः परमेश्वरः।
अमोघस्त्रिष्टुभौ व्योमव्यापिरुद्रः परैः स्मृताः ॥ १२६ ॥

तारं स्पर्शाष्टममपि सबिन्दुश्रवोऽर्णं ससर्गं
सार्णं मृत्युञ्जयमृषिमुखानस्य चाहुः कहोलम्।
गायत्रीं दैव्युपपदसमेतां च मृत्युञ्जयाद्यं
रुद्रं चाङ्गान्यपि सलवदीर्घेण शुक्लाक्षरेण ॥ १२७ ॥

तारं श्लीं पशु हुंफट् पाशुपतास्त्रं तदङ्गकान्यर्णैः।
ऋष्याद्याः स्युरघोरो गायत्री चास्य पाशुपतरुद्रः ॥ १२८ ॥

---

अस्य मन्त्रस्य ऋष्यादीनाह — वसिष्ठ इति। वसिष्ठः अनन्तगायत्री परमेश्वरश्च ऋष्याद्याः। पक्षान्तरमाह — अमोघ इति। परैः अमोघः ऋषिः त्रिष्टुप् छन्दः व्योमव्यापिरुद्रो देवता इति स्मृताः ॥ १२६ ॥

मृत्युञ्जयमन्त्रमुद्धरति — तारमिति। तारं प्रणवं, सबिन्दुश्रवः बिन्दुना दक्षिणश्रोत्रेण उकारेण च युक्तं स्पर्शाष्टममर्णं, ससर्गं विसर्गसहितं सार्णं 'स' इत्यक्षरं 'ओं जुं सः' इति मृत्युञ्जयमन्त्रमाहुः बुधाः। अस्य मन्त्रस्य कहोलं, दैव्युपपदसमेतां 'दैवी' इत्युपपदयुक्तां गायत्रीं, मृत्युञ्जयाद्यं रुद्रं च ऋषिमुखान् ऋषिच्छन्दोदेवताः आहुः। सलवदीर्घेण बिन्दुदीर्घाभ्यां सहितेन शुक्लाक्षरेण सकारेण, 'सां सीं' इत्यादि, अङ्गानि चाहुः ॥ १२७ ॥

पाशुपतमुद्धरति — तारमिति। तारं ओं, 'श्लीं पशु हुंफट्' इति पाशुपतास्त्रम्। तस्यार्णैः तदङ्गकानि स्युः। अस्य अघोरः गायत्री पाशुपतरुद्रश्च ऋष्याद्याः स्युः ॥ १२८ ॥

---

१.,२. 'ति' क. पाठः. ३. 'ओं जुं' ख पाठः. ४. 'जूं' ग. पाठः. ५. 'क्लीं' ङ. पाठः.

तारान्ते शक्तिमुक्त्वा स्फुरपदयुगलं प्रस्फुरद्वन्द्वघोर-
द्वन्द्वे भूयस्तरार्णं तनुपदयुतरूपं चटद्वन्द्वकं च ।
प्रार्णप्रोद्यच्चटद्वन्द्वकमथ कहयुग्मं वमद्वन्द्वबन्ध-
द्वन्द्वान्ते घातयद्वन्द्वमपि वदतु हुंफट् तदाघोरमस्त्रम् ॥

ऋष्याद्याः स्युरघोरस्त्रिष्टुबघोरादिरुद्रकाश्चास्य ।
पञ्चषडाशादशवसुमिहिरार्णैर्मन्त्रजैस्तदङ्गानि ॥ १३० ॥

स्पर्शान्त्याष्टमवर्णावन्त्यार्णं च त्रयं कृशानुस्थम् ।
षष्ठस्वरलवयुक्तं त्रिवर्णकं बीजमुख्यमनुमाहुः ॥ १३१ ॥

---

अघोरास्त्रमुद्धरति — तारान्त इति । तारान्ते शक्तिमुक्त्वा 'ओं ह्रीं' इत्युक्त्वा स्फुरपदयुगलं 'स्फुरस्फुर' इति, प्रस्फुरद्वन्द्वघोरद्वन्द्वे 'प्रस्फुर-प्रस्फुर' 'घोरघोर' इति, भूयः तरार्णं 'तर' इति, तनुपदयुतरूपं 'तनुरूप', चटद्वन्द्वकं 'चटचट' इति, प्रार्णप्रोद्यच्चटद्वन्द्वकं 'प्रचटप्रचट' इति, कहयुग्मं 'कहकह' इति, वमद्वन्द्वबन्धद्वन्द्वान्ते 'वमवम' 'बन्धबन्ध' इत्युक्त्वा तदन्त घातयद्वन्द्वमपि 'घातयघातय' इति, हुंफडिति च वदतु । तद् आघोरमस्त्रं स्यात् ॥ १२९ ॥

अस्य अघोरत्रिष्टुबघोरादिरुद्रकाः अघोर ऋषिः त्रिष्टुप् छन्दः अघोररुद्रो देवता इति ऋष्याद्याः स्युः । अस्याङ्गान्याह — पञ्चेति । मन्त्रजैः मन्त्राज्जातैः पञ्चषडाशादशवसुमिहिरार्णैः पञ्चभिः 'ह्रीं स्फुरस्फुर' इत्यक्षरैः, षड्भिः 'प्रस्फुरप्रस्फुर' इत्यक्षरैः, दशभिः 'घोरघोर तर तनुरूप' इत्यक्षरैः, दशभिः 'चटचट प्रचटप्रचट' इति, अष्टभिः 'कहकह वमवम' इति, द्वादशभिः 'बन्धबन्ध घातयघातय हुंफट्' इत्यक्षरैः तदङ्गानि स्युः ॥ १३० ॥

बीजमुख्यमन्त्रमुद्धरति — स्पर्शेति । स्पर्शान्त्याष्टमवर्णौ मकारजकारौ, अन्त्यार्णं क्षकारश्च, एतत्त्रयं कृशानुस्थं रेफोपेतं षष्ठस्वरलवयुक्तम् ऊकारेण बिन्दुना च युक्तम् 'म्रूं ज्रूं क्ष्रूं'[1] इति त्रिवर्णकं बीजमुख्यमनुम् आहुः गुरवः ॥ १३१ ॥

---

1. 'भ्रां' इति व्याख्याकोशपाठः.

स्याच्चिच्छिखेछिदिक्षिक्वादिति तारायष्टवर्णका क्षुरिका।
तारयुगमध्यसंस्थो हुंफट्कारः स्मृतश्च वज्रमनुः ॥१३२॥
तारः सशक्तिवाग्भवमन्मथबीजो विहायसा सौः स्यात्।
प्रारूढतारको हंसोऽष्टार्णो वर्णितोऽणुरौमेयः ॥ १३३ ॥
नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शम्भवे ॥ १३४ ॥
एष स्थाणुमनुः स्याज्ज्योतिः स्थानेऽत्र बाणालिङ्गाद्यम् ।
तत्तत्पदं सुयोज्यं मन्त्रितमैः शेषषण्मनूद्धारे ॥ १३५ ॥
अथ दुर्गार्या देवी भगवत्यपि कन्यका चतुर्थ्यन्ताः स्युः।
दुर्गाणवो नमोन्ताः पञ्चैताः सेदवेतजार्णैः सलवैः ॥

---

तारादि चिच्छिखेछिदिक्षिक्वादिति क्षुरिका अष्टवर्णका स्यात् । तार युगमध्यसंस्थः हुंफट्कारः 'ओं' हुंफट् ओं' इति वज्रमनुः स्मृतः ॥ १३२ ॥

औमेयमष्टाक्षरमुद्धरति — तार इति । तारः सशक्तिवाग्भवमन्मथ-बीजः शक्तिः भुवनेश्वरी, वाग्भवः ऐंकारः, मन्मथः क्लींकारः, विहायसा हकारेण सह सौः इति 'ह्सौः' इत्यर्थः, प्रारूढतारकः प्र इत्यस्मिन्नारूढस्तारः 'प्रों' इति, 'हं स' इति स्वरूपम् 'ओं ह्रीं ऐं क्लीं ह्सौः प्रों हं स' इति औमेयः अष्टाक्षरो मन्त्रः वर्णित उक्तः ॥ १३२ ॥

स्थाणुमन्त्रसप्तकं वदन् अत्रान्त्यस्योपचारत्वेन प्रसिद्धत्वात् तं मनुं पठति — नमोऽस्त्विति ॥ १३४ ॥

एष स्थाणुमनुः स्यात् । अत्र मन्त्रे ज्योतिःस्थाने शेषषण्मनूद्धारे मन्त्रितमैर्बाणलिङ्गाद्यं 'बाणलिङ्गावृतात्मने' इत्याद्यं तत्तत्पदं सुयोज्यम् । कथं, बाणलिङ्गावृतात्म, तथा शम्भुलिङ्ग, स्वयम्भूलिङ्ग, परलिङ्ग, परात्परलिङ्ग ।

नमोऽस्तु सकलाधारशक्त्याधाराय शम्भवे ।
निराधाराय नित्याय ज्योतिर्लिङ्गावृतात्मने ॥

इति । एतेषां पुष्पाञ्जल्यादौ विनियोगः । शङ्करनारायणे 'जितं ते' इत्येष एवोपचारमन्त्रः ॥ १३५ ॥

दौर्गान् मन्त्रानुद्धरति — अथेति । सलवैः बिन्दुसहितैः सेदवेतजार्णैः 'सेदवेतजा' इत्यक्षरैरुपलक्षिताश्चतुर्थ्यन्ता नमोन्ताश्च दुर्गा आर्या देवी भगवती

---

१. 'मृ' ग. पाठः. २. 'तथा वा' ङ. पाठः.

उपचारमनुः शक्तिः प्रणवद्वयमध्यगा ।
तारं नमो भगवति ! दुर्गे ! दुर्गतितारिणि! ॥ १३७ ॥
माये ! महादिमायेऽथ प्रोदीर्य च फणावले ।
महिषासुरशब्दान्ते विनाशिनिपदं वदेत् ॥ १३८॥
दुष्टाद् भयङ्करीत्युक्त्वा विन्ध्यादिनिलयेपदम् ।
जहीति च सुमर्दिन्यप्यथ देवासुरेत्यपि ॥ १३९ ॥
दैत्यपूजित इत्युक्त्वा वरदे नादिरायणि ।
दामोदरप्रिये ह्रीं ह्रीं हूं हूं भूतग्रहेति च ॥ १४० ॥
वेतालदुष्टराक्षसपिशाचांस्त्रासयद्वयम् ।
बन्धद्वयं मारययुक् तथा भक्तादिवत्सले ॥ १४१ ॥
भक्तप्रिये परबलमथिनीत्यथ शत्त्विति ।
निकृन्तनीति सौभाग्यप्रदे भूयो जयप्रदे ॥ १४२ ॥

---

कन्यकापि एताः पञ्च दुर्गार्णवः । 'ओं सें दुर्गायै नमः' 'ओं दं आर्यायै नमः' 'ओं वें देव्यै नमः' 'ओं तं भगवत्यै नमः' 'ओं जां कन्यकायै नमः' एता इत्यर्थः ॥ १३६ ॥

तत्र प्रणवद्वयमध्यगा शक्तिः भुवनेश्वरी 'ओं ह्रीं ओं' इत्युपचारमनुः स्यात् । विद्यामन्त्रमुद्धरति — तारमिति । तारम् 'ओं', 'नमो भगवति ! दुर्गे ! दुर्गतितारिणि ! माये !' इति प्रोदीर्य, अथ महा इत्यादिमाये 'महामाये' इति, 'फणावले' इति च प्रोदीर्य, 'महिषासुर' इति शब्दान्ते 'विनाशिनी'ति पदं वदेत् । दुष्टात् दुष्टशब्दाद् भयंकरीति 'दुष्टभयंकरी'त्युक्त्वा, विन्ध्यादिनिलये 'विन्ध्यनिलये' इति पदं, 'जही'ति पदं, 'सुमर्दिनी'त्यपि पदम्, अथ देवासुरेति दैत्यपूजित इति 'देवासुरदैत्यपूजित' इत्युक्त्वेत्यर्थः, वरदे ना इत्यादि रायणि 'वरदे नारायणी'त्यर्थः । 'दामोदरप्रिये ह्रीं ह्रीं हूं हूं भूतग्रहे' इति च वर्णानुक्त्वा, 'वेतालदुष्टराक्षसपिशाचान्' इत्युक्त्वा, त्रासयद्वयं 'त्रासयत्रासये'ति, बन्धद्वयं 'बन्धबन्धे'ति, मारययुक् 'मारयमारये'ति, तथाच भक्तादिवत्सले 'भक्तवत्सल' इत्यर्थः, 'भक्तप्रिये परबलमथिनी'त्युक्त्वा, अथ शत्त्विति निकृन्तनीति

---

१. 'रि' क. ग. पाठः. २. 'रि' ख. ग. घ. ङ. पाठः. ३. 'ये माये इ' ख. ङ. च. पाठः.

विक्तप्रदे यशोवत्यायुष्यप्रद इति क्रमात् ।
कीर्त्तिप्रदे श्रीप्रदे सर्वप्रदे शान्त्यपि प्रदे ॥ १४३ ॥
महाभूते महाबलेऽथाम्बरं बिन्दुना सह ।
आद्येन च द्वितीयेन तृतीयेन स्वरेण च ॥ १४४ ॥
चतुर्थेन च संयुक्तं शक्तिबीजं त्रिधोद्धरेत् ।
महामायेति नत्यन्तं विद्यामन्त्र उदाहृतः ॥ १४५ ॥
ओङ्काराद्यं दुर्गारूपिणि च कुमार्युपेतरूपिणि च ।
आर्यावर्तिनि मायारूपिण्यपि चोत्सवादिवासिनि च ॥
अथ यागभक्तकारिणि सर्वादिकमन्त्रपूर्वकव्यापिनि च ।
सर्वादिकर्मफलदायिनि सर्वादिक्रियादिवर्तिनिपदं च॥१४७॥
सर्वादिदोषमर्दिन्यथ सर्ववरादिदायिनीति वदेच्च ।
भगवति ततः प्रसादं पुनरापादयतु चेति यागमनुः स्यात् ॥

---

'शत्रुनिकृन्तनी'त्यर्थः, 'सौभाग्यप्रदे' इति, 'जयप्रदे' इति, 'वित्तप्रदे' इति, 'यशोवती'ति, 'आयुष्यप्रदे' इति, 'कीर्त्तिप्रदे' इति, 'श्रीप्रदे' इति, 'सर्वप्रदे' इति पदानि क्रमादुक्त्वा, शान्त्यपि प्रदे 'शान्तिप्रदे' इत्यर्थः, 'महाभूते' 'महाबले' इति पदद्वयमुक्त्वा, अथ अम्वरं हकारं प्रत्येकं बिन्दुना आद्येन द्वितीयेन तृतीयेन चतुर्थेन च स्वरेण संयुक्तं 'हं हां हिं हीं' इति चत्वारि बीजान्युक्त्वेत्यर्थः, त्रिधा त्रिकृत्वः शक्तिबीजं 'ह्रीं ह्रीं ह्रीं' इत्युद्धरेत् । 'महामाये' इति पदं नत्यन्तं 'नम' इत्यन्ते युतं विद्यामन्त्र उदाहृतः । अस्य मन्त्रस्य पुष्पावरणादौ विनियोगः ॥ १३७ – १४५ ॥

शान्तिहोमे प्रोक्तं यागमन्त्रमुद्धरति — **ओङ्काराद्यमिति** । ओङ्कारमाद्यं यथा भवति तथा 'दुर्गारूपिणी'ति पदं, कुमार्युपेतरूपिणीति 'कुमारीरूपिणी'-त्यर्थः, 'आर्यावर्तिनि' 'मायारूपिणी'ति द्वे पदे, उत्सवादिवासिनीति 'उत्सववासिनी'त्यर्थः, अथ 'यागभक्तकारिणी'ति पदं, सर्वादिकमन्त्रपूर्वव्यापिनीति 'सर्वमन्त्रव्यापिनी'त्यर्थः, सर्वादिकर्मफलदायिनि 'सर्वकर्मफलदायिनी'त्यर्थः, सर्वादिक्रियादिवर्तिनिपदं चेति 'सर्वक्रियावर्तिनी'त्यर्थः, सर्वादिदोषमर्दिनीति 'सर्वदोषमर्दिनी'त्यर्थः, सर्ववरादिदायिनीति 'सर्ववरदायिनी'त्यर्थः, 'भगवती'ति च वदेत् । ततः 'प्रसादमि'ति, पुनः 'आपादयतु' (चिः चे)ति च वदेदिति यागमनुः स्यात् ॥ १४६ — १४८ ॥

भूतिः श्रीः पिङ्गलो बभ्रुर्भूतिर्विष्णुः सनातनः ।
अग्निमारुतयोर्भूतिर्भूतिः सेन्द्राश्च देवताः ॥ १४९ ॥
प्रणवनतिषण्मुखायेत्यपरो मनुरौपचारिकः स्कन्दे ।
प्राग्वदिहाप्यृष्याद्यं मन्त्राणैः सलवकैः षडङ्गविधिः ॥१५०॥
सनत्कुमारस्कन्देन्द्रविशाखाः षष्टिषण्मुखौ ।
षण्मन्त्राः षण्मुखे प्रोक्ताश्चतुर्थ्यन्ता नमोन्विताः ॥ १५१ ॥
स्कन्दो बाणो हेमचूडो भद्रसेनो भवस्तथा ।
भवपुत्रोऽन्नाद्यशीलः कुक्कुटध्वज एव च ॥ १५२ ॥
मयूरवाहनगुहौ कुमारः सनदादिकः ।
महासेनश्च सेनान्यां नामद्वादशकं स्मृतम् ॥ १५३ ॥
आद्यं दीर्घयुगं सबिन्दु सकलाणुर्गृं गुहायेत्यणु-
र्नत्यन्तो महदाह्वयोऽब्धिनवनागैकोनविंशाः स्पृशः ।

---

पुनः कलशाभिषेके प्रस्तुतं भूतिश्रीमन्त्रं पठति—भूतिः श्रीरिति॥ १४९॥

अथ स्कान्दान् मन्त्रानुद्धरति—प्रणवेति । स्कन्दे प्रणवनतिषण्मुखायेति 'ओं नमः षण्मुखाये'ति अपरः अन्यः (मनुः) मूलमन्त्रः औपचारिकः उपचारसंज्ञश्च । इह ऋष्याद्यं प्राग्वत् पूर्वमन्त्रोक्तवत् । सलवकैः मन्त्रार्णैः 'नमः षण्मुखाये'ति षड्भिरक्षरैः षडङ्गविधिः स्यात् ॥ १५० ॥

षण्मन्त्रान् कथयति — सनत्कुमारेति । षण्मुखे नमोन्विताः 'नम' इति युक्ताश्चतुर्थ्यन्ताः सनत्कुमाराद्याः षण्मन्त्राः प्रोक्ताः । अत्र चतुर्थीनमोयुक्तत्वं द्वादशनाममन्त्राणामप्युपलक्षणम् ॥ १५१ ॥

द्वादशनामानि कथयति — स्कन्दो बाण इति । 'अन्नाद्यशीलाय नमः', सनदादिकः कुमारः 'सनत्कुमाराय नम' इति । इति नामद्वादशकं नाम्नां द्वादशकं स्मृतम् उक्तमित्यर्थः ॥ १५२, १५३ ॥

सकलमन्त्रादिकमुद्धरति — आद्यमिति । सबिन्दु बिन्दुसहितम् आद्यं दीर्घयुगम् 'आं ईं' इति सकलाणुः । नत्यन्तः 'गृं गुहाये'ति महदाह्वयः अणुः महन्मन्त्रः । अब्धिनवनागैकोनविंशाः अब्धिश्चतुर्थः घकारः नव नवमः झकारः नागोऽष्टमो जकारः एकोनविंशो धकारः एते स्पृशः स्पर्शाक्षराः

---

१. 'आ', २. 'ज्ञाब्धि', ३. 'छि' ख. पाठः.

साद्यद्रीन्दुकरस्वरा विषयुतो यान्तोऽन्त्यवर्गे तुरी-
यार्णे तत्प्रथमौयुतं सलवषट्कं बीजमन्त्रो गुहे ॥ १५४ ॥

विघ्नविनायकवीराः शूरो वरदश्च हस्तिमुखनामा ।
षण्मन्त्रा गणपे स्युः सम्प्रोक्ता ङेनमोन्विताः क्रमशः ॥१५५॥

वज्रदन्तो गजास्यश्च भीमश्च महिषास्यकः ।
विघ्नो विनायको वीरः शूराख्यः सर्पमेखलः ॥ १५६ ॥
शूर्पकर्णो नागदन्ती ततो रुद्रास्यसम्भवः ।
नामानि द्वादशैतानि कीर्तितानि गणेशितुः ॥ १५७ ॥
रेवन्ताय महाशास्त्रे गोप्त्रे च प्रभवे तथा ।
दीप्त्रे प्रशास्त्रे चार्ये स्युः षण्मन्त्रा नमसा युताः ॥१५८॥
गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ।
आर्यः शास्ता च गोपालो गुहोऽथ भवपुत्रकः ॥ १५९ ॥
नामानि शान्तभूतेशभूतिदा द्वादशार्यके ।

---

क्रमेण साद्र्यद्रीन्दुकरस्वराः अद्रिः सप्तमः ऋकारः पुनरप्यद्रिः ऋकारः इन्दुः अकारः कर आकारः एतैः स्वरैर्युक्ताः विषयुतो यान्तः विषं मकारः यान्तो रेफः, अन्त्यवर्गे यादिवर्गे तुरीयार्णं वकारः तत्प्रथमस्तस्य वर्गस्य प्रथमः यकारः, ओयुतम् ओकारयुतं, सलवषट्कं प्रत्येकं बिन्दुसहितमेतत् षट्कं 'घृं म्रृं जं धां म्रं व्यों' इति गुहे बीजमन्त्रः ॥ १५४ ॥

वैघ्नान् मन्त्रानाह — विघ्नेति । गणपे ङेनमोन्विताः एते विघ्नाद्याः षण्मन्त्राः प्रोक्ताः स्युः ॥ १५५ ॥

द्वादशमन्त्रानाह — वज्रदन्त इति । गणेशितुः एतानि द्वादश नामानि कीर्तितानि उक्तानि ॥ १५६, १५७ ॥

अथ शास्तृमन्त्रानाह — रेवन्तायेति । आर्ये (स?)नमसा युताः 'रेवन्ताय' इत्याद्याः षण्मन्त्राः स्युः ॥ १५८ ॥

द्वादशनामान्याह — गोप्तेति ॥ १५९ ॥

---

१. 'रेवन्तश्च तथा शास्ता गोप्ता च प्रभुरेव च । दीप्ता चैव प्रशास्ता च षण्मन्त्राः शास्तरीरिताः ॥' ख. पाठः. २. 'नामसंयु' ग. पाठः. ३. 'स' क. पाठः. ४ शास्तुर्द्वादशनामानि शान्तभूतेशभूतिदाः । आ' ख. पाठः.

आर्यः शास्ता गुहासन्नः सेनानीर्भूतवल्लभः ।
रुद्रजो रूपवान् कामी वरदो लोकपूजितः ॥ १६० ॥
नीलाश्वः श्वेतमातङ्गः श्यामी पीतानुलेपनः ।
रक्तमालाधरः शूरो मायो मातृगणप्रियः ॥ १६१ ॥
कालवासा गणाध्यक्षः खड्गहस्तो धनुर्धरः ।
सहजायो जनावेशः साधुः संसाररक्षकः ॥ १६२ ॥
षड्विंशतिरिमे मन्त्रा ङेनमोन्ताश्च तेऽखिला[1]ः ।
'ओं श्रीं ह्रीं क्ष्म्रीं[2] ह्रूं[3] घ्रूं शम्बरकुमाराय पद्मिने स्वाहा ।
बीजमन्त्रैः[4] समुद्दिष्टैः[5] सम्यक् सप्तदशाक्षरः ॥ १६३ ॥
प्राणापानव्यानोदानसमानाः समीरिता ङेन्ताः ।
स्वाहान्ताः सकलेषु प्राणाद्यनिलाणवो निवेद्यविधौ ॥१६४॥
टान्तामृतौलवनमस्सहितं पराय-
थावात्मनार्णमपि टान्ततुरीयमूर्तिम् ।

---

षड्विंशतिनामान्याह — आर्य इति । इमे षड्विंशतिर्मन्त्राः । ते अखिलाः द्वादशमन्त्राः षड्विंशतिमन्त्राश्च ङेनमोन्ताः स्युः ॥ १६०–१६३ ॥

बीजमन्त्रैः[7] सप्तदशाक्षर इति वदन् पूर्वं[8] तमेव लिखति — ओं श्रीमित्यादि । अस्य बीजमन्त्रस्य कौतुकबन्धने विनियोगः ॥

अथ सामान्यमन्त्रानुद्धरति — प्राणेति । सकलेषु निवेद्यविधौ ङेन्ताः चतुर्थ्येकवचनान्ताः स्वाहान्ताश्च प्राणापानव्यानोदानसमानाः 'प्राणाय स्वाहा' इत्याद्याः प्राणाद्यनिलाणवः प्राणाहुतिमन्त्राः समीरिताः ॥ १६४ ॥

निवेद्यार्पणमन्त्रमुद्धरति — टान्तेति । टान्तामृतौलवनमःसहितं टान्तः ठकारः अमृतं वकारः, औकारः स्वयमेव लवो बिन्दुः नम इति एभिर्युक्तं (वौं ? ठ्वौं) नम इति, 'पराय' इति स्वरूपम् । अथ 'अवात्मना इत्यर्णमपि, टान्ततुरीयमूर्तिं टान्तां तृतीयैकवचनान्तां तुरीयमूर्तिं अनिरुद्धादिकां मूर्तिम्

---

१. 'लाः ॥ प्राणां' ख. पाठः २. क्ष्म्रौं' घ. पाठः ३. 'ह्रूं म्रं श' ग. पाठः. ४. 'न्त्रं', ५. 'ष्टं', ६. 'रम्' क. पाठः. ७. 'न्त्रं', ८. 'मिं', ९. [illegible]' क. ख. ङ. च. पाठः.

उक्त्वा निवेद्यमिति वक्तु सकल्पयामि-
वर्णं निवेद्यगरसार्पणमन्त्र एषः ॥ १६५ ॥

तत्तद्भूतनिदानबीजहृदयोपेतं परायाक्षरं
चाबाद्यर्णयुतात्मनार्णसहितं टान्तस्वमूर्त्याह्वयम् ।
प्रब्रूयाज्जलपूर्वतत्तदुपहाराख्यां तथा कल्पया-
म्यन्तां चेत्युदिता जलादिरसदत्त्यै पञ्च मन्त्राः परे ॥

गुह्यातिगुह्यगोप्तस्त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादाद्धृदि स्थिता ॥ १६७ ॥

प्रीणातु भगवान् विष्णुः कर्मणानेन शाश्वतः ।
आद्योऽर्पणे जपस्याणुः प्रीणात्वाद्यश्च कर्मणः ॥ १६८ ॥

---

उक्त्वा कल्पयामीति वर्णैः सहितं निवेद्यमिति स्वरूपं वक्तु ब्रवीतु '(वौं ? ठ्वौं) नमः परायाबात्मनानिरुद्धेन निवेद्यं कल्पयामि' इत्यादिः । एषः निवेद्यगरसार्पणमन्त्रः निवेद्यगतस्य रसस्यार्पणे मन्त्रः ॥ १६५ ॥

जलादिरससमर्पणार्थं पञ्च मन्त्रानुद्धरति — तत्तद्भूतेति । तत्तद्भूतनिदानबीजहृदयोपेतं तस्य तस्य भूतस्याबादेः निदानमादिकारणं वं इत्यादिकेवलबीजं, हृदयं नम इति, ताभ्यां युक्तं परायेत्यक्षरम्, अबाद्यर्णयुतात्मनार्णसहितम् अप्पृथिव्यादिवर्णैः सहितात्मनाक्षरैः युक्तं, टान्तस्वमूर्त्याह्वयं तृतीयैकवचनान्तस्वस्वमूर्तिनामयुक्तं, जलपूर्वतत्तदुपहाराख्यां जलं गन्धं पुष्पं धूपं दीपम् इति तत्तत्पूजासाधनाभिधां तथा कल्पयामीत्यन्तां च तामाख्यां प्रब्रूयात् । 'वं नमः परायाबात्मनानिरुद्धेन जलं कल्पयामि', 'लं नमः पराय पृथिव्यात्मना नारायणेन गन्धं कल्पयामि', 'हं नमः परायाकाशात्मना वासुदेवेन पुष्पं कल्पयामि', 'यं नमः पराय वाय्वात्मना सङ्कर्षणेन धूपं कल्पयामि', 'रं नमः परायाग्न्यात्मना प्रद्युम्नेन दीपं कल्पयामि' इति विष्णौ । शिवादिषु वामदेवादयो मूर्तिमन्त्राः । एते जलादिरसदत्त्यै जलादीनां रसदानाय परे निवेद्यादन्ये पञ्च मन्त्रा उदिता उक्ताः ॥ १६६ ॥

जपसमर्पणमन्त्रं कर्मसमर्पणमन्त्रं च पठति — गुह्यातीति । तयोर्वि-

---

१. 'भक्तिर्भ' क. पाठः. २. 'तः' ख. पाठः.

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ।
जाग्रत्स्वप्नसुषुप्त्यन्तेऽवस्थासु मनसेत्यपि ॥ १६९ ॥
वाचेति कर्मणेत्युक्त्वा हस्ताभ्यामिति कीर्तयेत् ।
पद्भ्यामित्युदरेणेति शिश्नेत्यपि च यत् स्मृतम् ॥ १७० ॥
यदुक्तं यत् कृतमिति तत्सर्वं ब्रह्मवर्णकान् ।
अर्पणं भवतु स्वाहेत्यपि ब्रह्मार्पणे मनुः ॥ १७१ ॥
सर्वाद्यादिषु तत्त्वकेषु निजमूर्त्यन्तेषु गन्धादित-
त्तन्मात्रोल्लसितस्वरूपपदमायान्तं तदन्ते पुनः ।
ङेन्तात्मान्तसमानपूर्वकनिजप्राणान् नमोन्तान् वदे-
देवं संहृतिपञ्चतत्त्वमनवः प्रोक्ता विशेषान्विताः ॥ १७२ ॥

---

भागमाह — आद्य इति । जपस्यार्पणे आद्यः अणुः, कर्मणः अर्पणे प्रीणात्वाद्यः अणुः स्यात् ॥ १६७,१६८ ॥

ब्रह्मार्पणमन्त्रमुद्धरति — इतः पूर्वमित्यादि । 'इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्ति' इत्यन्ते 'अवस्थासु' 'मनसा' इति 'वाचा' इति 'कर्मणा' इत्युक्त्वा 'हस्ताभ्यां' 'पद्भ्याम्' 'उदरेणे'ति 'शिश्ना' इत्यपि 'यत् स्मृतं' 'यदुक्तं' 'यत् कृतम्' इति 'तत्सर्वं ब्रह्म' इति वर्णकान् 'अर्पणं भवतु स्वाहा' इत्यपि कीर्तयेदिति ब्रह्मार्पणे मनुः स्यात् ॥ १६९–१७१ ॥

निष्क्रामणविधिमधिकृत्य 'विशेषान्वितैः स्वैर्हुनेच्चेषुतत्त्वैः' इत्युक्तं पञ्चतत्त्वानां विशेषवत्त्वमाह — सर्वाद्यादिष्विति । सर्वाद्यादिषु 'लां नमः पराय सर्वात्मने' इत्यादिविष्ण्वादिषूक्तेषु पञ्चसु तत्त्वेषु निजमूर्त्यन्तेषु नारायणादिस्वस्वमूर्तिशब्दान्तेषु, मूर्तीनां चतुर्थ्येकवचनान्तत्वमपि ग्राह्यं, 'लां नमः पराय सर्वात्मने नारायणाय' इत्याद्यन्तेषु गन्धादितत्तन्मात्रोल्लसितस्वरूपपदं गन्धादिशब्दैः तन्मात्रशब्देन च युक्तं स्वरूप इति पदम् आयान्तं च 'गन्धतन्मात्रस्वरूपाये'त्यादि सिद्धं भवति । पुनस्तदन्ते ङेन्तात्मान्तसमानपूर्वकनिजप्राणान् समानादीन् निजान् निजान् प्राणानात्मान्तान् ङेन्तांश्च 'समानात्मने' इत्यादीनित्यर्थः, तान् नमोन्तांश्च वदेत् । एवं सर्वदेवेषु विशेषान्विताः संहृतिपञ्चतत्त्वमनवः प्रोक्ताः । सूत्रच्छेदे तेषां हुंफडन्तत्वमपि ग्राह्यम् ॥ १७२ ॥

---

१. 'नुः ॥ अन्योन्य' ख. पाठः. २. 'न्मन्त्रोल्ल' क. पाठः. ३. 'त् रहस्यभूतानां ॥' घ. ङ. च. पाठः.

**तारं शक्तिसनादयादिमनुवर्णं कादितत्त्वाक्षरं**
**नत्यन्तेऽथ शिवाय चेति गिरिशे ब्रह्मादि ङेसंयुतम् ।**
**ङेन्तोर्व्याद्यधिपत्युपर्यभिवदेद् ध्लामादिराजन्निवृ-**
**त्त्याद्युद्धिन्नकलात्मनेहुमिति चास्त्रान्तं विशिष्टोद्धृतौ ॥**
**स्थूलात्मतोन्मेषविधायिका चि-**
**दावाहनासुन्यसनादि कृत्वा ।**
**क्रिया स्वनिद्राघटयुक्तितोऽत्र**
**कार्या कुमारार्यकयोः स्मृतं तत् ॥ १७४ ॥**

---

शिवे विशेषेण विशेषपञ्चतत्त्वान्युद्धरति — तारमिति । गिरिशे विशिष्टोद्धृतौ विशेषवत्त्वेनोद्धारे तारं, शक्तिसनादयादिमनुवर्णं शक्तिः भुवनेश्वरी सनादं नादसहितं नादः प्रासादः यादिमनुवर्णं यकारादिपञ्चाक्षरस्य प्रतिलोमवर्णेष्वेकैकं, कादितत्त्वाक्षरं कवर्गस्य स्वस्वपञ्चभूतसम्बन्ध्यक्षरम् 'ओं ह्रीं हौं यं कं' इत्यादि पञ्च पञ्च वीजानि सिद्धानि, नत्यन्तेऽथ शिवायेति 'नमः शिवाये'त्यर्थः, ब्रह्मादि ङेसंयुतं चतुर्थ्येकवचनान्तानि 'ब्रह्मणे' इत्याद्यधिदैवतनामानि, ङेन्तोर्व्याद्यधिपत्युपरि चतुर्थ्येकवचनान्तपृथिव्यादि(भिः?) सहिताधिपतिशब्दस्योपरि 'पृथिव्यधिपतये' इत्यादीनामुपरीत्यर्थः ह्लामादिराजन्निवृत्त्याद्युद्धिन्नकलात्मनेहुमिति 'ह्लां' इत्यादिवीजैः सह 'निवृत्त्या'दिभिर्युक्तं 'कलात्मने हुं' इति वर्णान् अस्त्रान्तं फडन्तं यथा भवति तथाभिवदेत् । अत्रापि हुंफडन्तत्वं सूत्रच्छेद एव ग्राह्यम् ॥ १७३ ॥

एवं रहस्यभूतानि विशेषपञ्चतत्त्वान्यभिधाय गुरूपदेशादेवावगम्यं मतिगुह्यं जीवावाहनस्वरूपमपि किञ्चिदुन्मीलयति — स्थूलात्मतेति । चिदावाहनासुन्यसनादि कृत्वा चिदावाहना जीवावाहना असुन्यसनं प्राणादीनां न्यासः, आदिशब्देन पुर्यष्टकादिकं गृह्यते । एतानि कृत्वैव स्थूलात्मतोन्मेषविधायिका क्रिया कार्येत्यन्वयः । स्थूलात्मताया उन्मेष इति स्थूलावाहनं गृह्यते । तस्य विधायिका क्रिया तत्करणमित्यर्थः । इति स्थूलावाहनायाः पूर्वमेव जीवावाहनस्य काल इति द्योतितं भवति । अत्र जीवावाहने कुमारार्यकयोः स्वनिद्राघटयुक्तितः कुमारस्य स्वकौमारकलश-योगेन आर्यके स्वनिद्राकलशयोगेन च तद् जीवावाहनं स्मृतम् ॥ १७४ ॥

---

१. 'स्य पञ्चस्वस्वभ' ख. पाठः. २. 'त्का' ग. पाठः. ३. 'स्वस्य' को' ख. पाठः

अस्वायमोद्बुद्धहृदब्जयुक् स्वे
निध्याय निर्याप्य निजेडयास्य।
सुषुम्नयावेश्य दशासुचित्ता-
दीद्धां चितिं हृत्कमले निदध्याद् ॥ १७५ ॥

त्रिरुच्यात्मना व्याप्य सुजप्य पञ्च-
तत्त्वानि ह्येभिरथाखिलाङ्गे।
संव्याप्य संसूत्र्य तदासुजात-
न्यासादिना प्राणितमादधीत ॥ १७६ ॥

प्राणं पादतलादि नोवधि ततः पृष्ठेऽन्यथापानकं
व्यानं व्याप्तमुदानमाद्दगुदरान्नाभेः समानं हृदि।
वाच्यक्ष्णोर्न्नसि नागकूर्मकृकलाख्यान् देवदत्तं बहि-
र्व्याप्यान्तश्च धनञ्जयं न्यसतु मन्त्री स्वाङ्गुलीबीजवित् ॥

---

अस्वायमोद्बुद्धहृदब्जयुक् प्राणायामेन विकसितं हृदयकमलयुग्मं स्वस्य देवस्य च येन स आचार्यस्तथोक्तः, स तु स्वे हृदयकमले निध्याय स्वगुरूक्तक्रमेणावलोक्य निजेडया नाड्या निर्याप्य निर्गमय्य अस्य देवस्य सुषुम्नया नाड्यावेश्य प्रवेश्य दशासुचित्तादी(डां?द्धां) दशभिः प्राणैश्चित्तादि-भिः मनोबुद्ध्यादिभिर्दीप्तां चितिं चैतन्यमस्य हृत्कमले निदध्यात् स्थापयेत्। एतदावाहनस्य मन्त्रादिकं स्वगुरुमुखादेव ग्राह्यमिति नोक्तम् ॥ १७५ ॥

अथ आवाहनानन्तरं (त्र्यात्मना) प्रणवेन त्रिर्व्याप्य हृदि स्पृशन् पञ्चत-त्त्वानि सुजप्याथ एभिरेवाखिलाङ्गे संव्याप्य संसूत्र्य सूत्रस्थाने न्यस्य तदा पुनः असुजातन्यासादिना प्राणन्यासादिना प्राणितं संजातप्राणमादधीत ॥ १७६ ॥

प्राणन्यासमपि किञ्चित् प्रकाशयति — **प्राणमिति**। स्वाङ्गुलीबी-जवित् प्राणादीनामङ्गुलीबीजानि च जानन् मन्त्री मन्त्रांश्च जानन् प्राणं पा-दतलादि पदतलमारभ्य नोवधि नासिकान्तं न्यसतु। ततो नासिकाया आ-रभ्य पृष्ठे पृष्ठभागे अन्यथा पादतलपर्यन्तमपानकं च, व्यानं देहे व्याप्तम्, उदानमुदरादारभ्य आदृक् नेत्रपर्यन्तं, समानं नाभेरारभ्य हृदि हृत्पर्यन्तं, नागकूर्मकृकलाख्यान् क्रमेण वाच्यास्ये* ॥ १७७ ॥

---

* अक्ष्णोरित्याद्यंशव्याख्यानमादर्शेषु नोपलभ्यते।

न्यस्येत् पुरोऽव्यक्तपुरोगगन्ध-
मात्रान्तिकांस्त्वष्ट हृदम्बुजस्य ।
दलेष्ववाचीनमुखेषु मध्ये
शक्तिं च पुर्यष्टकसन्निविष्टाम् ॥ १७८ ॥

तन्मध्ये चिद्घनं जीवं मूलमन्त्रात्मकं न्यसेत् ।
तत्त्वान्यपि यथास्थानं मूलवर्णाङ्गकान्यपि ॥ १७९ ॥

अन्योन्यसम्पुटदृढा घटिताग्रहस्ता
मुद्राञ्जलिर्मुकुलिताम्बुरुहानुरूपा ।
ब्रह्माञ्जलिर्विधिवदारचिता स्वमूर्ध्नि
सा वन्दनी स्वहृदि दक्षिणपार्श्वनम्रा ॥ १८० ॥

---

अव्यक्तपुरोगगन्धमात्रान्तिकाः अव्यक्तं प्रकृतितत्त्वं तदादिगन्धतन्मात्रान्तिकाः प्राणबुद्ध्यहङ्कारतत्त्वानि शब्दादितन्मात्रतत्त्वानि चाष्ट पुरः पुरीः न्यस्येत्, मध्ये कर्णिकायां पुर्यष्टकसन्निविष्टां पुर्यष्टकस्याश्रयभूतां स्वां शक्तिं च । अत्र तुशब्दः पक्षान्तरद्योतकः । तत्पक्षे अव्यक्तपुरोगगन्धमात्रान्तिका इति अव्यक्तं पुरोगतं यस्य बुद्धितत्त्वस्य तत् तथोक्तं, तत्र (सं ?)-बुद्ध्यहङ्कारमनःशब्दतन्मात्रादीनि अष्टतत्त्वानि दलेषु, मध्ये शक्त्यात्मकमव्यक्तं च न्यस्येदिति ॥ १७८ ॥

तन्मध्ये शक्तेर्मध्ये चिद्घनं चैतन्यसारं जीवं जीवतत्त्वं मूलमन्त्रात्मकं मूलमन्त्ररूपदेवस्वरूपं च न्यसेत् । पुनस्तत्त्वान्यपि यथास्थानं न्यसेत् । पुनर्मूलवर्णाङ्गकान्यपि न्यसेत् ॥ १७९ ॥

रहस्यभूतानां मन्त्राणामुद्धारानन्तरं तथाविधानां मुद्राणां लक्षणमाह — अन्योन्येति । अन्योन्यसंपुटदृढा परस्पराभिमुख्येन दृढबद्धा, घटिताग्रहस्ता संस्पृष्टहस्ताग्रा, मुकुलिताम्बुरुहानुरूपा मुकुलितपद्मसमाना या सा अञ्जलिर्नाम मुद्रा । स्वमूर्ध्नि विधिवत् पद्मासनस्थेन साधकेनारचिता सैव ब्रह्माञ्जलिर्नाम मुद्रा । स्वहृदि दक्षिणपार्श्वनम्रा दक्षिणपार्श्वे नम्रा सैव वन्दनी नाम मुद्रा ॥ १८० ॥

---

१ 'मा' घ. पाठः. २. 'मन्त्राङ्ग' क. पाठः.

या वाममुष्ट्युच्छ्रितपूर्वशाखाग्रहान्यमुष्टिर्लसितप्रधाना ।
सा तूर्ध्वमुद्रा शिवलिङ्गमुद्रोद्गताग्रजा दक्षिणहस्तमुष्टिः ॥

आकुञ्चिताग्राङ्गुलि हस्तयुग्ममायोज्य तर्जायुगलं प्रकल्प्य ।
स्वमध्यमापृष्ठगमग्रजाभ्यामन्तर्लिखेत् स्यादिति योनिमुद्रा ॥

मध्यानामान्तराङ्गुष्ठो निर्गतो मध्यमानता ।
दक्षिणस्य तु मुष्टौ स्यान्मुद्रा वैनायकी त्वियम् ॥ १८३ ॥

अनामिकामध्यमिकान्तरालप्रसारिताङ्गुष्ठविशिष्टमुष्टिः ।
मुद्रा हृदि स्यात् प्रथमाग्रलग्नतर्जाग्रमुष्टिः शिरसि प्रदिष्टा ॥

---

वाममुष्ट्युच्छ्रितपूर्वशाखाग्रहा वामकरं मुष्टीकृत्य तस्य करस्य पूर्वशाखामङ्गुष्ठशाखां गृह्णती अन्यमुष्टिर्दक्षिणमुष्टिः लसितप्रधाना उच्छ्रिता ङ्गुष्ठा या[1] सा तूर्ध्वमुद्रा ऊर्ध्वाख्या मुद्रा स्यात् । उद्गताग्रजा ऊर्ध्वंगताग्रया ज्येष्ठया युक्ता दक्षिणहस्तमुष्टिः शिवलिङ्गमुद्रा स्यात् ॥ १८१ ॥

योनिमुद्रामाह — आकुञ्चितेति । आकुञ्चिताग्राङ्गुलि ईषत्कुञ्चिताङ्गुल्यग्रं हस्तयुग्ममायोज्य परस्परं योजयित्वा तर्जायुगलं तर्जनीद्वयं स्वमध्यमापृष्ठगं स्वस्वमध्यमायाः पृष्ठगतं प्रकल्प्य अर्थात् मध्यमाद्वयमृजूकृत्य अग्रजाभ्याम् अङ्गुष्ठाभ्याम् अन्तर्लिखेदिति योनिमुद्रा स्यात् ॥ १८२ ॥

गणपतेर्मुद्रामाह — मध्येति । मध्यानामान्तरा मध्यमानामिकयोरन्तरा मध्ये अङ्गुष्ठो निर्गतो दक्षिणस्य तु मुष्टौ भवेत् । तत्र मध्यमानता च भवेत् । इयं वैनायकी मुद्रा स्यात् ॥ १८३ ॥

अङ्गमुद्राः क्रमेणाह — अनामिकेति । अनामिकामध्यमिकान्तरालप्रसारिताङ्गुष्ठविशिष्टमुष्टिः अनामिकामध्यमयोरन्तराले प्रसारितेनाङ्गुष्ठेन विशिष्टा मुष्टिः हृदि हृदयमुद्रा स्यात् । प्रथमाग्रलग्नतर्जाग्रमुष्टिः अङ्गुष्ठाग्रे लग्नं तर्जाग्रं यस्या मुष्टेः सा शिरसि मुद्रा प्रदिष्टा स्यात् ॥ १८४ ॥

---

१. 'भा' इति मूलकोशपाठः.

उत्थापिताङ्गुष्ठविशिष्टमुष्टि-
र्मुद्रा शिखायां कवचेऽग्रदोर्भ्याम् ।
गूढाग्रिमाभ्यामभिवेष्ट्य गात्रं
समाहरेत् तर्जनिके स्तनान्ते ॥ १८५ ॥

नाराचमुष्टी परिवर्त्य तिर्यगायम्य मुञ्चेदियमस्त्रमुद्रा ।
भ्रूमध्यबद्धव्यवलम्बमानज्येष्ठाग्रमुष्टिः खलु नेत्रमुद्रा ॥

प्रदेशिनीमध्यमिकाग्रकाभ्यां
सानामिकाभ्यामपि वाभिमर्शः ।
स्यान्नेत्रमुद्रेति षडङ्गके तु
स्वस्वास्पदस्पर्शनमात्रमूर्ध्वम् ॥ १८७ ॥

हस्तौ परावृत्य कनिष्ठिकाद्वयं
तर्जाद्वयं च प्रकलय्य गारुडीम् ।

---

उत्थापिताङ्गुष्ठविशिष्टमुष्टिः ऊर्ध्वीकृतेनाङ्गुष्ठेन विशिष्टा मुष्टिः शिखायां स्यात् । गूढाग्रिमाभ्याम् अन्तर्गताङ्गुष्ठाभ्याम् अग्रदोर्भ्यां कराग्राभ्यां गात्रं शरीरमभिवेष्ट्य स्तना(न्तरेऽन्ते) स्तनमध्ये तर्जनिके तर्जनीद्वयं समाहरेत् योजयेत् । इयं कवचे भवेत् ॥ १८५ ॥

नाराचमुष्टी शरग्रहेणमुष्टिद्वयं परिवर्त्य बहिर्मुखं कृत्वा तिर्यगायम्य तिर्यक् प्रसार्य मुञ्चेत् । इयमस्त्रमुद्रा स्यात् । भ्रूमध्यबद्धव्यवलम्बमानज्येष्ठाग्रमुष्टिः भ्रूमध्ये बद्धा अधोमुखज्येष्ठाग्रयुक्ता मुष्टिः खलु आगमप्रसिद्धा नेत्रमुद्रा ॥ १८६ ॥

तत्र पक्षान्तरमाह — प्रदेशिनीति । प्रदेशिनीमध्यमिकाग्रकाभ्यां नेत्रद्वयं चेत्, नेत्रत्रयं चेत् सानामिकाभ्याम् अनामिकासहिताभ्यां वा अभिमर्शः स्पर्शो नेत्रमुद्रा स्यात् । इति षडङ्गके मुद्राः स्युः । ऊर्ध्वं त्वष्टाङ्गादिषु स्वस्वास्पदस्पर्शनमात्रं स्वस्वस्थानस्पर्शनमात्रमेव ॥ १८७ ॥

गरुडमुद्रामाह — हस्ताविति । हस्तौ परावृत्य विमुखौ कृत्वा कनिष्ठिकाद्वयं तर्जाद्वयं चान्योन्यं प्रकलय्य बद्ध्वा अवलम्बिताग्रजाम् अधोमुखी-

---

१. 'स्तानिता' ख. पाठः. २. 'हमु' घ. च. पाठः. ३. 'गतेन ज्ये' ग. ङ. पाठः.
४. 'द्वन्द्वं चेन्नेत्रद्वयं चेत् सा', ५. 'ङ्गकादि' ख. पाठः.

बध्नातु मुद्रामवलम्बिताग्रजां
चलत्तदन्याङ्गुलिक्लृप्तपत्रिकाम् ॥ १८८ ॥
अन्योन्यमाबध्य कनिष्ठिकाद्वयं
ज्येष्ठाद्वयं चाप्यथ शेषिताङ्गुलीः ।
अधोमुखीकृत्य निकुञ्चिताग्रका:
परिभ्रमय्य प्रकरोतु गालिनीम् ॥ १८९ ॥
कनिष्ठिकानामिकयोः करद्वये
प्रदेशिनीमध्यमयोर्युगं मिथः ।
व्यत्यस्तबद्धाग्रमधोमुखीकृतं
प्रकल्प्य मुद्रां प्रकरोतु सौरभीम् ॥ १९० ॥
उत्तानिताञ्जल्युदरद्व्यनामिका-
मूलोल्लिखत्स्वप्रथमाभिवाहनी ।
अवाङ्मुखी स्थापनिका नताञ्जलिः
श्लिष्टोत्थिताङ्गुष्ठयुगा स्थिराकृतिः ॥ १९१ ॥

---

कृताङ्गुष्ठद्वयां चलत्तदन्याङ्गुलिक्लृप्तपत्रिकां चलद्भ्यामितराङ्गुलिद्वयाभ्यां क्लृप्ताभ्यां पक्षाभ्यां युक्तां च गारुडीं मुद्रां बध्नातु ॥ १८८ ॥

गालिनीमुद्रामाह — अन्योन्यमिति । करद्वयं परावृत्य कनिष्ठिकाद्वयं ज्येष्ठाद्वयं चान्योन्यमाबध्य अथ शेषिताङ्गुलीः इतराङ्गुलीः निकुञ्चिता(ग्राः?-ग्रका) वक्रीकृताग्राः अधोमुखीकृत्य परिभ्रमय्य गालिनीं मुद्रां प्रकरोतु ॥ १८९ ॥

सुरभिमुद्रामाह — कनिष्ठिकेति । करद्वये कनिष्ठिकानामिकयोः प्रदेशिनीमध्यमयोश्च युगं युग्मं मिथः अन्योन्यं व्यत्यस्तबद्धाग्रं व्यत्यासेन बद्धाग्रमधोमुखीकृतं प्रकल्प्य सौरभीं धेनुमुद्रां प्रकरोतु ॥ १९० ॥

आवाहन्यादिमुद्राः कथयति — उत्तानितेति । उत्तानिताञ्जल्युदरद्व्यनामिकामूलोल्लिखत्स्वप्रथमा उत्तानिताया अञ्जल्या अन्तर्भागे द्वयोरनामिकयोर्मूले उल्लिखद्भ्यां स्वस्वाङ्गुष्ठाभ्यां युक्ताभिवाहनी मुद्रा स्यात् । अवाङ्मुखी अधोमुखी श्लिष्टोत्थिताङ्गुष्ठयुगा परस्परं श्लिष्टाभ्यामुत्थिताभ्याम् अङ्गुष्ठाभ्यां युक्ता स्थिराकृतिः निश्चलाकारा नताञ्जलिः नमिताञ्जलिः स्थापनिका मुद्रा स्यात् ॥

---

१. 'म्रि' ख. पाठः. २. 'हि', ३. 'ङ्गु' इति मूलकोशपाठः. ४. 'ल' ख. ग. ङ. पाठः. ५. 'ल' ङ. च. पाठः.

सा सन्निधापन्युदिता नताङ्गुली-
श्लिष्टोभयाङ्गुष्ठपरिभ्रमोज्ज्वला ।
अवाङ्मुखाङ्गुष्ठनताङ्गुलीगणा
मुष्टिद्वयी स्यादिह सन्निरोधनी ॥ १९२ ॥
यावाहनी सार्पितपुष्पमूर्ध्वतो
ह्यवाङ्मुखीव्यापितयावकुण्ठनी ।
संयोजिता मूर्धनि धेनुमुद्रिका
मुद्रामृतीकृत्यभिधा समीरिता ॥ १९३ ॥
उत्तानमुष्टी त्वनुमोदनक्रमात्
प्रसारिते तिर्यगथ प्रसादनी ।
सप्तेति मुद्रा अभिवाहनादिषु
क्रमेण कार्याः कथिताः समासतः ॥ १९४ ॥
व्यत्यस्य तूपाद्ययुगं करोतु वा
निरुध्य संस्थापनमातनोतु वा ।

---

नताङ्गुलीश्लिष्टोभयाङ्गुष्ठपरिभ्रमोज्ज्वला नतास्वङ्गुलीषु श्लिष्टाभ्यामुभयाङ्गुष्ठाभ्यां युक्तेन परिभ्रमणेनोज्ज्वला या सा सन्निधापन्युदिता । इह अवाङ्मुखाङ्गुष्ठनताङ्गुलीगणा अधोमुखयोरङ्गुष्ठयोः नतेनाङ्गुलीसमूहेन युक्ता मुष्टिद्वयी सन्निरोधनी मुद्रा स्यात् ॥ १९२ ॥

या आवाहनी मुद्रा सैव अर्पितपुष्पं देवमूर्ध्न्यर्पितेन पुष्पेण युक्तं यथा भवति तथा ऊर्ध्वतः शिरस अरभ्य अवाङ्मुखीव्यापितया स्थिता हि अवकुण्ठनी मुद्रा स्यात् । मूर्धनि संयोजिता धेनुमुद्रिका अमृतीकृत्यभिधा मुद्रा समीरित ॥१९३ ॥

उत्तानमुष्टी उत्तानिते मुष्टी तु अनुमोदनक्रमात् प्रीणनरीत्या तिर्यक्प्रसारिते भवतः । इयं प्रसादनी मुद्रा । इति समासतः कथिताः सप्त मुद्राः अभिवाहनादिषु क्रमेण कार्याः ॥ १२४ ॥

उपाद्ययुगं द्वितीयां तृतीयां च व्यत्यस्य विनिमय्य करोतु वा । निरुध्य निरोधनीं दर्शयित्वा संस्थापनमातनोतु संस्थापनीं दर्शयेद् वा । केचन

---

१. 'लि', २. 'न्तर्गताङ्गुष्ठ' ख. पाठः. ३. 'लि' ख. ङ. च. पाठः.

मुक्तामृतीकृत्यवकुण्ठनाह्वयाः
पञ्चैव मुद्राः समुशन्ति केचन ॥ १९५ ॥

कृत्वाग्रहस्तौ मणिबन्धसक्तशाखौ मिथःश्लिष्टतलद्वयौ च ।
परिभ्रमय्य प्रकरोतु चक्रमुद्रां परीताङ्गुलिदर्शितारान् ॥

प्रसारिताङ्गुष्ठकतर्जनीकाशिष्टात्तमुष्ट्युज्ज्वलदक्षदोष्णा ।
निगीर्णवामप्रथमा तु शङ्खमुद्रान्यशाखामुकुलीकृताग्रा ॥

स्याद् वाममुष्टिकबलीकृतदक्षिणाङ्गु-
ष्ठाग्रावसक्तपरिशेषितदक्षशाखा ।
तत्तर्जनीसमसमुच्छ्रितवामबाहु-
ज्येष्ठाग्रका निगदितेत्यपि शङ्खमुद्रा ॥ १९८ ॥

---

मुक्तामृतीकृत्यवकुण्ठनाह्वयाः अमृतीकृतिमवकुण्ठनीं च त्यक्त्वा पञ्चैव मुद्राः समुशन्ति ॥ १९५ ॥

आयुधमुद्राः कथयति — कृत्वेति । अग्रहस्तौ मणिबन्धसक्तशाखौ मणिबन्धस्थानयोः सक्ताभिः शाखाभिरुपलक्षितौ मिथःश्लिष्टतलद्वयौ अन्योन्यंश्लिष्टेन तलद्वयेन युक्तौ च कृत्वा परिभ्रमय्य परिभ्रमणं कारयित्वा परीताङ्गुलिदर्शितारां परिवर्तिताभिरङ्गुलीभिः दर्शितैररैर्युक्तां चक्रमुद्रां प्रकरोतु ॥ १९६ ॥

प्रसारिताङ्गुष्ठकतर्जनीकाशिष्टात्तमुष्ट्युज्ज्वलदक्षदोष्णा प्रसारिताभ्यां दीर्घीकृताभ्याम् अङ्गुष्ठतर्जनीभ्यामवशिष्टाभिः अङ्गुलीभिः कृतया मुष्ट्या उज्ज्वलेन दक्षिणकरेण निगीर्णवामप्रथमा कबलीकृतेन वामाङ्गुष्ठेन युक्ता अन्यशाखामुकुलीकृताग्रा वामहस्तस्यान्याभिः शाखाभिः मुकुलीकृतेनाग्रभागेन युक्ता शङ्खमुद्रा स्यात् ॥ १९७ ॥

शङ्खमुद्रायाः पक्षान्तरं दर्शयति — स्यादिति । वाममुष्टिकबलीकृतदक्षिणाङ्गुष्ठाग्रावसक्तपरिशेषितदक्षशाखा वाममुष्ट्या कबलीकृतस्य दक्षिणाङ्गुष्ठस्याग्रे[3] अवसक्ताः प्रसक्ताः परिशेषिताः दक्षिणस्य शाखाः यस्याः सा तथोक्ता, तत्तर्जनीसमसमुच्छ्रितवामबाहुज्येष्ठाग्रका दक्षिणतर्जन्या समं समुच्छ्रितं वामकराङ्गुष्ठाग्रं यस्याः सापि तथोक्ता । इत्यपि शङ्खमुद्रा गुरुभिर्निगदिता स्यात् ॥ १९८ ॥

---

१ 'श्लि' क. ख. पाठः. २. 'भवतु वेत्यथ श' ख. पाठः. ३. 'ग्रे प्र' ख ङ. च. पाठः.

साधोग्रकाङ्गुष्ठकसम्मुखीनश्लिष्यद्द्विमुष्टिप्रसृतानताग्रम् ।
तन्मध्यमायुग्मकमाकलय्य प्रदर्शयेदत्र गदाख्यमुद्राम् ॥
मणिबन्धविषक्तपाणियुग्मप्रसृताष्टाङ्गुलिकल्पिताष्टपत्रा ।
प्रथमायुगक्लृप्तकर्णिकाढ्या परिदर्श्या पयसीरुहात्ममुद्रा ॥

तिर्यङ् निकुञ्च्य प्रहिताङ्घ्रिशाखा
परश्वधस्योन्नमितप्रधाना ।
प्रसारिताङ्गुष्ठशिरःस्थमध्या-
नामाग्रका स्याद्धरिणस्य मुद्रा ॥ २०१ ॥

बहिर्मुखोत्तम्भितपाणिशाखा मनाक्प्रकम्पाभयरूपमुद्रा ।
उत्तानपाणिप्रसृताग्रशाखा निम्नोदरा स्याद् वरदानमुद्रा ॥

---

गदामुद्रामाह — साधोग्रकेति । साधोग्रकाङ्गुष्ठकसंमुखीनाश्लिष्यद्द्वि-मुष्टिप्रसृतानताग्रम् अधोग्राभ्यामङ्गुष्ठाभ्यां सहितायाः सम्मुखीनायाः श्लि-ष्यन्त्याश्च द्विमुष्टेः प्रसृतमानताग्रं च तन्मध्यमायुग्मकं तस्य मुष्टिद्वयस्य मध्यमायुगलम् आकलय्य बद्ध्वा अत्र एतन्मुद्राबन्धनकाले गदाख्यमुद्रां प्रद-र्शयेत् ॥ १९९ ॥

पद्ममुद्रामाह — मणिबन्धेति । मणिबन्धविषक्तपाणियुग्मप्रसृताष्टा-ङ्गुलिकल्पिताष्टपत्रा मणिबन्धे विशेषेण सक्तात् पाणियुग्मात् प्रसृताभिरष्ट-भिरङ्गुलिभिः कल्पितैरष्टभिः पत्रैः उपेता, प्रथमायुगक्लृप्तकर्णिकाढ्या अ-ङ्गुष्ठयुग्मेन क्लृप्तया कर्णिकया च युक्ता पयसीरुहात्ममुद्रा[3] पद्ममुद्रा प-रिदर्श्या स्यात् ॥ २०० ॥

परशुमुद्रामाह — तिर्यगिति । निकुञ्च्य वक्रीकृत्य तिर्यक् प्रहिता-ङ्घ्रिशाखा तिर्यग्गच्छन्तीभिः अङ्गुष्ठवर्जिताभिश्चतसृभिरङ्गुलीभिरुपेता, उन्नमि-तप्रधाना ऊर्ध्वीकृताङ्गुष्ठा च परश्वधस्य मुद्रा स्यात् । मृगमुद्रामाह —प्रसारिते-ति । प्रसारिताङ्गुष्ठशिरःस्थमध्यानामाग्रका प्रसारितस्याङ्गुष्ठस्य शिरःस्थं शिरसि स्थितं मध्यानामिकयोरग्रं यस्याः सा हरिणस्य मृगस्य मुद्रा स्यात् ॥ २०१ ॥

अभयमुद्रामाह — बहिरिति । बहिर्मुखोत्तम्भितपाणिशाखा बहिर्मु-खाभिः उत्तम्भिताभिरूर्ध्वगताभिः पाणिशाखाभिर्युता, मनाक्प्रकम्पा ईषत्कम्प-युक्ता चाभयरूपमुद्रा अभयमुद्रा स्यात् । वरदमुद्रामाह—उत्तानेति । उत्ता-

---

१ 'योजये' क. घ. पाठः. २. 'निकुञ्च्य तिर्यक्प्र' इति मूलकोशपाठः. ३. 'द्रा परि' ख. पाठः. ४. 'दयमु' ङ. पाठः.

शूलस्य संस्तम्भितमध्यमा मनाक्-
प्रभुग्नतर्जोपकनिष्ठिका सती ।
मुद्रा कपालस्य कपालसङ्ग्रहा-
भिनीतिरुत्तानितपाणिना कृता ॥ २०३ ॥

मुष्टी निजे चापपृषत्कमुद्रिके
कृत्वा करौ द्वौ मुकुलीकृताग्रकौ ।
निबध्य गाढं मणिबन्धयोर्द्विधा
क्रमेण कार्ये पविशक्तिमुद्रिके ॥ २०४ ॥

कनिष्ठिकाद्याः क्रमशः प्रधानया
चतस्र एनां निजतर्जया स्पृशन् ।
प्राणादिमुद्राः क्रमशः प्रदर्शयेत्
स्याद् ग्रासमुद्रा स्फुरदुत्पलाकृतिः ॥ २०५ ॥

क्रमात् कनिष्ठोपकनिष्ठिके स्पृशन्
प्रदेशिनीमध्यमिके च मुख्यया ।

---

नेति । उत्तानपाणिप्रसृताग्रशाखा ऊर्ध्वमुखपाणौ प्रसृतैः शाखाग्रैर्युता, निम्नोदरा निम्नान्तर्भोगयुता वरदानमुद्रा स्यात् ॥ २०२ ॥

शूलमुद्रामाह — शूलस्येति । संस्तम्भितमध्यमा ऋज्वीकृतमध्यमा, मनाक्प्रभुग्नतर्जोपकनिष्ठिका ईषद्वक्रीकृतयोः तर्जन्यनामिकयोर्युक्ता सती शूलस्य मुद्रा स्यात् । कपालमुद्रामाह —मुद्रेति । उत्तानितपाणिना कृता कपालसंग्रहाभिनीतिः कपालग्रहणाय कृतोऽभिनयः कपालस्य मुद्रा स्यात् ॥ २०३ ॥

निजे मुष्टी धनुर्मुष्टिः शरमुष्टिश्च चापपृषत्कमुद्रिके धनुर्मुद्रा शरमुद्रा स्याताम् । मुकुलीकृताग्रकौ द्वौ करौ कृत्वा गाढं मणिबन्धयोर्निबध्य द्विधा क्रमेण पविशक्तिमुद्रिके वज्रमुद्रा शक्तिमुद्रा च कार्ये ॥ २०४ ॥

प्राणादिमुद्राः कथयति — कनिष्ठिकाद्या इति । कनिष्ठिकाद्याश्चतस्रोऽङ्गुलीः क्रमशः प्रधानया, एनां प्रधानां निजतर्जया च स्पृशन् क्रमशः प्राणादिमुद्राः प्रदर्शयेत् । स्फुरदुत्पलाकृतिः विकसदुत्पलाकारा ग्रासमुद्रा स्यात् ॥ २०५ ॥

मुख्यया ज्येष्ठया क्रमात् कनिष्ठोपकनिष्ठिके, प्रदेशिनीमध्यमिके च,

अनामिकामध्यमिके च तर्जनी-
युते च ते ताश्च करोतु वाखिलाः ॥ २०६ ॥
अनामिकामग्रजया कनीयसी-
मपि स्पृशन्नग्रभवां स्वतर्जया ।
प्रधानया तर्जनिकादिकं त्रयं
करोतु तोयाद्युपहारमुद्रिकाः ॥ २०७ ॥
अनामिकामूललसत्प्रधानां निवेद्यमुद्रां प्रतनोतु दोर्भ्याम् ।
हृद्बद्धमुष्टिर्बलिमुद्रिकाग्रस्थास्तुप्रधानोपकनिष्ठिका स्यात् ॥
भूषायुधान्तेऽञ्जलिवन्दनीभ्या-
मूर्ध्वा हरौ शूलिनि लिङ्गसंज्ञा ।
योन्याह्वया सुम्भजिति द्विपास्ये
वैघ्न्यञ्जलिर्वा कथितैषु मुद्रा ॥ २०९ ॥

---

अनामिकामध्यमिके च, तर्जनीयुते ते च तर्जनीमध्यमानामिकाश्च, ताः स्वत-स्तोऽङ्गुलीश्च स्पृशन् ताः अखिलाः प्राणादिमुद्राः करोतु वा ॥ २०६ ॥

षडुपहारमुद्राः कथयति — **अग्रजया** अनामिकां कनीयसीमपि, स्वतर्जया अग्रभवां, पुनः प्रधानया तर्जनिकादिकं त्रयं तर्जनीमध्यमानामिकाः स्पृशन् क्रमात् तोयाद्युपहारमुद्रिकाः जलगन्धपुष्पधूपदीपनिवेद्यमुद्राः करोतु ॥ २०७॥

निवेद्यकालस्थां निवेद्यमुद्रामाह — **अनामिकेति** । दोर्भ्याम् अनामिकामूललसत्प्रधानाम् अनामिकयोर्मूले शोभमानां प्रधानां निवेद्यमुद्रां प्रतनोतु । बलिमुद्रामाह — **हृद्बद्धेति** । अग्रस्थास्तुप्रधानोपकानिष्ठिका मुष्टेरग्रभागस्थाभ्यां प्रधानोपकनिष्ठिकाभ्यां युक्ता हृद्बद्धमुष्टिः हृदये बद्धा दक्षिणमुष्टिः बलिमुद्रिका स्यात् ॥ २०८ ॥

अञ्जल्यादिप्रधानमुद्राणां दर्शनकालमाह — **भूषायुधान्त इति** । भूषायुधान्ते भूषणायुधन्यासानामन्ते अञ्जलिवन्दनीभ्यां सह हरौ ऊर्ध्वा मुद्रा स्यात् । शूलिनि लिङ्गसंज्ञा, सुम्भजिति योन्याह्वया, द्विपास्ये वैघ्नी, एषु सर्वेष्वप्यञ्जलिर्वा मुद्रा स्यात् ॥ २०९ ॥

रात्वावाहनतः परं समधुपर्कादावृतिस्फूर्तित-
आचामावधिकं पुरः स्नपनतोऽन्ते वस्त्रभूषाविधेः।
प्राङ् नैवेद्यविधेः परं त्रयमिदं गण्डूषतोऽर्घ्यं प्रसा-
दान्ते प्राक् च विसर्जनात् प्रतिसपर्यं वारि चाद्यन्तयोः॥
स्नानानि पञ्चामृतपञ्चगव्य-
मृत्क्वाथकोष्णोदकगन्धवार्भिः।
तीर्थाद्भिरष्टौ कलशाम्बुभिश्च
कुर्वीत सावान्तरशुद्धतोयैः॥ २११॥
गुरुभ्यइदमेवमादिपदपूर्वकेणाणुना
करोतु कुसुमाञ्जलिं गुरुपितृस्वमात्रात्मनः।
सहोदरकुटुम्बिनीतनयवंश्यसाध्यांस्तथा
महीतलसमाश्रितांस्त्रिभुवनाश्रितांश्चोद्दिशन्॥ २१२॥

---

अर्घ्यादिक्लृप्त्या वा पाद्यादिक्लृप्त्या वोपहारदानस्य कालनियम-माह — **रात्विति**। आवाहनतः परम् आवाह्य सकलीकरणान्ते आचामाव-धिकम् अर्घ्यपाद्याचमनीयक्रमेण वा पाद्यार्घ्याचमनीयक्रमेण वा इदं त्रयं रातु ददातु। समधुपर्कात् मधुपर्कद्रव्ययुक्तादुपहारदानात् परम्, आवृतिस्फूर्तितः आवरणस्फुरणात् परं, स्नपनतः स्नपनकर्मणः पुरः पूर्वं, वस्त्रभूषाविधेः वस्त्र-विधेर्भूषणविधेरन्ते, नैवेद्यविधेः प्राक्, गण्डूषतः परं च इदं त्रयं रातु। प्रसादान्ते प्रसन्नपूजानन्तरं विसर्जनात् उद्वासनात् प्राक् चार्घ्यं रातु। प्रति-सपर्यम् उपहारसमर्पणे आद्यन्तयोः वारि जलं च रातु॥ २१०॥

स्नानक्लृप्तिमाह — **स्नानानीति**। पञ्चामृतपञ्चगव्यमृत्क्वाथकोष्णोदक-गन्धवार्भिः तीर्थाद्भिः कलशाम्बुभिश्च पञ्चामृतादिकलशजलान्तैः अष्टौ स्नानानि सावान्तरशुद्धतोयैः मध्ये मध्ये शुद्धजलसहितैः कुर्वीत॥ २११॥

प्रसन्नपूजाकाले साध्यपुष्पाञ्जलिक्रममाह — **गुरुभ्य इति**। गुरुभ्य इदमेवमादिपदपूर्वकेणाणुना 'गुरुभ्य इदं ओं नमो नारायणाय'[1] इत्यादिना मन्त्रेण कुसुमाञ्जलिं पूर्णपुष्पाञ्जलिं त्रिशस्त्रिशः करोतु। गुरुपितृस्वमात्रात्मनः उद्दिशन् गुर्वादीनां तत्फलप्राप्तिं स्मरन् 'गुरुभ्य इदं' 'पितृभ्य इदं' 'मातृभ्य इदम्' 'अस्मभ्यमिदं', सहोदरकुटुम्बिनीतनयवंश्यसाध्यान् 'भ्रातृभ्य इदं',

---

१. 'णाय' ख. ङ. ञ. पाठः.

आवाह्याग्रगते स्वमूलमनुबिम्बात् कर्मबिम्बे निजै-
रभ्यर्च्यावरणैर्युतं विधिवदत्रोद्वासयेच्चान्ततः ।
एवं स्याद् बहुबेरनित्यवरिवस्यावाहनोद्वासना-
हीनोऽर्चाविधिरेकबेरविषये न्यूनावृतिश्च क्वचित् ॥

भक्त्यैतद्विधिनाजितं यजतु चाक्षीणश्रियै मुक्तये
तत्तन्त्रप्रवराश्रयेह जगदीशं कृत्स्नविच्चर्चया ।
शर्वं सद्वितयश्रियं गजमुखं वातश्च भूयस्तरा-
राध्यां सुम्भरिपुं तथार्यशरजं येन क्रियार्थोत्तरा॥२१४॥

पत्नीभ्य इदं' 'पुत्रेभ्य इदम्' 'अस्मद्वंशभूतेभ्य इदं' 'साध्येभ्य इदं', मही-तलसमाश्रितान् 'पृथिवीवासिभ्य इदं', त्रिभुवनाश्रितांश्च 'त्रिभुवनवासिभ्य इदम् ओं नमो नारायणाय' इत्यादिमन्त्रैरित्यर्थः ॥ २१२ ॥

बहुबेर एकबेरे च पूजाक्लृप्तिमाह — आवाह्येति । बहुबेरविषये अर्चितपीठे कल्पितमूर्तावग्रगते कर्मबिम्बे स्वमूलमनुबिम्बात् यथोक्तप्रकारेणावाह्य निजैरावरणैर्युतं विधिवदभ्यर्च्यान्ततोऽत्र मूलबिम्ब उद्वासयेत् । एवं बहुबेर-नित्यवरिवस्या बहुबेरविषये नित्यपूजा स्यात् । एकबेरविषये अर्चाविधिः पूजाविधिः आवाहनोद्वासनाहीनः स्यात् । क्वचित्पक्षे न्यूनावृतिश्च आवरणैर्विनैव स्यात् ॥ २१३ ॥

अभिहितमेतत्तन्त्रसमुच्चयमुपसंहरति —भक्त्येति । इह पूजायोग्ये काले पूजायोग्ये बिम्बादिविषये च कृत्स्नवित् तन्त्रागमानां कात्स्न्र्येन तात्पर्यज्ञः, पूजकः एतद्विधिना अत्रोक्तविधानेन तत्तन्त्रप्रवराश्रया तस्य तस्य देवस्य तन्त्रागमेभ्यो गृहीतया चर्चया पूजया जगदीशम् अजितं विष्णुं वा, शर्वं शिवं वा, सद्वितयश्रियं वैष्णव्या शैव्या च श्रिया सहितं शिवनारायणं वा, गजमुखं गणपतिं वा, अतोऽन्यां भूयस्तराराध्यां पुनः पुनराराधनार्हां सुम्भरिपुं दुर्गां वा, तथा आर्यशरजं तद्वदेव शास्तारं वा स्कन्दं वा, भक्त्या सह यजतु । भक्तिरेव पूजायां प्रधानं साधनम् । तदुक्तमुपहारप्रकाशिकायां —

१. 'श्रि' ख. पाठः. २. 'ध्यं' ख. ग. पाठः. ३ 'रा ॥ इति विधिमधिगम्य क्षेत्रसंस्कारपूर्वं परमपि सुविशुद्धं हृद्यमापाद्य तत्स्थम् । परमपुरुषमेकं श्रद्धयाराधुयाद् यः स हि पुरुषधुरीणः स्यात् समग्रोन्मिषच्छ्रीः ॥' क. ख. पाठः. ४. 'र्घा' ङ. पाठः.

**कल्यब्देष्वतियत्सु नन्दनयनेष्वम्भोधिसङ्ख्येषु यः**
**सम्भूतो भृगुवीतहव्यमुनियुङ्मूले सवेदोन्वये ।**

"स्नेहविश्वाससम्मानभक्तिज्ञानजलादिना"

इति । भगवद्गीतायां च —

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥"

इति । किमर्थमिज्यत इत्यत्राह — अक्षीणश्रियै इति । प्रभूताय ऐहिकफलाय, मुक्तये मोक्षाय च । येन विधिना क्रिया पूजा अर्थोत्तरा सफला भवति । तेन विधिनेति पूर्वत्र संबन्धः । अयं श्लोको ग्रन्थकृता चक्ररूपतया लेखनीयत्वेन विवक्षितः । तत्र समे स्थले वृत्तं विलिख्य तदन्तरेकैकाक्षरलेखनप्रदेशमात्रं व्यतीत्यापि वृत्तं विलिख्य, तत्र वृत्तद्वयवति स्थले समान्तरालानि त्रीणि पुटानि द्विद्विसूत्रास्फालनाद् बाह्यवृत्तादारभ्य तदन्तानि अन्योन्यं मध्यतः संसक्तानि कृत्वाक्षराणि लिखेत् । तत्र दण्डाकारेषु पुटत्रयेषु प्रादक्षिण्यक्रमेण श्लोकस्य पादत्रयं[1]मूलत आरभ्याग्रपर्यन्तं लेखने तत्र दशममक्षरं जकारः पुटत्रयेऽपि समानं मध्ये यथा भवति तथा 'भक्त्यैतदि'त्यारभ्य एकोनत्रिंशत्यक्षरान् त्रीन् पादान् विलिख्य चतुर्थं पादं 'राध्यां सुम्भारिपुमि'त्यादिकं तृतीयपदान्त्यगतमेवाक्षरं पुनरप्यारभ्य षट्सु पुटान्तरालेषु द्विद्व्यक्षराणि च विलिख्य वाचयेत् । तत्र पुटान्तरालस्थैः द्वादशभिरक्षरैः पुटस्थैः षड्भिरक्षरैः सहाष्टादशाक्षरावसानेऽन्त्यगतं 'रा' इत्यक्षरमपि वाचयित्वा पादं पूरयेत् । तत्र पुटषट्केऽपि तृतीयतृतीयाक्षरवाचने 'तन्त्रसमुच्चय' इति[2] ग्रन्थस्य नामोक्तं भवति । षष्ठषष्ठाक्षरवाचने 'नारायणकृत' इति[3] ग्रन्थकर्तुः स्वस्य नामाप्युक्तं भवतीति ॥ २१४ ॥

ग्रन्थकृत् स्वस्य लोकप्रसिद्ध्यर्थं गृहगोत्रनामान्यपि अस्मिन् ग्रन्थे निबध्नाति — कल्यब्देष्विति । नन्दा नव, नयने द्वे, इषवः पञ्च, अम्भोधयश्चत्वारः । एकस्थानदशस्थानशतस्थानसहस्रस्थानेषु क्रमेण स्थिता नन्दाद्याः संख्या येषु कल्यब्देषु, कल्यब्दाः कलेरब्दाः संवत्सराः तेषु संवत्सरेषु, अतियत्सु अतिक्रम्य गच्छत्सु कालावयवेषु यः पुमान् भृगुवीतहव्यमुनियुङ्मूले

१. 'यं' घ. ङ. च. पाठः. २, ३. 'मि' ख. ङ. च. पाठः. ४. 'रः षड्भिरक्षरैरेक' ख. ग. पाठः.

प्रादुर्यस्य जयन्तमङ्गलपदेद्धं[1] धाम नारायणः
सोऽयं तन्त्रमिदं व्यधाद् बहुविधादुद्धृत्य तन्त्रार्णवात् ॥

सेयं कृतिस्तन्त्ररहस्यदब्धा
रक्ष्या मुहुर्मूर्खमुखप्रपातात् ।
आचार्यवर्यैरियमेव शश्वद्
विश्वेश्वरेज्यास्मदनुष्ठितास्तु[2] ॥ २१६ ॥

---

भृगुर्वीतहव्य इत्यृषिद्वयमूलभूते सवेदोन्वये सवेदा इति कश्चिदृषिः तस्यान्वये वंशे । भृगोः पुत्रो वीतहव्यः, तस्य पुत्रः सवेदाः, तस्यान्वये इति स्वस्य प्रवरोऽप्युक्तो भवति । तस्मिन् वंशे यः सम्भूतः, यस्य पुनः जयन्तमङ्गलपदेद्धं 'जयन्तमङ्गलम्' इति पदेन प्रकाशितं धाम गृहं भवति, सोऽयं नारायणः 'नारायण' इति लोके प्रसिद्धः इदं तन्त्रं बहुविधात् तन्त्रार्णवात् । तन्त्राणां बाहुल्यात् समुद्रकल्पत्वं द्योत्यते । तस्मादमृतमिवोद्धृत्य तन्त्रसमुच्चयाख्यं ग्रन्थं व्यधात् कृतवानित्यर्थः ॥ २१५ ॥

एतद्ग्रन्थकरणमपि विश्वेश्वरपूजा भवत्विति प्रार्थयन् ग्रन्थं समापयति —**सेयमिति**। सेयं कृतिः ममेयं ग्रन्थकरणक्रिया तन्त्ररहस्यदब्धा तन्त्ररहस्यभूतैरर्थैः परिपूर्णा, अत एवाचार्यवर्यैः मूर्खमुखप्रपातान्मुहुः पुनः पुनरपि रक्ष्या । मूर्खास्तु यत्किञ्चिदेव ज्ञात्वा यत्किञ्चिदेव कुर्वन्ति। तस्मात् परमपुरुषवरिवस्याया हानिर्भवति । अतः सर्वप्रयत्नेन तेभ्यो रक्षणीयेत्यर्थः । (इयमेव) शश्वदनवरतम् अस्मदनुष्ठिता अस्माभिरनुष्ठिता विश्वेश्वरेज्या विश्वेश्वरस्य परमपुरुषस्य पूजास्तु भवतु । 'तं देवं नित्यं समाराध्नुयामि'त्युपक्रमे देवस्य नित्यपूजाप्रार्थनाद्, अन्ते 'विश्वेश्वरपूजास्त्वि'ति उपसंहाराच्च, मध्ये पुनर्देवस्य नित्यपूजाप्रतिबिम्बप्रतिष्ठाकर्माङ्गतया गुरुवरणादिप्रतिष्ठापर्यन्तैः कर्मभिस्तत्साधनप्रकाशनात्, तदन्ते पूजाविधानात्, तच्छेषतया कलशादेः प्रकटनाच्च अस्मिन् ग्रन्थे सर्वोऽप्यर्थो विश्वेश्वरपूजातत्परतयैव प्रतिपादितः । अवसाने विशेषेण ग्रन्थकरणप्रयत्नोऽपि तस्य पूजास्त्वित्याचार्यस्याभिमतमिति जानन्तु विद्वांसः ॥ २१६ ॥

---

१. 'दाब्धं धा', २. 'दुपार्जिता' ख. ग. पाठः.

इति तन्त्रसमुच्चये श्रुतार्चा-
क्रमगुप्त्यै रविजन्मसम्प्रणीते ।
पटलः परिशिष्टकर्मवादी
दशमोऽभूद् द्विपुरस्सरः समाप्तः ॥ २१७ ॥

इति तन्त्रसमुच्चये द्वादशः पटलः ।

---

पटलमुपसंहरति— इतीति । इति तन्त्रसमुच्चये ग्रन्थे द्विपुरस्सरो द्वीति पदपुरोगतो दशमः द्वादशः पटलः समाप्तोऽभूत् । कथंभूते, श्रुतार्चाक्रमगुप्त्यै श्रुतस्य पूजाक्रमस्य रक्षायै रविजन्मसंप्रणीते रविपुत्रेण नारायणेन कृते । परिशिष्टकर्मवादी सर्वपटलेष्वपि परिशिष्टानां कर्मणां वदनस्वभावः पटलः समाप्त इत्यर्थः ॥ २१७ ॥

यस्य हि तन्त्रसमुच्चयरचनाल्लोके समुत्थिता कीर्त्तिः ।
तत्पुत्रेण कृतेयं शङ्करनाम्ना विमर्शिनी व्याख्या ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
द्वादशः पटलः ।

समाप्तोऽयं ग्रन्थः ।

शुभं भूयात् ।

---

1. 'समस्तागमसारैकनिधौ सुश्रीशुगाह । पटलः पारशेषकर्मरम्यो द' ख. पाठः.

३१६-पृष्ठे प्रदर्शितस्य चक्रबन्धस्याकारः.




भक्त्यैतद्विधिनाजितं यजतु चाक्षीणश्रियै मुक्तये
तत्तन्त्रप्रवराप्तयेह जगदीशं कृत्स्नविच्चर्चया ।
शर्वं सद्वितयश्रियं गजमुखं वातश्च भूयस्तरा-
राध्यां सुंभरिपुं तथार्यशरजं येन क्रियार्थोत्तरा ॥

# अनुक्रमणिका

फ



ब

भ

